ment of Public Instruction, Bombay.

THE

# ÂS'RAYAKÂVYA

BY

# MACHANDRA

WITH

A COMMENTARY

BY

AYATILAKAGAṆ

t II—Cantos XI to XX.



EDITED BY

VISHNU KATHAVATE, B. A.

1921.



Price Rs. 9.

No. LXXVI

अन्यदा कुमारपालो निशीथ आर्तस्वरं श्रुत्वा परिहितनीलवासास्तत्प्रज्ञानाय बहिर्जगाम । तरोरधो रुदतीं पतिपुत्ररहितां राजकृतधनापहारभीतां कांचिद्धनवतीं स्त्रियं दृष्ट्वा एष राजा न ग्रहीष्यति तव पतिपुत्राभ्यां पयो दातुं स्थेया इति तां सान्त्वयित्वा वधोद्यमान्न्यवर्तयत् । गृहमागम्य चासूनोः परासोर्वित्तं न ग्राह्यमित्यमात्यान्न्यदिक्षत् । अपरेद्युः केदारहर्म्यं खसराजभग्नं चारमुखाच्छ्रुत्वा खसराजं संतर्ज्य तदुद्धाराय सोमेशवेश्मनश्चोद्धाराय मन्त्रिणमादिदेश आर्हतैर्दत्ताशीर्वादोऽणहिलपुरे श्रीदेवपत्तनतले च पार्श्वचैत्ये अकारयत् स्वप्ने शंभुनादिष्टः कुमारपालोऽणहिलपुरे कुमारपालेश्वराख्यायतनमकारयत् । अन्ते ऋषीणामाशीर्वचनम् ॥

# द्व्याश्रयमहाकाव्ये

## एकादशः सर्गः ।



उपभुक्तऋतुं देवीमुपभुक्तोथ भूपतिः ।
जग्धे जग्धं तदैकस्मिन्नुद्यानान्तर्यया सह ॥ १ ॥

१. अथ सौधगमनानन्तरं भूपतिः कर्णो देवीं मयणल्लामुपभुक्तो रमितवान । किंभूतां सतीम् । उपभुक्तोतिक्रान्त ऋतुः पुष्पकालो यया ताम । ऋतुस्नातामित्यर्थः । यया देव्या सहोद्यानान्तर्लीलोपवनमध्ये तदोपभोगकाल एकस्मिन्नभिन्नेन्यतेस्मिन्निति जग्धं भोजनपात्रं तस्मिः जग्धं कर्णेन भुक्तम् । एतेन विशिष्टगर्भाधानहेतुर्मिथोनुरागातिशय उक्तः ॥

तयोर्वृत्त एकत्र पीतं पीतेशितेशितम् ।
आसिते चासितं सृप्तं सृप्ते च प्रीतियोगतः ॥ २ ॥

२. तयोर्दम्पत्योः प्रीतियोगतो मिथोनुरागसंबन्धादेकत्राभिन्ने पीते पानपात्रे पीतं जलादिपानं ववृते संजातम् । तथैकत्राशिते भोजनपात्रेशितं भोजनं तथैकत्रासित आसन आसितं चावस्थानं च तथैकत्र सृप्ते गमनस्थाने सृप्तं च गमनं च ॥

१ ए °क्तऋतुं. २ ए जग्धे ज°. ३ ए °र्यमां स°.

१ ए सी डी °न्तः पु°. २ ए सी °न्तलीलो°. ३ ए °न्नेन्यते°. ४ सी °। भु°. ५ सी डी °थो रा°. ६ ए °योगितो. ७ ए सी डी °नं प्रव°. ८ ए °ासिते. ९ ए तथेक°. १० ए आसित आसितं पाव°.

रौप्यभुक्तोज्ज्वलमुखी गर्भं देवी ततो दधौ ।
विदित्वायतत त्रातुं ध्यायं ध्यायं स भीमजः ॥ ३ ॥

३. ततो देवी गर्भं दधौ। कीदृक्सती। गर्भवशाद्रौप्यं रूप्यस्य विकारो यद्भुक्तं पात्रं तद्वदुज्ज्वलं श्वेतं मुखं यस्याः सा। ततो भीमजः कर्णो विदित्वा गर्भं ज्ञात्वा ध्यायं ध्यायं रक्षोपायान्विचिन्त्य विचिन्त्य त्रातुं गर्भं रक्षितुमयतत ॥

भीष्मवायुबलोपृच्छद्दाशातन्तुप्रवर्धनीम् ।
देवीं दोहदकार्याणि नन्दनोत्कः स नन्दकः ॥ ४ ॥

४. भीष्मयोर्वाय्वोर्गाङ्गेयवातयोरिव बलं सामर्थ्यं यस्य स तथा नन्दको जगदाह्लादकः स कर्णो देवीं दोहदकार्याण्यपृच्छत्। यतो नन्दनोत्कः पुत्र उत्कण्ठितः। किंभूतां देवीम्। आशैव पुत्रमनोरथएव सन्तानपटहेतुत्वात्तन्तुः सूत्रं तस्य प्रवर्धनीं वर्धिकाम् ॥

वाक्येन तस्यास्तु समवसर्ग्यैः पाणिसर्ग्यया ।
दिवोपि कृष्टे रज्ज्वेव वाप्यैर्लाव्यैश्च वस्तुभिः ॥ ५ ॥
डेप्ययाव्यैर्जलासाव्यै राप्यालाप्यरसाश्रितैः ।
आचाम्यैर्युध्यनानाम्यः स दोहदमपूरयत् ॥ ६ ॥

५, ६. स कर्णो दोहदं गर्भानुभावजनितां श्रद्धां देव्या अपूर।

१ बी °र्यं च भी°. २ प °सग्यया. ३ प रज्ज्वेव. ४ डी °साश्रै रा

१ प °क्षोमायान्विचित्य विचित्य त्रा°. २ बी रक्षयितु°. ३ प °क्षि°. ४ प °वायोर्गा°. ५ प °र्थ्यं तस्य. ६ डी °नोत्को नन्दने पु°. ७ सी °न नन्दकपु°. ८ प °त्तन्तुम्°. ९ प सी डी °स्य व°. १० प °त्। कौवे

कैः कैरित्याह । वाप्यैर्वस्तुभिर्द्राक्षाफलादिभिर्लाव्यैश्चावश्यं छेद्यैश्च वस्तुभिर्जातिपुष्पादिभिः । तानि हि नोप्यन्तेवश्यं त्रोट्यन्ते च । तथा डेप्ययाव्यैर्डेप्यैः प्रेष्यैः किंकरादिभिर्याव्यैश्चात्मना सह संबन्धनीयैः प्रियसख्यादिभिः स्वाङ्गेन संबन्धनीयैर्वस्त्राभरणादिभिर्वा । तथा जलासाव्यैर्जल आसाव्यानि भावेत्र घ्यण् । तैस्तीर्थस्नानैरित्यर्थः । तथाचाम्यैर्भक्ष्यैः परमान्नादिभिः । किंभूतैः । राप्यालाप्यरसाञ्चितै राप्या माधुर्यादिगुणोपेता अमी इति सामान्येन वक्तुं शक्या अलाप्याश्चैतावन्मात्रमाधुर्यादिगुणा अमी इति विशेषतो वक्तुमशक्याश्च ये रसा माधुर्यादयः । उक्तं च ।

इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् ।
तथापि न तदाख्यातुं सरस्वत्यापि पार्यते ॥ १ ॥

तैरञ्चितैर्युक्तैः । सर्वैरप्येतैः कीदृशैः । तस्यास्तु देव्याः पुनर्वाक्येनामुकस्मिन्फलादौ ममेच्छेति वाचा समवसर्ग्यैर्मेलनीयैः । तथा दिवोपि स्वर्गादपि पाणिभ्यां सृज्यते क्रियते पाणिसर्ग्या तया रज्ज्वेव कृष्टैराकृष्टैरतिदुःप्रा(दुष्प्रा)पैरपीत्यर्थः । नन्वनेनैषां दिवोप्याकृष्टिः कुत इत्याह । यतो युध्यनानाम्यो देवैरपि नमयितुं जेतुमशक्यः ॥

**नापत्राप्यं त्वया दाभ्यो नेच्छयात्मेति तां ब्रुवन् ।**
**अमावास्यायमेवामावस्येन्दुमपृणन्नृपः ॥ ७ ॥**

---

१ बी °वश्येन्द्°.

१ ए °करोदि°. २ ए °यैवस्त्रा°. ३ ए सी डी °साथैर्ज°. ४ ए सी डी °साद्यानि. ५ ए सी डी °चान्यैर्भ°. ६ ए रापाला°. ७ ए सी डी °क्या आला°. ८ सी °त् । तदा°. ९ ए नदा न°. १० ए °तुं रसस्व°. ११ ए °तिदुप्रा°. १२ सी डी नन्वेषां. १३ ए °वोधा कृ°. १४ ए °ह । अतो. १५ सी नमिथितुं, ए °मथितुं.

७. स कर्णस्तां देवीमपृणद्दोहदपूरणेनापोषयत्। कीदृक्सन्। तां ब्रुवन्। कथमित्याह। त्वया नापत्राप्यं न लज्जनीयमिच्छया श्रद्धया कृत्वात्मा त्वया न दाभ्यो न वञ्च्य इति[1]। यथामावस्येन्दुममावास्यार्येमा पृणोति[2]। अमावास्यायां हि रवेः सुखमणाख्यकिरणं लब्ध्वा चन्द्रो वर्धेत इति प्रसिद्धिः॥

उपभुक्तैः[3] उपभुक्तऋतुम्। अत्र "गत्यर्थ०" [११] इत्यादिना[4] वा क्तः कर्तरि॥

जग्धे[5] जग्धम्। अशिते अशितम्। सृप्ते सृप्तम्। आसिते आसितम्। पीते पीतम्[6]। भुक्त उपभुक्तैः[7] उपभुक्तऋतुम्। अत्र "अद्यर्थाच्चाधारे" [१२] इत्याधारे[8] क्तो वा॥

विदित्वा। त्रातुम्। ध्यायं ध्यायम्। अत्र "क्त्वा०" [१३] इत्यादिना क्त्वा-तुमम्ो भावे ज्ञेयाः॥

भीम। भीष्म। इत्येतौ "भीम०" [१४] इत्यादिनापादाने साधू॥

वायु। तन्तु। इत्यत्र "संप्र०" [१५] इत्यादिना संप्रदानापादानाभ्यामन्यत्रोणादयः॥

नन्दन[9] नन्दकः। अत्र "असरूप०"[10] [१६] इत्यादिनापवादविषय औत्सर्गिकः[11] प्रत्ययो वा। असरूप[12] इति किम्। घ्यणि यो न स्यात्। कार्याणि॥ प्राक् क्तेरिति किम्। प्रवर्धतेनया प्रवर्धनी। अनेट्विषये[13] न क्तिः। आशायते तनूक्रियते लाभादसावित्याशा। "उपसर्गादातः" [५.३.११०] इत्यङ्विषये[14] न क्तिः॥

कार्याणि। वाक्येन। इत्यत्र[15] "ऋवर्ण०" [१७] इत्यादिना घ्यण्॥

---

१ **प सी** °ति × × × × प्रसि°. २ **डी** पृणाति. ३ **प** °क्तऋतम्।. **सी** °क्तऋत्। अ°. **डी** °क्तऋ°. ४ **प** ना क्तः. ५ **प** जग्धौ ज°. ६ **सी डी** °म्। उ°. ७ **प** °भुक्तऋ°. ८ **डी** °धार क्तो. ९ **सी** °न्दकः. १० **प** अस्वरू°. ११ **प** °गिकप्र°. १२ **प** अस्वरू°. १३ **प** °नट्विप°. **बी** °नटविप°. १४ **प** °त्यद्विप°. **सी डी** °त्यङविप°. १५ **प** °त्र कर्ण°.

पाणिसर्ग्यया । समवसर्ग्यैः । अत्र "पाणि०" [१८] इत्यादिना घ्यण् ॥

लाव्यैः । अत्र "उवर्णात्०" [१९] इत्यादिना घ्यण् ॥

जलासाव्यैः । याव्यैः । वाप्यैः । राप्य । अलाप्य । अपत्राप्यम् । डेप्य । दाभ्यः । आचाम्यैः । आनाम्यः । अत्र "आसुयु०" [२०] इत्यादिना घ्यण् ॥

अमावस्यामावास्याशब्दौ "वाधारेमावस्या" [२१] इति साधू ॥

ऊचे च तुक्कुण्डपाय्यसंचाय्यराजसूयकृत् ।
निकाय्योपाय्यपुण्यानां भावी विश्वाप्रणाय्यकः ॥ ८ ॥

देवि यद्द्रष्टुमैच्छस्त्वं धाय्यासान्नाय्यपावितान् ।
परिचाय्योपचाय्यानाय्यसमूह्यान्सचित्यकान् ॥ ९ ॥

८, ९. राजोचे । किमित्याह । हे देवि यद्यस्मात्त्वं परिचाय्योपचाय्यानाय्यसमूह्यानग्निभेदान्द्रष्टुमैच्छः । किंभूतान् । धाय्या रूढिशब्दत्वात्कांश्चिदेव ऋचः । सान्नाय्यं हविः । द्वन्द्वे तैः पावितान् । तथा सचित्यकांश्चित्येनाग्निविशेषेण युक्तान् । तस्मात्तुक् तव पुत्रो भावी भविष्यति । कीदृक् । कुण्डपाय्यसंचाय्यराजसूयकृत्कुण्डपाय्यादियागविशेषकारकः । तथापाय्यपुण्यानामपाय्यानामविद्यमानमानानां पुण्यानां निकाय्यो निवासः । तथा विश्वाप्रणाय्यको विश्वसंमतो विजिगीषुत्वाद्विश्वाभिलाषुको वेत्यर्थः ॥

---

१ ए बी तुत्कुण्ड°. २ ए °द्रष्टुमै°. ३ ए °स्त्वं ध्यायासा°. ४ ए °न्सजो°.

---

१ ए सी डी °ण ॥ जलासा°. २ ए °व्यैः । व्याप्यैः. ३ बी राप्या । लाप्या । अ°. ४ बी सी दाभ्य । आ°. ५ ए सी डी °मावास्या°. ६ सी डी °मावस्या°. ७ सी डी °मावास्या. ८ ए साधूः ॥. ९ ए °मित्यत्या°. १० बी °श्चिदेव°. ११ सी डी पाचिता°. १२ ए सी डी °सात्तव तुक् पु°. १३ सी °माना°.

गर्भविघ्नच्छिदे भूवन्भुव्यनीनाय्यगोदुहः ।
संवाह्याग्नौ च याज्याभिर्यष्टव्यमृषयोयजन् ॥ १० ॥

१०. गर्भविघ्नच्छिदे गर्भापायच्छेदाय ऋषयो भुव्यनानाय्यगोदुहो नित्यगोदोहका अभूवन् । गोपु हि भुवि दुग्धासु विघ्ना विलीयन्त इति श्रुतिः । तथा संवाह्याख्याग्निभेदे याज्याभिर्दानऋग्भिः कृत्वा यष्टव्यं हव्यमृपयोयजंश्चाजुहवुः ॥

करणीयेष्वहेयेष्वशेयैः शक्येष्टसिद्धिभिः ।
प्रशस्यं यत्यमारेभे यज्यैर्भज्यैः पुरोहितैः ॥ ११ ॥

११. प्रशस्यं शसू हिंसायाम् । धातूनामनेकार्थत्वात्स्तुतावपि तेर्न स्तुत्यं यद्वा प्रगतं शस्यं हिंसा यस्य तत्प्रशस्यं यत्यं गर्भशान्तिकर्मविपयो यत्नः पुरोहितैरारेभे । यतः किंभूतैः । अहेयेपु धर्महेतुत्वेनात्याज्येपु करणीयेपु विघ्नच्छेदादिकर्मसु विपयेशेयैर्जागरूकैस्तथा महामात्रिकत्वाच्छक्या शक्तिः स्वभावाद्धात्वन्तरार्थानुसंहित एव प्रयुज्यते ततः कर्तुं शक्येष्टसिद्धिर्यैस्तैरत एव यज्यैः पूज्यैर्भज्यैः सेव्यैः ॥

असह्यतक्ष्यतप्योयं याज्यश्चत्यो विजन्यताम् ।
गर्भः क्षेमेण भाग्यैर्न इति दध्यौ गुरुस्तदा ॥ १२ ॥

१२. गुरू राजाचार्यस्तदा गर्भवृद्धिकाले दध्यौ । किमित्याह । अयं गर्भो नोस्माकं भाग्यैः पुण्यैः क्षेमेण विजन्यतामुत्पद्यताम् । कीदृक् ।

१ ए सी °नामाय्य°. २ ए °शेये श°.

१ बी °भविच्छेदे. २ ए सी डी °न् । सं°. ३ ए सी डी °त्वात्सुता°. ४ सी °न सुत्यं. ५ बी यस्मात्तत्प्र°. ६ ए °स्य त्वत्प्र°. ७ ए °र्मसु द्विप°. ८ ए सी डी °च्छक्या: श°. ९ ए °र्थानुसंपहि°. १० बी °संहंमित. ११ बी °भज्यै से°.

विशेषणकर्मधारये नञ्समासे च असह्यतक्यतप्यो महाप्रतापित्वाच्छत्रु-भिरनभिभाव्योनुपहास्योसंताप्यश्च । तथा याज्यः पूज्यस्तथा चल्यो दानेश्वरत्वाद्याचकैर्याच्य इति ॥

संचाय्यकुण्डपाय्यराजसूयाः "संचाय्य०" [२२] इत्यादिना निपात्याः ॥

प्रणाय्य । इति "प्रणाय्य०" [२३] इत्यादिना निपात्यते ॥

धाय्या । पाय्य । सान्नाय्य । निकाय्य । एते "धाय्या०" [२४] इत्यादिना निपात्याः ॥

परिचाय्योपचाय्यानाय्यसमूह्यान् । चित्यँ । इत्येते "परिचाय्य०" [२५] इ-त्यादिना निपात्याः ॥ केचिदानाय्येत्यग्निविशेषादन्यत्राप्यनित्यविशेष इच्छन्ति । अनानाय्यगोदुहः ॥ अन्ये संपूर्वाद्वहेरग्नावेवेति नियमार्थं घ्यणं निपातयन्ति । अग्नेरन्यत्र समूहितव्यमित्येव । वहेस्तु तन्मतेग्नावपि संवाह्येति स्यात् ॥

याज्याभिः । इति "याज्या दानर्चि" [२६] इति निपात्यम् ॥

यष्टव्यम् । करणीयेषु । इत्यत्र "तव्यानीयौ" [२७] इति तव्यानीयौ ॥

अजेयैः । अहेयेषु । इत्यत्र "य एच्चातः" [२८] इति य आतश्चैत् ॥

शक्य । तक्य । चल्यः । यत्यम् । प्रशस्यम् । असह्य । यज्यः । भज्यैः ॥ पव-र्गे । तप्यः । अत्र "शकितकि०" [२९] इत्यादिना यः ॥ यजिभजिभ्यां नेच्छ-न्त्येके । याज्यः । भार्ग्यैः ॥

मन्दं गद्यं श्लथं यम्या नीवी मद्यं न च त्वया ।
गतिर्नियम्या नायाम्यौ चरणावप्रमाद्यया ॥ १३ ॥

---

१ ए यम्यां नी°. २ ए °द्यया: ॥.

---

१ ए °ह्यसक्य°. २ बी °त्य । एते. ३ ए °हः । शेषं सं°. ४ बी °न्ये तु सं°. ५ ए अन्येर°. ६ ए °नीयैः ॥ अ°. ७ ए श्योत्पात°. ८ बी °तियोन्त्यात°. ९ बी चत्य । य°. १० ए सी डी °त्य । प्र°. ११ ए भन्तैः ॥ प°.

न निगाद्यं न वा चर्यं मद्यपाचर्यभूमिषु ।
नोपसर्यान्तिके चैतां वर्याचार्यस्त्रियोशिषन् ॥ १४ ॥

१३, १४. वर्या आप्तत्वेनोपेया या आचार्यस्त्रियो राजगुरुभार्यास्ता एतां देवीमशिषन्नशिक्षयन् । कथमित्याह । देवि त्वयाविद्यमानं प्रमाद्यं प्रमादो यस्यास्तयाप्रमाद्यया सत्या मन्दं नीचैर्गद्यं वाच्यं तथा नीव्यधोवस्त्रग्रन्थिः श्लथं शिथिलं यस्या बन्ध्या तथा न च मद्यं मद्यपानादिर्ना न क्षीबीभाव्यं तथा गतिर्यानं नियम्या नियतीकार्या । अल्पं गम्यमित्यर्थः । तथा चरणौ नागाम्यौ न प्रसार्यौ । तथा मद्यपाचर्यभूमिषु मद्यपैर्मद्यपानार्थं सेव्यासु भूमिषु न निगाद्यं न वाच्यं न वा चर्यं भ्रमणीयं तथोपसर्यान्तिके च ऋतुमतीसमीपे च न निगाद्यं न वाचर्यमिति । उच्चैर्गदनादौ हि गर्भाबाधा मत्ततादौ च छलच्छिद्राद्यनेकदोपसंभव इत्येतानि निषिध्यन्ते ॥

नीत्वानवद्या सा मासान्पुण्यपण्यपदं नव ।
ब्रह्मक्षत्रार्यशूद्राणामर्यं प्रासूत नन्दनम् ॥ १५ ॥

१५. अनवद्या निष्पापा सा देवी नव मासान्नीत्वातिक्रम्य नन्दनं पुत्रं प्रासूत । कीदृशम् । पुण्यपण्यपदं धर्मक्रयाणकस्थानमत एव ब्रह्मक्षत्रार्यशूद्राणामर्यं स्वामिनम् ॥

---

१ ए °पसृया°. २ ए °तां चर्या°. ३ ए °द्या मा°. ४ **बी सी** °र्यसूद्रा°.

---

१ ए °वीनशि°. २ ए °शिष्यय°. ३ ए °माद्यो य°. ४ ए °ना भ क्षी°. ५ ए °मायो । त°. ६ **सी डी** °पाचार्य°. ७ ए न न गा.° ८ **डी** न चाच्य°. ९ ए °र्णा त°. १० **ए सी डी** तथाप°. ११ ए निपंध्य. १२ **बी** °द्या निःपापा°. १३ **सी** °दृदयम्. १४ ए धर्म क्र°. १५ ए °मर्थं स्वा°.

यम्या। मद्यम्। गद्यम्। अत्र "यममद० (यमिमदि०?)" [३०] इत्यादिना यः॥ अनुपसर्गादिति किम्। आयाम्यौ[1]। अप्रमाद्यया। निगाद्यम्॥ बहुलवचना-न्माद्यन्त्यनेन मद्यं करणेपि। नियम्य। इत्यत्र सोपसर्गादपि॥

चर्यम्। आचर्य[2]। इत्यत्र "चरेर्०" [३१] इत्यादिना यः। अगुराविति किम्। आचार्य[3]॥

वर्याचार्यस्त्रियः॥ उपसर्या। अनवद्या[4]। पण्य[5]। इत्येते "वर्य०" [३२] इ-त्यादिना निपात्याः॥ वर्येति स्त्रीलिङ्गनिर्देशात्पुंसि न स्यात्॥ अन्यस्तु पुंस्यपी-च्छति। सामान्यनिर्देशात्तदपि संगृहीतम्॥ तदा वर्याश्च त आचार्याश्च वर्याचा-र्यास्तेषां स्त्रिय एवमपि समासः स्यात्॥

अर्यम्[6]। अर्य। इत्येतौ "स्वामि०" [३३] इत्यादिना[7] निपात्यौ॥

वह्यैरेत्य ततो ब्रह्मोद्यानुवाद्यैर्नृपाज्ञया।
सुसत्यवद्यैर्दैवज्ञभूयं प्राप्तैरितीरितम्॥ १६॥

१६. ततः पुत्रजन्मानन्तरं दैवज्ञभूयं ज्ञानिकत्वं प्राप्तैर्दैवज्ञैरिति वक्ष्यमाणमीरितमुक्तम्। किं कृत्वा। नृपाज्ञया वह्यैरश्वादिवाहनैः कृ-त्वैत्यागत्य[8]। कीदृशैः। शोभनं सत्यवद्यं सत्यवदनं[9] येषां तैस्तथैकेनोदि-तेऽन्येन तस्यैव वदनमनुवाद्यं ब्रह्मोद्यं ज्ञानभणनमनुवाद्यमिदमित्थमित्य-न्यैरनुवाच्यं येषां तैर्मिथः संवादं कृत्वेत्यर्थः॥

एषोरिकीर्तिहत्याकृत्स्वप्रतापाग्निचित्यया।
उत्खेयद्वीपभूपालो निर्मृषोद्यो भविष्यति॥ १७॥

१ ए °वैर्दैव°. २ ए सी °भूयप्रा°. ३ ए °लोन्निनिर्नृषो°.

१ ए सी °चमान्मा°. २ बी आचार्य. ३ ए सी डी °चार्या॥ व°. ४ ए अनाव° ५ ए सी °ण्या। पाण। इ°. ६ ए सी अर्या। अ°. ७ ए सी डी °ना वा नि°. ८ ए कृत्वेला°. ९ बी सत्यं व°.

१७. एष पुत्रो भविष्यति । कीदृक् । स्वप्रताप एवाग्निचित्याग्नेश्च-यँनं[1] तयोत्खेयद्वीपभूपाल[2] उत्पाट्यद्वीपनृपः प्रतापेनैवाब्धिमध्यमपि साधयितेत्यर्थः । अत एवारिकीर्तिहत्याकृच्छत्रुयशोविनाशकस्तथा धार्मिकत्वान्निर्मृषोद्यो मृषोद्या[3]दसत्यवचनान्निष्क्रान्तः[4] ॥

वह्यः । इति "वह्यं करणे" [३४] इति निपात्यम् ॥

ब्रह्मोद्य[5] । सुसत्यवद्यः । अत्र "नाम्नो[6] वदः क्यप् च" [३५] इति क्यँप्यश्च[7] । नाम्न इति किम् । अनुवाद्यः ॥

कीर्तिहत्या । देवज्ञभूयम् । इत्येतौ "हत्या०" [३६] इत्यादिना निपात्यौ ॥

अग्निचि[9]त्यया[8] । इति "अग्निचित्या" [३७] इति निपात्यम् ॥

उत्खेय[10] । मृषोद्यः । इत्येतौ "खेय" [३८] इत्यादिना निपात्यौ ॥

सर्वार्थसाधने पुष्योतिसिध्यो वैप[1] भास्यति ।
भिद्योद्ध्यस्नात[2]युग्योयं दिग्भ्योकुप्यं हरिष्यति ॥ १८ ॥

१८. एष पुत्रो भास्यति । कीदृक्सन् । सर्वार्थसाधने पुष्यः पुण्य[11]-नक्षत्रतुल्योतिसिध्यो वा पुष्यादप्यधिको वा । तथा दिग्भ्योकुप्यं कुप्यं रूप्य[12]स्वर्णाभ्यामन्यत्कांस्यादि न तथाकुप्यं स्वर्णं रूप्यं च हरिष्यत्यानेष्यति । कीदृक्सन् । भिद्योद्ध्यौ[13] ह्रदविशेषौ तयोः स्नातानि युग्यानि वाहनानि यस्य[14] स तथा । भिद्योद्ध्यौ यावद्गतसैन्य इत्यर्थः ॥

---

१ प वैपा भा°.   २ डी °स्नातयु°.

---

१ प °यमं त°.   २ बी °पालं उ°.   ३ प °पोव्याद°   ४ बी °न्निक्रान्तः. ५ बी °ह्मोद्यः । सु°. सी डी °ह्मोद्या सु°. ६ प नाम्नोव° ७ प क्यप्प्रयश्च, सी डी क्यप्प्रत्ययश्च. ८ सी °चित्येति नि°. ९ प °त्ययेत्यग्निचित्यया । इ°. १० प सी डी °त्खेयः । मृ°. ११ प °ष्यमक्ष°. १२ प रूपस्व°. सी रूपास्व°. १३ प °द्ध्यौ ह्रद. १४ डी °स्य त°.

सूर्योयं राक्षसाज्यानां प्रजायास्तिष्यवत्प्रियः ।
स्तुत्यः प्रावृत्यै आदृत्यो जुष्यश्च भविता नृपैः ॥ १९ ॥

१९. अयं पुत्रो भविता भविष्यति । कीदृक् । राक्षसाज्यानां राक्षसघृतानां सूर्यो विलीनयितेत्यर्थः । तथा प्रजायास्तिष्यवत्प्रियः पुष्ये इव पोषकत्वादभीष्टस्तथा नृपैः स्तुत्यः प्रावृत्यः परिवार्य आदृत्य आदरणीयो जुष्यश्च ॥

इत्योधीत्यः सुरैः कृच्छ्रेध्येयोपेयश्च पन्नगैः ।
यो विश्वामित्रशिष्योभूद्देवः सोत्रावतीर्णवान् ॥ २० ॥

२०. स देवो रामचन्द्रोत्र पुत्रेवतीर्णवानवतारं चक्रे यो विश्वामित्रशिष्योभूत् । कीदृशः । यः कृच्छ्र आपदि सुरैरधीत्यः शरणाय स्मर्य इत्योभिगम्यश्च । तथा पन्नगैरध्येयश्चासावुपेयश्च सेव्यश्चाध्येयोपेयश्च ॥

कुप्यम् । भिद्योद्ध्य । सिध्यः । तिष्य । पुष्यः । युग्यः । आज्यानाम् । सूर्यः । इत्येते "कुप्य०" [३९] इत्यादिना निपात्याः ॥

आदृत्यः । प्रावृत्यः । स्तुत्यैः । जुष्यः ॥ एतीति इणिकोर्ग्रहणम् । इत्यः । अधीत्यः । शिष्यः । अत्र "इवृग्०" [४०] इत्यादिना क्यप् ॥ इणिकोर्ग्रहणादयतेरिङश्च न स्यात् । उपेयः । अध्येयः ॥

अर्च्यासंकल्प्यवृत्योसौ चर्त्यारिः शंस्यकृत्यवित् ।
दानवर्ष्यजगच्छस्यं सुरकार्यं करिष्यति ॥ २१ ॥

---

१ ए °साय्यानां प्रयाया°. २ ए °त्प्रिया स्तु°. ३ बी °त्यश्चादृ°. ४ ए °कृच्छ्रोध्ये°. ५ ए बी सी °कल्पवृ°. ६ ए सी डी °र्त्यारिश°. ७ ए सी °रिस्यति.

---

१ ए °जायस्ति°. २ बी °ष्यवत्पोष°. ३ ए °वृत्या प°. सी °वृत्य प°. ४ सी डी °रिचार्य. ५ ए चक्रेः यो. ६ ए कुप्यम् । भिद्धयोद्धय. ७ ए तिष्यः । पु°. डी तिष्यः । पु°. ८ सी युग्मं । आ°. ९ ए कुप्य इ°. १० ए °त्यः । जष्यः ॥ एवीति इणि°. ११ ए इष्टग्. १२ ए क्यड् ॥ इ°.

२१. असौ पुत्रः शस्यं श्लाघ्यं सुरकार्यं दैत्यवधादि करिष्यति। कीदृक्सन्। अर्च्यं धर्म्यत्वेन पूज्यमसंकेल्प्यं महत्तमत्वेन केनाप्यसाध्यत्वादचिन्त्यं वृत्यं वर्तनं यस्य सः। तथा चर्या हिंस्या अरयो येन सः। तथा शंस्यकृत्यवित् प्रशस्यकार्यज्ञस्तथा दानेन वर्ष्यं सेक्यं जगद्येन सः॥

नीत्या वृष्या च मृज्या च दुह्या चानेन गौरियम्।
ब्रह्मजाप्यकृतां जप्ये मार्ग्ये विघ्नं हरिष्यते॥ २२॥

२२. अनेन पुत्रेण कर्त्रा नीत्या न्यायेन कृत्वेयं गौः पृथ्वी वृष्या च सेक्या न्यायेन प्रवर्तयिष्यत इत्यर्थः। अत एव मृज्या च निष्पापीकरिष्यत इत्यर्थः। अत एव दुह्या च रत्नानि क्षारयितव्या च। न्यायपूर्ता हि पृथ्वी महर्द्ध्युपचितत्वाद्रत्नानि प्रसूते। तथा ब्रह्मजाप्यकृतां ब्रह्मणः परमध्येयस्य जाप्यं जपनं ध्यानं कुर्वतां योगिनां मार्ग्ये रागद्वेषादिमलापनयनेन संशोध्ये जप्ये ध्याने विघ्नं दैत्याद्युपद्रवोनेन हरिष्यते॥

ज्ञानगुह्यमिति ख्यातवत्सु तेष्वनिगोह्यमुत्।
दोह्या गाः प्रददौ जित्याशतभूमिं च भूमिपः॥ २३॥

२३. इत्येवंरीत्या ज्ञानगुह्यं ज्ञानरहस्यं ख्यातवत्सूक्तवत्सु तेषु दैवज्ञेषु भूमिपः कर्णो ददौ। किमित्याह। दोह्या गा धेनूर्जित्याशतभूमिं च। जित्या महाहलानि तासां यच्छतं तस्य भूमिं च। महाहल-

१ प सी °जाप्यं कृ°. २ डी विग्रह°. ३ डी वरतु ते°.

१ सी धर्मात्वे°. २ प सी °कल्पं म° ३ प केनप्य°. ४ सी °चिन्त्यवृत्य व°. ५ प °र्या हिंस्या. ६ प °त् त्प्रश°. ७ सी सेष्यं ज°. ८ प सी °क्यं तग°. ९ प °र्थान्वृषा च. १० प सी °व सृज्या. ११ प सी °ता दि पृ°. १२ सी डी °ध्ये जाप्ये. १३ सी °क्त ते°. १४ डी °त्सु दै°. १५ प °लामि ता°. सी °लामि तासां. १६ डी °नि तांसा य.°

शतेन यावती भूः कृष्यते तावतीमित्यर्थः । कीदृक्सन् । अनिगोह्या-तिबहुत्वात्संवरीतुमशक्या मुद्येन सः ॥

**पुत्रे विपूयजन्माभेऽस्मिन्कुङ्कुमविनीयकैः ।**

**श्रेणिर्गृह्या पुरीगृह्योत्सवं चक्रे प्रगृह्यवाक् ॥ २४ ॥**

२४. पुरीगृह्या नगरवा(बा)ह्या श्रेणिः सजातीयशिल्पिसंघः कुङ्कुम[1]-विनीयकैः कुङ्कुमानां कल्कैः कुङ्कुमद्रवैरित्यर्थः । उत्सवं सर्वत्र छटादा-नैर्महं चक्रे । क । विपूये मुञ्जे शरवणे[2] जन्म यस्य स विपूयजन्मा स्कन्दः[3] । तेजस्वितादि[4]गुणैस्तत्तुल्येऽस्मिन्पुत्रे[5] । पुत्रजन्मविषयमित्यर्थः । कीदृशी सती । गृह्या हर्षोत्कर्षेण मद्यपानोत्थमत्ततया वास्वतन्त्रा[6] । तथा प्रगृह्या स्वरसन्धिरहिता वाक्पटू एतौ कुङ्कुमक्षेपकावित्यादिका वाणी यस्याः सा । एतेनास्या अन्योन्यमुत्साहनं[7] पाण्डित्यं चोक्तम् ॥

**गुणगृह्याः कर्णसूनोः शक्रभृत्याः सभार्यकाः ।**

**संभृत्यभूमेः संभार्यदिवः खे मङ्गलं जगुः ॥ २५ ॥**

२५. सभार्यका देवीयुक्ताः शक्रभृत्या इन्द्रपोष्या देवाः[8] खे मङ्गलं जगुः । किंभूताः सन्तः । कर्णसूनोर्गुणगृह्या गुणानां पक्षपातिनः । यतः किंभूतस्य । संभृत्यभूमेः पोष्यपृथ्वीकस्य । तथा संभार्यदिवो दैत्यन्यक्का(क्का)रादिना पोष्यस्वर्गस्य ॥

वृत्यः । अत्र "ऋदु०" [४१] इत्यादिना[11] क्यप् ॥ अकृपिच्चृदच इति[12] किम् । असंकल्प्यं[13][14] । चर्त्यं । अर्च्यं ॥

१ सी डी °दिवाःखे. २ प °वः एव म°.

१ सी °कुमानां वि°. २ प °वणो ज°. ३ प स्कन्द ते° ४ प °ताविदि°. ५ बी °त्र ज°. ६ प वाश्वत° ७ सी °हन पा°. ८ बी देवा खे. ९ सी °गुह्या. १० प °कागदि°. ११ प °इत्यादि°. १२ प °पिवृद°. १३ सी डी °कल्पा । च°. १४ प °ल्प्य । वर्त्यं । अर्च्या ॥ कृ.

कृत्य कार्यम् । वृष्या वर्ष्य । मृज्या मार्ग्य । शस्यं शंस्य । गुह्यं निगोह्य । ह्या दोह्याः । जप्ये जाप्य । इत्यत्र "कृवृषि०" [४२] इत्यादिना क्यप् वा ॥

जित्या । विपूय । विनीयकः । अत्र "जिवि०" [४३] इत्यादिना क्यप् ॥

प्रगृह्यवाक् ॥ अस्वैरिणि । गृह्या । वा(बा)ह्यायाम् । पुरीगृह्या ॥ पक्षे । णगृह्याः । अत्र "पद०" [४४] इत्यादिना क्यप् ॥

भृत्याः । अत्र "भृगोसंज्ञायाम्" [४५] इति क्यप् ॥ असंज्ञायामिति किम् । भार्यकाः ॥

संभृत्य संभार्य । इत्यत्र "समो वा" [४६] इति वा क्यप् ॥

हरः श्रीनायको धाता लेह्याः सर्वेमृतस्य च ।
दैत्यान्भटब्रुवाञ्जज्ञुः कर्णनन्दनजन्मनि ॥ २६ ॥

२६. कर्णनन्दनजन्मनि सति हरः श्रीनायको विष्णुर्धाता सर्वेमृतस्य लेह्याश्चास्वादका देवाश्च दैत्यान्भटब्रुवान्निन्द्यभटाञ्जज्ञुर्मेनिरे ॥

मदनोङ्गान्तरग्राही स्थायी पुण्ये बुधान्वये ।
किरो गिरो विपक्षाणां ज्ञप्रियोलक्षि कर्णभूः ॥ २७ ॥

२७. पुण्ये बुधान्वये सोमसुतवंशे स्थायी वर्तमानः कर्णभूः कर्णपुत्रोङ्गान्तरग्राही शरीरान्तरग्रहीता मदनोलक्षि । तथा विपक्षाणां केरो विक्षेपको गिरः संहारकश्चालक्षि । तथा ज्ञप्रियो विद्वज्जनवल्लभ-

१ ए °त्यान्भुडब्रु°. २ ए °अज्ञः क°. ३ ए °ङ्गातर°.

१ ए °ष्या वृष्य. २ ए मार्गे । श°. ३ सी °र्ग्ये । शंस्यं शस्यं । गु°. ४ डी शंस्यं । गु°. ५ सी बी दोह्य । ज°. डी दोह्या । ज°. ६ सी जप्य । इ°. ७ ए कृषि°. ८ सी वयस्तप्वा ॥ जि°. ९ ए प्रसह्य°. १० डी पक्ष्य । गु. ११ ए °रग्राही° १२ ए °पक्षकाणां. १३ ए सी विपक्षके गि°. १४ ए सी तवा ज्ञ°.

श्चालक्षि । तथाविधाकृतिविशेषेणात्यन्तं रूपी शूरो विद्वांश्चायं भविष्यतीति जनैः संभावित इत्यर्थः ॥

नायकः । धाता । अत्र "णकतृचौ" [४८] इति णकतृचौ ॥

हरः । अत्र "अच्" [४९] इत्यच् ॥

लेहाः । अत्र "लिहादिभ्यः" [५०] इत्यच् ॥

ब्रुवान् । इति "ब्रुवः" [५१] इति निपात्यम् ॥

नन्दनः(न) । मदनः । अत्र "नन्द्यादिभ्योनः" [५२] ॥

ग्राही । स्थायी । इत्यत्र "ग्रहादिभ्यो णिन्" [५३] ॥

बुध । प्रियः । किरः । गिरः । ज्ञ । इत्यत्र "नामि" [५४] इत्यादिना कः ॥

राजव्याघ्रगृहे प्रह्वा निष्प्रतिश्यायकण्ठकाः ।
एयुश्छात्राः प्रफुल्लाघ्राः पठन्तः सूत्रमातृकाम् ॥ २८ ॥

२८. छात्राः सोपाध्यायाश्चट्टा राजव्याघ्रगृहे राजव्याघ्रस्य कर्णस्य सौध एयुः । कीदृशाः सन्तः । प्रह्वा विनीतत्वान्नम्रास्तथा निष्प्रतिश्यायः प्रतिश्यायान्श्लेष्मणो निर्गतः कण्ठो ध्वनिर्येषां ते तथा तारस्वरास्तथा सूत्रमातृकां पुत्रजन्मोत्सवोचितं पाठविशेषं पठन्तोत एव प्रफुल्लाघ्रा उच्छ्वसितनासिकाः ॥

गृहे । अत्र "गेहे ग्रहः" [५५] इति कः ॥

प्रह्वाः । अत्र "उपसर्गाद्०" [५६] इत्यादिना डः ॥ अश्य इति किम् । प्रतिश्याय ॥

१ बी निःप्रति°. २ ए सी °श्यामक°. ३ ए °युश्छत्राः प्रपुल्लाघाः प°. ४ बी सूतमा.°

१ सी डी °त्यन्त रू° २ ए डी णक तृ°. ३ ए नन्दादिभ्योतः ॥ ग्रा°. ४ बी बुधः । प्रि°. ५ ए °रः । न । इ°. ६ सी °ना यक ॥. ७ बी निष्प्रति°. ८ डी °याश्लेष्माणो. ९ ए सी °श्लेष्माणो. १० बी सूतमा°. ११ बी °न्मोनि°. १२ ए सी °सि ××× त्यौ ॥. डी °सिका ॥ गृ°. १३ डी °श्यायः ॥ व्या°.

व्याघ्र । आघ्राः । एतौ "व्याघ्र०" [५७] इत्यादिना निपात्यौ ॥

माल्यजिघ्राः शङ्खधमा उत्पश्यत्वान्नभःपिबाः ।
सुधाधयसमाः संगीतकं चक्रुः कलाविदः ॥ २९ ॥

२९. कलाविदो गायनादयो विद्यावन्तः संगीतकं प्रेक्षणं चक्रुः । किंविधाः । शङ्खधमाः केचिच्छङ्खान्वादयन्तस्तथा केचिद्गायनादय उत्पश्यत्वाद्गानादावूर्ध्वं प्रेक्षमाणत्वान्नभःपिबो व्योम्नो लेह्या इव । गानादि कुर्वन्तो हि गायनादयः स्वभावादूर्ध्वं पश्यन्तो व्योमचुम्बिन इव लक्ष्यन्ते । सर्वेपि चैते माल्यजिघ्राः पुष्पाणि जिघ्रन्तो भोगलिङ्गा इत्यर्थः । अत एव सुधाधयसमा गन्धर्वदेवैः समाः ॥

माल्यजिघ्राः । शङ्खधमाः । नभःपिबाः । सुधाधय । उत्पश्य । इत्यत्र "घ्राध्मा० [५८] इत्यादिना शः ॥

मित्रैर्मुचेतयैरेतज्जन्मवेदयसातयैः ।
विलम्बासाहयैरेये व्यापारान्तरपारयैः ॥ ३० ॥

३०. मित्रैरेये कर्णसौध आगतम् । कीदृशैः । एतज्जन्मनः कर्णपुत्रजन्मनो वेदयानां ज्ञापकानां पुत्रजन्मवर्धापकानां सातयैर्महादानेन सुखोत्पादकैः । सात् सौत्रो धातुः सुखार्थे । ततः सातत: सुखविषयीभवतो मित्राणि प्रयुञ्जते णिग् । अतश्च पुत्रजन्मज्ञानान्मुचेतयैर्हर्षस्यानुभवितृभिरत एव विलम्बासाहयैः कालक्षेपमसहमानैरत एव व्यापारान्तरपारयैरन्यव्यापारसमापकैः कार्यान्तरं मुक्त्वेत्यर्थः ॥

---

१ प °धायसमसं° सी °धायसुमाः.

---

१ प °यतंस्त°. २ प बी प्रेक्ष्यमा°. ३ प °क्ष्यते । स°. ४ बी एवं सु°. ५ प सी डी समा ॥ मा°. ६ प °नां जाप°. ७ सी °दामेन. ८ बी °तः सु°. ९ डी °युञ्जाते. १० प °म्बासहः ये का°. सी °म्बासह°.

अश्चलोदेजयैः स्त्रैणैरक्षतामत्रधारयैः ।
उत्साहयितृभिः कान्त्या व्योमलिम्पैरुपस्थितम् ॥ ३१ ॥

३१. स्त्रैणैरुपस्थितं कर्णान्तिकेवस्थितम् । कीदृशैः । अक्षतामत्रधारयैरक्षतपात्रधारिभिः । तथोत्साहयितृभिरन्योन्यस्योत्साहकैस्तथा कान्त्याङ्गालंकारादिद्युत्या व्योमलिम्पैर्नभो व्याप्नुवद्भिरित्यर्थः । तथाश्चलोदेजयैः कर्णस्य निरुञ्छनाय वस्त्रप्रान्तस्य चालकैः ॥

निलिम्पगोविन्दसमैर्मुद्विन्दस्यारविन्दकैः ।
तद्वेश्माभाच्चलाचालैर्बन्धुभिर्ज्वलभूषणैः ॥ ३२ ॥

३२. तद्वेश्म कर्णसौधं बन्धुभिराभात् । कीदृशैः । मुदः पुत्रजन्मोत्थहर्षस्य विन्दानि लब्धृण्यास्यारविन्दानि मुखपद्मानि येषां तैस्तथा ज्वलभूषणैर्दीप्यमानालंकारैरत एव निलिम्पगोविन्दसमैर्निलिम्पैर्देवभेदैर्गोविन्देन विष्णुना च तुल्यैस्तथा चलाचालैः कैश्चिच्चलैः कैश्चिदचलैः ॥

द्विषद्दवज्वालदावः पुण्यभावो भवोपमः ।
सर्वेषामुचितं चक्रे राज्ञां नायो ग्रहेशरुक् ॥ ३३ ॥

३३. राज्ञां नायो नायकः कर्णः सर्वेषां छात्रादीनामुचितं वस्त्रदानादि चक्रे । कीदृक्सन् । ग्रहेशरुक् सूर्योष्णतेजाः । अत एव द्विषन्त एव दवा वनानि तेषु ज्वालदावो ज्वलद्दावानलस्तथा पुण्य औदार्यादिगुणैः पवित्रो भावोभिप्रायो यस्य सः । अत एव भवोपमः शंभुतुल्यः ॥

---

१ **प** अश्चलो°. २ **प** °मैमुद्वि°. ३ **प** °दाक पु°. ४ **प** °ण्यपुण्यभावोप°. ५ **प** रायां तायो. ६ **प सी** °हेरुशक्.

---

१ **प** व्योपलिर्पैर्न°. २ **सी** °लिपैर्न°. ३ **प** °व्याद्भव°. ४ **सी** नि × × × भात् । की°. ५ **प** °र्दीपमा°. ६ **प** चलैश्चलैः. ७ **सी** °लाचलै कै. **डी** °लाचलैः. ८ **प** °षां स्यात्रा°. ९ **प** °शरुक्. १० **प** °पत एत द°. ११ **प** °वो लदावा°. १२ **प** °व भावो°. १३ **प सी** °तुल्यं ॥ ग्रा°.





ग्राहाणामप्यमारिं स धान्यांस्रावो धनास्रवः ।
प्रावर्तयद्धर्मनयो हर्षसंस्रावलोचनः ॥ ३४ ॥

३४. स कर्णो ग्राहाणामपि न केवलं स्थलचराणां जलचराणामपि मत्स्यादीनामप्यमारिं प्रावर्तयत् । कीदृक्सन् । हर्षेण पुत्रजन्मोत्थानन्देन संस्रावे जलं क्षरन्ती लोचने यस्य सः । तथा धर्मनयो धर्मस्य नायकोतिधार्मिक इत्यर्थः । अत एव धान्यांस्रावो मासिकादिषु धान्यानां दाता । तथा धनास्रवो द्रव्यदाता च ॥

अवहारालयागाधः सोवसायोपि सागसाम् ।
हर्षाश्रुसंस्रवोत्तानदृशो गुप्तिजुपोमुचत् ॥ ३५ ॥

३५. अवहाराणां जलचराणामालयोब्धिस्तद्वदगाधो गम्भीरः स कर्णो गुप्तिजुषः काराक्षिप्तान्नरानमुचत् । कीदृक् । सागसामपराधिनामवसायोपि क्षयकारोपि । कीदृशान् । अस्माकमधुना मोक्षो भावीति हर्षाश्रूणां संस्रवाः क्षरिच्य उत्ताना आगामिमोचकनरदिदृक्षयोर्ध्वीभूता दृशो येषां तान् ॥

आश्वासाम्लायहरिणीप्रमोदाकर्णितं नृपः ।
निरन्तरायमभयं व्याधभूष्वप्यघोषयत् ॥ ३६ ॥

३६. नृपः कर्णो व्याधभूष्वप्याखेटकस्थानेष्वपीत्यर्थः । अभयं मरणभयाभावमघोषयत् । कीदृशम् । आश्वासाः स्वाभयश्रवणादुज्जीव-

१ प सी °न्याश्रावो. २ प °संश्राव°. ३ प बी °संश्रवो°. ४ प °शो मुक्ति°.

१ प °मपि मा°. बी °ममा°. २ प °संश्रावे. ३ बी °को धा°. ४ प °न्याश्रावो. ५ प °नाश्रवो. ६ बी °व्यस्य दा°. ७ सी °ता × × × तथागाधो. ८ बी संश्रवाः. सी संधवाः. ९ प सी डी °योर्द्ध भू°. १० बी °ष्वप्यरण्येष्वपी°. ११ प °दृशा । आस्वासाः. १२ सी आम्वासा स्वा°.

न्योत एवाम्लाया हृष्टा या हरिण्यस्ताभिः प्रमोदेनाकर्णितं तथा निरन्तरायमन्तरेत्यन्तरायो विघ्नस्तस्मान्निर्गतं प्रचण्डशासनत्वेन केनाप्य-नुल्लङ्घ्यमित्यर्थः ॥

साहयैः । सातयैः । वेदय । उदेजयैः । चेतयैः । धारयैः । पारयैः । अत्र "साहि०" [ ५९ ] इत्यादिना शः ॥ अनुपसर्गादिति किम् ॥ उत्साहयितृभिः ॥

लिम्पैः । विन्द । इत्यत्र "लिम्पविन्दः" [ ६० ] इति शः ॥

निलिम्प । गोविन्द । अरविन्द । इत्यत्र "निगवादेर्नाम्नि" [६१] इति शः ॥

ज्वल ज्वाल । चलाचालैः । दव दावः । नयः नायः । भव भावः । ग्रह ग्राहाणाम् । आस्रवैः आस्रावः । अत्र "वा ज्वलादि०" [ ६२ ] इत्यादिना वा णः ॥

अवहार । अवसायः । संस्राव । इत्यत्र "अवहृ०" [६३] इत्यादिना णः ॥ संस्रवेत्यपि कश्चित् ॥

उत्तान । व्याध । अन्तरायम् । आश्वास । अम्लाय । इत्यत्र "तन्व्यधि०"[६४] इत्यादिना णः ॥

नर्तकीर्गाथिकाः कान्त्या रजकीर्नभसोदिशत् ।
सोंहःखनक्याः श्रीदेव्या महाय सह गायनैः ॥ ३७ ॥

३७. स कर्णोहःखनक्या अंहसि निष्पुत्रत्वादिके पापे खनक्या विदारणशिल्पस्त्रीतुल्यायाः श्रीदेव्या महायोत्सवार्थमदिशदाज्ञापयत् ।

१ सी °र्गाथकाः. २ ए कान्त्याः र°. ३ ए °त् । सांहः°. सी °त् । साहः°.

१ ए °रायांम°. सी डी °रायंम°. २ ए °प्यमुल°. ३ ए °यैः । सोतयैः । वद°. ४ ए लिपैः । वि°. ५ ए सी डी °लिम्पा । गो°. ६ ए °र्नाम्नाति°. ७ ए सी डी दाव । न°. ८ बी सी डी नय ना°. ९ सी °म् । स्र°. १० ए आश्रवः. ११ डी °वः । अ°. १२ ए सी डी °हारः । अ°. १३ ए संश्रवे°. डी संश्रावे°. १४ ए व्याधः । अ°. १५ ए इतत्र. १६ ए निष्पुत्र°. १७ बी °शिल्पिस्त्री°. १८ ए °दिवादा°.

का इत्याह । गायनैर्गीतशिल्पैर्नरैः सह नर्तकीर्नर्तनशिल्पा गाथिका गानशिल्पाश्च विलासिनीः । कीदृशीः । कान्त्याङ्गाभरणादिद्युत्या नभसो रजकीर्वस्त्रस्येव निर्मलीकारकत्वान्नानारागोत्पादनाद्वा रजकस्त्रीतुल्याः ॥

नर्तकीः । खनक्याः । रजकीः । अत्र "नृत्खन्०" [ ६५ ] इत्यादिनाकट् ॥

गाथिकाः । अत्र "गस्थकः" [ ६६ ] इति थकः ॥

गायनैः । अत्र "टनण्" [ ६७ ] इति टनण् ॥

**प्रवकैः सरकैरापल्लवकै राजवल्लभैः ।**

**पुत्रनाम्न्युद्यतः सोभाद्धायनैर्नु सुहायनः ॥ ३८ ॥**

३८. स कर्णः पुत्रनाम्नि पुत्रनामकरण उद्यतः सन् राजवल्लभैरन्तरङ्गपार्षद्यैः सहितोभात् । कीदृशैः । प्रवकैः पुत्रनामकरणोत्सवहर्षेण साधु प्रवमाणैस्तथा सरकैः सविलासं गच्छद्भिस्तथापल्लवकैर्हितत्वादापदां साधु छेदकैः । यथा सुहायनोखिलसस्यनिष्पत्तिहेतुत्वेन शोभनः संवत्सरः प्रवकैः साधूद्गच्छद्भिः सरकैः प्रसृमरैरापल्लवकैर्दुष्कालोच्छेत्तृभी राज्ञां वल्लभैर्हायनैर्व्रीहिभिर्भाति ॥

हायनः । हायनैः । अत्र "हः०" [ ६८ ] इत्यादिना टनण् ॥

प्रवकैः । सरकैः । लवकैः । अत्र "प्रुसृ०" [ ६९ ] इत्यादिनाकः ॥

**गायन्त्यो वीरभूरेन्तिवदसौ नन्दकोस्त्विति ।**

**नाम वृद्धाः कुमारस्य जयसिंहेत्यथ व्यधुः ॥ ३९ ॥**

३९. अथ वृद्धाः कुलस्थविराः कुमारस्य जयसिंहेति नाम व्यधुः ।

१ सी °यन्यो वी°. २ बी °रतिव°. ३ डी °वदसौ.

१ ए °दृशी । का°. २ ए °न भूत्व°. ३ ए अव र्ग°. ४ ए सी °ल्लतैर°. ५ ए °रकै स°. ६ ए सी डी °लशस्य°. ७ ए °भनास°. ८ ए °लवोकैर्दु°. ९ बी कैदुष्का°. १० बी °च्छेतृभी.

किंभूताः सत्यः[1]। गायन्त्यः । कथमित्याह । वीरो भूयाद्वीरभू रंसीष्ट रन्तिः[2]। द्वन्द्वे वीरभूरन्ती महाराजविशेषौ । तद्वन्नन्दको[3] नन्दताद्वर्धतामित्याशास्यमानोस्त्विति । जयसिंहेतीत्यत्रानुकार्यानुकरणयोः स्याद्वादाश्रयणेनाभेदविवक्षायामर्थवत्त्वाभावान्न[4] नामसंज्ञेति न विभक्तिः ॥

नन्दकः । अत्र "आशिष्यकन्" [ ७० ] इत्यकन् ॥

रन्ति । वीरभू[5] । अत्र "तिक्कृतौ नाम्नि"[6] [ ७१ ] इति तिक्च[7] ॥

**शिरोलाववदाकम्पकारं[1] तन्नाम[2] शुश्रुवुः ।**
**दुर्गाण्यमण्डयंश्चारिभूमिपाला भयद्रुताः ॥ ४० ॥**

४०. स्पष्टः । किं तु शिरोलाववद्यथा शिरश्छेदकस्य नामाकम्पकारं[8] भयजनकम् । तन्नाम जयसिंहेत्याख्याम्[9]। दुर्गाणि कोट्टानमण्डयन्नरचयन् ॥

**रक्षामरचयत्सूनोः[3] शेषभक्षैर्नृभिर्नृपः ।**
**धर्मशीलैर्यशःकामैः शुभाचारैर्बहुक्षमैः ॥ ४१ ॥**

४१. नृपः कर्णः[10] शेषं बालभोजनादुद्धरितं[11] भक्षयन्ति तैः शेषभक्षैर्नृभिर्बालहारैः[12] कर्तृभिः सूनो रक्षामरचयदकारयत्[13] । किंभूतैः । यशःकामैरेकान्तेन[14] स्वस्वामिभक्ता[15] एत इत्यादियशोवादाभिलाषिभिरत एव धर्मं शीलयन्त्यभ्यस्यन्ति ये तैर्धर्मशीलैर्धार्मिकैरत[16] एव शुभाचारैः स्वस्वामिनोनुकूलमेवाचरद्भिस्तथा[17] बहु[18] क्षाम्यन्ति[19] ये तैर्बहुक्षमैः ॥

१ बी °रं तंन्ना°. २ ए न्नामं शु°. ३ ए सी °नो शे°.

१ बी डी सन्त्यो गा°. २ ए रन्ति द्वैद्वे वी°. ३ सी °द्वन्नन्दता°. ४ बी °र्थत्त्वा°. ५ ए सी डी °रभूः । अ°. ६ सी तिकृतौ ना°. ७ ए °तिकृ°. ८ बी °रं तथाकम्पकारं भ°. ९ सी डी °ख्या । दु°. १० ए सी °र्णे शे°. ११ ए °दुच्चरि°. १२ ए °भिबाल°. १३ ए °क्षानर°. १४ बी °मैरका°. १५ ए °क्ता इत्याभिय°. सी डी °क्ता इत्यादि°. १६ ए °शीलिधार्मि°. १७ सी °द्भिमस्त°. १८ ए बहुं क्षा°. १९ ए °म्यतियें ते°.

सुखप्रतीक्षा धात्री तं वक्रसंगायसामगी[1] ।
कुमारं रमयामासासुरापी शीधुपी[2]वियुक् ॥ ४२ ॥

४२. धात्र्युपमाता तं कुमारं रम[1]यामास । कीदृक्सती । असुराप्य-मद्यपा । त[2]था शीधुपीवियुक् । मद्यपासङ्गरहिता । त[3]था सुखप्रतीक्षा यावत्कुमार[4]स्य सुखमुत्पद्यते तावत्प्रतीक्षमाणा । तथा कुमार[6]स्य सुखो-त्पादनाय वक्रं गीतवि[7]शेषं[8] संगायति वक्रसंगायी या सामगी मधुरं गायन्ती सा ॥

निर्वर्त्या[9]त् । आकम्पकारम् ॥ विकार्यात् । शिरोलाव ॥ प्राप्यात् । भूमि-पालाः । अत्र "कर्म[10]णोण् ॥" [ ७२ ] इत्यण् ॥ तन्नाम शुश्रुवुः । इत्यत्र प्राप्या-त्कर्मणोनभिधानान्नस्यात् । तथा बाहुलकान्नि[11]र्वर्त्यविकार्याभ्यामपि क्वचि[12]न्न स्यात् । रक्षामरचयत्[13] । दुर्गाण्यमण्डय[14]न् ॥

धर्मशीलैः । यशःकामैः । शेपभक्षैः । शुभाचारैः । सुखप्रतीक्षै[15]ः । बहुक्षमैः । अत्र "शीलिकामि०" [ ७३ ] इत्यादिना णः ॥

सामगी । इत्यत्र "गायः०" [ ७४ ] इत्यादि[16]ना टक् ॥ अनुपसर्गादिति किम् । वक्रसंगाय ॥

सुरापी[17] । शीधुपी । इत्यत्र "सुरा०" [ ७५ ] इत्यादिना टक् ॥

स भूपपुत्रो ववृधे वीरह[3]ायः पराभवन् ।
तन्तुवायधान्यमायाभा[4]निर्वोर्वीशदासकान् ॥ ४३ ॥

१ सी °क्रोमाशुसा°. २ बी °पी सीधु°. ३ ए °हायप°. ४ ए °नित्पोर्वी°. सी डी °निवाधीश°.

१ ए °मयांनसे । वी°. २ ए बी सी °था सीधु°. ३ ए °था मुख°. ४ ए सी °रय × × मुखो°. ५ बी °तीक्ष्यमा°. ६ ए बी °रय मुखो°. ७ बीगीतिवि°. ८ ए °शषसं°. ९ बी सी °र्वत्यात. १० ए °मणाण. ११ ए बी °र्वत्यवि°. १२ ए °चिभूस्यात । पक्षामपच ··· दु°. १३ बी °यन् । दु°. १४ ए °यत् ॥ ध°. १५ ए °क्षा । अ°. १६ ए °ना दक्. १७ ए °पी । साधु°. बी सी °पी । सीधु°.

४३. स भूपपुत्रो ववृधे । कीदृक्सन् । वीरह्वायो बालकयुद्धाय सुभटदारकान्सम्पर्धमाकारयंस्तथा तन्तुवायधान्यमायाभानिव कुविन्दवणिग्बालकानिवोर्वीशदारकान्पराभवन् ॥

• भूप । इत्यत्र "आत०" [ ७६ ] इत्यादिना डः । अह्वावाम इति किम् । वीरह्वायः । तन्तुवाय । धान्यमाय ॥

हरिर्गोसंख्यदायादो गोप्याख्यो बाह्यभूमिषु ।
यथा तथैको रेमे स पथिप्रज्ञोरिभीप्रदः ॥ ४४ ॥

४४. स कुमारो बाह्यभूमिषु सरस्वतीतटादिष्वेको रेमे । यथा गोसंख्या गोपाला दायादा गोत्रिणो यस्य सः । तथा गोपीराख्यात्याचष्टे वा गोप्याख्यो गोपावस्थाः सन्नित्यर्थः । हरिर्बाह्यभूमिषु यमुनातटादिष्वेको रेमे । यतः कीदृक्स हरिश्च । पथिप्रज्ञः । प्राज्ञत्वान्मार्गज्ञस्तथारिभीप्रदः शत्रुभयप्रदोतिपराक्रमीत्यर्थः ॥

गोसंख्य । इत्यत्र "संमः ख्यः" [ ७७ ] इति डः ॥

दायादः । गोप्याख्यः । अत्र "दश्चाङः" [ ७८ ] इति डः ॥

पथिप्रज्ञः । भीप्रदः । अत्र "प्रांद् ज्ञश्च" [ ७९ ] इति डः ॥

क्रोशहः सोरिहोक्रीडत्क्लेशापहतमोपहे ।
कुमारघाती गान्धार्या इव सारस्वते तटे ॥ ४५ ॥

१ ए °रिस्यैस°. २ ए °दायःदो. ३ ए क्रोहः. ४ ए °तीर्गाधायां इ°. ५ ए °स्वमे त°.

१ ए °यो···यु°. २ बी °मार्याभा°. ३ ए °णित्पाल°. ४ सी डी °निवाधीश°. ५ बी° डः ॥ आह्वा°. सी डी °डः ॥ ह्वा°. ६ ए बी °ह्वाय । त°. ७ ए °माय: ॥. ८ ए स कुमा°. ९ सी गोभृता दा°. १० ए °तदादि°. ११ ए °मे । येन की°. १२ ए °रिश्चाप°. १३ ए °रिमीप्र°. १४ ए समाख्यः इति ज्ञः ॥ दाग्मदः. १५ ए बी सी प्राज्ञ°.

४५. स जयसिंहः क्लेशापहतमोपहे महातीर्थत्वेन रागद्वेषाभिनिवेशानामपहन्तर्यज्ञानस्यापहन्तरि च सारस्वते तटेक्रीडत् । यथा गान्धार्याः कौरवमातुः कुमारघाती कुमाराणां दुर्योधनादीनां हन्ता भीमः सारस्वते तटे रेमे । भीमो हि कौमारे कुरुक्षेत्रस्थायाः सरस्वत्यास्तटे बहुधा क्रीडितवान् । कीदृक्स भीमश्च । किंचिद्बाल्यातिक्रमेण प्रौढत्वात्क्रोशं हन्ति गच्छति क्रोशहोत एवारीन वध्यादित्याशास्यमानोरिहः ॥

शीर्षघाती पादघातैः शतघ्न्यादिसमैः सह ।
सोभ्यास्यदरिपु क्षेप्नुं पतिघ्नीमिव कन्यकाम् ॥ ४६ ॥

४६. यथा कश्चित्पतिघ्नीमपलक्षणयुक्तामित्यर्थः । कन्यकामरिपु क्षिपति विवाहेन न्यस्यति तथा स कुमारः शतघ्न्यादिशक्तिप्रमुखं शस्त्रजातमरिपु क्षेप्नुमभ्यास्यन् । कैः सह । समैः सवयोभटैः । कीदृक्सन् । शीर्षघाती पादघातश्चाभ्यासचिकीर्षया काष्ठमयशतघ्न्यादिशस्त्रेण वयस्यानामेव शीर्षाणि पादांश्च घ्नन् ॥

सोकृतघ्नैरजायाघ्नैरब्रह्मघ्नैर्नरैः समम् ।
बाहुघ्नोरःकपाटघ्नो हस्तिघ्नो मल्लतां ययौ ॥ ४७ ॥

४७. हस्तिघ्नो बलिष्ठत्वाद्धस्तिनमपि हन्तुं शक्तः स कुमारो मल्लतां ययौ मल्लविद्याकुशलोभूदित्यर्थः । कीदृक्सन् । बाहुघ्नोरःकपाटघ्नो बाहु-

१ बी °तः सन°. २ ए सी °तघ्न्यादि°. ३ ए °समै म°. ४ ए क्षेप्नुं प°. ५ ए °घ्नरब्रह्मघ्नैर्न°.

१ ए °सिंह क्ले°. २ ए °न······नि°. ३ ए °हतर्य°. ए हतरि अज्ञानस्यापहंतरि च. ४ ए °न्धार्या कौ°. ५ ए हय भी°. ६ ए सी हि कुमा°. ७ ए °स्थाया स°. ८ ए स्तट ब°. ९ सी डी °त्यादिक्र°. १० ए °क्रोशह°. ११ ए °च्छन्ति क्रो°. १२ ए °णमुक्ता°. १३ ए °हेव न्य°. १४ ए समै सेवयोभटैः । की°. १५ सी डी शीर्षकाणि. १६ सी डी °दांश्चाघ्न°.

मुरःकपाटं च हन्तुं शक्तो बाहुयुद्धमुरोयुद्धं च कर्तुं शक्त इत्यर्थः । कैः सह । नरैः[1] सवयोभटैः समम् । किंभूतैः । अकृतघ्नैः सज्जनत्वात्कृतघ्नैस्तथाजायाघ्नैः पुण्यपुरुषत्वाच्छुभलक्षणोपेतैरित्यर्थः । तथाब्रह्मघ्नैर्[2]धार्मिकत्वाद्ब्राह्मणानघ्नद्भिः ॥ ज्ञापकज्ञापिता विधयो ह्यनित्या इत्युरःकपाटघ्नेत्यत्र कपाटान्तादपि परस्य हन्तेष्टक् ॥

अरिहः । अत्र "आशिषि[3] हनः" [ ८० ] इति डः ॥ गतावपीति कश्चित् । क्रोशहः ॥

क्लेशापहतमोपहे । अत्र "क्लेश०" [ ८१ ] इत्यादिना डः ॥

कुमारघाती । शीर्षघाती । इत्यत्र "कुमार०" [ ८२ ] इत्यादिना णिन् ॥

शतघ्नी । इत्यत्र "अचित्ते टक्" [ ८३ ] इति टक् ॥ अचित्त इति किम् । पादघातः ॥

अजायाघ्नैः । पतिघ्नीम् । अत्र "जाया०" [ ८४ ] इत्यादिना टक् ॥

अब्रह्मघ्नैः । अकृतघ्नैः । अत्र "ब्रह्मादिभ्यः" [ ८५ ] इति टक् ॥

हस्तिघ्नः । बाहुघ्न । उरःकपाटघ्न(घ्नः) । इत्यत्र "हस्ति०" [ ८६ ] इत्यादिना टक् ॥

**व्यालान्नगरघातान्सोदमयंत्रस्तमीक्षितः ।**
**राजघैर्नगरघ्नैर्द्विद्प्रेष्यैः पाणिघताडघैः ॥ ४८ ॥**

४८. स जयसिंहो नगरघातान्मदोन्मत्तत्वेन नगरोपद्रवकारिणो

---

१ बी °यत्रस्त°. २ ए सी °क्षित । रा°. ३ बी °जघ्नैर्न°. सी °जघ्नैर्न°. ४ सी डी °रघ्नैर्द्वि°. ५ बी °घ्नैर्द्विद्°. ६ ए °द्विज्ञप्रेष्ये पा°.

---

१ ए °रैः मह स°. २ ए °घ्नैर्धार्मि°. ३ ए °शिमिह°. ४ ए °शब्दः ॥ क्रो°. ५ ए °तनोप°. ६ ए °त्यत्रः कु° ७ ए °त्र काया°. ८ डी अकृ°. ९ बी सी °हुघ्नः । उ°. १० ए °क् ॥ व्योला°. ११ ए नघर°. १२ बी °दोत्कटत्वे°.

व्यालान्दुष्टगजानदमयत्खेदनादिना वशीचक्रे । कीदृक्सन् । द्विट्प्रेष्यैः[1] शत्रुचरैस्त्रस्तमेवं[2]विक्रमोमावस्मत्स्वामिनो नूनं पराभविष्यतीति समयमीक्षितः । किंभूतैः । राजघ्नैर्नृपान् घ्नद्भिर्नगरघ्नैः पुराणि विनाशयद्भिश्चरकर्मणि निपुणैरित्यर्थः । एतैर्हि गुप्तचरप्रयोगेण राजानो नगराणि च विश्वस्तान्यज्ञातं घात्यन्ते तथा पाणिघताडघैरात्मगोपनाय पाणिघताडघशिल्पिविशेषवेषधारिभिः ॥

नगरघ्नैः । अत्र "नगरादगजे" [ ८७ ] इति टक् ॥ अगज इति किम् । नगरघातान् ॥

राजघैः । इति "राजघः" [ ८८ ] इति निपात्यम् ॥

पाणिघताडघैः । अत्र "पाणिघ०" [८९] इत्यादिना पाणिताडाभ्यां कर्मभ्यां पराद्धन्तेष्टक् घादेशश्च निपात्यः ॥ पाणिना ताडेन हन्तीति करणादपि केचित् ॥

**रोदःकुक्षिंभरिः कीर्त्या दानैर्दीनोदरंभरिः ।**
**अनात्मंभरितां भेजे पूजार्हां कर्णनन्दनः ॥ ४९ ॥**

४९. कर्णनन्दनः पूजार्हां सर्वलोकप्रशस्यामनात्मंभरितां भेजे । अनेकलोकाधारोभूदित्यर्थः । कीदृक्सन् । दानैर्दीनोदरंभरिर्व्याधिदौर्गत्याद्युपद्रुतानामुदरपूरकोत एव कीर्त्या रोदःकुक्षिंभरिः ॥

१ ए °रोदःकु°. २ बी °भरना. ३ ए °रिता भे°. ४ ए °जार्हा क°.

१ ए सी द्विट्प्रेष्यैः. २ ए मेव विक्रमोमाव° ३ ए °भिना न°. ४ ए °न्घद्भि°. ५ ए °णि वि°. सी डी °णि विश्ववि°. ६ ए सी डी °न्यानाज्ञा°. ७ ए सी °त्मनोप°. ८ ए °ताडिघ°. ९ ए °गरजे. १० सी °णिभय इ°. डी °णिता°. ११ ए इत्यादि°. १२ ए °णिनोडा° १३ बी सी °भ्यां प°. १४ सी °ना वाडे°. १५ ए °जार्हा म°. १६ ए °भरता°. १७ ए °भरव्याधि°. १८ बी °धिदौर्ग°.

कुक्षिंभरिः । अनात्मंभरिताम् । उदरंभरिः । अत्र "कुक्षि°" [९०] इत्यादिना खिः ॥

पूजार्हाम् । अत्र "अर्हाच्" [९१] इत्यच् ॥

लाङ्गलग्रहतुल्येस्मिन्पूर्णाकर्षघटग्रहे ।
धनुर्ग्रहे धनुर्ग्राहः कोभूदृष्टिग्रहश्च कः ॥ ५० ॥

५०. अस्मिन्कुमारे धनुर्ग्रहे सति को धनुर्ग्राहोभूत्कश्च ऋष्टिग्रहः खड्गग्राहश्चाभून्न कोपीत्यर्थः । कीदृशे । लाङ्गलग्रहतुल्ये महाबलत्वाद्धलभद्रसमे । अत एवाकृष्यतेनेनाकर्षो धन्वाभ्यासयन्त्रं यत्र भृतघटादिना संबद्धप्रान्ता रज्जुराकृष्यते पूर्णेनाकर्णान्तं प्राप्तगुणेनाकर्षेण घटग्रहस्तस्मिन् । धनुर्धरा हि स्थापितपूर्वां दार्ढ्यार्थं कोदण्डचतुर्भुजाख्यधनुर्वेदोक्तस्वरूपान्तःशुषिरस्तम्भयन्त्रच्छिद्रस्थां लालितपूर्वां दार्ढ्यार्थं वरुरुचिधनुर्वेदोक्तस्वरूपोष्ट्रग्रीवाकारकाष्ठयन्त्रच्छिद्रस्थां च रज्जुबद्धग्रीवबालुकादिभृतघटादिना संबद्धप्रान्तां रज्जुमाकर्णान्तमाकर्षन्ति यावद्धटादि वामहस्तनिकटं स्यात् ॥

यष्टिग्रहः शक्तिग्रहः सोसिधेनुत्सरुग्रहः ।
तोमरग्रह आसीत्पट्टिशदण्डग्रहोपि वा ॥ ५१ ॥

१ डी °त्मराग्र°. २ ए सी °ग्रहाः ।.

१ सी डी °नात्मभ°. २ बी °नुग्राहो°. ३ बी °हः पञ°. ४ ए °ञं यंत्र. ५ ए °त यदादि°. सी °तयः दादि°. ६ ए °वद्धप्रा°. ७ ए °राग्य°. ८ सी °णान्तप्रा°. ९ ए सी डी °पूर्वा दा°. १० ए बी दाक्ष्यार्थ°. ११ डी °नुर्भुजाख्यधनुर्वे°. १२ ए° दोकुरू°. १३ सी डी °करु°. १४ ए °पाम्भःशु°. १५ ए °पिरस्तभय°. १६ ए °पूर्वाक्ष्याद्य°. सी °पूर्वाक्ष्यांश°. डी °पूर्वादा°. १७ सी °र्थे तरुरुचिधनु°. १८ ए वरःरु°. १९ ए °द्रस्तां न रुणुज्जु°. २० बी °ग्रीवावा°. २१ ए सी °प्रान्तार°.

५१. स्पष्टः । किं तु यष्टिर्द[1]ण्डः । त्सरुं मुष्टिं गृह्णाति त्सरुग्रहः । अ[2]सिधेनोः खड्गस्य त्सरुग्रहोसिधेनुत्सरुग्रहः । तोम[3]रं शर्वला । वा यद्वा किं बहुनोक्तेनेत्यर्थः । षट्त्रिंशद्दण्डग्रहोप्यासीत् । द[4]ण्डानायुधानि गृह्णाति सामान्येन वाक्यं कृत्वा ततो विशे[5]षेण षट्त्रिंशता दण्डैर्दण्डग्रहः स्वपोषं पुष्णातीतिवत् । षट्त्रिंशद्दण्डा[6]श्चैते । चक्र १ ध[7]नुः २ वज्र ३ खड्ग ४ क्षुरिका ५ तोमर ६ कु[8]न्त ७ त्रिशूल ८ शक्ति ९ परशु[9] १० मक्षिका ११ भ[10]ल्लि १२ भिन्दिमाल १३ मुष्टि १४ लुं[11]ण्ठि १५ शङ्कु १६ पाश १७ पट्टिश १८ ऋष्टि १९ कणय २० कम्पन २१ हल २२ मुशल २३ गुलिका २४ कर्तरी २५ करपत्र २६ तरवा[12]रि २७ कुद्दाल २८ दुस्फोट २९ गोफणि ३० डाह ३१ डचूस ३२ मु[13]द्गर ३३ गदा ३४ घन ३५ करवालिका ३६ इति ॥

**शिक्षासूत्रग्रहो व्याले तथासी[1]त्सोङ्कुशग्रहः ।**
**यथा शशधरास्या न त्रेसुरम्भोघटीग्रहाः ॥ ५२ ॥**

५२. स जयसिंहो व्याले दुष्टगजेपि तथा गाढमर्म[14]तोदनादिवशीकारप्रकारेणाङ्कुशग्रह आ[15]सीद्यथाम्भोघटीग्रहाः पानीयहारिकाः शशधरास्या ना[16]यिका न त्रेसुः । यतः कीदृ[17]शः । सूत्रं गृह्णा[18]ति पाठार्थाव-

१ **ए** °सीसोङ्कु°.

१ **ए** °ण्डः । सरुमु°. २ **ए** °सिवेनो ख°. ३ **बी** °र सर्वरा । वा. **डी** °र सर्वला. ४ **बी** °ण्डानां वृद्धानि गृह्णातीति. ५ **बी** °शेषणं । ष°. **सी** °शेषण. ६ **ए** °ण्डाश्चतो । च°. ७ **सी** धनु २. ८ **ए** कुम्भ ७. ९ **सी डी** °शु १० मक्षि°. १० **सी डी** °ल्लि १२ कुद्दाल १३ भि°. ११ **सी** लुटि १६ श°. १२ **सी** °रि २८ दुस्पोट. **डी** °रि २८ दुःस्पोट. १३ **सी** मुद्गर. १४ **बी** °मैनोद°. १५ **ए** आशीद्यथांभोघ°. **बी** आशीद्य°. १६ **सी डी** नायका. १७ **बी** °दृक् । गृ°. १८ **बी** °ह्णातीति.

गमाभ्यांसमादत्ते सूत्रग्रहः शिक्षायाः पालकाप्यादिगजशिक्षाशास्त्रस्य सूत्रग्रहः ॥

धनुर्धरो दण्डधारः कर्णधारस्तरीमिव ।
दुष्टाश्वान्कवचहरोवाहयत्स मनोहरः ॥ ५३ ॥

५३. स्पष्टः । किं तु दण्डधारः कशायष्टिं धारयन्सन्नवाहयद्वाह्याालिकायामभ्रमयत् । कवचहरस्तरुण इत्यर्थः । अत एव मनोहरः । यथा चौराद्युपद्रवरक्षार्थं धनुर्धरः कवचहरश्च कर्णधारो निर्यामको दण्डधारः कूपस्तम्भधारी संस्तरीं वेडां समुद्रे वाहयति ॥

स विद्यांशहरः पुष्पाहराणां समदर्शयत् ।
दृप्तेस्त्रहारे शक्तिं स्वां सर्पे विषहरीमिव ॥ ५४ ॥

५४. स कुमारोस्त्रहारे वरुणादिदैवतशस्त्रधरेत एव दृप्ते दर्पिष्ठे शत्रौ विषये स्वां शक्तिं प्रतिपक्षदैवतास्त्रप्रेरणरूपं विद्याबलं समदर्शयत् । यथा सर्पे विषये विषहरीं विषहरीति यथार्थाभिधानां मणिं स समदर्शयत् । यतः स पुष्पाहराणां पुष्पाहरणशीलानां विद्याधराणां विद्यांशहरो विद्यया कृत्वांशहरो गोत्री ॥

धनुर्ग्रहे । दण्डग्रहः । त्सरुग्रहः । लाङ्गलग्रहः(ह) । अङ्कुशग्रहः । ऋष्टिग्रहः । यष्टिग्रहः । शक्तिग्रहः । तोमरग्रहः । घटग्रहे । "नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" [न्या० १६. ] इति घटीग्रहाः । अत्र "धनुर्द०" [९२] इत्यादिनाच् ॥ अणपीत्येके धनुर्ग्राह इति चोदाहरन्ति ॥

---

१ डी °भ्यग्रहा°.

१ ए सी °भ्यामद°. बी भ्यामाद°. २ बी डी पालिका°. ३ ए °शिष्याशा°. ४ डी °ह्याहालि°. ५ ए °र्थं चनु°. ६ ए °रः कूप°. ७ बी °रीं वेडा. ८ बी °रे वारु°. ९ बी °क्षदेव°. १० सी °षयं विषहरीत. ११ ए °हरात य°. १२ बी पुष्फाहारा°. १३ ए °हः । शरग्र°.

सूत्रग्रहः । अत्र "सूत्राद्धारणे"[1] [९३] इत्यच् ॥

धनुर्धरः । अत्र "आयुध०"[2] [९४] इत्यादिनाच् ॥ आदिग्रहणात् शशधर ॥ अदण्डादेरिति[3] किम् । दण्डधारः । कर्णधारः ॥

वयसि । कवचहरः[4] ॥ अनुद्यमे[5] । अंशहरः[6] । मनोहर(रः)[7] । अत्र "हृगः"[8] [९५] इत्यादिनाच् ॥ संज्ञायां[9] टोपीति कश्चित् । विषहरीम् । वयोनुद्यम इति किम् । अस्त्रहारे ॥

पुष्पाहराणाम् । अत्र "आङः[10] शीले" [९६] इत्यच् ॥

**संरेभे नाल्पसारे स मागस्यपि महामनाः ।**
**हरिर्नाथहरिर्न ह्युत्पतेद्दृतिहरौ शुनि[1] ॥ ५५ ॥**

५५. स कुमारो महामना महेच्छः मन्सागस्यपि सापराधेप्यल्पसारे स्तोकबले शत्रौ न[11] संरेभे नाभिषेणनाद्याटोपं चक्रे । दृष्टान्तमाह । हि[12] यस्मान्नाथं प्रभुं[13] समर्थं गजादिं[14] हरति विदार्यात्मसमीपं प्रापयति नाथहरिर्हरिः[15] सिंहो दृतिहरौ खल्लस्यापहर्तरि शुनि विषये नोत्पतेन्न[16] विदारणाय फालां दद्यात् ॥

दृतिहरौ[17] । नाथहरिः । अत्र "दृति०" [९७] इत्यादिना-इः ॥

**अमलग्रहिचेताः स गुरुपादरजोग्रहिः ।**
**सेवनीयः[2] सतां जज्ञे फलेग्रहिरिव[3] द्रुमः ॥ ५६ ॥**

१ **ए** शुनिः ॥. २ **ए** °नीय स. ३ **ए** °ग्रहेरिव द्रुमा ॥

१ **बी** सूत्रद्धा°. २ **बी** °धरः । अ°. ३ **ए** अदाडादे°. ४ **बी** °हरं । अ°. ५ **ए** °मे । अमह°. ६ **ए सी** °हर । म°. ७ **बी** °हर । अ°. ८ **डी** हृगेत्या°. ९ **ए** °यां येपी°. **डी** °यांमपी°. १० **ए सी** आदाशी°. ११ **ए** न मरे°. १२ **बी सी डी** हियंस्मा°. १३ **ए** प्रभुम°. १४ **ए सी** °जादि ह°. १५ **ए** °हरि मि°. १६ **बी** °त्पतने°. १७ **ए** °रौ । गाथ°.

५६. फलेग्रहिर्द्रुम इव फलिततरुरिव स सतां सेवनीयो जज्ञे । कीदृक् । न मलग्रहि पापपङ्किलं चेतो यस्य सोत एव गुरुपादरजोग्रहिर्विनीतत्वात्प्रणामकाले पूज्यानां पादधूलिं गृह्णन् ॥

रजोग्रहिः । फलेग्रहिः । मलग्रहि । इत्यत्र "रजः०" [९८] इत्यादिना-इः ॥

**मुनिर्देवापिवातापिजिच्छरत्समये यथा ।**
**यथा स्तम्बकरिर्व्रीहिः स तदासीत्तथोदयी ॥ ५७ ॥**

५७. स जयसिंहस्तदा तस्मिन्यौवनकाल उदय्युदित आसीत् । यथा देवापिवातापिजिद्दैत्यत्वाज्जिगीषया देवानाप्नोति देवापिर्यो वातापिरेवंनामा दैत्यस्तज्जेता मुनिरगस्त्यः । यदि पुनर्देवापिरप्यगस्त्येन जितः कश्चिद्दैत्योभूत्स मम न प्रसिद्धः । यथा स्तम्बकरिस्थुडकृद्व्रीहिश्च शरत्समय उदय्युद्गतः स्यात् ॥ अगस्त्येन हि विप्रोपद्रवकारी वातापिर्दैत्यः संस्कृतपशुरूपः श्राद्धे भक्षयित्वा निर्जरित इति प्रसिद्धिः ॥

**यथा शकृत्करिं बाला वत्सं स्वच्छन्दचारिणम् ।**
**यत्करं तत्करं वा तमन्वयुः किंकरास्तथा ॥ ५८ ॥**

५८. किं कुत्सितं कर्म कुर्वन्ति किंकराः सेवकास्तं कुमारं तथान्वयुर्यथा शकृत्करिं विप्राकारिणं वत्सं बालाः कौतुकेनानुयान्ति । कीदृशं सन्तम् । तं वत्सं स्वच्छन्दचारिणमत एव यत्स्वमनोभीप्सितं करोति यस्तं

१ ए मस्तदा°. २ ए °था शाकुत्करि. बी °था शकृ°. ३ डी °त्करिर्बाला.

१ ए °ग्रहेर्द्रुमे°. सी °ग्रहिर्द्रुमे° २ सी °कृ सन् । मूल°. डी °कृ सन् । म°. ३ ए मलिग्र°. ४ सी डी पापपङ्कि°. ५ ए °ि[illegible] चे°. ६ सी °स्य सन् तथा गु°. डी °स्य सन तथा गु°. ७ ए °न व. ८ ए सी °गस्त्येन क°. ९ ए °था करिस्तुड°. १० सी °व्रीहिश्च. ११ ए करणहाका°. १२ ए °यथा श°. १३ सी डी °त्करं वि°. १४ ए °दृशमन तय°. १५ बी °म् । त°. १६ ए यस्वमनाभी°.

त्करं तदन्याभीप्सितं करोति यस्तं तत्करं वा । यद्रोचते तत्कुर्वाण-मेत्यर्थः ॥

**कीर्तेर्बहुकरो यच्छन्स्वमसंख्याकरोर्थिषु ।**
**त्रिकरोभूत्पुमर्थेषु तेजसा सोत्यहस्करः ॥ ५९ ॥**

५९. स जयसिंहस्त्रीन्करोति त्रिकरोभूत । केषु विषये । त्रिकर इति विशेषाकाङ्क्षायां पुमर्थेषु धर्मार्थकामेषु । धर्मार्थकामांस्त्रीनपि यथावसरं सिषेव इत्यर्थः । कीदृशः । असंख्याकरो मया कियद्दत्तमिति गणनामकुर्वन्सन्नर्थिषु स्वं द्रव्यं यच्छंस्तथा तेजसा कृत्वात्यहस्करोत एव कीर्तेर्बहुकरः । बहुशब्दोत्र गुणवचनो गुणिवचनश्च । बहुत्वं बह्वीं वा प्रभूतां कुर्वन् ॥

**निशाकरकुलोत्तंसः सोतिभास्करजः सदा ।**
**प्रभाकरोदये तातं दिवाकरमिवानमत् ॥ ६० ॥**

६०. स्पष्टः । किं त्वतिभास्करजो भास्करजो मनुः कर्णो वा न्याय-दानादिगुणैस्तावतिक्रान्तोत एव निशाकरकुलोत्तंसः ॥

**स्ववंशादिकरौ प्रीतौ क्षपाकरविभाकरौ ।**
**एष भक्तिकरोकार्षीच्चित्रंकर्या गुणश्रिया ॥ ६१ ॥**

१ सी डी कीर्तिबहु°. २ ए °त्पुनर्थे°. ३ सी °शावरकलो°. ४ ए °षोवगे.
५ सी °दंष ना°. डी °दंषे ना दि°. ६ ए °नमत. ७ बी °त्रकाया.

१ सी डी यस्तत्क°. २ ए °स्त यत्कर तदन्याभीप्सित करोति यस्तं तत्कर वा ।.
३ ए °तत त°. ४ ए त्रिकारोभूत्केषु. ५ ए °र्थाङ्केषु. ६ ए सी डी °पु
न्सद्°. ७ सी डी कीर्तिबहु°. ८ बी °हु बहुत्व. ९ ए प्रभृतां. १० ए स्पष्टा कि.
११ सी °रकलो°.

६१. एष जयसिंहः पूज्येषु भक्तिकरः संश्रित्रकर्याश्रयैकारिण्या गुणश्रिया कृत्वा क्षपाकरविभाकरौ प्रीतावकार्षीत् । किंभूतौ । स्ववंशादिकरावात्मीयवंशस्यादिकरावात्मीयप्रथमजन्मकर्तारौ । इलो नाम राजा सूर्यवंश्यः स च मृगयार्थमुमावनं प्रविष्टः सन्नुमाशापात्स्त्रीत्वं प्राप । सा च स्त्री बुधेन सोमवंश्येनोढा । ततो यावान्वंश उत्पन्नस्तावतः सर्वस्य द्वावपि सोमसूर्यावादिकरौ घटेते ॥

**अन्तकरे कर्तृकरे क्षणदाकरशेखरे ।**

**अभूद्बलिकरो नान्दीकरः कारकरश्च सः ॥ ६२ ॥**

६२. स जयसिंहः क्षणदाकरशेखरे शंभौ विषयेभूत् । कीदृग् । बलिकरः पूजोपहारकारको नान्दीकरो द्वादशविधतूर्यवादक इत्यर्थः । कारकरश्च कारस्य नमस्कारादिक्रियायाः कर्ता च । कीदृशे । अन्तकरे जगत्संहारकारके तथा कर्तारं क्रियाकारकं पुरुषं करोति कर्तृकरस्तस्मिन् । ईश्वरेण हि कर्ता क्रियते । यदुक्तम् ।

अन्यो जन्तुरनीशः स्यादात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥ इति ।

एतेनास्य जगत्सृष्टिरपि सूचिता ।

**मृत्योर्लिपिकरः पत्रं तस्याकाण्डेप्युदक्षिपत् ।**

**यस्मिन्बाहुकरः सोभूदरुष्करधनुष्करः ॥ ६३ ॥**

---

१ ए °शेपरे. २ ए °कर का°.

---

१ ए °र्यकरि°. २ ए °रादात्मी°. ३ बी °स्यादिः प्र°. ४ ए °करप्र°. ५ सी °रादात्मी°. ६ ए °श्येवोढा. ७ ए °करो घ°. ८ ए °शेपरे. ९ ए °कर पू°. १० ए कर्ता च. ११ ए °व···ति ॥. डी °व च ॥ इ°.

६३. स जयसिंहो यस्मिञ् शत्रौ विपयेभूत् । कीदृक् । बाहुकरो ाहुमुपचाराद्बाहुकार्यं शौर्यं कर्ता । तथारुष्करोव्रणकर्ता यो धनुष्करो नुर्ग्रहीतेत्यर्थः । सोरुष्करधनुष्करश्च तस्य पत्रमंमुकोद्यात्रानेय इति णोंपेतं पत्रं पर्णं मृत्योर्लिपिकरैः पारिग्रहिकश्चित्रगुप्तोकाण्डेप्युदक्षिपदु-पटति स्मासमंयेपि स मृत इत्यर्थः ॥

**रणे क्षेत्रकराञ्जङ्घाकरान्कुर्वन्नभूच्च सः ।**

**नाम्नो लिविकरो दोषाकरे दिनकरोपमः ॥ ६४ ॥**

६४. स जयसिंहो दोषाकरे चन्द्र आधारे नाम्नो लिविकरो लेखकोभूच्च । कलङ्कव्याजेन चन्द्रप्रशस्तिपट्टिकायां स्वनाम लिलेखे-त्यर्थः । यावच्चन्द्रस्तावदसौ जगत्रयेपि प्रसिद्धनामाभूदिति परमार्थः । यतः कीदृक् । रणे युद्धार्थं क्षेत्रकरांत्रणभूमिरचकान्दोर्बलावलेपात्स-ङ्गामारम्भिणः परानित्यर्थः । जङ्घाकरान्पराजयाज्जङ्घाकर्मणः पला-यनस्य कर्तॄन्कुर्वंस्तथा दिनकरोपमः प्रतापादिना ॥

**कर्णः क्ष्मादिवसकरस्तं नेत्ररजनीकरम् ।**

**अन्येद्युराजुहावाथ भक्त्यनन्तकरं सुतम् ॥ ६५ ॥**

६५. स्पष्टः । किं तु दिवसकरः सूर्यः । अनन्तामपर्यवसानां करो-त्यनन्तकरो भक्तेरनन्तकरो भक्त्यनन्तकरस्तम् ॥

देवापि । वातापि । इत्यत्र "देव०" [९९] इत्यादिना-इः ॥

१ ए °र्ण क्ष्मा°.

१ सी °नुर्गृही°. २ बी डी °नुर्गृही°. ३ ए ° मनुकोत्रात्यात्राने°. ४ सी °पेतपर्ण. ५ ए पर्ण. डी पत्रं मृ°. ६ ए °त्योर्लिपि°. ७ बी °रः परिग्राहि° ८ डी °त्पटति. ९ ए °मर्योपि. १० ए °र्थं क्षत्र°. ११ डी °रान्नृण°. १२ ए °याज्जंधाक°. १३ ए सी °पम प्र°. १४ बी °त्यनन्त. १५ डी भक्त्य°. १६ ए भक्तान°. सी भक्ष्यन°.

शकृत्करिं[1] वत्सम् । स्तम्बकरिर्व्रीहिः[2] । अत्र "शकृत्०"[3] [१००] इत्यादिना-इः ॥ किंकराः । यत्करम् । तत्करम् । बहुकरः । अत्र "किं०"[१०१] इत्यादिना-अः ॥ संख्याकरः । त्रिकरः । अहस्करः[4] । दिवाकरम्[5] । विभाकरौ । निशाकर । प्रभाकर । भास्करं[6] । चित्रकर्या । कर्तृकरे । आदिकरौ । अन्तकरे । अनन्तकरम् । कारकरः । बाहुकरः । अरुष्करं[7] । धनुष्करः । नान्दीकरः[8] । लिपिकरः । लिबिकरः[9] । बलिकरः । भक्तिकरः । क्षेत्रकरान् । जङ्घाकरान् । क्षपाकरं[10] । क्षणदाकर । रजनीकरम्[11] । दोषाकरे । दिनकरं[12][13] । दिवसकरः । अत्र "संख्या०" [१०२] इत्यादिना टः ॥

आज्ञाकरो हर्षकरः[1] कुमारोपि पितुस्ततः ।
भेजे सेवाकरः[2] पादान्समस्याश्लोककारवत्[3] ॥ ६६ ॥

६६. ततः कुमारोपि पितुः पादान्भेजे[14] समस्याश्लोककारवत् । समस्यते मीलयते[15] पादैः[16] "शिक्यास्य०" (?) इत्यादिना ये समस्या । अपरिपूर्णच्छन्दःपूरणायैकपादाद्युच्चारणम्[17] । तथा श्लोककारोनुष्टुप्कर्ता[18] यथा पादान् श्लोकचतुर्थांशान्[19] सेवते समस्यापूरणायाश्रयति । कीदृक्सन् । पितुः सेवाकरः सेवाकरणशीलो विनीत इत्यर्थः । तथाज्ञाकर आदेशकरणेनुकूलोत एव हर्षकरः[20] प्रमोदकरणे[21] हेतुः ॥

सूत्रकारावैरकारैर्मन्त्रकारैः स संवदन् ।
साहाकलहकारं तं राजेति पदकारवाक् ॥ ६७ ॥

---

१ ए सी °कर कु°. २ बी °कर पा°. ३ ए °रत्.

---

१ ए सी डी °त्करि व°. २ ए सी °रिव्रीहिः. ३ सी शत्. ४ ए अस्क°. ५ ए सी डी °रः । वि°. ६ बी °र । श्चित्र°. ७ बी सी डी °ष्करः । ध°. ८ ए नादीक°. ९ ए बी डी लिविक°. १० सी डी °करः । क्ष° ११ ए °र । दो°. १२ सी दिव°. १३ बी °करे दि° डी °करः दि. १४ ए °जे सेनस्या°. १५ ए डी °ते पदैः. १६ सी पादे शि°. १७ सी °कपूर्णपा°. बी °कपदा°. १८ ए सी °ष्टुष्कर्ता. १९ ए °तुर्थंशा°. डी °तुर्द्धांशा°. २० डी हर्षक. २१ सी डी °रणहे°.

६७. स राजा कर्णोकलहकारं कलिवर्जितं[1] तं कुमारमिति वक्ष्यमाणरीत्याह स्म । कीदृक्सन् । पदकारस्येव[2] वैयाकरणस्येव वाग् यस्य स वाग्मी तथा मन्त्रकारैर्मन्त्रिभिः सह संवदंस्तदनुमतिं गृह्णन्नित्यर्थः[3] । यतः किंभूतैः । सूत्रकारैर्नीतिसूत्रकारिभिः[4] शुक्रादिभिः सहावैरकारैस्तत्कृतनीतिसूत्रपाठान्न[5] कलहायमानैर्नीतिज्ञैरित्यर्थः[6] ॥

गाथाकारैः शब्दकारैरचाटुकारवृत्तिभिः ।
मुनिभिर्भूभद्रकारक्षेमकारप्रियंकरैः ॥ ६८ ॥
क्षेमंकरा भद्रंकरा प्रियकारी च कीर्तिता ।
वृत्तिः कर्मकरीभूतद्विषां मत्पूर्वजन्मनाम् ॥ ६९ ॥
तेषां तु मद्रकाराणां[1] यथा मद्रंकरोभवम्[2] ।
पूर्वतीर्थंकरपथेनान्यतीर्थकरो यथा ॥ ७० ॥

६८–७०. हे कुमार कर्मकरीभूतद्विषां मत्पूर्वजन्मनां मदीयपूर्वजानां वृत्तिर्न्यायेन[7] पृथ्वीपालनादिरूप आचारो मुनिभिः कीर्तिता प्रशंसिता । यतः किंभूता । क्षेमंकरा बाह्यशरीरस्य[8] धनकनकादे रक्षा[9] क्षेमं तत्कर्त्री तथा[10] भद्रंकरान्तरस्याङ्गस्य[11] रक्षा भद्रं तत्कर्त्री तथा प्रियकारी च सर्वलोकवाञ्छितानां कर्त्री च । किंभूतैः । गाथाकारैः कविभिस्तथा शब्दकारैर्वैयाकरणैस्तथा[12] न चाटुकारी वृत्तिर्येषां तैर्निःस्पृहैरपीत्यर्थः[13] । तथा भूभद्रकारक्षेमकारप्रियंकरैः सर्वथा पृथ्व्यां[14] हितैरित्यर्थः ।

१ ए °द्रकराणां मथा. २ सी मद्रक°.

१ ए °कलेव°. बी कलहव°. २ ए °कारास्ये वै°. ३ ए °त्यर्थ । य°. ४ ए °रैर्नाति°. ५ सी डी मह वै°. ६ डी °नैर्निति°. ७ ए °त्तिन्याये°. ८ ए °ह्यस्य श°. ९ ए रकक्षा. १० डी °था मद्रं°. ११ ए °अस्यं रक्ष भ°. १२ ए °रैवैयाकरणैःस्त°. १३ ए °त्यर्थ तथभूनभ°. १४ ए °थ्व्या हैन°.

मत्पूर्वजा महामुनीनामपि श्लाघ्या अभूवन्नित्यर्थः । मद्रकाराणां क्षेमकाराणां तेषां पूर्वजन्मनां यथा तु पृथ्वीन्यायपालनादिरूपमार्गेण कृत्वा पुनरहमपि मद्रंकरः सर्वलोककल्याणकार्यभवं यथा पूर्वतीर्थंकरपथेन प्रथमार्हदुपदिष्टदयामूलमार्गेणान्यतीर्थकरोपरोहैन्मद्रंकरः स्यात् ॥

अथ विधेयमाह ॥

तीर्थकारव्रती मेघंकरर्तौ नु भयंकरे ।
मुक्ताहारविहारोहमृतिंकराभयंकरः ॥ ७१ ॥
प्रयते मुक्तये चेत्त्वं प्रियंवद वशंवदः ।
द्विषंतपमिदं राज्यं तद्गृहाण परंतपः ॥ ७२ ॥

७१,७२. हे प्रियंवदानुकूलवादिन् कुमार चेत्त्वं वशंवदो वशं वदसि यदहं वच्मि यदि तन्मन्यस इत्यर्थः । तदा त्वं द्विषंतपमिदं राज्यं गृहाण । यतः परंतपोतिप्रतापित्वाच्छत्रुसंतापको राज्यधुराधरणक्षम इत्यर्थः । अहं तु मुक्तये प्रयत उद्यच्छामि । कीदृक्सन् । ऋतिं स्थण्डिले गतिं सत्यतां वा करोमि ऋतिंकरो योभयंकरः सर्वजीवानां मृत्युभयाभावस्य कर्ता सः । तथा मुक्ताहारविहारस्त्यक्तभोजनविचरणः । यथा तीर्थकारव्रत्यार्हतो मुनिऋतिंकराभयंकरोत एव भयंकरे महावृष्ट्यां भीषणे मेघंकरर्तौ वर्षाकालेनेकजीववधाशङ्कया मुक्ताहारविहारः सन्मुक्तये प्रयतते ॥

१ सी तीर्थकर°. २ सी डी °कराणां नु. ३ ए °रर्तौ नु. ३ ए °रोयमृ°. ४ सी °मृतक°. डी °मृतंक.

१ ए सी श्लाघ्या अ°. २ डी °णां ते°. ३ ए सी डी °था नु पृ°. ४ सी °तीर्थक°. ५ ए सी डी °पदेन. ६ बी °लधर्मरूपमा°. ७ ए °मार्गे चे°. ८ सी डी °त्मिम त°. ९ ए दातुं द्वि°. १० सी ऋत स्थ°. डी ऋतं स्थ°. ११ सी ऋतक°. डी ऋतंक°. १२ ए मृत्यभ°. ए °निरति°. १३ बी °निऋति°. सी °निऋतंक. १४ डी °ऋतंकरो भ°. १५ सी °ष्ट्यादिभी°. डी °ष्ट्यादिभी°.

हेतौ । हर्षकरः । तच्छीले । सेवाकरः । अनुकूले । आज्ञाकरः । अत्र "हेतु०" [१०३] इत्यादिना टः ॥ शब्दादिनिषेधः किम् । शब्दकारैः । श्लोककार । कलहकारम् । गाथाकारैः । वैरकारैः । चाटुकार । सूत्रकार । मन्त्रकारैः । पदकार ॥

कर्मकरी । इत्यत्र "भृतौ कर्मणः" [१०४] इति टः ॥

क्षेमंकरा । क्षेमकार । प्रियंकरैः । प्रियकारी । मद्रंकरः । मद्रकाराणाम् । भद्रंकरा । भद्रकार । इत्यत्र "क्षेम०" [१०५] इत्यादिना खाणौ ॥ एभ्य इति किम् । तीर्थंकरः । हेत्वादिषु टः ॥ तीर्थंकर तीर्थकार इत्यपि कश्चित् ॥

मेघंकर । ऋतिंकर । भयंकरे । अभयंकरः । अत्र "मेघर्ति०" [१०६] इत्यादिना खः ॥

प्रियंवद । वशंवदः । अत्र "प्रिय०" [१०७] इत्यादिना खः ॥

द्विषंतपम् । परंतपः । इत्येतौ "द्विषंतप०" [१०८] इत्यादिना निपात्यौ ॥

जयन्कुमारः शान्त्यर्पीनलंपचमितंपचान् ।
नखंपचयवागूं नु वाचमूचे रुजाछिदम् ॥ ७३ ॥

७३. कुमारो नखंपचयवागूं नु अत्युष्णश्राणामिव रुजाछिदं कष्टच्छेदिनीं निःस्पृहतान्तरङ्गभक्तियुक्तिबन्धुरतयाह्लादिकामित्यर्थः ।

---

१ ए °यकुमा°.

---

१ ए डी हर्षक°. २ ए °दिनिषे°. ३ सी डी °कारः । क°. ४ ए डी °रैः । चा°. सी °रै । चा°. ५ ए °कारः । सू°. ६ डी °मैकारी. ७ ए °कराः । क्षे°. ८ ए क्षेमंकरः । प्रि°. सी डी क्षेमंकर. ९ ए सी डी °कर । म°. १० ए सी मद्रंका°. डी °मद्रंकरा°. ११ डी °कर । भ°. १२ ए °त्र क्षेम°. १३ सी तीर्थक°. १४ सी तीर्थक°. १५ सी डी ऋतंक°. १६ सी अत्र. १७ ए सी डी °वदः । व°. १८ बी °त्येतो द्वि°. १९ ए °ना न नि°. २० ए रुजाछि°. २१ बी °छिद्रं क°. २२ सी °च्छेदनी निस्पृ°. २३ ए °दिनी निः°. २४ बी °ल्हादका°.

वाचमूचे । नखंपचयवागूरपि पथ्यत्वाद्रोगच्छित्स्यात् । यतः कीदृक् । शान्त्येन्द्रियजयेनाल्पंपचमितंपचान् । अल्पशब्दोत्र परिमाणविशेषवाचकः । अल्पं पचतो मितं स्तोकं पचतश्च गाढतपोनिष्ठानपीत्यर्थः । ऋषीन् जयन् ॥

अल्पंपच । मितंपचान् । नखंपच । इत्यत्र "परिमाण०" [१०९] इत्यादिना खः ॥

कूलंकषेशगम्भीर वक्तुं नाहं त्वयीश्वरः ।
न करीपंकषा वात्या प्रभुरभ्रंकषे गिरौ ॥ ७४ ॥

७४. हे कूलंकषेशगम्भीर समुद्रवदलब्धमध्य त्वयि विषये नाहं वक्तुमीश्वरः समुद्रगम्भीरत्वात्तव । दृष्टान्तमाह । अभ्रंकषेत्युच्चैस्त्वाद्व्योमस्पृशि गिरौ विषये करीषंकषा वात्यालि(?)त्वाच्छागण(?)रजउच्छालिका वात्या वातौघो न प्रभुश्चालनाद्यर्थं न समर्थः स्यात् ॥

कूलंकषा । अभ्रंकषे । करीषंकषा । इत्यत्र "कूलाभ्र०" [११०] इत्यादिना खः ॥

को मां सर्वंकषः प्राहाभक्तं विश्वंभरापते ।
सर्वंसहोपि यत्त्वं भूबलिंदमैवमादिशः ॥ ७५ ॥

७५. स्पष्टः । किं तु सर्वंकषः खलः । हे भूबलिंदम भूमौ पालकत्वाद्विष्णो । एवं राज्यं गृहाणेति दुष्टादेशप्रकारेण ॥

शत्रुंतपशत्रुंसहधनंजयसमः स्वयम् ।
करोतु राज्यं तातोर्थिप्रदत्ताब्धिपतिंवरः ॥ ७६ ॥

---

१ ए त्वमीश्व°. २ ए सी °कथा वा°. ३ ए °कप प्रा°.

---

१ बी °पचाय°. २ ए सी °थनये°. ३ ए °पचितो. ४ ए °स्त्वाव्योमस्पशि. ५ सी डी °मस्पर्शि गि°. ६ बी °पाल्प°. ७ °उत्मालि°. ८ सी °घो तु प्र°. ९ ए किं तुः स°.

७६. अर्थिभ्यो याचकेभ्यः प्रदत्ताब्धेः पतिंवरा कन्या लक्ष्मीर्येन स तथा संस्तातः स्वयं राज्यं करोतु । यतः शत्रुंतपशत्रुंसहौ कौचिन्नृपौ धनंजयोर्जुनस्तैः समः । बलप्रतापादिप्रकर्षेणान्नापि राज्यधुराधरणक्षम इत्यर्थः ॥

रथंतरकलालाप वसुंधरापुरंदर ।
ब्रूहि तन्मे यदागस्त्वां भगंदर इवादुनोत् ॥ ७७ ॥

७७. स्पष्टः । किं तु हे रथंतरकलालाप रथं तरत्युल्लङ्घते रथेन वा तरत्युल्लङ्घते पाठकं रथस्थैर्यं न पश्यत इत्यर्थः । रथंतरं साम तद्वन्मधुरध्वने । आगोपराधः । भगंदरो रोगविशेषः ॥

[सर्वंकषः ।] सर्वंसहः । अत्र "सर्वात्सहश्च" [१११] इति खः ॥

विश्वंभरा । पतिंवरा । धनंजय । रथंतर । शत्रुंतप । बलिंदम । शत्रुंसह । इत्यत्र "भृवृ०" [११२] इत्यादिना खः ॥ केचित्तु रथेन तरति रथंतरं सामेत्यकर्मणोपीच्छन्ति ॥

वसुंधरा । इत्यत्र "धारेर्धर्च" [११३] इति खः-धर(र्) इत्यादेशश्च ॥

पुरंदरभगंदरशब्दौ "पुरंदर०" [११४] इत्यादिना निपात्यौ ॥

योग्यमानी ममायोग्यंमन्यस्य स्नेहतोसि चेत् ।
राजवाचंयम तथापीत्याज्ञा मेङ्गमेजया ॥ ७८ ॥

७८. राजा सन्वाचंयम ऋषिस्तदा मनसा ऋषीभूतत्वात् । हे राजवाचंयमासि त्वं स्नेहतोपत्यस्नेहाद्वेद्यप्ययोग्यंमन्यस्य राज्यानर्हमात्मानं मन्यमानस्य मम योग्यमानी मां राज्ययोग्यं मन्यसे तथापी-

१ ए सी °करालाप. २ ए सी डी °दरः. ३ डी °गस्त्वा भ°. ४ ए राजा वा°.

१ ए °तपःसत्रुंसहौ कौ. सी °तपःसत्रुं°. २ सी °मः धनाप्र°. डी °मः धनप्र°. ३ बी सी °करालाप. ४ ए सर्वात्स°. ५ ए °जयः ।. ६ ए सी °त्र भृवृ°. ७ बी °वृत्या°. ८ ए °र्धच इ°.

त्याज्ञा राज्यं गृहाणेत्यादेशो मेङ्गमेजया शरीरं कम्पयित्री राज्यधुराधरणक्षमेणापि पित्रास्मै भयाद्राज्यं दत्तमित्यादिलोकापवादवज्रपातहेतुत्वेन मयि महाभयोत्पादयित्रीत्वात् ॥

वाचंयम । इति "वाचं०" [११५] इत्यादिना निपात्यम् ॥

योग्यमानी । इत्यत्र "मन्याण्णिन्" [११६] इति[1] णिन् ॥

अयोग्यंमन्यस्य । इत्यत्र "कर्तुः खश्" [११७] इति खश् ॥

अङ्गमेजया । इत्यत्र[2] "एजेः" [११८] इति खश् ॥

मुधैवास्यंधयी दृष्ट्या माता तत्र स्तनंधये ।
पुष्पंधयचलः सीमोज्झेद्यः कूलंधयौघवत् ॥ ७९ ॥

७९. तत्र स्तनंधये[3] मातास्य[4] पुत्रस्य प्रसादेन वयं सुखिनो भविष्याम इत्यनुरागाद्दृष्ट्या मुधास्यंधयी मुखपायिका मुखालोकिकेत्यर्थः । यः पुष्पंधयचलो भ्रमरवच्चपलस्वभावः सन् कूलंधयौघवत्कूलघातकप्रवाह इव सीम मर्यादां पितरि सति राज्याग्रहणरूपामुज्झेद्यः पितरि सति राज्यं गृह्णीयादित्यर्थः ॥

शुनिंधया मुञ्जंधया ये वरं तेपि न न्वहम् ।
वचो नाडिंधमं[1] नाडिंधयं श्रोतेति तापकृत् ॥ ८० ॥

८०. ये शुनिंधयाः कुक्कु(क्कु)रास्तथा[10] ये मुञ्जं तृणविशेषं धयन्ति पिबन्ति खादन्तीत्यर्थः[11] । मुञ्जंधया मृगास्तेपि वरं श्रेष्ठा अहं न्वहं

१ बी डी °मं माडिं°.

१ सी °ति णन ।. डी °ति णन्. २ बी °जय इ°. ३ ए °त्र परिरिति. ४ सी एरिति. ५ बी °ये पुत्रे मा°. ६ सी डी °स्य प्र°. ७ सी डी °पायका. ८ डी पुस्तके समासे—उज्झेदित्यत्र दोच छेदने सप्तमी यात्—इति लिखितम्. ९ सी डी °ज्झेयदि पि°. १० ए सी डी कुकुरा°. ११ बी °दयन्ती°.

पुनरिति पूर्वोक्तं राज्यं गृहाणेति वचः श्रोता सन्न वरं न श्रेष्ठः । यतः कीदृशम् । तापकृदसुखकरमत एव नाडिंधमं शिराणां संतापकं तथा नाडिंधयं संतापातिरेकोत्पादेन शिराणां ग्रासकम् । एतद्धि वचःश्रवणं पितर्यभक्तिसूचकं तच्चाहं कुर्वाणः श्वादिभ्योपि निकृष्टस्तेपि हि स्वमातापित्रोर्भक्ताः स्युरित्यर्थः ॥

**घटिंधममुष्टिंधमनासिकंधमनिस्त्रपाः ।**
**लुभ्यन्ति पितृराज्येतिवातंधयखरिंधयाः ॥ ८१ ॥**

८१. पितृराज्ये लुभ्यन्ति । के क इत्याह । घटिंधमा दर्दरवादका मुष्टिंधमा मुष्टिवादका भण्डविशेषा एवं नासिकंधमा अपि तद्वन्निस्त्रपा निर्लज्जा नरास्तथा निर्विवेकतयातिशयेन वातंधयान्सर्पान्मृगान्वा खरिंधयांश्च गर्दभानतिक्रान्ताश्च ॥

**नासिकंधयमुष्टिंधयाम्बास्तनघटिंधयः ।**
**अहं तेद्यापि शिष्योस्मि नैतद्वातंधमं वचः ॥ ८२ ॥**

८२. हे ताताद्याप्यहं ते शिष्योनुशास्यः शिक्षणीयोस्मि वर्ते यतो नासिकंधयी स्नेहातिरेकान्मदीयनासाचुम्बिनी मुष्टिंधयी मन्मुष्टिचुम्बिनी याम्बा माता तस्या यौ स्तनौ ताभ्यां घटिंधयो घटतुल्यस्तनपायीत्यर्थः । क्षीरकण्ठ इति वाक्यार्थः । क्षीरकण्ठो हि शिक्षणीयः स्यात् । एतद्वचः शिष्योस्मीति वचनं वात इव वातः फल्गुरर्थस्तं धमति वक्ति वातंधमं नास्ति सत्यमेवेदं वच इत्यर्थः ॥

---

१ ए °पाः । तृल्यन्ति. २ ए °वातिध°. ३ ए बी सी °धया । पि. ४ ए नाशिकं°. ५ ए सी °यान्धाम्त°. ६ बी °धयाः ।

१ ए सी °कम्. २ ए सी तन्वाद. ३ बी °पि स°. ४ ए मात्रापि°. ५ सी °भक्तया स्यु°. ६ डी के °. ७ ए नाशिकं°. ८ सी °धयाश्च ग° डी °धयाश्च. ९ ए °यांश्च ग°. १० ए °न्मुष्टि चुंबिनी. सी डी °न्मुष्टि चु°. ११ बी °पायीत्य°. १२ डी °कण्ठो हि. १३ सी डी °णीय स्या°. १४ ए वात इ°.

खरिंधमो नु दुग्धार्थी पश्चात्तापात्करंधमः ।
भुवः करंधयः सन्स्यां त्वयि पाणिंधयः सति ॥ ८३ ॥

८३. त्वयि सति राज्यधुराधौरेये विद्यमानेपि पाणिंधयो बालकः सन यदि भुवः करंधयो राजग्राह्यभागग्राही राजाहं स्यां तदा पश्चात्तापाद्राज्यप्रतिपालनानलंभूष्णुत्वात्तुत्थात्किं मया तदा पिता प्रव्रजन्न निवारित इति रूपात्करंधमो हस्तयोर्मर्दकः स्यां यथा दुग्धार्थी दुग्धपानमिच्छन्नरः खरिंधमो गर्दभीं दुहन्सन् पश्चात्तापात्करौ मृद्गाति महाकष्टदोह्यत्वाद्दोहनेपि दुग्धस्यातिविरसत्वेनापेयत्वात् ॥

पाणिंधमैर्महामात्रैः कुञ्जरैः कूलमुद्रुजैः ।
कूलमुद्वहसिन्धूर्मिरयैर्गोभिर्वहंलिहैः ॥ ८४ ॥
रथैरभ्रंलिहैर्हेमावहंतुदयुगैरपि ।
द्विपामरुंतुदैर्भृत्यैस्तिलानां नु तिलंतुदैः ॥ ८५ ॥
तैर्ललाटंतपैः शत्रोर्यशोविधुविधुंतुदैः ।
शर्धंजहान्नसंपुष्टैर्वेगवातमजैर्हयैः ॥ ८६ ॥
दारैरसूर्यंपश्यैश्चैरंमदद्युतिभूषणैः ।
अनुग्रंपश्य किं मे चेन्न पश्येयं त्वाननम् ॥ ८७ ॥

८४–८७. अनुग्रंपश्य सौम्यविलोकक चेत्तवाननमहं न पश्येयं

१ सी डी °पाकर°. २ ए कारिध°. ३ ए °धमगहा. ४ ए °वहलि°. ५ ए द्विपां म°. ६ सी °तुदैः । तै°. ७ ए डी °सिलानां. ८ सी डी °सभू°. ९ ए सी डी °नुग्रप°.

१ बी °ये त्वयि वि°. २ ए °नानम°. ३ बी °त्यरु°. ४ ए °मर्दकः. ५ ए सी डी °र्भी दु°. ६ सी डी °ह्यांहनेपि. ७ ए अमुग्रं°. ८ सी डी °ग्रं सौ°. ९ डी °नम°.

तदा मे पाणिंधमैर्[1]हस्तिनामुपशा[2](सा)न्त्वनाद्यर्थं पृष्ठाघातेन पाणिं वादयद्भिः । हस्ति[3]शिक्षानिपुणै[4]रपीत्यर्थः । महामात्रैर्हस्तिपकैः किं न किंचि[5]दित्यर्थः । तथा कूलमुद्रु[6]जैर्मदोन्मत्तत्वान्नदीतटोत्पाटकैः[7] कुञ्जरैः किम् । तथा गोभिर्वृषैः[8] किम् । किंभूतैः । कूलमुद्वहाया नद्या[9] आकूलं जलपूर्णत्वेन तटस्पर्शिन्यो याः सिन्धूर्मयो नदीकल्लोलास्तद्वद्द्रयो वेगो येषां तैः । तथा वहंलिहैर्जातिस्वभावाज्जिह्वया स्कन्धान्स्पृशद्भिः । तथा रथैरपि किम् । किंभूतैः । अभ्रंलिहैरुच्चैस्त्वाद्व्योम स्पृशद्भिः[10] । तथा हैमानि स्वर्णमयानि यान्यबहुंतुदानि मृदुत्वात्स्थूलत्वादिगुणोपेतत्वान्न बह्वतिशयेन[11] तुदन्ति वृषाश्वादिस्कन्धान्पीडयन्ति[12] युगानि येषां तै[13]र्हैमाबहुंतुद[14]युगैः । तथा भृत्यैः किम् । किंभूतैः । तिलानां तिलंतुदैर्नु यथा तिलंतुदा[15] पक्षिकाः काका वा तिलानामरुंतुदाः[16][17] पीडकाः[18] स्युरेवं द्विपामरुंतुदैर्मर्मा[19]विद्भिः । तथा हयैः[20] किम् । कीदृशैः । तैः सुजात्यत्वादिना प्रसिद्धैस्तथा[21] शत्रोररिजाते[22]र्ललाटंतपैः प्रतापित्वात्संतापकैरत एव शत्रोर्यशोविधुविधुंतुदैः कीर्तिचन्द्रे राहुभिः[23] । तथा शर्धंजहा मांपा[24] यान्यन्नानि भक्ष्याणि[25] तैः पुष्टैस्तथा वेगवातमजैर्वेगेन वातमजैर्मृगैरिव[26] । तथा दारैः किम् । किंदृशैः । असूर्यपश्यै[27]रतिगुप्तस्थानस्थत्वात्सूर्यमप्यपश्यद्भिस्तथेरया जलेन माद्यतीरंमदो विद्युत्त[28]स्येव द्युतिर्येषां तानि भूषणानि येषां तैः ॥

---

१ **प** °मैर्हस्ति°. २ **डी** °शान्तना°. ३ **प** °स्तिनि शि°. ४ **प** °पुणैः र°. ५ **प** किंचदि°. ६ **प** °लमुद्रु°. ७ **वी** °त्पादकैः. ८ **बी सी** °भिर्वृषैः. ९ **प सी डी** °हा नद्याकू°. १० **प** द्भिः । स्त°. ११ **वी** °न तुंद°. १२ **प** डन्ति. १३ **डी** तैर्हैमा°. १४ **प** °बहुतु°. १५ **प** °दा पक्षि. १६ **डी** °मरुतु°. १७ **सी** दाः स्यु°. १८ **प** °काः स्फुरेव द्वि°. १९ **प** °र्मैर्मावि°. २० **डी** हयै कि°. २१ **सी** था वेगनमजैर्मृगैरिव ।. २२ **वी** °जातिर्ल°. २३ **प** °भिः । स्त°. २४ **डी** मापयोन्य°. २५ **प** भक्षाणि. २६ **डी** °जैर्मृ°. २७ **प** °श्यैरिति°. २८ **डी** द्युततस्ये°.

शुनिं[1]धयाः । स्तनंधये । मुञ्जं[2]धयाः । कूलं[3]धय । आस्यंधयी । पुष्पंधय । इत्यत्र[4] "शुनीस्तन०" [११९] इत्यादिना खश् ॥ ङ्घिटकारोङ्यर्थः । आस्यंधयी ॥

नाडिं[5]धमम् । नाडिंधयम् । घटिंधम । घटिंधयः । खरिं[6]धमः । खरिं[7]धयाः । मुष्टिं[8]धम । मुष्टिंधय । नासिकंधम । नासिकं[9]धय । वातं[10]धमम् । वातंधय । इत्यत्र "नाडी०" [१२०] इत्यादिना खश् ॥

पाणिंधमैः । करं[11]ध[12]मः । अत्र "पाणिकरात्" [१२१] इति खश्[13] ॥ पाणिकरा(द्र)ङ्घेरपीति कश्चित् । पाणिंधयः । करं[14]धयः ॥

कूलमुद्रुजैः[15] । कूलमुद्वह । इत्यत्र "कूलाद्[16]०" [१२२] इत्यादिना खश् ॥

वहंलिहैः । अभ्रं[17]लिहैः । अत्र "वह०" [१२३] इत्यादिना खश् ॥

बहुंतुद । विधुंतुदैः । अरुंतुदैः । तिलंतुदैः । अत्र "बहु[18]०" [१२४] इत्यादिना खश् ॥

ललाटंतपैः । वातमजैः । शर्धंजह । इत्यत्र "ललाट०" [१२५] इत्यादिना खश् ॥

असूर्य[19]पश्यै[20]ः । अनुग्रंपश्य । इत्यत्र "असूर्य०" [१२६] इत्यादिना[20] खश् ॥

इरंमद । इत्ययम् "इरंमदः" [१२७] इति निपात्यः ॥

**प्रियंभविष्णुर्योन्यो वाढ्यंभ[1]विष्णु[2]र्वदेदिति ।**
**अप्रियंभावुकोनाढ्यंभावुकः सोपि मे मतः[3] ॥ ८८ ॥**

८८. अन्यस्त्वत्त इतरः । त्वं तु पितृत्वा[21]द्यदपि तदपि वदन्मम पूज्य एवे[22]ति भावार्थः । अपरस्तु य इति पितृराज्यं गृहाणेति वदेत् ।

१ सी °विष्णुं वदे°. २ ए डी °ष्णुवदे°. ३ डी ममतः.

१ ए °निवयाः. २ सी °धया । कू°. डी °धयोः । कू°. ३ ए धयः । आ°. सी डी °धया । आ°. ४ सी डी °त्र नी°. ५ ए सी डी °धयम् । घ°. ६ सी धरयः । मु°. ७ ए सी डी °धयः । मु°. ८ ए सी डी °धमः । मुष्टिंधयः । ना°. ९ ए सी °धयः । वा°. १० ए °धमः । वा°. सी °धमम् । नासिकंधय । वा°. डी °धय । इ°. ११ ए करिंध°. १२ सी °धम । अ°. १३ सी डी खश । पा°. १४ सी °धयम् । कू°. १५ डी °जैः । कूलमुद्रुजैः । कू°. १६ ए कूलद्. १७ डी अभ्रलि°. १८ बी बहेत्या°. १९ सी डी °पश्यै । अ°. २० सी डी °ना इ°. २१ ए सी °द्यद्यपि. डी °द्यपि. २२ बी °र्थः । प°.

कीदृक्सन् । प्रियंभविष्णुर्वल्लभीभवन्नाढ्यंभविष्णुर्वैश्रवणीभवन्वा । सोपि स्वमनसा प्रियीभवन्नप्याढ्यीभवन्नपि वा पुमान्मे न प्रियोप्रियो भवत्य-प्रियंभावुकोनाढ्यंभावुको दरिद्रीभवंश्च मतस्तस्याहमप्रसन्नः सर्वस्वापहा-रकश्च स्यामित्यर्थः ॥

**पलितंभावुकः स्थूलंभावुकान्धंभविष्णुधीः ।**
**कर्मैतदनुमेने को नग्नंभावुकनिन्दितः ॥ ८९ ॥**

८९. कोमात्यादिरेतत्कर्म मयि राज्यदानरूपां क्रियामनुमेने । कीदृ-क्सन् । पलितंभावुकः पलितमस्यास्ति । अभ्रादित्वात्ः [ ७.२.४६ ] । अपलितः पलितो भवन्नतिवृद्धोत एव स्थूलंभावुको(का)तीक्ष्णा सूक्ष्मा-र्थानभिज्ञात एवान्धंभविष्णुः कार्याकार्यविचाराशक्तत्वादन्धीभवन्तीव धीर्यस्य स तथात एव च नग्नंभावुकनिन्दितो बालकैरपि जुगुप्सितः ॥

**अन्धंभावुकपलितंभविष्णुरपि कः सुतम् ।**
**प्रौढमप्येककं मुञ्चेन्नग्नंभविष्णुबालवत् ॥ ९० ॥**

९०. स्पष्टः । किं त्वन्धंभावुकपलितंभविष्णुरपि विशेषणकर्मधारये अतिवृद्धोपि । प्रौढमपि वयसा गुणैश्च समर्थमप्येककमेकाकिनं सुतं कः पिता मुञ्चेत् । यथा नग्नंभविष्णुमतिलघुत्वेन वस्त्रापरिधाय-कत्वान्नग्नीभवन्तं बालं न कोपि मुञ्चति ॥

---

१ ए कर्मैत॰. २ डी नग्नभा॰. ३ ए गुणैन.

---

१ डी ॰वर्धीभा॰. २ ए सी ॰स्वापहा. ३ डी ॰मान्म न. ४ डी ॰यो न॰. ५ ए सी डी ॰न्निप्रय॰. ६ ए बी ॰भव भ॰. ७ ए ॰मल्यादि. ८ ए ॰वांसि. ९ ए ॰त्वादन्धीभ॰. १० बी ॰ना बा॰. ११ डी ॥श्चो॰. १२ सी त्वन्धंभा॰. डी त्वध भा॰. १३ सी डी ॰पुकःप॰. १४ सी डी न क पि॰. १५ सी डी ॰भवं बा॰. १६ ए ॰पि न ।॰.

**सुभगंभावुकः स्थूलंभविष्णू राज्यसंपदम् ।**
**सुभगंकरणीं स्थूलंकरणीमपि नार्थये ॥ ९१ ॥**

९१. अहं राज्यसंपदं नार्थये नेच्छामि । कीदृशीम् । असुभगः सुभगः क्रियतेनया तां सुभगंकरणीमपि । अपिरत्रापि योज्यः । सौभाग्यहेतुमपि तथा स्थूलंकरणीमपि यथेच्छभोज्यसंपत्त्योपचयहेतुमपि यतोहं सुभगंभावुकः पूज्यपादप्रसादात्सर्वलोकानां वल्लभीभवंस्तथा स्थूलंभविष्णुरुपचितीभवंश्च । यद्यस्य न स्यात्स तत्प्रार्थयते । अहं तु गुरुतत्पादप्रसादेन राज्यसंपदं विनापि सुभगः स्थूलश्चेतीमां नेच्छामीत्यर्थः ॥

**ऊचे स्मितेन सुभगंभविष्णु द्योतयन्नभः ।**
**आढ्यीभवितृबुद्धिं तं प्रियंकरणवाग्नृपः ॥ ९२ ॥**

९२. नृपः कर्णं आढ्यीभवितृबुद्धिं स्फीतीभवन्मतिं कुमारं सुभगंभविष्णु युक्तियुक्तत्वान्मधुरत्वाच्च मनोहारि यथा स्यादेवमूचे । कीदृक्सन् । स्मितेन पुत्रसद्भक्तिवाक्यश्रवणोत्थानन्दोद्भवेन हास्येन नभो द्योतयंस्तथा प्रियंकरणवागाह्लादकवाणीकः ॥

यथोचे तथाह ॥

**पलितंकरणी नग्नंकरण्यन्धंकरण्यथ ।**
**अनाढ्यंकरणी बुद्धेर्जराप्यङ्गं ग्रसिष्यते ॥ ९३ ॥**

१ डी °विष्णु रा°. २ सी डी °र्णीस्थू°. ३ डी °सितृ°. ४ ए °तृपुद्धिं त प्रि°. ५ ए °वान्नृपः. ६ बी °र्णात्यं°.

१ डी °गः क्रि°. २ ए र्णायम°. ३ बी °मत्प्रसा°. ४ ए °भगस्थूलः°. ५ सी द्योतंस्त°. ६ ए बी °ह्लादिकावा°.

९३. हे कुमार जराप्यङ्गं ग्रसिष्यते । कीदृक्सती । पलितंकरणी पलितहेतुस्तथा नग्नंकरण्यचैतन्यस्योत्पादयित्रीत्वात्परिधानासंग्राहहेतुरर्थं तथान्धी(न्धं)करण्यान्ध्यहेतुस्तथा बुद्धेः कर्मणोनाढ्यंकरणी क्षयहेतुः ॥

**तथा नग्नीकरण्या तत्स्वं ज्ञो नग्नीकरोतु कः ।**
**आशितंभवमात्रर्द्ध्या कश्चेच्छेदाशितंभवम् ॥ ९४ ॥**

९४. तत्तस्माद्धेतोर्नग्नीकरण्या तया जरया कृत्वा ज्ञः पण्डितः सन्कः स्वं नग्नीकरोतु । ननु ज्ञातमेवेदं यज्जरा नग्नीकरोति । परमेवंविधा राज्यश्रीः कथं मुच्यत इत्याह । आशितंभवमाशितस्य भवनं तृप्तिं कश्चेच्छेन् । कयाकृत्वाशितस्तृप्तो भवत्यनेनाशितंभवं तदेवाशितंभवमात्रं स्वर्गापवर्गश्रीणामपेक्षयातितुच्छत्वेन भोजनमात्रतुल्या या ऋद्धी राज्यश्रीस्तया । तस्मादहं स्वर्गापवर्गौ साधयिष्यामीत्यर्थः ॥

नग्नंभविष्णु । नग्नंभावुकः(क) । पलितंभविष्णुः । पलितंभावुकः । प्रियंभविष्णुः । अप्रियंभावुकः । अन्धंभविष्णु । अन्धंभावुकः(क) । स्थूलंभविष्णुः । स्थूलंभावुकः(क) । सुभगंभविष्णुः (ष्णु) । सुभगंभावुकः । आढ्यंभविष्णुः । अनाढ्यंभावुकः । अत्र "नग्न०" [ १२८ ] इत्यादिना खिष्णुखुकञौ । अच्वेरिति किम् । आढ्यीभवितृ ।

नग्नंकरणी । पलितंकरणी । प्रियंकरण । अन्धंकरणी । स्थूलंकरणीम् ।

१ सी आमितं°. डी आमितं°.

१ ए °रापायं ग्रसिष्यगे । की°. २ ए °तुनथा. ३ ए सी डी °संगाह°. ४ सी डी °तुरेव न°. ५ ए °ग्व न°. ६ ए °थान्त्वकरणीयं आन्ध्य°. सी डी °थाधंक°. ७ ए °त्तसमद्ध°. ८ डी °या कृ°. ९ डी° तु । ज्ञा°. १० डी यज्जरा. ११ ए राज्य क°. सी डी राज्या कथमु°. १२ ए °ह । अशि°. १३ सी °मात्रं स्य. १४ सी डी °या त्वा. १५ ए °तनृप्तो. १६ ए राजश्री°. १७ ए °विष्णुः । नग्नभा°. सी डी °विष्णुः । पलितंभा°. १८ ए °विष्णु । प्रियभा°. सी °विष्णुं प्रि°. डी °विष्णुः । प्रि°. १९ डी °वुक । अ°. सी °वुकः । स्थू°. २० ए बी सी °विष्णुः । अ°. २१ सी डी °वुक । अ°. २२ सी °रण । अ°. २३ डी °णी । पलितंकरण । प्रि°.

सुभगंकरणीम् । अनाढ्यंकरणी । इत्यत्र "कृगः०" [ १२९ ] इत्यादिना खनट् ॥ अच्वेरिति किम् ॥ नग्नीकरोतु तया कः ॥ केचिच्च्व्यन्तपूर्वादपि खनटमिच्छन्ति । नग्नीकरण्या तया ॥

आशितंभवम् । आशितंभव । इत्यत्र "भावे च०" [ १३० ] इत्यादिना खः ॥

भुजंगमेशोरुभुजं देवं भुजगतल्पगम् ।
भुजंगजिद्विहंगाङ्कं विहगेन्द्रप्रभाम्बरम् ॥ ९५ ॥
सुगीकृतस्वर्गदुर्गं तावद्ध्यातुं क्षणो मम ।
न जरोरंगमी यावदशेदात्मविहंगमम् ॥ ९६ ॥

९५,९६. यावज्जरोरंगमी जरैव मृत्युहेतुत्वात्सर्पिण्यात्मविहंगममात्मानमेवानियतार्श्रयित्वादिना पक्षिणं न दशेन्न खादेत्तावदेवं हरिं ध्यातुं मम क्षणोवसरः । किंभूतम् । भुजंगमेशोरुभुजं शेषराजवत्प्रलम्बबाहुं तथा भुजगतल्पगं भुजगः शेषो यत्तल्पं तत्र शयानं तथा भुजंगजिद्यो विहंगः पक्षी गरुडः सोङ्कश्चिह्नं यस्य तं तथा विहगेन्द्रप्रभाम्बरं गरुडवत्स्वर्णवर्णवस्त्रं तथा सुगीकृतं रागादिचरटोच्छेदेन सुगमीकृतं स्वर्ग एव दुःखेन गम्यत्वाद्दुर्गं विषमभूमिर्येन तम् ॥

खड् । भुजंग । विहंग ॥ ड । भुजग । विहग ॥ ख । भुजंगम । विहंगमम् । अत्र "नाम्नः०" [ १३१ ] इत्यादिना खड्डखाः ॥ विहायस्शब्दस्य च विहादेशः ॥ उरंगमीत्यपि कश्चित् ॥

१ डी °मेशारु°. २ बी °गजिद्वि°. ३ ए °विहगा°. ४ सी डी °भाम्बर°. ५ सी डी °वध्यात् क्ष°. ६ डी °रारग°. ७ ए शेनात्म°. सी डी °शेनात्म°.

१ डी °णी । अ°. २ सी खट्. ३ बी °रित्येव । न°. ४ ए °च्व्यन्तपू°. ५ सी डी °न्ति । अन°. ६ सी डी आशित°. ७ ए सी डी °वेत्या°. ८ बी °श्रयत्वा°. ९ डी °गमशशेष°. १० सी °मेशशेष°. ११ ए °शोरभु°. १२ ए भुजंग°. १३ ए सी डी विहगः. १४ डी °ड: शोङ्क°. १५ सी विहगे°. १६ सी डी °डश्च स्वर्ण°. १७ ए भुजग. १८ ए °ग । स्रो भु°. सी डी °गम । विह°.

सुंगी । दुर्गम् । इत्येतौ "सुग०" [ १३२ ] इत्यादिना निपात्यौ ॥

**स्वर्गनिर्गोचितं कुर्यात्किं हि पुंशम्बरस्तदा ।**
**आर्त्या पार्श्वशयः पृष्ठशयोत्तानशयो यदा ॥ ९७ ॥**

९७. तदा पुमानकिंचित्करत्वादनुकम्प्यत्वाच्च शम्बर इव मृगभेद इव । पुंशम्बरो हि स्फुटं स्वर्गनिर्गोचितं स्वर्गदेशयोग्यं सद्धर्मानुष्ठानं किं कुर्यान्न किमपि यदार्त्या जरापीडया पार्श्वशयः पृष्ठशय उत्तानशयः पार्श्वाभ्यां पृष्ठेनोत्तानश्च शेते ॥

**योगेनोर्ध्वशया धन्या भिक्षाचरवनेचराः ।**
**अहृच्छया अनादायचराः स्वं साधयन्ति ये ॥ ९८ ॥**

९८. ते भिक्षाचरवनेचरास्तापसा धन्याः श्लाघ्याः । किंभूताः । योगेन ध्यानेन कृत्वा न तु निद्रयोर्ध्वशया ऊर्ध्वा एव शयाना ऊर्ध्वस्था एव सन्तो योगपरमकाष्ठयां शयानवन्निश्चेष्टा इत्यर्थः । ये स्वं साधयन्ति । कीदृशाः सन्तः । अहृच्छया निष्कामास्तथानादायचरा अनादानं कृत्वा चरन्तो निष्परिग्रहा इत्यर्थः ॥

**सेनाचराग्रेसरैस्त्वं वृतो धुर्यपुरःसरः ।**
**धेहि तद्भूधुरां येन स्यां विवेक्यग्रतःसरः ॥ ९९ ॥**

९९. तत्तस्माद्धेतोस्त्वं भूधुरां धेहि धारय । कीदृक्सन् । सेनया चरन्ति गच्छन्ति सेनाचराः सैनिकास्तेषामग्रेसरैर्मुख्यैर्वृतस्तथा धुर्यपुरः-

१ बी पुंसंवर°. २ ए बी सी °नोर्द्धश°. ३ डी °राः । आह°. ४ ए °राः स्वमा°. ५ ए °रस्त्वं धृतो. ६ डी °तः । न°.

१ बी सी डी सुग । दु°. २ सी डी °यः पा°. ३ बी °त्तानाश°. ४ सी डी °षमाः श्ला°. ५ ए °मा श्ला°. ६ ए °गेनाध्या°. ७ ए °र्ध्वांश ए°. ८ ए सी ऊर्द्धस्था. ९ सी डी °याश्रयान् व°. १० ए °र्थः । ममाप°. ११ बी °रां पृथ्वीभार धे°.

सरः कार्यधुराधरणक्षमेषु प्रष्ठः । येन यथाहं विवेक्यग्रतःसरो मुनिषु मुख्यः स्याम् ॥

निम्न । इत्ययं "निम्नो देशे" [ १३३ ] इति निपात्यः ॥

शम्बरः । अत्र "शमो नाम्न्यः" [ १३४ ] इत्यः ॥

पार्श्वशयः । पृष्ठशयः(य) । अत्र "पार्श्वादिभ्यः शीङः" [ १३५ ] इत्यः ॥

ऊर्ध्वशयाः । उत्तानशयः । अत्र "ऊर्ध्वादिभ्यः कर्तुः" [ १३६ ] इत्यः ॥

हृच्छयाः । अत्र "आधारात्" [ १३७ ] इत्यः ॥

वनेचराः । अत्र "चरेष्टः" [ १३८ ] इति टः ॥

भिक्षाचरं । सेनाचर । अनादायचराः । अत्र "भिक्षा०" [ १३९ ] इत्यादिना टः ॥

पुरःसरः । अग्रतःसरः । अग्रेसरः । अत्र "पुरः०" [ १४० ] इत्यादिना टः ॥

**सातपत्रे द्विपारूढे राज्ञां पूर्वसरे त्वयि ।**
**भवं तरामि योगस्थो नदीष्ण इव निम्नगाम् ॥ १०० ॥**

१००. स्पष्टः । किंतु नदीष्णो नदीतरणकुशलः ॥

पूर्वसरे । अत्र "पूर्वात्कर्तुः" [१४१] इति टः ॥

योगस्थः । द्विप । नदीष्णः । सातपत्रे । अत्र "स्थापा०" [ १४२ ] इत्यादिना कः ॥

**कथं स शोकापनुदः पुत्रः स्तम्बेरमोऽपि ।**
**अप्यंतुन्दपरिमृजस्त्यक्तकर्णेजपोऽपि च ॥ १०१ ॥**

---

१ ए निम्नगा°. २ बी डी पुत्रमा°. ३ बी तुदंप°. ४ डी °मृज्यस्त्य°.

१ डी °भ्यः क्रीडः. २ ए शीङ इ°. ३ ए °शयः । उ°. डी °शय । उ°. ४ ए °दिभ्यकेतुः इ°. ५ सी डी °चरः । मे°. ६ ए सी डी °चर । अ°. ७ बी भिक्ष्येत्या°. ८ सी डी अग्रे°. ९ सी डी °वात्कर्तुः. १० सी डी °दी सा°. ए °दीते । सा°.

आज्ञाभ्रूमूलविभुजनेत्रपङ्केरुहे गुरौ ।
भवेत्कामदुघा भक्तिः पादभाजोपि यस्य[1] न ॥ १०२ ॥

१०१,१०२. स पुत्रः कथं शोकापनुद आनन्द[1]करः स्यात् । कीदृशः । स्तम्बेरमो[2]र्गो[3]पि गजवद्गलिष्ठोपि । अतुन्दपरिमृजोपि निरालस्योपि । त्यक्तकर्ण[4]जपोपि सत्सङ्गरतत्वात्त्यक्तदुर्जनोपि । यस्य पुत्रस्य पादभाजोप्यास्तां यो दुर्विनीतत्वेन समीपेपि नायाति किं त्वतिविनीतत्वेन पादसेवकस्यापि[5] सतः कामदुघा मनोरथपूरिका भक्तिराज्ञापालनरूपा न भवेत् । क विषये । गुरौ पितरि । किंभूते । आज्ञायै भ्रुवोः सम्बन्धित्वेन मूलविभुजे मूल आदौ [6]विभुजन्ती कुटिलीभवन्ती नेत्रपङ्केरुहे यस्य तस्मिंश्चालितभ्रूमूलने[7]त्रसंज्ञयाज्ञां ददान इत्यर्थः । आज्ञापालनमेव हि गुरौ भक्तिस्ते[8]चेत्त्वं मयि सत्यं भक्तस्तदा राज्यं गृहाणेत्यर्थः ॥

शोकापनुदः । तुन्दपरिमृजः । स्तम्बेरम । कर्णजपः । इत्येते "शोका०" [१४३] इत्यादिना निपात्याः ॥

मूलविभुज । पङ्केरुहे । इत्यादयो "मूल०" [१४४] इत्यादिना निपात्याः ॥

कामदुघा । इत्यत्र "दुहे[9]र्दुघः" [१४५] इति दुघः ॥

पादभाजः । अत्र "भजो विण्" [१४६] इति विण् ॥

अग्रेगावा शुभंयां सोथाश्व[2]स्थामोपमं सुतम् ।
दोष्णि धीवा सुधीवोर्व्या जागर्हेमासने न्यधात् ॥ १०३ ॥

---

१ ए सी डी °स्य मः ॥ म. २ सी °श्वस्थामो°.

---

१ बी °न्दकः स्या°. ए °न्दकर स्या°. २ ए सी °र्गोगपि. ३ सी डी °पि जगद्ध°. ४ डी °पिपि म° ५ बी °पि का° ६ सी विभंज°. डी विभंजन्ती कु°. ७ डी °नेत्र मं°. ८ ए °स्तचेत्त्वं. सी °स्तेचत्त्वं. ९ ए °हेर्दुघ इति दुघः.

१०३. अथ स कर्णोश्वत्थामोपमं बलवीर्यादिना द्रोणपुत्रसमं सुतं जयसिंहं हेमासने सिंहासने न्यधादुपावेशयत् । कीदृक्सन् । शुभंयां श्रेयःकर्मकारिणां मध्येग्रेगाग्रेसरस्तथोर्व्याः सुधीवा सुष्ठु पोषकस्तथा जागरिहलोकपरलोकहितेपु सर्वकार्येषु जागरूकोत एव दोषि(ष्णि) बाहौ धीवा पुत्रस्य धारको बलाद्राज्ये निवेशनाय पुत्रं बाहौ गृहीत्वेत्यर्थः ॥

मन् । अश्वत्थाम । क्वचिद्ग्रहणात्केवलादपि । हेम ॥ वन् । अग्रेगावा ॥ क्वनिप् । सुधीवा ॥ केवलादपि । धीवा ॥ विच् । शुभंयाम् ॥ केवलादपि । जागः । अत्र "मन्वन्०" [१४७] इत्यादिना मन्वन्क्वनिप्विचः ॥

सोभिषेकचिकीः सूनोः कीरपां दिविपत्समः ।
पुण्यसूकुम्भहस्तोभाज्जिष्णुर्विष्णोर्नु गोदुहः ॥ १०४ ॥

१०४. स कर्णोभात् । कीदृक्सन् । दिविपत्समस्तदानीं हर्षोत्कर्षाद्वि-पविशेषाच्च देवतुल्यस्तथा सूनोरभिषेकचिकी राज्याभिषेकं चिकीर्षुरत एव पुण्यसूर्मङ्गल्यत्वात्कल्याणानां जनयिता कुम्भो हेमकलशो हस्ते यस्य सः । तथात एव चापां जलानां कीः क्षेप्ता । यथा गोदुहो गोपरूपधारिणो विष्णोरभिषेकचिकीः पुण्यसूकुम्भहस्तोपां कीः सन् जिष्णुरिन्द्रोभात् । विष्णोर्हि गोपस्य राज्याभिषेकमिन्द्रश्चकारेति पुराणम् ॥

अघभित्कृत्यविद्द्विड्जित्स प्रत्यूहच्छिदद्रुहः ।
सेनानीवाजियुग्मुख्यान्सम्राट् सूनावनामयत् ॥ १०५ ॥

---

१ ए °ट्यहः.

---

१ ए सी डी अत्र स. २ सी डी °णाम्वत्थामो°. ३ बी दृषो°. ४ बी °ग इह°. ५ सी °श्वत्थाम. डी °श्वत्थाने । क. ६ सी डी °पांदेप°. ७ ए सी डी जयि°. ८ ए सी डी °शो य°. ९ सी °स्य स त ए°.

१०५. स्पष्टः । किं तु स कर्णः । अद्रुह आभिजात्यादिगुणैरजिघांसून् । सेनान्यो दण्डनायकान् । वाजियुग्मुख्यांश्चाश्ववारप्रवरान्साधनाधिपान् ॥

ऋत्विग्धुर्यस्ततः सम्यगुष्णिग्दधृक्पुरोहितः ।
शङ्खस्पृगुदकस्पर्शी मन्त्रस्पृग्मङ्गलं व्यधात् ॥ १०६ ॥

१०६. ततो राज्याभिषेकानन्तरमृत्विग्धुर्यो यायजूकश्रेष्ठः पुरोहितः सम्यक् शास्त्रोक्तविधिना मङ्गलं मन्त्रपूतोदकाक्षतादिन्यासरूपां मङ्गलक्रियां व्यधात् । कीदृक्सन् । उष्णिग्दधृगुष्णिहि छन्दोविशेषे प्रगल्भस्तथा शङ्खस्पृगुदकस्पर्शः शङ्खस्थमुदकं स्पृशन् । तथा मन्त्रस्पृग्मन्त्रेण कुमारं स्पृशंश्च ॥

अभिषेकचिकीः । केवलादपि । कीः । अत्र "क्विप्" [१४८] इति क्विप् । सदिसूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजिभ्यश्च । दिविषत् । पुण्यसू । द्विट् । अद्रुहः । गोदुहः । वाजियुक् । कृत्यवित् । अघभित् । प्रत्यूहच्छित् । द्विड्जित् । सेनानी । सम्राट् । अञ्चेः । सम्यक् । तथा ऋत्विक् । दधृक् । उष्णिग् ॥

शङ्खस्पृग् । मन्त्रस्पृग् । इत्यत्र "स्पृशोनुदकात्" [१४९] इति क्विप् । कर्मोपपदादेवेच्छन्त्यन्ये । तन्मते मन्त्रस्पृगिति न स्यात् । अनुदकादिति किम् । उदकस्पर्शः ॥

एषोन्नादानिव क्रव्याक्रव्यादानपि शात्रवान् ।
त्यादृशानसदृग्जेष्यत्येवं वागभवद्दिवि ॥ १०७ ॥

१ बी °द्रुहः अभि°. २ सी डी °ना विपा°. ३ ए °धिमान. ४ सी डी °धिनाऽस्म°. ५ सी डी °श्च°. ६ सी °पि । चिकी । डी °पि । चिकीः. ७ ए °त्र कार्विति कि° । स°. ८ सी डी °द्रुह । वा°. ९ डी °त् । प्र°. १० डी °त्र स्पृगित्यत्र स्पृ°.

१०७. वाग् दैवी वाणी दिव्याकाशेभवन् । कथमित्याह । असदृक् प्रतापादिगुणैर्निरुपम एष जयसिंहस्त्यादृशान्दुर्जेयत्वेन प्रसिद्धान् क्रव्याक्रव्यादानप्याममांसभक्षान्पक्कमांसभक्षांश्चापि शात्रवान् शत्रून् राक्षसानपीत्यर्थः । अन्नादानिव मनुष्यानिव हेलयैवेत्यर्थो जेष्यत्येवम् ॥

**त्यादृक्षमङ्गलैस्तादृग्वाचा हृष्टोथ तादृशम् ।**

**तमनन्यादृशं स्माह कर्णस्तादृक्षया गिरा ॥ १०८ ॥**

१०८. अथ कर्णस्तं जयसिंहं तादृक्षया तत्कालोचितया गिरा शिक्षाप्रधानवाण्याह स्म । कीदृशम् । तादृशं राज्याभिषेकश्रीसमलंकृतं तथानन्यादृशं शोभातिशयेन निरुपमम् । कीदृक्सन् । त्यादृक्षमङ्गलैः पुरोहितकृताभिषेकोचितमङ्गलकर्मभिस्तादृक्षवा(दृग्वा)चा च दिव्यवाण्या च हृष्टः ॥

**नान्यादृक्षां सदृक्षीं किं त्वाद्यानामुद्वहन्स्थितिम् ।**

**मित्रभाषी स्निग्धदर्शी विप्रादीन् रक्षिता भव ॥ १०९ ॥**

१०९. हे वत्स त्वं विप्रादीन्वर्णचतुष्टयीं रक्षिता पालनशीलो भव । कीदृक्सन् । नान्यादृक्षां पूर्वपुरुषस्थितिसकाशान्न विपरीतां किंतु सदृक्षीमाद्यपुरुषस्थितेः सदृशीमाद्यानां पूर्वजानां स्थितिं व्यवस्थामुद्वहंस्तथा मित्रभाषी सखेवालपन् स्निग्धदर्शी सानुरागं दर्शनशीलः ॥

**भूया मद्भ्रातृजे देवप्रसादे वानुयायिनि ।**

**साधुकारी चारुदायी सर्वदा च प्रसादवान् ॥ ११० ॥**

१ ए डी °दृशां त°. २ ए नगान°. ३ ए °दृक्षा म°. ४ सी °न् वर्ण°.

१ बी °थोज्येष्य° २ ए सी डी °व ॥. ३ ए °ण्यामाह स्म । की°. सी डी °ण्यामाह । की°. ४ ए °थामन्या°. सी डी °था अन्या°. ५ डी °निरुप°. ६ ए सी डी °न् अनन्या°. ७ सी °रागद°.

११०. स्पष्टः। किंतु अनुयायिनि तवात्यन्तं भक्त इत्यर्थः। चारुदायी चारु यथा स्यादेवं पुरादि ददन् ॥

"अदोनन्नात्" [१५०] इत्यस्य आमात् इत्यादि प्रवृत्त्युदाहरणम् अन्नादान् इति व्यावृत्त्युदाहरणोपदर्शनेनैव दर्शितं ज्ञेयं प्रवृत्तिमन्तरेण व्यावृत्तेरभावात् ॥

क्रव्यात्क्रव्यादशब्दौ "क्रव्यात्०" [१५१] इत्यादिना साधू ॥

त्यदादि। त्यादृशान्। त्यादृक्ष। तादृशम्। तादृक्षया। तादृक् ॥ अन्य। अनन्यादृशम्। अन्यादृक्षाम्। अनन्यादृशम् ॥ समानः (न)। सदृक्। इत्यत्र "त्यदादि०" [१५२] इत्यादिना टक्सकौ क्विप्च। केचित्सकमपि टितं मन्यन्ते। सदृक्षीम् ॥

मित्रभाषी। इत्यत्र "कर्तुर्णिन्" [१५३] इति णिन् ॥

स्निग्धदर्शी। इत्यत्र "अजातेः शीले" [१५४] इति णिन्। अजातेरिति प्रसज्यप्रतिषेधादसत्त्ववाचिनोप्युपसर्गाद्भवति। अनुयायिनि। अजातेरिति किम्। विप्रादीन् रक्षिता ॥

साधुकारी। चारुदायी। इत्यत्र "साधौ" [१५५] इति णिन् ॥

ब्रह्मवादी हरिस्मारी भूत्वा स्थण्डिलवर्त्यथो।
प्रापाग्निष्टोमयाजीव स पुरीं जम्भविद्विपः ॥ १११ ॥

१११. अथो स कर्णो जम्भविद्विप इन्द्रस्य पुरीं प्रापाग्निष्टोमयाजीव यथाग्निष्टोमेन स्वर्गफलेन यागविशेषेणेष्टवान्यजमानो जम्भविद्विपः पुरीं प्राप्नोति। कीदृक्सन्सः। स्थण्डिलेवर्ती स्थण्डिले मुनियोग्ये भूविशेषे व्रताद् वर्तमानो भूत्वा ब्रह्मवादी परमतत्वं वेदान्वा ब्राह्मणान्वा वदंस्तथा हरिस्मार्यभीक्ष्णं हरिं स्मरन् ॥

१ ए सी डी पुरीं प्र°.

१ ए सी डी °देव पु°. २ ए सी डी °भा इ°. ३ बी °व्याक्रव्या°. ४ सी डी इना°. ५ ए °दृशान्. ६ सी डी °न्। तादृ°. ७ ए °दृशां ता°. ८ ए °दृक्षम्. ९ बी अन्या°. १० बी °मानं स°. ११ ए सी डी न्यन्ते। स°. १२ ए सी डी °क्षीं ॥. १३ ए °जातो शी°. १४ सी पुरीं प्रा°. १५ डी °ण्डिले व° १६ सी डी °वा प°. १७ ए सी डी °क्ष्णं स्मा°.

ब्रह्मवादी । इत्यत्र "ब्रह्मणो वदः" [१५६] इति णिन् ॥

स्थण्डिलवर्ती । हरिस्मारी । इत्यत्र "व्रत०" [१५७] इत्यादिना णिन् ॥

अग्निष्टोमयाजी । इत्यत्र "करणाद्०" [१५८] इत्यादिना णिन् ॥

स सोमविक्रयिभ्रूणहब्रह्महात्मघातिनः ।
वर्जयन् जयसिंहोथ पितृकार्येपृणद्द्विजान् ॥ ११२ ॥

११२. स्पष्टः । परं सोमं सोमवल्लीरसं विक्रीतवन्तः सोमविक्रयिण एवमादिद्विजान्महापापिष्ठत्वाद्वर्जयन्नन्यान्द्विजानपृणद्भोजनादिदानैरतर्पयन् ॥

भूवृत्रघ्नोथ सुकृतः श्रुत्वा तां पुण्यकृद्गतिम् ।
देवप्रसादः पदकृत्तमूचे दर्शयन्सुतम् ॥ ११३ ॥

११३. अथ सुकृतः कृतपुण्यस्य भूवृत्रघ्नो महीन्द्रस्य कर्णस्य तां गतिं स्वर्गप्राप्तिलक्षणां श्रुत्वा देवप्रसादस्तं जयसिंहमूचे । कीदृक्सन् । पुण्यकृत्कृतधर्मात एव पदकृदुपार्जितस्वर्गरूपस्थानस्तथा सुतमात्मीयं पुत्रं जयसिंहस्य दर्शयन् ॥

यदूचे तदाह ।

अपापकृत्त्रिभुवनपाल एषोस्तु ते सुतः ।
कर्मकृन्मन्त्रकृच्छ्लाघ्यस्तीर्थकृत्सोमसुत्प्रियः ॥ ११४ ॥

११४. एष प्रत्यक्षो मत्पुत्रस्त्रिभुवनपालनामा ते सुतोस्तु । पुत्रवदयं त्वया पालनीय इत्यर्थः । कीदृग् । अपापकृदत एव कर्मकृन्मन्त्र-

१ ए °येंपुण°. बी °येंप्रिण°. २ ए सी °ति ।. ३ ए सी डी [illegible]माद प°. ४ ए °न्सुताम्. ५ ए °घ्यकृर्त्ता°. ६ ए °मस्युत्प्रि°. डी °मस्तुत्प्रि°.

१ सी °दिनानै°. २ डी °तःपु°. ३ बी महेन्द्र°. ४ ए °स्य तां. ५ ए सी डी °धर्मात. ६ बी डी °त्मीयपु°. ७ बी °मा सु°. ८ बी पाल्य इ°. ९ ए °व अक°.

कृच्छ्राद्यः सेवकैः कृतमन्त्रैर्मुनिभिश्च प्रशस्यस्तथा सर्वदर्शनभक्तत्वात्तीर्थकृतोर्हन्तः सोमसुतश्च सोमं सुतवन्तो यज्वानश्च प्रिया यस्य स तथा ॥

सोमविक्रयी । इत्यत्र "निन्द्ये०" [१५९] इत्यादिना-इन् ॥

आत्मघातिनः । अत्र "हनो णिन्" [१६०] इति णिन् ॥

ब्रह्महं । भ्रूणह । वृत्रघ्नः । अत्र "ब्रह्म०" [१६१] इत्यादिना क्विप् ॥

सुकृतः । पुण्यकृत् । अपापकृत् । कर्मकृत् । मन्त्रकृत् । पदकृत् । इत्यत्र "कृगः सु०" [१६२] इत्यादिना क्विप् । एभ्य एव भूते कृगः क्विबिति धातुनियमो नेष्यते । तेन तीर्थकृत् ॥

सोमसुत् । इत्यत्र "सोमात्सुगः" [१६३] इति क्विप् ॥

इत्युक्त्वेत्य नदीं ब्राह्मीं सोग्निचित्कङ्कचिच्चिताम् ।
स्वर्गदृश्वाभवत्कर्णसहकृत्वेव भक्तिमान् ॥ ११५ ॥

११५. स देवप्रसादः कर्णे भक्तिमान्सन्स्वर्गदृश्वा चिताप्रवेशेन स्वर्गं दृष्टवानभवत् । किं कृत्वा । इति पूर्वोक्तमुक्त्वा तथा ब्राह्मीं नदीं सरस्वतीमेत्य कालकरणायागत्य । किंभूताम् । अग्निचिदग्निं चितवती देवप्रसादार्थमग्निसंभृतेत्यर्थः । कङ्कचित्कङ्काख्यपक्षिभेदवच्चिता कङ्काकारेण रचितेत्यर्थः । चिता यस्यां ताम् । अतश्च तत्क्षणमेव स्वर्गगमनरूपैककार्यकरणादुत्प्रेक्ष्यते । कर्णसहकृत्वेव कर्णसहकारीव ॥

१ ए °चिन्चितम्.

१ ए °न्त्रैर्मुनि°. २ बी निन्दे इ°. ३ बी ह्महः । भ्रू°. ४ सी °घ्न । अ°. ५ सी डी °पु । पु°. ६ ए °कृत । पु°. ७ सी डी °त् । म°. ८ डी मन्त्र°. ९ बी °मान्स°. १० ए °त्ककाख्य°. ११ ए चिन्ता य°. १२ ए सी डी °त्प्रेक्षते. १३ बी °सकृ°. १४ बी °र्णस्य स°.

राजंकृत्वा[1] राजयुध्वा सहयुध्वानमाहवे ।
आत्मानुजमिवापश्यत्सोब्जदृग्भ्रातृजं नृपः[2] ॥ ११६ ॥

११६. स नृपो जयसिंहो भ्रातृजं त्रिभुवनपालमात्मानुजमिवात्मानमनु जातं लघुसोदरमिवापश्यदद्राक्षीत् । कीदृक्सन् । अब्जदृक्प्रसन्नत्वात्पद्माक्षस्तथा राजकृत्वा त्रिभुवनपालं राजानं कृतवान् । कीदृशम् । आहवे सहयुध्वानं सह जयसिंहस्य सहायीभूय युद्धवन्तम् । ननु जयसिंहो युद्धकृदेव न भविष्यति तत्कथमसौ सहयुध्वेत्याह । राजयुध्वा राज्ञो[1] युद्धवान् । अन्तर्भूतण्यर्थत्वात् योधितवान् ॥

द्विजाज्ज्ञातान्क्षत्रियजान्सोन्यानप्यनुजानिव ।
अब्रह्मज्यो जनान्मित्रह्वकीर्तिपटहोन्वशात्[3] ॥ ११७ ॥

११७. स्पष्टः । किंत्वन्यानपि वैश्यशूद्रान् । अब्रह्मज्यो न ब्रह्मणि परमज्ञाने[2] जीनवान्[3] हीनवान् । मित्रह्वो[4] मित्राण्याकारयन्कीर्तिपटहो[5] यस्य सः ॥

स क्ष्मां पयोधिपरिखां धरणीवरोहः[4]
पुंसानुजो नु भपतेर्नृपराजवार्चैः[5] ।
खानां जयादतिजरन्मखयज्वसुत्वा[6]
दोष्णोन्नतेन धृतवान्विजितारिवर्गः ॥ ११८ ॥

११८. स जयसिंह उन्नतेन शत्रुविजयात्सर्वोत्तमेन दोष्णा

१ ए °जत्वा रा°. २ ए सी डी °पः ॥ नृ°. ३ ए °टज्ञोन्व°. ४ ए सी °राह पुं°. ५ ए °र्चैः । खनां. ६ ए °सुत्व दो°.

१ डी राजो यु°. २ डी °ज्ञानजी°. ३ ए °न् । मि°. ४ बी मित्राह्वो. ५ ए सी डी °यकीर्ति°.

बाहुना कृत्वा पयोधिपरिखामब्धिपर्यन्तां क्ष्मां धृतवान्पालितवानित्यर्थः । कीदृक्सन् । धरणीवराहो भूभारवहनक्षमत्वात्पृथ्व्यामादिशूकरतुल्यस्तथा सौम्यत्वादिना भपतेरिन्दोः पुंसानुजो नु पुंसा करणेनानु पश्चाज्जातः पुंसानुजोनन्तरोनुज इवेन्दुतुल्य इत्यर्थः । भ्राता हि सदृशो भवति । तथा नृपराजवार्चो नृपेषु राजहंसतुल्यस्तथा खानामिन्द्रियाणां जयाद्वशीकारादतिजरन् वृद्धमतिक्रान्तस्तथा मखेषु यागेषु यज्वनामृत्विजां सुत्वा यजमानो यागानां कारयितेत्यर्थः । तथा विजितारिवर्गः ॥

अग्निचित् । इत्यत्र "अग्नेश्चेः" [१६४] इति क्विप् ॥

कङ्कचित् । इत्यत्र "कर्मणि" [१६५] इत्यादिना क्विप् ॥

स्वर्गदृश्वा । इत्यत्र "दृशः क्वनिप्" [१६६] इति क्वनिप् ॥

सहकृत्वा । सहयुध्वानम् । राजकृत्वा । राजयुध्वा । इत्यत्र "सह०" [१६७] इत्यादिना क्वनिप् ॥

आत्मानुजम् । अत्र "अनोर्०" [१६८] इत्यादिना डः ॥

अब्ज । इत्यत्र "सप्तम्याः" [१६९] इति डः ॥

भ्रातृजम् । अत्र "अजातेः पञ्चम्याः" [१७०] इति डः ॥ अजातेरिति किम् । द्विजांजातान् ॥

उक्ताञ्ञाम्नोन्यतोपि । द्विर्जातान्द्विजान् ॥ अकर्मणोपि। अनुजान् ॥ जातेरपि । क्षत्रियजान्॥ उक्ताद्धातोरन्यतोपि । ब्रह्मणि जीनवान्ब्रह्मज्यः ॥ उक्ताञ्ञाम्नो धातो-

१ ए धिखाम°. २ बी °दिशूक°. ३ ए °तिरजन्. ४ बी यजना°. ५ सी डी °त्य अ°. ६ ए सी डी स्वर्गदृ°. ७ ए °ध्वान । रा°. ८ बी °ज । अ°. ९ डी °जाजाता°. १० ए सी डी °न् । उ°.

श्चान्यतोपि । वरमाहृतवान् वराहः ॥ उक्तान्नाम्नो धातोः कारकाच्चान्यतोपि[1] । परिखाम् ॥ नामधातुकालान्यत्वे । मित्रं ह्वयति मित्रह्वः । अणोपवादो डः ॥ धातुकारकान्यत्वे । पटे हन्यते स्म पटहः ॥ धातुकालान्यत्वे । वारि[2] चरति वार्चः ॥ नामकारकान्यत्वे । पुंसानु जातः पुंसानुजः ॥ नामाभाव उक्तधातुकालान्यत्वे च । भान्ति[3] भानि नक्षत्राणि ॥ नामाभाव उक्तधातुकालकारकान्यत्वे च । खन्यमा[4]-नानां खानाम् । एतेषु "... क्वचित्" [१७१] इति डः ॥

सुत्वा । यज्व । इत्यत्र "सु०" [१७२] इत्यादिना ङ्वनिप् ॥

जरन् । इत्यत्र "जॄषोतृः[5]" [१७३] इत्यतृः ॥

विजित । उन्नतेन । धृतवान् । इत्यत्र "क्त०" [१७४] इत्यादिना क्तक्तवतू । वसन्ततिलका छन्दः ॥

सप्तदशः पादः ॥

इति[6] श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तावेकादशः सर्गः ॥

---

१ बी °पि । परिखातां प°. २ डी वाविर°. ३ डी °न्ति न°. ४ ए °मानां. ५ ए डी °तृः । वि°. सी °तृ । वि°. ६ बी °ति जि°.

# द्व्याश्रयमहाकाव्ये

## द्वादशः सर्गः ।

स्मृतिमेष शुश्राव यशोशृणोत्स्वं
निषसाद नीतौ व्यपदन्न जातु ।
शममध्युवासोपगुरु न्यवात्सी-
दपथं बभज्वान्पपुराणशक्तिः ॥ १ ॥

१. एष जयसिंहः पपुराणाः पूरिताः पालिता वा शक्तयः प्रभुत्वोत्साहमन्त्रशक्तयो येन स तथा सन्नुपगुर्वाचार्यसमीपे न्यवात्सीद्धर्मशुश्रूषयोपाविक्षत् । अत एव स्मृतिं धर्मशास्त्रं शुश्राव । अत एव च नीतौ निषसाद तस्थौ । तथा न जातु व्यपदन्महाव्यसनसंभवेपि न विषण्णोभूत् । तथा शममध्युवासाश्रितवान् । तथापथं कुमार्गं बभज्वान्निर्लोठितवान् । अत एवं स्वं यशो लोकैरुद्गीयमानमशृणोत् ॥

शुश्राव । निषसाद । अध्युवास । इत्यत्र "श्रुसद०" [ १ ] इत्यादिना परोक्षा । वांवचनाद्यथास्वकालमद्यतनी ह्यस्तनी च । अशृणोत् । व्यपदत् । न्यवात्सीत् ॥

बभज्वान् । पपुराण । इत्यत्र "तत्र०" [ २ ] इत्यादिना क्वसुकानौ ॥ सर्गेस्मिन्केकिरवं छन्दः । स्यौ स्यौ केकिरवम् ॥

१ ए °पसीद. २ ए °तौ विप°. सी °तो वप°. डी °तौ वयप°. ३ ए °मध्यवा°.

१ ए एव. २ ए पि निर्विषिण्णो°. ३ ए °र्गं भ°. ४ ए डी °पान्नत. ५ ए °व स्वयं य°. ६ ए सी °नं । शु°. ७ ए वाच°. ८ ए °राण्य । इ°.

स तथेयुपेनाशुप आश्वदत्त द्रविणान्यनूचानकुलाय वीरः ।
न यथाभ्यगाद्याचितुमन्ववग्वा न यथा यथा नाश तदन्यगेहे २

२. वीरो दानवीरः स जयसिंहोनूचानकुलायानूचानाः साङ्गे प्रवचनेधीतिनस्तेषां वृन्दाय तथा बाहुल्येनाशु याञ्चायाः प्रागेव द्रविणान्यदत्त । यतोनाशुपे व्रतनिम्नत्वाद्यत्र तत्र शूद्रादिगृहेभुक्तवते निस्वत्वाद्भोजनरहिताय वा । तथेयुपे याचितुं दूरदेशादागताय । यथा तदनूचानकुलमन्यगेहे जयसिंहगेहादन्यस्मिन् गेहे याचितुं नाभ्यगात् । यथान्यगेहे याचितुं नान्ववग्वा देहीति नावोचच्च यथान्यगेहे नाश वा नाभुक्त च ॥

ईयुषे । अनाशुषे । अनूचान । इत्येते "वेयिवद्०" [ ३ ] इत्यादिना वा निपात्याः ॥ वावचनात्पक्षेद्यतन्यादयोपि । अभ्यगात् । नाश । अन्ववक् ॥

ऋषयोन्यदाभ्येत्य तमित्यवोचन्नगमाम या यासु पयांस्यपाम ।
निरभुक्ष्महि ह्योद्य च यातुधाना उपदुद्रुवुस्तास्तव सत्रशालाः ॥३॥

३. अन्यदा ऋषयस्तं जयसिंहमभ्येत्येतीदमवोचन् । यथा राजंस्ताः सत्रशालाः सत्राय सदादानाय गृहाणि यातुधाना राक्षसा उपदुद्रुवुर्बभञ्जुर्या वयमगमाम तथा यासु वयं पयांसि दुग्धान्यपाम

१ ए °पेनांशु°. २ डी वीराः । न. ३ ए °मन्नव°. डी °मन्वेव°. ४ डी °था श्र त°. ५ ए नाश्न त°. सी नाशु त°. ६ बी निरुभु°. ७ सी °दुदुवु°. ८ ए सी डी °त्रसालाः.

१ ए सी डी °रः ज°. २ ए °लायानूनानाना सा°. ३ सी °नूचामामा°. डी °नूनावा सा°. ४ बी याश्रायाः. ५ बी °त्र मूद्रा°. ६ बी निश्वत्वा°. ७ ए तथोयु°. ८ डी दूरेदे°. ९ बी °न् गृहे. १० ए नाशिवान्नाभु° ११ डी °शचाशवन्वाभु°. १२ सी वान्नाभु°. १३ डी °चत् । य°. १४ ए सी डी °त्रसालाः. १५ ए °दुदुवु°. सी °दुदुवु°. १६ ए वयं प°.

पीतवन्तस्तथा यासु[1] ह्योद्य च[2] चो वार्थो[3] ह्य इत्यतो ज्ञेयः। अद्य कल्पे वा निरभुक्ष्महि निश्चितं भुक्ताः ॥

अवोचन्। इत्यत्र "अद्यतनी" [ ४ ] इत्यद्यतनी ॥

अगमाम याः। पयांस्यपाम। व्यामिश्रे[4]। अद्य ह्यश्च निरभुक्ष्महि[5]। इत्यत्र "विशेषा०" [५] इत्यादिनाद्यतनी ॥

**भयवानिहावात्समिहावसं[1] चेत्यवदन्[2]मिथः[3] प्रश्न उषावशेषे।**
**अविषुप्तसुप्ता बटवो यदेषामरुणत्क्षपाटाधिपतिः प्रचारम् ॥ ४ ॥**

४. यद्यस्माद्ये(दे)षां बटूनां प्रचारं प्रसरं क्षपाटाधिपती राक्षसेश्वरोरुणद्रुद्ध[6]वांस्तस्माद्धेतोरुषावशेषे रात्रेश्चतुर्थे यामेविषुप्तसुप्ता द्वन्द्वे अवस्कन्द[7]भयेन केचिदविषुप्ता अतिनिद्रालुत्वाच्च केचित्सुप्ता बटवो मिथः प्रश्ने। क भवानुषित इति पृच्छायां सत्यवदन्। किमित्याह। भयवान्क्षपाटेभ्यो भीतः सन्नहं[8]मिह स्थानेवात्समुषितस्तथाहमिहावसं चेति। अविषुप्ता इहावात्समित्यवदन्सुप्तास्त्विहावसमित्यव[9]दन्नित्यर्थः। एतेनैषां वैयाकरणरूपतोक्ता। एतद्रो[10]धे[11] च क्षपाटाधिपतेर्महापापिता सूचिता। बटूनां बहुत्वेपि भयवानिहावात्समित्यादावेकवचनमेकैकस्य वासापेक्षया ॥

इहावात्सम्। अत्र "रात्रौ०" [ ६ ] इत्यादिनाद्यतनी ॥ रात्र्यन्तयामे मुहूर्तमपि स्वापे ह्यस्तन्येव। इहावसम् ॥

अवदन्। इत्यत्र "अनद्यतने ह्यस्तनी[12]" [ ७ ] ॥ इति ह्यस्तनी ॥

---

१ ए °त्समहा°. २ बी °त्यदवन्मि°. ३ ए °वन्नन्मि°.

---

१ ए यास्तु ह्योद्य. २ डी °सु त्वोद्य. ३ ए °र्थो ह्य इ°. ४ ए व्यानिमि°. ५ बी निरभु°. ६ ए द्रुद्धवां°. ७ सी डी °वांसतस्मा°. ८ ए °न्दनये°. ९ डी °हमह. १० ए °वन्नि°. ११ ए °द्रोध च. १२ ए सी डी °नी ॥ अ°.

अरुणल्क्षपाटाधिपतिः प्रचारम्। इत्यत्र "ख्याते दृश्ये" [८] इति ह्यस्तनी ॥

**स्मरसीश यस्मिन्विहरिष्यसि त्वं स्मरसीदमाराद्यदखेल एणैः।**
**स्मरसीदमर्चिष्यसि यच्च विप्रान्यद् दास्यसे तन्निरभञ्जि तीर्थम् ५**

५. उ हे ईश स्मरसि यस्मिंस्तीर्थे विहरिष्यसि बाल्ये क्रीडार्थं विचरितवांस्तथा यस्मिंस्त्वमेणैः सहाराद्नैकट्येन निकटीकृत्येत्यर्थः। यदखेलो बाल्येक्रीड इदं स्मरसि तथा यस्मिंस्त्वं यच्च विप्रानर्चिष्यसि पादप्रक्षालनादिना पूजितवान् यद्दास्यसे च विप्रेभ्यो दानं दत्तवांश्चेदं स्मरसि तत्तीर्थं श्रीस्थलपुराख्यं संप्रति सिद्धपुरेत्याख्यया प्रसिद्धं निरभञ्जि ॥

स्मरसीश यस्मिन्विहरिष्यसि। इत्यत्र "अयदि०" [९] इत्यादिना भविष्यन्ती ॥ अयदीति किम्। स्मरसीदं यस्मिन्यदखेल एणैः ॥

स्मरसीदं यस्मिन्नर्चिष्यसि। यच्च विप्रान्यद्दास्यसे। अत्र "वाकाङ्क्षायाम्" [१०] इति भविष्यन्ती वा ॥ अत्रार्चा लक्षणं दानं लक्ष्यमिति लक्ष्यलक्षणसंबन्धे प्रयोक्तुराकाङ्क्षा स्यात्। पक्षोदाहरणं ज्ञेयम् ॥

**न विभो कलिङ्गाङ्गगमानृतं तद्विललाप सुप्तो यदिति ब्रुवाणः।**
**स परीक्षितो यत्र निशि त्वया प्राक्तदुपाचरेरायतनं विकीर्णम् ६**

१ ए सी डी °स्यते त°. २ डी °गमोनृ°. ३ ए सी डी °नं प्रकी°.

१ ए °णक्षपा°. २ सी डी °पार्यभि°. ३ ए तिनि ह्य°. ४ बी विचारि°. ५ ए सी डी °था तस्मि°. ६ ए °नैकाट्ये°. ७ डी °मि तथा. ८ डी °प्रार्चि°. ९ ए सी डी °क्षालादि°. १० सी डी यद्दास्य°. ११ डी °राख्यन्संप्र°. १२ ए °ख्यं प्र°. १३ ए सी डी °ष्यसीति। य°. १४ ए सी डी °काङ्क्षया°. १५ ए °न्ती ॥ अ°. १६ बी दानलक्ष्मि°. १७ ए °त्। यक्षो°. सी डी °त्। व्यक्षो°.

६. तदायतनं स्वयंभूरुद्रमहाकालदेवगृहं संप्रति लोके रुद्रमहालयेति नाम्ना प्रसिद्धमुपाचरै राक्षसैर्विकीर्णं भग्नं यत्र स कश्चिद्द्विवक्षितैस्तवास्माकं च पूर्वत्वेन प्रसिद्धो द्विजो निशि प्राक् प्राचि काले त्वया परीक्षितः । कीदृक्सन् । ब्रुवाणः । किमित्याह । न विभो कलिङ्गाञ्जगमेति । अहो द्विज त्वया कलिङ्गेषु द्विजो हत इति त्वयोक्तः । किल कलिङ्गेषु हि गतमात्रोपि द्विजोतिनिन्द्यत्वाच्चण्डाल इव द्विजपङ्क्तेर्बाह्यः स्यात्किं पुनर्मत्सदृशो ब्राह्मणघातीत्यतितरां निन्दाभयात्कलिङ्गगमनमप्यपह्नुवान आह । हे विभो नाहं कलिङ्गान् ब्राह्मणीभूतचण्डालकान्देशभेदाञ् जगम गत एव न । एवं च ब्रह्महत्या दूरापास्तैव । ननु मया कलिङ्गेषु ब्राह्मणो हत इति त्वया सुप्तेन प्रलपितं तत्कथमिदमुच्यत इत्याह । सुप्तोहं यत्कलिङ्गेषु ब्राह्मणस्य हननं विललाप तदनृतमिति ॥

सुप्तो यद्विललाप । न कलिङ्गाञ्जगम । इत्यत्र "कृत०" [११] इत्यादिना परोक्षा ॥

**निचकार विप्रान्ह जघान शश्वद्बुभुजे स यद्वल्लवणो यथा वा ।**
**इतिह न्यहञ्शश्वदभुङ्क लोकान्स खरस्तथा किं न विवेदिथैनम् ७**

७. तथा तादृशं द्विजाल्लोकांश्च घ्नन्तं भुञ्जानं चैनं क्षपाटाधिपं किं त्वं न विवेदिथ नाज्ञासीर्यद्वद्यथा स प्रसिद्धो लवणो नाम दानवो विप्रान्निचकार पराभूतवान् । ह इति संबोधने हननक्रियायां

१ डी °कारं वि°. २ ए °प्रान्जघा°. ३ डी °न श°. ४ ए लोकान्स.

१ सी डी °ति प्र°. २ ए °मुपाच°. ३ डी °तस्तवा°. ४ बी च स पू°. ५ ए °ति त्रयो°. ६ बी °क्तः । क°. ७ बी °पि अति°. ८ ए °जो इति°. ९ ए सी कलङ्गा°. १० ए भुजानं. ११ डी प्रद्धो°.

क्षेपद्योतको[1] वा । जघान च तथा शश्वद्बुभुजे भक्षितवांश्च । यथा वा स प्रसिद्धः[2] खरो नाम राक्षसः । इतिहेति[3] निपातसमुदायः प्रवाद्पारम्पर्ये[4] । लोकान्न्यहन्[5] शश्वदभुङ्क्त च ॥

**किमवेस्त्वमेतत्स्मरसीश यस्यामितिहापठामोपगुरु त्रिवेदीम् ।**
**स्मरसीह शश्वदन्यवसाम यस्यां रजनीचरैर्व्यापि सरस्वती सा ॥ ८ ॥**

८. हे ईश एतत्त्वं किमवेदज्ञासीः[6] । यत्सा सरस्वती नदी रजनीचरैर्व्यापि । स्मरसि यस्यामुपगुरूपाध्यायसमीपे त्रिवेदीं त्रीन्वेदानितिह गुर्वाम्नायेनापठाम त्वं वयं चाधीतवन्तस्तथा स्मरसि यस्यामिह गुरुसमीपे शश्वदन्यवसामोषिताः ॥

निचकार विप्राल्लवणः । अत्र "परोक्षे" [१२] इति परोक्षा ॥

इतिह न्यहन्[7] । ह जघान[8] । शश्वदभुङ्क्त । शश्वद्बुभुजे ॥[9] प्रच्छये । किमवेस्त्वमेतत् । किं न विवेदिथैनम् । अत्र "हशश्वद्०" [१३] इत्यादिना ह्यस्तनी ॥ परोक्षे वेत्येव कृते भूतानद्यतनमात्रभाविन्या[10] ह्यस्तन्याः[11] पक्षे सिद्धौ ह्यस्तनीविधानं[12] स्मृत्यर्थयोगेपि ह्यस्तन्येव यथा स्यान्न भविष्यन्त्येवमर्थम् ।[13] तेन स्मरसीश यस्यामितिहापठाम । स्मरसीह[14] शश्वदन्यवसाम ॥

**अवसच्च दुर्वासऋषिः स यस्मिन्स पुरा न्यवात्सीदथ मण्डुसूनुः ।**
**अवसन्पुराण्येप्यृषयो वनं तद्दलितं तदा कश्चन न ह्यरक्षीत् ॥ ९ ॥**

९. स्पष्टम्[15] । किं तु तद्वनं सरस्वतीतटस्थ आश्रमविशेषः । तदा दलनकाले ॥

---

१ **ए** °पयोयो°.　२ **डी** °सिद्धो ख°.　३ **ए** °तिनिपा°.　४ **डी** °पारः पर्ये.　५ **डी** °कान्न्यह°.　६ **डी** किवमेद°.　७ **बी** °क्षेति.　८ **डी** °ह ज°.　९ **ए डी** °जे ॥ प्राच्य । कि°.　१० **ए सी डी** °वनतमा°.　११ **डी** °विना ह्य°.　१२ **सी डी** °स्तनीवि°.　१३ **ए** °नं सत्य°.　१४ **सी डी** °ह सश्व°.　१५ **सी डी** स्पष्टः ।.

**न ररक्ष नः कोपि तदा तदा च रजनीचरा[1] घ्नन्ति तुदन्ति च स्म ।**
**किमकृद्वमीशं ननु कुर्महे भो इति वादिभिः सार्धमुपस्थितास्त्वाम्**
**॥ १० ॥**

१०. तदा वनदलनकाले नोस्मान्न कोपि ररक्ष । अत एव तदा च रजनीचरा नो घ्नन्ति जघ्नुरित्यर्थः । तुदन्ति स्म चापीडयन्नत एव त्वामुपस्थिताः शरणायोपागताः । कैः सह । इति वादिभिर्मनसा त्वामीशं कृत्वैवंवदनशीलैर्बटुभिः सार्धम । तदेवाह । अहो यूयं किमीशं रक्षकमकृद्वं कृतवन्त इति प्रश्ने । ननु कुर्महे भोः । नन्विति पृष्टस्य प्रतिवचने । हे पृच्छका वयमीशं कृतवन्त एवेत्यर्थ इति ॥

अवसद्दुर्वासऋषिः । अत्र "अविवक्षिते" [ १४ ] इति ह्यस्तनी ॥

न्यवात्सीत्पुरा । अवसन्पुरा । तदा न ह्यरक्षीत्[1] । तदा न ररक्ष । इत्यत्र "वाद्यतनी०" [ १५ ] इत्यादिनाद्यतनी वा[2] ॥

तुदन्ति स्म । तदा घ्नन्ति । इत्यत्र "स्मे च०" [१६] इत्यादिना वर्तमाना[3] ॥

किमकृद्वमीशं ननु कुर्महे भोः । अत्र "ननौ०" [ १७ ] इत्यादिना वर्तमाना ॥

**समिधोच्छिदः किं बत नच्छिनद्भि कुशमच्छिदः किं भृशमच्छिदं न।**
**किमदर्श[6] आः क्रव्यभुजो नु पश्याम्युटजेपु नो वागिति नादुनोत्कम्**
**॥ ११ ॥**

११. नोस्माकमुटजेपु वाग्दीनत्वात्कं नादुनोन्नादुःखयन । कीदृशी । बतेत्यामन्त्रणे । हे मुने त्वं किं समिधोच्छिद इति प्रश्ने । आह । नच्छिनद्भि नच्छिन्नर्वान् । तथा त्वं कुशं दर्भजातिं

१ प °र्गाति तु°. सी डी °राघ्नन्ति. २ सी °श यः क्र°. डी °श याः क्र°.
३ डी °ति नोस्मा°.

१ प °क्षीत । न°. २ प सी वा ॥ मुद°. ३ प °ना ॥ कम°. ४ प °हे नोः । अ°. ५ सी °त्वा ना°. डी °त्वा नि ना°. ६ डी °वा तं कु°. ७ प सी °था तं कु°.

किमच्छिद इति प्रश्ने । आह । भृशमत्यर्थं नाच्छिदमहं समिधः कुशांश्च । यत्त्वं नाच्छिदस्तत्किमाः कष्टं क्रव्यभुजो राक्षसांस्त्वमदर्श इति प्रश्ने । आह । नु इति पृष्टप्रतिवचने । पश्याम्यदर्शमित्येवंविधा ॥

**किमदर्श उच्चैररुणं न्वदर्शमुदयन्नसावस्ति विराजमानः ।**
**समुदेष्यदर्काग्र इति ब्रुवाणाः क्षणदां क्षपामः क्षणदाचरार्ताः १२**

१२. वयं क्षणदां रात्रिं क्षपामः । किंभूताः सन्तः । ब्रुवाणाः । किमित्याह । अहो त्वं किमरुणं सूर्यसारथिमरुणोदयमदर्श इति प्रश्ने । आह । न्वदर्शम । कासावरुण इत्याह । समुदेष्यदर्काग्र उदेष्यतो रवेः प्रथमं विराजमानोरुणिम्ना शोभमानोसौ प्रत्यक्षोरुण उदयन्नस्तीति । यतः क्षणदाचरार्ताः । रात्रिंचरा हि रात्रावुपद्रवन्तीत्यरुणोदयं काङ्क्षन्त इत्यर्थः ॥

**वयमत्स्यमाना रजनीचरैश्चेदिह माश्रयन्तो बत मा स्तुवानाः ।**
**यदि नीतिविद्वान्समयं विदंस्तान्यजमानहन्याः पवमानजौजाः १३**

१३. चेद्यदि वयं रजनीचरैरत्स्यमाना ग्रसिष्यामहे तदा बतेति खेदे । इह त्वय्याधारे वयं माश्रयन्तो माश्रयणं कुर्वन्तस्तथा मा स्तुवाना मा स्तवनं कुर्वन्तस्तदा तवाश्रयणं स्तवनं च निष्फलमित्यर्थः । तस्माद्यदि त्वं नीतिविद्वान् नीतिशास्त्रेषु कोविदः समयं सिद्धान्तं विदंश्च जानन्नसि तदा हे यजमान यज्ञस्वामिंस्तान् रजनीचरान्हन्याः । यतः पवमानजौजा हनूमानिव बलिष्ठः ॥

समिधोच्छिदः किं नच्छिनद्मि । कुशमच्छिदः किमच्छिदं न । किमदर्शः

---

१ बी °मच्छद. २ ए सी डी °क्षमास्त्व°. ३ सी डी °शं यति. ४ ए °विधाः ॥. ५ बी °त्रि क्षिपा°. ६ ए सी °दये का°. डी दयो का°. ७ सी °ङ्क्षत इ°. ८ बी °श्रयं कु°. ९ सी तथाश्र°. १० सी डी °मच्छदः.

क्रव्यभुजो नु पश्यामि । किमदर्शोरुणं न्वदर्शम् । अत्र "नन्वोर्वा" [१८] इति वा वर्तमाना ॥

अस्ति । क्षपामः । अत्र "सति" [१९] इति वर्तमाना ॥

उदयन् । विराजमानः । ब्रुवाणाः । समुदेष्यत् । अत्स्यमानाः । अत्र "शतृ०" [२०] इत्यादिना शत्रानशौ भविष्यन्तीविषयेर्थे च स्वसंहितौ ॥

माश्रयन्तः । मा स्तुवानाः । अत्र "तौ०" [२१] इत्यादिना शत्रानशौ ॥

विद्वान् । विदन् । इत्यत्र "वा वेत्तेः क्वसुः" [२२] इति वा क्वसुः ॥

पवमान । यजमान । इत्यत्र "पूङ्०" [२३] इत्यादिना शानः ॥

चुलुकेपु चूलां वहमान ऐभं दलमान आत्मानमशंसमानः ।
इह धारयन्क्ष्मावलयं स को यः स्म न पाति सिद्धान्तमधीयतोस्मान्
॥ १४ ॥

१४. सिद्धान्तमधीयतोकृच्छ्रेण पठतोस्मान्यो न पाति स्म न ररक्ष स इह पृथ्व्यां चुलुकेपु मध्ये चूलां शिखां वहमानोपि । अपिरध्याहार्यः । वोढुंवया अपि वालोपि कः । चौलुक्यो वालोप्यस्मान् ररक्षेत्यर्थः । कीदृक्सन् । महापुरुषत्वादात्मानमशंसमानोश्लाघनशीलस्तथातिविक्रान्तत्वादैभं गजौघं दलमानो विदारयितुं शक्तोत एव क्ष्मावलयं धारयन्नकृच्छ्रेण पालयन्नित्यर्थः ॥

यदधीयतेमूनपि धारयन्ति वत कृच्छ्रतोमी नृप सुन्वदर्हन् ।
अनयं द्विपंस्ताननयं विधातॄन्मनुजानशितॄन्भव तन्निहन्ता ॥१५॥

१५. वत हे नृप सुन्वदर्हन् सुन्वत्सु यजमानेष्वर्हन् श्रेष्ठत्वेन पूजार्ह यैन्यस्मादमी अस्मल्लक्षणा जनाः कृच्छ्रतो राक्षसभयात्कष्टेना-

१ वी °स्ति । क्षिपा°. २ वी °ष्यन् । अ°. ३ ए डी क्वसु । प°. सी क्वसुः प°. ४ ए यमा°. सी डी यदयमा°.

धीयते पठन्त्यसूनपि प्राणानपि कृच्छ्रतो धारयन्ति तत्तस्मादनयं विधातृन्करणशीलांस्तान्मनुजानशितृन्भक्षणधर्मांत्राक्षसान्निहन्ता साधु हिंसिता भव यतस्त्वमनयं द्विपन् । मनुजानशितृनिति पाठस्थाने-शितृन्मनुष्यानिति मनुजाशितृंस्त्वमिति वा पाठो यदि स्यात्तदा छन्दोभङ्गो न स्यात् । यावद्दृष्टप्रतिपु च मनुजानशितृनित्येव पाठः ॥

चूलां वहमानः । ऐभं दलमानः । आत्मानमशंसमानः । अत्र "वयः०" [२४] इत्यादिना शानः ॥

धारयन् । अधीयतः । अत्र "धारी०" [२५] इत्यादिनातृश् ॥ अकृच्छ्र इति किम् । कृच्छ्रतो धारयन्ति । कृच्छ्रतोधीयते ॥

सुन्वत् । द्विपन् । अर्हन् । इत्यत्र "सुग्०" [२६] इत्यादिनातृश् ॥

विधातृन् । मनुजानशितृन् । निहन्ता । इत्यत्र "तृन्०" [२७] इत्यादिना तृन् ॥

**प्रजनिष्णुरोचिष्णुरदप्रभाभिः खमलंकरिष्णुः क्षितिपोसहिष्णुः ।**
**प्रचरिष्णुरक्षांसि निराकरिष्णुर्निजगाद भ्राजिष्णुरपत्रपिष्णुः १६**

१६. क्षितिपो जयसिंहो मुनीन्निजगाद । कीदृक्सन् । अपत्रपिष्णुर्मुनिवचःश्रवणाल्लज्जालुरत एव प्रचरिष्णुरक्षांसि प्रसृमराद्राक्षसानसहिष्णुरत एव निराकरिष्णुस्तथा प्रजनिष्णुरोचिष्णुरदप्रभाभिरुद्भविष्णुदीप्रदन्तकान्तिभिः कृत्वा खमलंकरिष्णुरत एव भ्राजिष्णुः ॥

**ननु शान्तिवर्तिष्णुभिरुत्पदिष्णुः प्रभविष्णुवर्धिष्णुबलोन्मदिष्णुः ।**
**जगदुत्पचिष्णुर्वियदुत्पतिष्णुर्मयि जिष्णुभूष्णौ किमुपैक्षि सर्वः १७**

१७. जिष्णुभूष्णौ जिष्णोरिन्द्राद्भूष्णुरर्जुनस्तत्तुल्ये मयि सति न-

---

१ प °राधारि°. २ प° क्षिन सर्वाः ॥.

---

१ बी °यन्ते प°. २ प °तृन्भिक्ष°. ३ बी °जासितृं°. ४ सी डी व इ°.

न्वित्यक्षमायाम् । शान्तिवर्तिष्णुभिः क्षमायां स्थास्नुभिः सद्भिः सर्वैरपि भवद्भिः क्षपाटाधिपः किमुपेक्ष्युपेक्षितः । इयन्ति दिनानि ममाग्रेसौ किमिति नोक्त इत्यर्थः । कीदृक्सन् । प्रभविष्णुर्वर्धिष्णुबलोन्मदिष्णुरत एव वियद्व्योमोत्पतिष्णुरुत्प्लवनशीलस्तथा जगदुत्पचिष्णुः संतापनशीलः सन्नुत्पदिष्णुरुद्भवनशीलः ॥

भ्राजिष्णुः । अलंकरिष्णुः । निराकरिष्णुः । प्रभविष्णुः(ष्णु) । असहिष्णुः । रोचिष्णु । वर्तिष्णुभिः । वर्धिष्णु । प्रचरिष्णु । प्रजनिष्णु । अपत्रपिष्णुः । अत्र "भ्राजि०" [२८] इत्यादिना-इष्णुः ॥

उत्पचिष्णुः । उत्पतिष्णुः । उत्पदिष्णुः । उन्मदिष्णुः । अत्र "उदः पचि०" [२९] इत्यादिना-इष्णुः ॥

भूष्णो । जिष्णुः(ष्णु) । अत्र "भूजेः ष्णुक्" [३०] इति ष्णुक् ॥

परिमाक्ष्णुभिः स्थाष्णु(स्नु)मनोभिरग्ला-
स्नुभिरात्मना पक्ष्णुतया भवद्भिः ।
स्थितमापदि म्लास्नुभिरद्य याव-
द्विगधि(धृ)ष्णुकं क्षेष्णुबलं ततो माम् ॥ १८ ॥

१८. ततस्तस्माद्धेतोर्मां धिक् । किंभूतं सन्तम् । अधृष्णुकं कुत्सिताप्रगल्भमप्रचण्डमित्यर्थः । तथा क्षेष्णुबलं क्षयणशीलपराक्रमम् ।

१ ए सी डी °माक्ष्णुभिः. २ सी डी स्थितिमा°.

१ बी स्थाष्णुभिः. २ ए सी डी °ष्णुः । अ°. ३ ए सी डी °चिष्णुः । व°. ४ ए सी डी °धिष्णुः । प्र°. ५ ए सी डी °रिष्णुः । प्र°. ६ ए सी डी °निष्णुः । अ°. ७ ए बी °पिष्णु । अ. ८ बी सी °त्पदि°. ९ ए °ष्णुः । अ°. १० ए सी सनम्. ११ ए अधृष्णु°. बी अधिष्णु°.

यस्माद्भवद्भिः स्थास्नुमनोभिः स्थिरचित्तैः सद्भिरद्य यावन्म्लास्नुभिर्धर्मानुष्ठानविघ्नात्परिम्लानमुखैः सद्भिरापदि कष्टे स्थितम । किंभूतैः । परिमाक्ष्णुभिस्तीर्थजलेषु स्नानेनात्मनो विशोधकैः । तथात्मना पक्ष्णुतया स्वयंपाकितयाग्लास्नुभिर्धर्मार्थित्वेन हर्पात्स्वयंपाकिभिरित्यर्थः । यद्यहं प्रचण्डोक्षीणबलश्चाभविष्यं तदा यूयं नैवमापद्यपतिष्यत । तस्मान्मे धिक्कारोस्त्वित्यर्थः ॥

**निदिदिक्षवः क्षिष्णव आशु नो यत्तदु विन्दवस्त्रस्नुकगृध्नुकं माम् ।**
**यश इच्छुराशंस्वशरारुभिक्षूनु वोस्मि वन्दारुरसद्रुदारुः ॥१९॥**

१९. उ हे मुनयो यद्यूयमाशु मां नो निदिदिक्षवः क्षपाचरवधाय नाज्ञापयितुमिच्छवोभवत । न च क्षिष्णवः प्रेरणशीला अभवत तन्मन्ये मां त्रस्नुकगृध्नुकं विशेषणकर्मधारये कुत्सितभीरुं(रुं ?) कुत्सितलोभिनं च यूयं विन्दवो ज्ञातारोभवत । न च वाच्यं वयमिदं सत्यं विन्दव इति । यतो नन्वित्यामन्त्रणेनुनये वा । अस्म्यहं यश इच्छुः सन्वो युष्मान वन्दारुरभिवादकः । एतेन स्वस्यागृध्नुतोक्ता । तथासद्रुरविद्यमानः सन्दारुः पालयिता च । एतेन चात्रस्नुतोक्ता । यतः किंभूतान्वः । आशंसवो धर्मविघ्नानुपघातादिमिच्छवोशरारवः स्वयमहिंसनशीलाश्च ये भिक्षवो भिक्षाचरास्तान ॥

**जनधारुसेरुः स्वयमेप शद्रुः पतयालुको दीर्घतरं शयालुः ।**
**इति वा भवद्भिः स उपेक्षि धर्मगृहयालुश्रद्धालुदयालुचित्तैः ॥२०॥**

---

१ ए सी डी °स्तेरुः. २ सी डी °गृहालु°. ३ डी °लुचि°.

---

१ सी डी स्थाष्णुम°. २ ए सी डी °वन्माष्णुभि°. ३ डी °माष्णुभि°. ४ बी ननस्तस्मा°. ५ ए बी सी भिकारो°. ६ ए सी डी °थैः । भिदि°. ७ ए सी डी नो भिदि°. ८ ए °स्नुकं गृ°. ९ बी °तलो°. १० ए बी °नुकधा°.

२०. एप क्षपाटेशः स्वयमेव शङ्कुः स्वपापैरेव क्षयं यास्यति तथा पतयालुरु(लुक उ)च्चपदात्पतिष्यति तथा दीर्घतरं शयालुर्मरिष्यति च । "सत्सामीप्ये सद्वद्वा" [ ५. ४. १. ] इति भविष्यत्यपि प्रत्ययाः । कीदृक्सन् । जनधारुसेरूर्जनान्भक्षयन्वध्वंश्च । इति वेति हेतोर्वा स क्षपाटाधिपो भवद्भिरुपेक्ष्युपेक्षितः । यतः किंभूतैः । धर्मे गृह-यालूनि ग्रहणशीलानि श्रद्धालूनि श्रद्धाशीलानि दयालूनि च चित्तानि येषां तैः ॥

**मृगयाल्वनिद्रालुचरैरतन्द्रालुभिरस्तु नो यैरिदमप्यबोधि ।**
**धिग्वावहिः श्रीस्पृहयाल्वहं दोर्यद् सासहिश्चाचलिपापतिं तम्**
**॥ २१ ॥**

२१. अतन्द्रालुभिर्निरालस्यैर्मृगयाल्वनिद्रालुचरैर्मृगयालवः सकल-पृच्छ्याचरणान्वेषणशीला अत एवानिद्रालवो जागरूका ये चरास्तै-रस्तु सृतम् । यैश्चरैरिदमपि राक्षसकृतं युष्माकमुपद्रवणमपि नो अबोधि मम न ज्ञापितम् । अथैतस्य दोषस्य मूलकारणं स्वमेव नि-न्दति । उ हे मुनयोहमेव धिक्कृतः । कीदृक्सन् । श्रीस्पृहयालु विज-यलक्ष्म्या अभिलाषुकं दोर्बाहुं वावहिरत्यर्थं धारयिता । यद्यस्मादहं तं क्षपाटाधिपं सासहिरशिक्षणेनात्यन्तं सहनशीलोभवम् । किंभूतं तम् । चाचलिपापतिं युष्माकमुपद्रवायात्यर्थं चलनशीलं धाष्ट्यात्यर्थं पातुकं च ॥

१ ए °याल्वनि°. २ ए सी डी °वहि श्री°. ३ ए °पाति त°.

१ ए °विष्यपि. सी डी °विष्येपि. २ सी °क्षन्वधश्च । इ°. डी °क्षन्वध्वंश । इ°. ३ ए °यन्वधंश्च ।. ४ सी डी गृहाल्°. ५ सी °नि द°. ६ ए एव नि°. ७ सी °म ज्ञा°. ८ बी °हं क्ष°. ९ ए सी डी °क्षणान्नात्य°. १० सी °तं चा°. ११ सी °र्थं धातु°. डी °र्थं पा°. १२ बी पातकं.

स्थास्नु । अग्लास्नुभिः । म्लास्नुभिः । पक्ष्णु । परिमार्क्ष्णुभिः । क्षेष्णु । अत्र "स्थाग्ला०" [ ३१ ] इत्यादिना स्नुः ॥

ग्रस्नुक । गृध्नुकम् । अधृष्णुकम् । क्षिष्णवः । अत्र "त्रसि०" [ ३२ ] इत्यादिना क्नुः ॥

निदिदिक्षवः । भिक्षून् । आशंसु । इत्यत्र "सन्०" [३३] इत्यादिना-उः ॥

विन्दवः । इच्छुः । इत्येतौ "विन्द्विच्छू" [ ३४ ] इति निपात्यौ ॥

शरारु । वन्दारु(रुः) । इत्यत्र "श०" [ ३५ ] इत्यादिना-आरुः ॥

दारुः । धारु । सेरुः । शद्रुः । असद्रुः(द्रु) । अत्र "दाधा०(धे०)" [ ३६ ] इत्यादिना रुः ॥

शयालुः । श्रद्धालु । निद्रालु । अतन्द्रालुभिः । दयालु । पतयालुकः । गृहयालु । स्पृहयालु । इत्यत्र "शीङ्०" [ ३७ ] इत्यादिना-आलुः ॥

सासहिः । वावहिः । चाचलि । पापतिम् । एते "डौ०(डौ ?)" [ ३८ ] इत्यादिना निपात्याः ॥

**विनयं दधौ नेम्युपचक्रिसस्नौ क्षितिभृद्रणे यन्न हि जज्ञ्यधिज्यम् ।**
**शरवर्षुकं तन्मम धन्व तस्मिन्नभिभावुकस्थायुकघातुकेस्तु ॥ २२ ॥**

२२. तद्धन्व तस्मिन्क्ष्मापाटाधिपे शरवर्षुकमस्तु । यतः किंभूते । अभिभावुको मुन्यादीनामभिभवनशीलो यः स्थायुकेषु रोगादिनाजङ्गमेषु घातुकस्तस्मिन् । यन्मम धन्व क्षितिभृद्रणे नृपौघविषये न हि

१ ए जज्ञ्यधि°.

१ सी डी °माक्ष्णुभिः. २ डी स्थाम्ला इ°. ३ ए सी डी °नाम्नः । अत्र°. ४ सी डी अध्वष्णु°. ५ बी क्नुः । नदि°. ६ ए भिक्षून्. सी डी भिक्षुन्. ७ डी °त्र शी°. ८ ए आरु । दारः । धा°. ९ ए सी सेरु । श°. १० बी दाधित्या°. ११ ए °द्रालुः । अ°. १२ सी गृहालु. १३ ए °यालुः । स्पृ°. १४ ए सी °वहि । चा°. १५ ए °पत । ए°. सी डी °पति । ए°. १६ ए स्थायुःके°. बी स्थायिके°.

नैवाधिज्यं जज्ञि भवनशीलं यतो[1] मम विनयमभ्युत्थानादि दध्रौ कर्तरि तथा नेम्युपचक्रिसम्रौ नेमौ नन्तर्युपचक्रावुपेकर्तरि सम्रौ गन्तरि मां सेवितरीत्यर्थः ॥

**रिपुशारुको मे जयलक्ष्मिकामुक्यभिलापुकोगावुपपादुकोसिः ।**

**अभिगामुकोत्पातुकराक्षसास्रैः क्षितिमण्डनो मद्भुजभूपणोस्तु**

**॥ २३ ॥**

२३. असौ मद्भुजभूपणोसिरभिगामुका बलावलेपात्संमुखागामिन उत्पातुका उत्पतनशीला ये राक्षसास्तेपामस्रै रक्तैः कृत्वा क्षितिमण्डनोस्तु गलद्भिः शोणितबिन्दुभिर्भूमिं भूपयत्वित्यर्थः । कीदृक्सन् । मे जयलक्ष्मिकामुक्यभिलापुको जयश्रीकामिन्या इच्छुरत एव रिपुशारुकः शत्रूणां हिंस्रोत एव चोपपादुको युक्तः श्रेष्ठ इत्यर्थः ॥

**न न कोपनः क्रोधन एव तेपु न न गर्धनः संलपणो जयस्य ।**

**सरणोस्मि तस्मिञ्जवनैर्हयैरित्यभिधाय सोतिज्वलनोभ्युदस्थात्**

**॥ २४ ॥**

२४. अतिज्वलनः कोपेन प्रतापेन वातिदीप्रः सन्स नृपोभ्युदस्थात् । किं कृत्वा । अभिधाय । किमित्याह । अस्म्यहं जवनैर्वेगवद्भिर्हयैः कृत्वा तस्मिन् राक्षसेशविषये सरणः साधु गन्ता । कीदृक्सन् । जयस्य न न गर्धनो लिप्सुः किं तु संलपणो लिप्सुरेवात एव तेपु राक्षसेपु न न कोपनः किं तु क्रोधन एवेति ॥

१ ए सी डी °मुकाभि°. २ ए °पादुको°. ३ डी °रित्यत्य°.

१ ए °तो मम वि°. २ ए सी डी °पथाक°. ३ ए सी डी उर्जावन°. ४ ए सी डी °न् । विज°. ५ ए सी डी °मुकोभि°. ६ बी °शारुकः. ७ ए रा -श°. सी डी राक्षसवि°. ८ °गन्तः । की°.

**अविशोचनैरापतनैः समं तैश्चलनः स लीलापदनः प्रतस्थे ।**
**अविकम्पनः सज्जितशब्दनेभान् रवणाश्वसैन्यान्वदिता चमूपान्**
**॥ २५ ॥**

२५. स नृपः प्रतस्थे । कीदृक्सन् । निर्भीकत्वादविकम्पनोत एव लीलापदनो लीलायाः सेविता सविलास इत्यर्थः । तथाविशोचनैर्नृपेणाश्वासितत्वाच्छोकरहितैरापतनै राक्षसान्दर्शयितुं साध्वागच्छद्भिस्तैस्तापसैः समं रक्षोवधाय चलनोत एव चमूपान्वदिताकारयिता । किंभूतान् । सज्जिताः प्रगुणीकृताः शब्दना[1] जयसूचकत्वाद्बृंहितकरणशीला[2] इभा यैस्तान् । तथा रवणं जयसूचित्वाद्धेषणशीलमश्वसैन्यं येषां तान् ॥

सस्रौ । उपचक्रि । दधौ । जज्ञि । नेमि । इत्येते "सस्रि०" [३९] इत्यादिना निपात्याः ॥

शारुकः । कामुकी[3] । अभिगामुक । घातुकः(के) । वर्षुकम् । अभिभावुक[4] । स्थायुक । इत्यत्र[5] "शृकम०" [४०] इत्यादिनोकण् ॥

अभिलापुकः । उत्पातुक । उपपादुकः[6] । इत्यत्र "लष०" [४१] इत्यादिनोकण् ॥

भूषणः । मण्डनः । क्रोधनः । कोपनः । जवनः । सरणः । गर्धनः । ज्वलनः । अविशोचनः[7] । संलषणः । आपतनः । पदेरिदित्वादुत्तरेणैव[8][9] सिद्धे सकर्मकार्थं वचनम् । लीलापदनः । अत्र "भूषा०" [४२] इत्यादिना-अनः ॥

---

१ **ए** शब्दिना अ°. **डी** शब्दिना अ°. २ **डी** °रणाशी°. ३ **सी** °मुका । अ°. ४ **बी सी** °वुकः । स्था°. ५ **बी** °त्र मृक°. ६ **ए** °पाट्टके । इ°. **सी डी** °पादुके । इ°. ७ **बी** विशौच°. ८ **सी डी** पदेरि°. ९ **डी** °रेणेव.

चलनः । अविकम्पनः । शब्दन । रवण । इत्यत्र "चाल०" [४३] इत्यादिना-अनः ॥ अकर्मकादिति किम् । चमूपान्वदिता ॥

अनिवर्तनस्पर्धनचेतना द्रागजुगुप्सना भावयितार आजौ ।
अभिसूदितृक्रूयितृदीपितारो रणदीक्षितारोस्य बभुश्चमूपाः ॥२६॥

२६. अस्य राज्ञश्चमूपाः सेनान्यो बभुः । किंभूताः सन्तः । अनिवर्तनाः कुलीनत्वाच्छूरत्वाच्च रणान्न निवर्तनशीलाः स्पर्धनाः शत्रुभिः सह स्पर्धनशीलाश्चेतना ज्ञातारः कलाकुशला इत्यर्थः । एषां विशेषणकर्मधारयः । अत एव रणदीक्षितारो रणोस्माभिः कार्य एवेति रणविषये गृहीतव्रता अत एवाजावजुगुप्सनाः श्लाघनाः सन्तो द्राग्भावयितारः प्रापणशीला अत एव चाभिसूदितारः शत्रून्हिंसितारः क्रूयितारः सिंहनादं कर्तारो दीपितारस्तेजसा दीप्राश्च ॥

स्पर्धन । अनिवर्तन । इत्यत्र "इङित०" [४४] इत्यादिना-अनः ॥ णेरतश्च विषय एव लोपे व्यञ्जनान्तत्वादिहापि स्यात् । चितिण् । चेतनाः । अजुगुप्सनाः ॥

भावयितारः । क्रूयितृ । सूदितृ । दीपितारः । दीक्षितारः । अत्र "न णिङय०" [४५] इत्यादिना नानः ॥

बलपृष्ठभूचङ्क्रमणा भयेन भवदाश्रमोदन्द्रमणः क सोद्य ।
क नु यायजूकेषु स दन्दशूकः क नु जञ्जपूकेषु स दन्दहूकः २७
अनिजागरूकेष्वपि तापसौघेष्विति वावदूका रिपुपम्पशूकाः ।
अभिपापयूका युदनानशूका जयजागरूकाः सुभटा ववल्गुः २८

१ ए °जुगप्स°. २ ए डी °वनाश्र°. ३ ए बी क न या°. ४ ए सी डी °गड्डके°.

१ ए डी °त्र भाल°. २ ए एवजा°. बी एव चाजा°. ३ सी °नान । णे°. डी °नान णेरित°. ४ बी °नः । णेर°. ५ ए सी डी णिङ्या°.

२८. सुभटा ववल्गु[1]र्युद्धाय ननृतुः । कीदृशाः सन्तः । अनिजा[2]गदूकेष्वपि रक्षोभयादत्यर्थमवदनशीलेष्वपि तापसौघेषु विषय इतीदं वावदूका अत्यर्थं वक्तारो यथा भयेन रक्षोभीत्या हे बलपृष्ठ[3]भूचङ्क्रमणाः सैन्यात्पश्चाद्भूभागे कुटिलं गन्तारो भवदाश्रमोद्दन्द्रमणो युष्मदाश्रमेषूत्प्राबल्येन विनाशनेच्छया कुटिलं गमनशीलः स क्षपाटेशोद्य कास्ति । तथा यां[4]यजूकेषु विषये दन्दशूको मृत्युहेतुत्वादिनाहितुल्यः स क[5]नु । तथा जञ्जपूकेषु रक्षोभयाद्गर्हितं जपत्सु योगिषु विषये दन्दहूको निर्[6]दयं दहन् गर्ह्य[7] दहनशीलः स क न्विति । तथा जयजागरूका विजय उद्यमिनोत एव युदनानशूका रणादनंष्टारोत एव च रिपुपम्पशूकाः शत्रूणामत्यर्थं बाधनशीला अत एव चाभिपापयूका अयिवयिपयीत्यादिदण्डकधातुः । कुटिलं संमुखं गन्तारः ॥

उद्दन्द्[8]रमणः । चं[9]क्रमणाः । अत्र "द्रम०" [ ४६ ] इत्यादिना-अनः ॥

यायजू[10]केषु । जञ्जपूकेषु । दन्दशूकाः[11] । वावदूकाः । अत्र "यजि०" [ ४७ ] इत्यादिनोकः ॥ अन्येभ्योपीति केचित् । दन्दहूकः । अ[12]भिपापयूकाः । अनिजा[13]गदूकेषु । अनानशूकाः[14] । पम्पशूकाः ॥

जागरूकाः । अत्र "जागुः" [ ४८ ] इत्यूकः ॥

**शमिदम्यनुन्मादिषु योगिषूच्चैर्न तमी क्रमी श्रम्यजनि भ्रमी वा ।**
**क्षमिभागिणि त्यागिनि रागिणि क्ष्माभुजि वीक्ष्य तं द्वेषिवधाय यत्नम्**
**॥ २९ ॥**

१ बी °ल्गुर्युद्धाय. २ ए सी डी °गद्रूके°. ३ ए सी डी °पृच°. ४ डी याजग्जूके°. ५ डी क न°. ६ बी °दयदहनाद्गर्ह्य. ७ ए सी डी °लः क. ८ बी °न्द्रमाणः. ९ डी चक्रम°. १० डी याजग्जूके°. ११ सी °काः । अ°. १२ डी अनिपा°. १३ ए सी डी °गद्रूके°. १४ सी डी °काः । जा°.

२९. शमिषु जितेन्द्रियेषु दमिषु तपःक्लेशसहेष्वनुन्मादिषु निरहंकारेषु योगिषु[1] मुनिषु मध्ये कोपि नाजनि । कीदृक् । तमी रक्षोभयेन मनःपीडावान् । क्लमी धात्वपचयवान् । श्रमी[2] खेदवान् । भ्रमी वा मूर्छावान्वा । किं कृत्वा । क्ष्माभुजि जयसिंहे द्वेषिवधाय तं यत्नमादरं वीक्ष्य । किंभूते । क्षमिभागिणि क्षमिणो मुनीनाश्रयितरि तथा त्यागिनि दातरि तथा रागिणि मुनिष्वनुरागिणि ॥

**अथ दोषिणां द्रोह्यवनेः स भोगी यमुनां नु दोही हरिरापगां ताम् ।**
**भृशमापदाक्रीड्युपतीर्थमामोष्यभिसर्पदभ्यादिकघात्युपाटाम्[1] ३०**

३०. यथा दोही दोहनशीलो गोपवेषधारी हरिर्विष्णुर्यमुनामापत्तथावनेर्भोगी रक्षिता स जयसिंहस्तां[3] राक्षसाक्रान्तत्वेनोक्तामापगां भृशमापत् । कीदृक्सन् । दोषिणामन्यायिनां रक्षसां द्रोही जिघांसुरत एवोपतीर्थमवतारसमीप आक्रीडी रन्ता सरस्वत्यास्तीर्थे[4] प्रापेत्यर्थः । किंभूताम् । आमोषिणश्चौरा[5] अभिसर्पन्तोभिमुखं गच्छन्तोभ्यादिकघातिनोभ्याघातिनोभिमुखमाहन्तार उपाटा[6] राक्षसा यस्यां ताम् ॥

**शमि । दमि । तमी । श्रमी । भ्रमी । क्षमि । अनुन्मादिषु । क्लमी । इत्यत्र "शम०" [ ४९ ] इत्यादिना घिनण्[11] ॥**

---

१ ए °दिघात्युपष्टाम्.

---

१ सी °पु म°. २ सी डी °मी ग्वेद°. ३ बी °स्तां रक्ष°. ४ ए °गीगी आ°. सी डी °गीप आ°. ५ सी °स्वत्यां तीर्थे. डी °स्वत्यां तीर्थे प्रा° ६ ए °त्या तीर्थे. ७ ए °रा आभि°. ८ डी °नोभ्याघातिनोभि°. ९ ए उटाटा. १० ए यस्या ता°. बी यस्याम् ॥. ११ ए बी घिनिण्. सी घिनेण.

योगिषु । भोगी । भागिणि । त्यागिनि । रागिणि । द्वेषि । दोषिणाम् । द्रोही[१] । दोही । अभ्याघाती । इत्यत्र "युजभुज०" [ ५० ] इत्यादिना घिनण्[२] ॥

आक्रीडी । आमोषि । इत्यत्र "आङः" [ ५१ ] इत्यादिना घिनण्[३] ॥

न्यवसत्स आयामिभुजः प्रयामी शमिनामनायासि[१]बलोप्रयासी ।
द्विषतां प्रमाथी रभसप्रलापिव्यपशङ्कविद्राविबटौ तटेस्याः ॥३१॥

३१. स जयसिंहोस्याः सरस्वत्यास्तटे न्यवसत्[४] । कीदृक् । आयामिभुजो दीर्घबाहुस्तथा शमिनां यतीनामपि मध्ये प्रयामी प्रकर्षेण संयमी तथानायासिबलोखिलसैन्योचितभक्ष्यपेयोपेतभूभागत्वेनाखिन्नमानसैन्योत एवाप्रयास्यखिद्यमानोत एवं[६] च द्विषतां प्रमाथी । कीदृशे[७] तटे । रभसेन[८] हर्षादौत्सुक्येन प्रलापिनो वदनशीला[५] व्यपशङ्का[९] निर्भया[१०] अत एव विद्राविणो विचरिष्णवो बटवो यत्र तस्मिन्[११] ॥

तदुदैक्ष्यप्रद्रावि बलं प्रसारि परिसारिनागालि विसारिवाहम् ।
मुनिवृन्दसंपर्कि निशाचरैः संत्वरिभिः क्रुधा संज्वरिभिः क्षणेन ३२

३२. स्पष्टम्[१२] । किं त्वप्रद्रावि स्थास्नु । प्रसारि प्रसृमरम् । क्षणेन शीघ्रं क्रुधा संज्वरिभिरात्मानं संतापयद्भिरत एव संत्वरिभिर्युद्धायात्मानं संत्वरयितृभिः[१३] ॥

परिवादि संज्वारि विसर्गि[२]संसर्ग्यनुवादि संवादि विवादि चोच्चैः ।
कथितं प्रवादि क्षणदाचरैस्तैरथ तद्बलं बर्बर[३][४]काय नेत्रे ॥ ३३ ॥

१ ए °नाया°. २ ए °गिपृंस°. डी °गिम्संस°. ३ डी बर°. ४ बी °बका°.

१ ए °ही । वाही. २ ए घिनिण. ३ ए बी घिनिण. ४ ए सी डी न्यवीविशन्. ५ ए °मानो. ६ बी °व द्वि°. ७ डी °दृशि त°. ८ डी रभे°. ९ ए °शीलोप्यप°. १० ए बी °या त°. ११ डी °न् ॥ यद्° १२. सी डी °ष्टः ।. १३ ए °रयतृ°.

३३. अथ तद्वलं तै राक्षसैर्बर्बरकाख्याय नेत्रे स्वस्वामिने कथितम् । किंभूतम् । परिवादि रक्षसां दूषणशीलं संज्वारि कोपेन संतपनशीलं तथा विसर्गिसंसर्गि त्यागिभिर्युक्तम् । एतेन वृत्त्यविच्छेद-भणनेन स्वामिकार्य एव तत्परत्वं सूचितम् । तथानुवाद्येकत्र[1] स्थान एवमेवं राक्षसा हनिष्यन्त इत्यादौ कैश्चिद्भटैरुक्तेनु[2] पश्चाद्वदनशील-मेकत्र च स्थाने संवादि रक्षोवधाद्युपायविषये मिथः संवदनशीलं कुत्रापि चोच्चैरत्यन्तं विवादि चाहो भवद्भिः कथमुक्त राक्षसा हन्तुं न शक्यन्ते[3] यतस्ते ममाग्रे क[4] इत्यादिविवदनशीलं कुत्रापि प्रवादि दर्पोत्प्रकर्षेण वदनशीलं सिंहनादं कर्त्रित्यर्थः ॥

प्रयामी । आयामि । अप्रयासी । अनायासि । इत्यत्र "प्राच०" [ ५२ ] इत्यादिना घिनि(न)ण् ॥

प्रमाथी । प्रलापि । इत्यत्र "मथेलपः[5]" [ ५३ ] इति घिनण्[6] ॥

विद्रावि[7]। प्रद्रावि । इत्यत्र "वेश्च द्रोः" [ ५४ ] इति घिनि(न)ण् ॥

विसारि[8] । परिसारि[9] । प्रसारि । इत्यत्र "विपरि०" [ ५५ ] इत्यादिना घिनि(न)ण् ॥

संपर्कि । संज्वारि । इत्यत्र[10] "समः०" [ ५६ ] इत्यादिना घिनि(न)ण् ॥ केचिण्ण्यन्तादपीच्छन्ति । संज्वरिभिः ॥ त्वरयतेरपि कश्चित् । संत्वरिभिः ॥

संसर्गि । विसर्गि । इत्यत्र "संवेः सृजः" [ ५७ ] इति घिनण्[11] ॥

संवादि[12] । परिवादि । अनुवादि । विवादि । प्रवादि । इत्यत्र "संपरि०" [ ५८ ] इत्यादिना घिनि(न)ण् ॥

---

१ ए सी डी °द्येक°. २ ए °श्चिद्भटैरुक्ते°. सी °श्चिद्भटै°. ३ बी श-क्ष्यन्ते. ४ बी °दि व°. ५ ए सी डी °थयपः. ६ ए सी डी घिनिण । वि°. ७ डी °वि । इ°. ८ डी °रि । प्र°. ९ सी °रि । इ°. १० सी डी °त्र मथयप इति ना°. ११ ए डी घिनिण. सी घिण. १२ सी दि° । अ°.

अविवेकिधुर्योऽथ स तान्विकत्थी
प्रविकासिविश्रम्भिविलासिनीयुक् ।
प्रविकाषिदंष्ट्रो न्यदिशद्विघाती
समितेर्विलापी नृपलापलापी ॥ ३४ ॥

३४. प्रविकासिन्यो रूपादिना साधु शोभमाना विश्रम्भिण्यो विश्वासस्थानं या विलासिन्यः सातिशयविलासा नायिकास्ताभिर्युग् युक्तोकुतोभयत्वाद्रतिसुखावगाढ इत्यर्थः । नृपलापलापी नरमांसाभिलापी राक्षसः स बर्बरकोथागतबलश्रवणानन्तरं तान्राक्षसान्न्यदिशद्रणायाज्ञापयत् । कीदृक्सन् । अविवेकिधुर्योत एव विकत्थ्यात्मबहुमानीत्यर्थः । तथा विघाती शत्रून्हन्तात एव समिते रणस्य विलापीच्छुरत एव कोपावेशात्प्रविकाषिण्यो मिथो घर्षणशीला दंष्ट्रा यस्य स तथा ॥

समराभिलापी सरितीह संवास्ययमस्तुराण्मृत्युपथप्रवासी ।
इतिवादिनस्ते दधिरेतिचार्यव्यभिचारिसंचार्यपचारिणोस्त्रम् ३५

३५. ते बर्बरादिष्टा राक्षसा अस्त्रं दधिरे । कीदृशाः । अतिचारिणो हिंसादिपापकर्मकारिणोव्यभिचारिणः स्वामिन्यद्रोहिणः संचारिणश्च मिथः प्रीतत्वात्सहचारिणो येपचारिणोपकृष्टमुनिवधाद्यनुष्ठानास्ते तथा । तथेतिवादिनः । तथा हि समराभिलाष्यत एवेह सरिति

१ डी °विस्रम्भि°. २ ए °म्भिला°. ३ ए °लापला°.

१ बी °काशिन्यो. २ बी विस्रम्भि°. ३ ए °नं पा वि°. सी °नं थोपा वि°. डी °नं पोपा वि°. ४ ए सी डी नायका°. ५ बी °युक्तो°. ६ ए सी डी °सानादि°. ७ डी रणेस्य. ८ ए °च्छुः स ए°. सी डी °च्छु स ए°. ९ ए °दृशार्त°. सी °दृशोति°. डी °दृशोंति°.

सरस्वत्यां संवासी स्थातायं राड् जयसिंहो मृत्युपथप्रवासी यममार्गावस्थाय्यस्त्विति ॥

**अभिचारिणो विश्वविरोधिसंरोध्यवरोधिनः स्वाम्यनुरोधिनस्ते ।**
**परिदाहिवक्त्राग्निविदाहिनो द्राक्परिमोह्यपिस्त्रीपरिदेविनोभुः ३६**

३६. ते राक्षसा द्रागभिचारिणो रणायाभिमुखमागन्तारः सन्तोभुः। किंभूताः । विश्वविरोधिनां समस्तवैरिणां ये संरोधिनोतिबलिष्ठत्वात्प्रतिबन्धकास्तेषामप्यवरोधिनः प्रतिबन्धकास्तथा स्वाम्यनुरोधिनः स्वामिन्यनुकूलास्तथा दिव्यशक्त्युपेतत्वात्परिदाहिना सामस्त्याद्दहनशीलेन वक्त्राग्निना मुखान्निःसरता वह्निना विदाहिनस्तथा परिमोहिन्यः स्वभर्तृस्नेहला या ऋपिस्त्रियस्तासां परिदेविनस्तत्पतिवधेन विलापयितारः ॥

अविवेकि । विकत्थी । विस्र(स्र)म्भि । प्रविकाषि । प्रविकासि । विलासिनी । विघाती । इत्यत्र "वेर्विच०" [ ५९ ] इत्यादिना घिनण् ॥

विलापी । अपलापी । अभिलापी । इत्यत्र "व्यप०" [ ६० ] इत्यादिना घिनण् ॥

संवासी । प्रवासी । इत्यत्र "संप्राद्वसात्" [ ६१ ] इति घिनण् ॥

संचारि । अतिचारि । अपचारिणः । अभिचारिणः । अव्यभिचारि । इत्यत्र "समति०" [ ६२ ] इत्यादिना घिनण् ॥

---

१ ए °ध्यविरो°.

---

१ ए सी °न्तार म° डी °न्तारं म°. २ ए °शक्त्यपे°. ३ सी डी °रत्याद्दह°. ४ ए °मारिना. ५ ए डी °स्रम्भिः । प्र°. ६ सी °कामि । वि°. ७ ए बी घिनिण. ८ ए बी घिनिण. ९ ए °त्र वेर्विचेत्यादिना घिनिण् । संवासी । प्रवासी । इत्यत्र संप्रा°. १० ए बी घिनिण. ११ ए अप°. १२ ए घिनिण.

संरोधि । अनुरोधिनः । विरोधि । अवरोधिनः । अत्र "समनु०" [ ६३ ] इत्यादिना घिनण्[1] ॥

विदाहिनः । अत्र "वेर्दहः" [ ६४ ] इति घिनण्[2] ॥

परिदेविनः । परिमोहि । परिदाहि । इत्यत्र "परेर०" [ ६५ ] इत्यादिना घिनण्[3] ॥

**रजसां परिक्षेप्यनिलो द्रुपर्णैः परिराटिभिर्द्राक्परिराटकोथ ।**
**परिवादको ध्रोर्वयसां परिक्षेपकहिंसकक्लेशकखादकोभूत् ॥ ३७ ॥**

३७. अथ राक्षसानां रणायाभिमुखगमनानन्तरमनिलो वायुर्द्रागभूत् । कीदृक् । रजसां परिक्षेपी तीव्रत्वेन सर्वतः क्षेप्ता । तथा परिराटिभिस्तीव्रवातवशेन खरस्वरत्वाद्रक्षसां राटिं ददानैरिव द्रुपर्णैः कृत्वा परिराटको राटिदानशील इव तथा ध्रोर्व्योम्नः परिवादको ध्वनयिता तथा वयसां पक्षिणां परिक्षेपकहिंसकक्लेशकखादकः । रक्षसामरिष्टसूचको वायुर्वात इत्यर्थः ॥

**प्रचुलुम्पकासूयकनिन्दकव्यादिकभापकैस्तीर्थविनाशकैर्भूः ।**
**परिदेवकाक्रोशकयुद्धकण्डूयितृभिर्निशाटैरचलच्चलद्भिः ॥ ३८ ॥**

३८. निशाटैश्चलद्भिः सद्भिर्भूरचलच्चकम्पे । कीदृशैः । प्रचुलुम्पका मुनीनामुच्छेदिनोसूयका मत्सरिणो निन्दकाश्च ये व्यादिकभापका व्याभापका विरुद्धवादिनस्तैः । तथा तीर्थविनाशकैस्तथा परिदेवकानां हा दैवाधुना कथं भविष्याम इति विलापिनां भीरूणामित्यर्थः । आक्रो-

१ डी °कभाद°. २ ए °लुपका°. ३ ए डी °मार्थवि°.

१ ए बी घिनिण. २ ए बी घिनिण. ३ ए बी घिनिण. ४ डी राटिदा°. ५ ए सी डी धोर्व्योम्नः. ६ डी °ध्वनियि°. ७ बी °भाषिका. ८ डी °था प°. ९ ए डी °वानाधु°.

शका आक्षेप्तारो ये युद्धकण्डूयितारो रणे कण्डूयावन्तो रणेच्छव इत्यर्थस्तैः । रक्षसामरिष्टसूची भूमिकम्पोभूदित्यर्थः ॥

परिक्षेपी । परिराटिभिः । अत्र "क्षिपरटः" [ ६६ ] इति घिनण् ॥

परिवादकः । परिक्षेपकः(क) । परिराटकः । अत्र "वादेश्च णकः" [ ६७ ] इति णकः ॥

निन्दक । हिंसक । क्लेशक । खादकः । विनाशकैः । व्याभाषकैः । असूयक । प्रचुलुम्पक । इत्यत्र "निन्दहिंस०" [ ६८ ] इत्यादिना णकः ॥ अनेकस्वरत्वादेव सिद्धेसूयग्रहणं कण्ड्वादिनिवृत्त्यर्थम् । तेन कण्डूयितृभिः ॥

देवृ । देवीति दीव्यतेर्देवतेर्वा ण्यन्तस्य च । परिदेवक । आक्रोशक । इत्यत्र "उपसर्गाद्०" [ ६९ ] इत्यादिना णकः ॥

**क नु सोस्ति जल्पाकवराकभिक्षाकसखोद्य लुण्टाक इति ब्रुवाणैः ।**
**निरवर्पि कुट्टाकभुजैस्तदा तैः प्रसविप्रजव्यत्ययिभिः शिलौघः ३९**

३९. तदा तै राक्षसैः शिलौघो निरवर्पि । किंभूतैः सद्भिः । ब्रुवाणैः । किमित्याह । जल्पाका वाचाला वराका अकिंचित्करा ये भिक्षाका मुनयस्तेषां सखा स जयसिंहो लुण्टाकश्चौरोद्य क न्वस्ति । अद्य न जीवत्येवेत्यर्थ इति । तथा कुट्टाकभुजैस्तथा प्रसविनः शि-

१ डी °वाणः । नि°. २ डी °व्यत्ययि°. ३ ए °यिनिः शिलोघः.

१ ए °ण्डूया°. २ ए सी डी °त्र क्षप°. ३ ए बी घिनिण. ४ डी °रिरा°. ५ डी °सकः । क्ले°. ६ ए °शकः । रखाद°. सी °शकः । मखाद°. डी °शकः । मखादयकः. ७ डी °यकः । प्र°. ८ डी °दैक सि°. ९ ए देवी°. १० ए डी °तेदोव°. ११ ए सी डी °वका । आ°. १२ डी °गादिना. १३ ए वा--वराका कि°. सी डी वाला. १४ बी °खा ज°. १५ ए °रोद्ग क न्व.

लादिप्रेरणशीलान्प्रजविनश्च वेगवतश्च भटानतियन्त्यतिप्रेरकत्वादति[1]-वेगवत्वाच्चातिशेरत इतिशीला ये तैः ॥

**परिभव्यनादर्यसमाक्षयित्विङ्कमिवक्रजय्यभ्यमिघस्मरैस्तैः[1] ।**

**पिशिताद्मरैरव्यथिभिर्द्रुपैण्डं सृमरैः सरिद्विश्रयि चात्र मुक्तम् ॥४०॥**

४०. तैः पिशिताद्मरैर्मांसभक्षकै राक्षसैः सरिद्विश्रयि सरस्वती-तटस्थं द्रुपैण्डं वृक्षौघोत्र जयसिंहबलोपरि मुक्तम् । किंभूतैः सद्भिः । परिभविष्वरिष्वनादरिणोवज्ञापरा असमाक्षयिणोक्षीणबला अस्थास्नवो वा त्विङ्कमिवक्राश्चाग्निज्वालामोचिमुखाश्च[2] ये जय्यभ्यमिघस्मरा जयिनो जिष्णूनप्यभ्यमन्ति जयाय साध्वभिमुखं गच्छन्ति ये तेपामपि घ-स्मरा अतिबलिष्ठत्वात्क्षयं नेतारस्तैरत एवाव्यथिभिः शत्रुभ्योभीरुभिरत एव च सृमरैः प्रसरणशीलैः ॥

वराक । भिक्षाक । लुण्टाकः[3] । जल्पाक । कुट्टाक । अत्र "वृद्धि(ङ्कि ?)-क्षि०" [ ७० ] इत्यादिना टाकः ॥

प्रसवि । प्रजवि । इत्यत्र[4] "प्रात्सूजोरिन्" [ ७१ ] इतीन् ॥

जयि । अत्ययिभिः । अनादरि ॥ क्षीनि क्षिङ्क्षितोर्ग्रहणम् । असमाक्षयि । विश्रयि । परिभवि । वमि । अभ्यमि । अव्यथिभिः । अत्र "जीणृदृक्षि०" [ ७२ ] इत्यादिना-इन् ॥

सृमरैः । घस्मरैः । अद्मरैः । अत्र "सृघसि०" [ ७३ ] इत्यादिना मरक् ॥

**अविभङ्गुरान्भासुरमेदुराङ्गा विदुरांश्छलानां[3] नृभटान्निशाटाः ।**

**भिदुरेतरानच्छिदुरा अभीरूनविभीलुका भीरुकतामनैपुः ॥४१॥**

---

१ ए °गिविक्र°. २ ए °स्मरास्तैः । पि°. सी डी °स्मरौस्तैः । पि°. ३ बी सी डी °रास्थला°. * बी पुस्तके समासे 'स' इति प्रदर्शितं तदेव युक्तम् ।

---

१ ए °तिप्रेरकत्वादतिवे°. २ ए °श्च ज ये. ३ ए सी डी °ण्टाक । ज°. ४ ए °त्र पृत्सजो°.

४१. निशाटा नृभटान्नरो ये भटास्तान् भीरुकतां भयमनैपुः प्रापयन । किंभूताः । भासुरमेदुराङ्गास्तेजस्विस्थूलकाया बलिष्ठा इत्यर्थः । तथाच्छिदुरा मिथो विच्छेदरहिताः संहता इत्यर्थः । यद्वा शस्त्रविद्यानैपुणेन शस्त्राणामागच्छतां वञ्चकत्वाच्छस्त्रकृतच्छेदरहिता इत्यर्थः । तथाविभीलुका निर्भीकाः । नृभटानपि किंभूतान् । अविभङ्गुरान् न स्वयं भङ्गशीलाञ्शूरत्वेन रणादनंष्ट्रन बलिष्ठत्वेन न जीर्णकाष्ठवन्निःसारान्वा तथा भिदुरेतरान्स्वयं भेदनशीलेभ्योन्यान् मिथः संहतान्प्रहारवञ्चकान्वेत्यर्थः । तथाभीरून् । नन्वेवं समानगुणत्वान्नृभटा निशाटैः कथं भीतिं प्रापिता इत्याह । यतश्छलानां मायाप्रयोगाणां विदुरा ज्ञातारः ॥

अविभङ्गुरान् । भासुर । मेदुर । इत्यत्र "भञ्जि०" [ ७४ ] इत्यादिना घुरः ॥

विदुराः । अच्छिदुराः । भिदुर । इत्यत्र "वेत्ति०" [ ७५ ] इत्यादिना किद्धुरः ॥

अभीरून् । भीरुकताम् । अविभीलुकाः । अत्र "भियः०" [ ७६ ] इत्यादिना रुरुकलुकाः ॥

**अभिसृत्वरैर्जित्वरहिंस्रदीप्रैरविकम्प्रकम्प्रेत्वरनश्वरास्तैः ।**
**नृभटा यशः स्मेरमजस्रपुष्टं परिगत्वरं नागणयन्विनम्राः ॥ ४२ ॥**

४२. नृभटाः स्मेरं विकस्वरमजस्रपुष्टं नानावदातैः सदा पोपितं यशा(शः) परिगत्वरं विनश्वरं सन्नागणयन । किंभूताः सन्तः ।

१ ए °हिना संहिता. सी डी °हिता इ°. २ बी °पुण्येन. ३ ए अभ°. ४ सी भञ्जनशी°. डी भञ्जनशी°. ५ बी °न सुर°. ६ सी डी °तश्छला°. ७ बी यशो ग°.

अविकम्रममनोज्ञं कम्रं भयेन संकम्पं च यथा स्यादेवमित्वरा गमनशीला ये नश्वरा नंष्टारस्ते तथा । कैः कृत्वा । तैं राक्षसैः । किंभूतैः । जित्वराणां जिष्णूनां हिंस्रा अत एव दीप्रास्तेजस्विनस्तैरत एवाभिसृत्वरैः प्रसृमरैरत एव किंभूता विनम्रा लज्जयाधोमुखाः ॥

अभिसृत्वरैः । जित्वर । इत्वर । नश्वराः । अत्र "सृजि०" [ ७७ ] इत्यादिना क्वित् ङ्वरप ॥

परिगत्वरम् । इति "गत्वरः" [ ७८ ] इति निपात्यते ।

स्मेरम् । अजस्र । हिंस्र । दीप्रैः । कम्र । अविकम्र । विनम्राः । अत्र "स्म्यजस०" [ ७९ ] इत्यादिना रः ॥

**असुतृष्णजः स्वप्नगधृष्णजः स्वेश्वरभास्वरस्थावरकीर्तिकार्ये ।**
**अविकस्वराः पेस्वरकं प्रमद्वरतया न वासोपि दधुर्नृवीराः ॥४३॥**

४३. नृवीराः प्रमद्वरतया प्रमादितया भयाकुलत्वेनेत्यर्थः । पेस्वरकमज्ञातं पातुकं सद्वासोप्यधोवस्त्रमपि न दधुः नावाष्टम्भन । एवं नामात्यौत्सुक्येन नेशुर्यावता वस्त्रमपि पतद्धर्तुं न शेकुरित्यर्थः । किंभूताः सन्तः । असुतृष्णजः प्राणेषु साभिलाषा अत एव स्वस्यात्मीयस्येश्वरस्य प्रभोर्जयसिंहस्य भास्वरासत्ता स्थावरा स्थिरा या कीर्तिर्विजयोत्थं यशस्तद्रूपं यत्कार्यं तत्र स्वप्नगधृष्णजः स्वप्नजः शयालवो येधृष्णजोप्रगल्भा असमर्था इत्यर्थस्ते तथात एवाविकस्वरा म्लानमुखाः ॥

तृष्णजः । अधृष्णजः । स्वप्नग् । इत्यत्र "तृषि०" [ ८० ] इत्यादिना नजिङ् ॥

---

१ ए सी डी °कीर्तिका°.

---

१ ए सी डी सर्पेत न. २ ए °जगं । हिं°. सी डी °ज हिं°. ३ ए सी डी °त्यौत्सुक्ये°. ४ वी °प्रगः प्र°.

स्थावर । ईश्वर । भास्वर । पेस्वरकम् । अविकस्वराः । अत्र "स्थेश०" [८१] इत्यादिना वरः ॥ प्रमदेरपीति कश्चित् । प्रमद्वरतया ॥

तदुदीक्ष्य यायावरमाशु सैन्यं त्रिजगद्दृद्दिद्युदुपाचरेभ्यः ।
अजुहूरवाक्प्राडपजूरधीश्रीरभवत्परिव्राड्जन आयतस्तूः ॥ ४४ ॥

४४. आयतं स्तौत्यायतस्तूर्यायजूकः परिव्राड्जनो मुनिलोकोभवत् । कीदृक् । अजुहूर्भयातिरेकेण जुहूनां पाताज्जुहूभिः स्रुग्भिर्यज्ञोपकरणभेदै रहितस्तथावाक्प्राडवाक्सन्प्रच्छकोतिभयाद्धस्तादिसंज्ञया किमभूदिति प्रष्टेत्यर्थः । तथापकृष्टं जानुदन्तभङ्गादिना निन्दितं यथा स्यादेवं जवति धावत्यपजूस्तथाधीश्रीर्बुद्धिशोभारहितः किंकर्तव्यतामूढो दीनश्चेत्यर्थः । किं कृत्वा । तत्सैन्यं जयसिंहकटकमुदीक्ष्य । किंभूतम् । त्रिजगतो दृद्दतो विदारणशीला दिद्युतो विजयेन द्योतनशीला य उपाचरा राक्षसास्तेभ्य आशु यायावरं नश्यदित्यर्थः ॥

करिणां कटप्रूर्न मदो द्रुवां स्रुस्तदनूर्गविभ्राड्विभु बृंहितं न ।
अपतन्पवित्रासुरभित्स्वयंभुप्रभुशंभुसंभुस्मरणाश्च योधाः ॥ ४५ ॥

४५. द्रुवां नश्यतां करिणां मदो न स्रून स्रवति भयेन मदः शुष्क इत्यर्थः । कीदृक् । कटेभ्यो गण्डेभ्यः प्रवते निर्गच्छति कटप्रूः पूर्वं प्रवाहेण वहन्नपीत्यर्थः । तथा करिणां तद्यत्पूर्वमूर्जस्वलं तारं च सद्वित्वा(?)सीत्तदपीत्यर्थः । बृंहितं शब्दितं न विभु न व्यापकमभूत् । कीदृक्सत् । अनूर्भयेनानूर्जस्वलमत एवाविभ्राडतारम् । तथा योधा अपतंश्च भूमौ पतिताः । किंभूताः सन्तः । पवित्रो भगवानर्हन्

१ ए सी डी °रच्छितस्व°.

१ ए बी °ति पृष्ट°. २ बी °श्रीर्बुद्धि°. ३ ए सी डी °तो वद्द°. ४ बी नभ्यदि°. ५ बी °न श्रव°. ६ बी °द्धित्तासी°.

असुरद्विड्वि(भिद्वि?)ष्णुः स्वयंभुर्ब्रह्मा प्रभुशंभुः स्वामिशंकरः संभवो मातापितरौ द्वन्द्वे एतान्स्मरन्ति ये रम्यादित्वादनः [५. ३. १२६]। ते तथा ॥

यायावरम् । इति "यायावरः" [ ८२ ] इति निपात्यम् ॥

दिद्युत् । ददृत् । जगत् । जुहूः । वाक् । प्राट् । धी । श्रीः । द्रुवाम् । स्तूः । अपजूः । आयतस्तूः । कटप्रूः । परिव्राट् । भ्राजादि । अविभ्राट् । अनूर्ग् । इत्येते "दिद्युद्०" [ ८३ ] इत्यादिना निपात्याः ॥

शंभु । संभु । स्वयंभु । विभु । प्रभु । इत्यत्र "शंसं०" [ ८४ ] इत्यादिना डुः ॥

पवित्र । इत्यत्र "पुव०" [ ८५ ] इत्यादिना-इत्रः ॥

**विविशुः पवित्रेष्वृषयः पवित्राः सुसहित्रचारित्रजुषोथ केचित् ।**
**सुसवित्रकारित्रधुवित्रदण्डैरपरे वहित्रैः सलिलेब्धवित्रैः ॥ ४६ ॥**

४६. अथ तथा केचिदृषयः पवित्रेषु दर्भेषु विविशुर्भयेनान्तर्हिताः । किंभूताः । षुप्रु सह्यते क्षम्यतेनेन सुसहित्रं यच्चारित्रं चरित्रमेव प्रज्ञाद्यण् [ ७. २. १६५ ] । वृत्तं तज्जुषोत एव पवित्रा नैर्मल्यहेतवः । तथापर ऋषयो वहित्रैर्यानपात्रैः कृत्वा सलिले सरस्वतीजले विविशुः । किंभूतैः । षूत्प्रेरणे । सूयते प्रेर्यते जलमेभिः सवित्राण्यज्ञानानि सवित्राणि सवित्रकाणि यान्यरित्राणि कोटिपात्राणि सवित्रकारित्राणि तथा धूयत इतस्ततः क्षिप्यते जलमेभिर्धुवित्रा

१ बी °रे बहि°. २ सी डी °लेप्वबि°.

१ बी °यंभूर्भ°. २ बी °तरौ द्व°. ३ ए जुहू । वा°. सी डी जुह । वा°. ४ ए श्री । द्रु°. ५ बी शंभुः । सं°. डी शंभु । स्व°. ६ ए °योर्वहि°. बी °यो बहि°. ७ ए सी डी °लेषु स°. ८ ए सी डी °लेषु वि°. ९ डी इत्यतः.

ये दण्डा हस्तग्राह्ये मध्यभागे सूक्ष्मा उभयोश्चान्तयोः पृथुला वरेच्छीति नाम्ना प्रसिद्धा यष्टिभेदास्ते धुवित्रदण्डा द्वन्द्वे शोभनाः सवित्रकारित्रधुवित्रदण्डा येषु तैस्तथा०धवित्रैर्जलक्षेपणैः ॥

**शिरसां लवित्रैर्वपुषां खनित्रैर्भयनेत्रयोत्रैः क्षणदाटशस्त्रैः ।**
**अतितोत्रसेत्रालघुयोक्त्रनद्ध्रिस्रविमेढ्काः पत्रहयाः प्रणेशुः ॥ ४७ ॥**

४७. क्षणदाटशस्त्रैर्हेतुभिः पत्रहया रथा अश्वाश्च प्रणेशुः । यतः शिरसां लवित्रैर्वपुषां खनित्रैरत एव भयनेत्रयोत्रैर्भयस्य नेत्रैः प्रापणैर्योत्रैश्च संयोजनैश्च । किंभूताः सन्तः । तोत्रसेत्राणि प्राजनरश्मीनतिक्रान्ता भयेनातिपलायनाद्यज्ञातवन्तोतितोत्रसेत्रास्तथालघवोतिशीघ्रं पलायनेन बन्धानां शिथिलीभावात्प्रलम्बमाना योक्त्राणां योत्राणां नद्ध्र्यो वध्रिका येषु ते तथा । बाहुलकात्समासान्तविधेरनित्यत्वाद्वा कजभावे ह्रस्वोत्र । तथा स्रवो भयेन मूत्रमस्त्येषां स्रवीणि मेढ्राणि लिङ्गानि येषां ते तथा । एषु विशेषणकर्मधारयः ॥

**अतिदात्रदंष्ट्रैरतिपोत्रवक्त्रैः पिशिताशनैः स्तोत्रबलैर्बलेषु ।**
**अनुधात्रि नष्टेषु नृपश्चुकोप विजयैकपात्रं शरसेक्त्रधन्वा ॥ ४८ ॥**

४८. शराणां सेक्त्रं क्षरणं धनुर्यस्य स तथा महाधनुर्धर इत्यर्थः । अत एव विजयैकपात्रं नृपो जयसिंहो बलेषु विषये चुकोप । यतोनुधात्र्यामलकीतरूणां समीपे नष्टेषु । कैर्हेतुभिः । पिशिताशनै राक्षसैः । किंभूतैः । अतिदात्रा दात्रेभ्योपि वक्रा द्रंष्ट्रा येषां तैस्त-

१ बी °त्र्यौनि. २ बी °दा धु°. ३ ए सी डी °थाम्बवि°. ४ ए सी डी °नगाशान°. ५ बी °श्मीगति°. ६ बी वांध्रका. ७ डी °द्वाज°. ८ बी °त्रणम°. ९ बी °णि मेंढा°. १० ए °स्य त°. ११ ए सी डी °षां ते तथा°.

धातिपोत्राणि पोत्राणि हलमुखानि शूकरमुखानि वातिक्रान्तानि वक्त्राणि येषां तैस्तथा स्तूयतेत्मानेन स्तोत्रमात्मैस्तुतिकारणं बलं येषां तैः ॥

पवित्रा ऋषयः । पवित्रेषु । इत्यत्र "ऋषि०" [ ८६ ] इत्यादिना-इत्रः ॥

लवित्रैः । धुवित्र । सवित्रैक । खनित्रैः । चारित्र । सुसहित्र । अरित्र । इत्यत्र "लूधू०" [ ८७ ] इत्यादिना-इत्रः ॥ धूनोतेरपि कश्चित् । धवित्रैः ॥ वहेरपि कश्चित् । वहित्रैः ॥

नेत्र । दात्र । शस्त्रैः । योत्रैः । योक्त्र । स्तोत्र । तोत्र । सेत्राः । सेक्त्र । मेढ्काः । पत्र । पात्रम् । नध्रि । इत्यत्र "नीदाव(प?)०" [८८] इत्यादिना त्रट् ॥

पोत्र । इत्यत्र "हल०" [ ८९ ] इत्यादिना त्रट् ॥

दंष्ट्रः । अत्र "दंशेस्त्रः" [ ९० ] इति त्रः ॥

धात्रि । इति "धात्री" [ ९१ ] इत्यनेन निपात्यम् ॥

**द्युसदामपि ज्ञातमतार्चितो राड्विदितेष्टसंपूजितमाददस्त्वम् ।**
**तृपितः स कीर्तौ रुपितः स्वसैन्ये चिरशीलिते वायुबलो भवाभः**
**॥ ४९ ॥**

४९. स राड् जयसिंहोस्त्रमाददे । कीदृक्सन् । वायुबलो वातवद्बलिष्ठोत एव भवाभो हरतुल्योत एव द्युसदामपि ज्ञातः प्रसिद्धो मतोभीष्टोर्चितः पूजितश्च । तथा कीर्तौ तृपितः स्पृहयालुस्तथा चिरशीलिते कुलक्रमागतत्वात्सदा परिचिते स्वसैन्ये रुपितः क्रुध्यंश्च ।

१ बी संस्पोजि°. २ ए सी डी °र्तो रूपि°.

१ ए सी डी °णि ह°. २ ए सी डी °नि पूक°. ३ बी °त्मनरतु°. ४ बी °त्र । रा°. ५ सी डी धूनेर°. ६ ए डी दात्र । श°. सी दात्रः । श°. ७ बी योक्त्रः । स्तो°. ८ सी डी स्पृहालु°.

कीदृशमस्त्रम् । विदितेष्टसंपूजितं विदितं नानाजयश्रीहेतुत्वेन सर्वत्र प्रसिद्धमत एवेष्टं वल्लभमत एव च [सं]पूजितं पुष्पोपहारादिनार्चितम् ॥

ज्ञानार्थ । ज्ञात । विदित ॥ इच्छार्थ । इष्ट । मत ॥ अर्चार्थ । अर्चितः । पूजितम् ॥ भीत् । तृषितः ॥ शील्यादि । शीलिते । रुषितः । अत्र "ज्ञान०" [ ९२ ] इत्यादिना सत्यर्थे क्तः ।

वायु । भव । चिर । इत्यत्र "उणादयः" [ ९३ ] इति सत्यर्थे उणादयः ॥

अष्टादशः पादः ॥

**समरंगमी त्वं प्रतिरोध्यथो चेद्विशिखैश्च वृष्टो विजयश्च जातः ।**
**प्रजनिष्यते कीर्तिरितीरितोसौ मुनिभिः सकष्टै रथमारुरोह ॥५०॥**

५०. असौ जयसिंहो रथमारुरोह । कीदृक्सन् । सकष्टैः सदुःखैर्मुनिभिरीरित उक्तः । कथमित्याह । हे राजंस्त्वं चेद्यदि समरंगमी गमिष्यस्यथो तथा चेत्त्वं प्रतिरोधी शत्रून् रोत्स्यसि तथा त्वं चेद्विशिखैर्बाणैर्वृष्टश्च वर्षिष्यसि तदा विजयो जातो जनिष्यते कीर्तिश्च प्रजनिष्यत इति ॥

**कंपितद्विपोस्याह भटान्स्म वेत्री क गमिष्यथ श्वोपि यमः प्रहर्ता ।**
**न मरिष्यथ श्वोद्य कदाजिपारं व्रजितास्थ पादानिति यन्निधत्थ ॥ ५१ ॥**

५१. कंपितद्विपोस्य जयसिंहस्य वेत्री भटानाह स्म । यथा रे भटा यूयं क गमिष्यथ मृत्युभयेन नंष्ट्वा क यास्यथ । यतः श्वोपि कल्येपि युष्मान्यमः प्रहर्ता ततश्चाद्य श्वो वा न मरिष्यथ किं त्वद्य

१ ए °श्च वृष्टो. २ डी कथित°.

१ ए °त । मृषि°. २ ए सी डी °ते । ऋषि°. ३ बी °भिरितीरि°. ४ ए °न नष्ट्वा क या°. ५ ए सी डी °हरति त°.

कल्ये वा मरिष्यथैव । तथा यूयं कदाजिपारं रणपर्यन्तं व्रजितास्थ यास्यथ । यदिति रणपृष्ठदानप्रकारेण पादान्निधत्थ निक्षिपथ ॥

गमी । प्रतिरोधी । इत्येतौ "वर्त्स्यति०" [ १ ] इत्यादिना भविष्यति साधू ॥

त्रिशिखैर्वृष्टश्चेद्विजयो जातः कीर्तिः प्रजनिष्यते । अत्र "वा हेतु०" [ २ ] इत्यादिना भविष्यति वा क्तः ॥

कष्टैः । अत्र "कषोनिटः" [ ३ ] इति भविष्यति क्तः । सत्यपि कश्चित् ॥ अनिट इति किम् । कषित[1] । कृच्छ्रगहनयोरभावात्सेट्त्वमत्र ॥

गमिष्यथ । इत्यत्र "भविष्यन्ती" [ ४ ] इति भविष्यन्ती ॥

श्वोपि प्रहर्ता[2] । इत्यत्र "अनद्यतने श्वस्तनी" [ ५ ] इति श्वस्तनी ॥ अनद्यतन इति बहुव्रीहिः किम् । व्यामिश्रे मा भूत् । मरिष्यथ श्वोद्य ॥

कदाजिपारं[3] व्रजितास्थ पादानिति यन्निधत्थ । इत्यत्र "परिदेवने" [ ६ ] इति श्वस्तनी ॥

**अयशः पुरा वोस्त्यपयाथ यावत्समयः कदा वा भवतीदृशो वः।**
**भविता कदा चेतननिष्क्रयो वाथ कदा भविष्यत्युचितं कुलस्य ॥ ५२ ॥**

५२. यावद्यावत्कालमपयाथ रणान्नङ्क्ष्यथ तावत्कालं वो युष्माकमयशः पुरास्ति भविष्यति । वा यद्वा वो युष्माकमीदृशः समयो यत्रायं रणोस्ति स प्रस्तावः कदा भवति भविष्यति । शिष्टं स्पष्टम ॥

**युधि कर्हि यामोरिपु कर्हि भातास्मं[1] उ तोपयिष्याम इनं च कर्हि ।**
**कतमो ददात्याजिमु दास्यति स्वः सुयशश्च दातेत्युदितानि धिग्वः ॥ ५३ ॥**

१ ए डी °स तनो°.

१ डी °षितं । कृ°. २ ए सी डी °हन्ता । इ°. ३ बी °र प्रत्र°.

५३. वो युष्माकमुदितानि वचनानि धिग्गर्हामहे । कानीत्याह । युधि कर्हि कस्मिन्ननद्यतने काले वयं यामो यास्यामस्तथारिषु मध्ये कर्हि भातास्मो विजयेन शोभिष्यामहेत एव उ इति संबोधने । कर्हीनं स्वामिनं तोषयिष्यामस्तथा उ हे भटाः कतमो भटोस्माकमाजिं ददाति दास्यति तथा कतमः स्वर्दास्यति । रणे हि मृताः स्वर्गं यान्तीति रणे निपात्यास्माकं स्वर्गं दास्यत्यत एव कतमः सुयशश्च दातेति ॥

पुराग्नि । यावदुपयाथ । इत्यत्र "पुरा०" [ ७ ] इत्यादिना वर्तमाना भविष्यति ॥

कदा भविष्यति । कदा भविता । कर्हि यामः । कर्हि तोषयिष्यामः । कर्हि भातास्मः । अत्र "कदा०" [ ८ ] इत्यादिना भविष्यन्ति वा वर्तमाना । पक्षे भविष्यन्तीश्वस्तन्यौ ॥

कतमो ददात्याजिम् । दास्यति स्वः । सुयशो दाता । इत्यत्र "किं०" [ ९ ] इत्यादिना वा वर्तमाना ॥

**अभयं प्रदत्ते शरणं प्रदाता विधुरेषु यो दास्यति चासुभिक्षाम् ।**
**श्रयति श्रियं द्यां श्रयिता श्रयिष्यत्यमृतं स एवं वदथाद्य किंतु ॥ ५४ ॥**

५४. स्पष्टम् । किंतु प्रदत्ते दास्यति । विधुरेषु सकष्टेष्वर्थादस्मासु विषये । असुभिक्षामसवः प्राणास्त एव भिक्षा तां जीवितव्यम् । श्रयति श्रयिष्यति । अमृतं मोक्षम् ॥

योभयं प्रदत्ते । असुभिक्षां दास्यति । शरणं प्रदाता । स श्रियं श्रयति । अमृतं श्रयिष्यति । द्यां श्रयिता । इत्यत्र "लिप्स्यसिद्धौ" [ १० ] इति वा वर्तमाना ॥

---

१ बी °पु क°. २ ए डी सी °विता. ३ सी डी ना ध°. ४ बी °ष्टः । किं.

यदि मृत्युरेत्यत्स्यति हिंसिता मा बत नश्यताथोर्ध्वमरीन्मुहूर्तात् ।
अभियाति चेत्संप्रहरेत हन्ता परिजेष्यतीशः सुदृढास्तदाध्वम् ५५

५५. यदि मृत्युर्यमोपि युष्मानेत्यागमिष्यति तथात्स्यति भक्षयिष्यति तथा हिंसिता हनिष्यति । अथ तस्माद्बत हे भटा मा नश्यत । तथा मुहूर्ताद्घटिकाद्वयादूर्ध्वं चेद्यदीशो जयसिंह एवारीनभियात्यभिमुखं यास्यति तथा संप्रहरेत प्रहरिष्यति हन्ता हनिष्यति परिजेष्यति च । तत्तस्मात्सुदृढाः सुस्थाः सन्तो यूयमाध्वं तिष्ठत ॥

यदि मृत्युरेति । अत्स्यति । हिंसिता । अथ मा नश्यत । इत्यत्र "पञ्चमी०" [११] इत्यादिना भविष्यति वा वर्तमाना । अत्र भाविमृत्य्वागमनादि नाशाभावविषयस्य प्रैषस्यातिसर्गस्य प्राप्तकालतायाश्च हेतुर्भवति ॥

ऊर्ध्वं मुहूर्तादीशश्चेत्संप्रहरेत । अभियाति । परिजेष्यति । हन्ता । सुदृढास्तदाध्वम् । इत्यत्र "सप्तमी च०" [ १२ ] इत्यादिना सप्तमी वर्तमाना च वा ॥

अभियोद्धुमाघातक एष जेष्यन् व्रजति प्रभुर्वो रिपुशान्तिकारः ।
शुभमापको धर्ममथोद्धरिष्य इति दोर्युगं पश्यति कीर्तये च ५६

५६. एष प्रत्यक्षो वो युष्माकं प्रभुर्व्रजति । किमर्थमित्याह । अभियोद्धुं शत्रुभिः महाभियोत्स्य इति । तथाघातकोरीन्हनिष्यामीति । तथा जेष्यन्नरीञ्जेष्यामीति । तथा रिपुशान्तिकारो जित्वा रिपूणां शान्तिं करिष्य इति । अथ तथा दोर्युगं पश्यति । किमर्थमित्याह । दोर्युगेनामुना शुभं शत्रुजयोत्थं कल्याणमापक आप्स्यामीति । अथ तथा धर्ममुद्धरिष्य इति । कीर्तये च कीर्तयिष्ये स्वस्य कीर्तिमुत्पादयिष्य इति च ॥

१ सी डी °ति यत्मं°.

१ सी डी °ढाः°.

अभियोद्धुम् । आघातकः । जेष्यन्व्रजति । इत्यत्र "क्रियायां०" [ १३ ] इत्यादिना भविष्यति तुम्-णकच्-भविष्यन्त्यः । सत्यस्य शतुर्भविष्यन्त्या तुल्यार्थतया भविष्यन्तीग्रहणेन ग्रहणाज्जेष्यन्निति भविष्यन्त्युदाहरणं ज्ञेयम् ॥

रिपुशान्तिकारः । अत्र "कर्मणोण्" [ १४ ] इति भविष्यत्यण् ॥ बहुलाधिकाराण्णकच्भविष्यन्त्यावपि । शुभमापको धर्ममुद्धरिष्य इति दोर्युगं पश्यति ॥

कीर्तये दोर्युगं पश्यति । इत्यत्र "भाववचनाः" [१५] इति भविष्यति क्तिः ॥

**इति वेशवद्युध्यपपादसङ्गमिह सारवज्जल्पति कार्यसारम् ।**
**अतिसारकिस्पर्शसरोगवच्च स्वमथाभिनिन्दन्ववले भटौघः ॥५७॥**

५७. इत्येवंप्रकारेणेह वेत्रिणि कार्यसारं कार्यस्य स्थिरमर्थं युद्धाभिमुखवलनरूपं कार्यरहस्यं सारवद्बलयुक्तं यथा स्यादेवं जल्पत्यथानन्तरं भटौघो युधि यद्धार्थं ववले । कथम् । अतिशीघ्रं वलनादपगतः पादसङ्गो भूम्या सहांह्रिसंबन्धो यत्र तद्यथा स्याद्वेशवद्यथा वेशे वेश्यापाटकविषये सहर्षत्वादपपादसङ्गं वलते । कीदृक्सन् । आत्मानमभिनिन्दन् । अतिसारकिस्पर्शसरोगवद्यथातिसारक्यतिसाररोगवान् स्पर्शेन व्याधिविशेषेण सरोगो व्याधितश्चातिदुःखितत्वादात्मानं निन्दतः ॥

**अभजद्विसारालयवन्नरेन्द्रमथ वाहिनी वैरिपचप्रतापम् ।**
**द्विपि दायभीः प्रासभृदुज्झिताध्यायतपस्व्युपाध्याय्यभिनन्द्यमाना ॥ ५८ ॥**

---

१ सी डी °ङ्गर्मनि मा°. २ ए सी डी °न्दन्न चले.

---

१ बी सी डी °ववल°. २ सी °ल्पति तथा. डी °ल्पन्ति तथा. ३ डी °र्थं चचले. ४ ए सी डी °सम्यांहि°. ५ डी वेश्या°. ६ ए सी डी °गं चल°.

५८. अथ वैरिणः पचति सन्तापयति । लिहाद्यचि [ ५. १. ५०. ] वैरिपचः प्रतापो यस्य तं नरेन्द्रं जयसिंहं[1] वाहिनी सेनाभजत् । कीदृक्सती । प्रासभृत्कुन्तधारिण्यत एव द्विष्यरिजातौ दाया दातव्या भीर्यया सात एवोज्झिताध्याया भयान्मुक्तपाठा यास्तपस्व्युपाध्याय्यस्तपस्विनश्चोपाध्याय्यश्च ताभिरभिनन्द्यमाना[2] विसारालयवद्यथा विसाराणां मत्स्यानामालयमब्धिं वाहिनी नदी भजति ॥

**पृतनाज्युपाध्याय ऋतं दिशन्ती दिवि शारनीशारमिवास्त्रभाभिः[1] ।**
**नृपमन्वगादुद्यतमाशु शारोग्रनिशाटनिष्पावदलाभिलावे ॥ ५९ ॥**

५९. शारो वायुस्तद्वदुग्रा ये निशाटास्त एवोग्रत्वान्निष्पावदलानि[3] वल्लपत्राणि तेपामभिलावे छेद उद्यतं[4] नृपं पृतना सेनाश्वन्वगात् । कीदृक्सती । आज्युपाध्याया रणेतिप्रवीणा तथास्त्रभाभिः[5] कृत्व ऋतं सत्यं यथा स्यादेवं शारः कर्बुरवर्णो यो नीशारः[6] प्रावरणं तमिव दिव्याकाशे दिशन्ती ददती नानारत्नस्वर्णखचितत्वेन नानावर्णकान्तीन्यायुधानि बिभ्रतीत्यर्थः ॥

पाद । रोग । वेश । स्पर्श । इत्यत्र "पदरुज०" [ १६ ] इत्यादिना घञ् ॥

स्थिरे । सारम् ॥ व्याध्यादौ । अतिसार । सारवत् । विसार । इत्यत्र "सर्तेः०" [ १७ ] इत्यादिना घञ् ॥

वाहिनीत्यत्र वाहे । प्रतापम् । इत्यत्र[7] च "भावाकर्त्रोः" [ १८ ] इति घञ् ॥ असंज्ञायामपि । दाय ॥ उज्झित । इत्यत्र बहुलाधिकारान्न स्यात् ॥ भावाकर्त्रोरिति किम् । वैरिपच ॥

---

१ ए सी डी °वास्त्रभा°.

---

१ ए °सिंहं वा°. २ ए डी °भिनिन्द्य°. सी °भिनेन्द्य°. ३ सी °निनल°. ४ सी उद्यतं. ५ ए सी डी °थास्त्रभा°. ६ बी नीसारः. ७ बी °त्र भा°. ८ बी °याभिति । दा°.

अध्याय । उपाध्यायी । उपाध्याया । इत्यत्र "इङः०" [ १९ ] इत्यादिना घञ् ॥ टिद्विधानसामर्थ्यात्स्त्रियां ङीर्बाध्यते ॥

शारं । शार । नीशार । इत्यत्र "श्रो वायु०" [ २० ] इत्यादिना घञ् ॥

निष्पाव । अभिलावे । अत्र "निरभेः पूल्वः" [ २१ ] इति घञ् ॥

**करभाभिरावेभरवाश्वरावप्रभवेन शत्रुप्रघसं श्रयन्ती ।**
**क्षितिपप्रभावाश्रयतोथ सास्रग्निघसामिषन्यादकृतोभितस्थौ ॥६०॥**

६०. अथ क्षितिपप्रभावाश्रयतो जयसिंहप्रतापाश्रयणात्सा सेनास्रग्निघसामिषन्यादकृतो रक्तपानमांसभक्षणकारिणो राक्षसानभितस्थावभिमुखं ढुढौके । कीदृक्सती । करभाभिरावेभरवाश्वरावप्रभवेनोष्ट्रशब्दगजशब्दाश्वशब्दानामुत्पत्त्या कृत्वा शत्रुप्रघसं शत्रूणां भक्षणमिव श्रयन्त्यतिदुःखंकुर्वन्ती ॥

अभिराव । इत्यत्र "रोर०" [ २२ ] इत्यादिना घञ् ॥ उपसर्गादिति किम् । रव ॥ राव । इत्यत्र बाहुलकाद्धञ् ॥

प्रभवेन । आश्रयतः । प्रघसम् । अत्र "भूश्र्यदोल्" [ २३ ] इत्यल् ॥ बाहुलकात्प्रभाव ॥

न्याद । इत्ययं "न्यादो न वा" [ २४ ] इति वा निपात्यः ॥ पक्षे । निघस ॥

**वियमी वियामे नियमी नियामेथ यथा च संयाम्युरुसंयमे वा ।**
**नृप उद्यतः कीर्त्युपयाम एवं विजयश्रियश्चोपयमे बभासे ॥६१॥**

६१. नृपो बभासे । कीदृक्सन् । कीर्त्युपयामे विजयोत्थकीर्ति-

१ बी °भेऽवभा°.

२ ए °र । नी°. ३ बी नीमार. ३ ए °पत्रप्र°. ४ बी °सकत्वात. ५ बी °घसः ॥ वि°. ६ बी °पोऽवभा°. ७ ए सी डी कीर्ति°.

वध्वाः पाणिग्रहण उद्यतोत एवैवमुक्तरीत्या विजयश्रियश्चोपयम उद्यतः । उपमानान्याह ।

अहिंसा सत्यमस्तेयं ब्रह्माकिंचनता यमाः ।

त एव विशिष्टा वियमास्तद्वान्वियमी यथा वियामे विशिष्टयमेष्वथाथ वा यथा नियमी ।

स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः ।
नियमा गुरुशुश्रूषा शौचाचारक्षमा दश ॥

यद्वा

नियमाः शौचसंतोषः(षौ ?)[2] स्वाध्यायतपसी अपि ।
देवताप्रणिधानं च । इति ।

तद्वान्यथा नियामे वाथ वा यथा च संयामी पञ्चास्रवाद्विरमणं[3] पञ्चेन्द्रियनिग्रहः कषायजयः चण्डत्रयविरतिश्चेति संयमः सप्तदशभेदस्तद्वांश्चोरुसंयम उद्यतः स्यात् ॥

संयमे संयामी । नियमी नियामे । वियमी वियामे । उपयमे उपयामे । अत्र "संनिवि०"[6][7] [२५] इत्यादिनाल्वा ॥

**धनुषां निनादैर्निनदैरिपूणां[1] निगदैर्नृणां क्रव्यभुजां निगादैः ।**
**रथनिस्वनैस्तत्प्रतिनिक्वणैश्च[2] जगदेकनिक्काणमयं तदाभूत् ॥ ६२ ॥**

६२. स्पष्टम् । किं तु तत्प्रतिनिक्वणैस्तेषां धनुर्निनादादीनां व्योमादिषु प्रतिशब्दैः ॥

**अथ चारणा विक्कणिवल्लकीका अतिवैणविक्काणनिपाठयुक्ताः ।**
**निपठैः सुनिस्वानचयैश्च सूताः स्तवमादरान्निर्ममिरे[3] भटानाम् ६३**

१ बी °रिपूणां. २ बी °निश्वनै°. ३ ए °ममिरे.

१ बी °स्थितग्र°. २ ए बी डी शौचं सं°. ३ बी °आश्रवा°. ४ बी °यः दण्ड°. ५ ए °यमे । उ°. ६ ए संना°. ७ सी डी °निला° ८ डी °नार्दा°.

६३. अथ चारणा बन्दिविशेषा भटानां स्तवमादरान्निर्ममिरे । किंभूताः सन्तः । विक्कणिवल्लकीकाः शब्दायमानवीणाः । चारणा[1] हि[2] वीणा वादयन्ति । तथा वैणो वीणायां भवो यो विक्काणस्तं[3] माधुर्यादिनातिक्रान्तो यो निपाठः काव्यपठनं तेन युक्ताः । तथा सूताश्च भटाश्च सुनिस्वानचर्यैर्मधुरशब्दसंतानैर्निपठैः[4][5] काव्यपठनैः कृत्वा भटानां स्तवं निर्ममिरे[6] ॥

**नृवरै रणे चारुधनुर्ग्रहैस्तैः शरवर्षभाग्भिर्विवशो भयार्तः ।**
**रजनीचरौघोपगमो बभूव समजः पशूनां नु वृकोदजेन ॥ ६४ ॥**

६४. नृवरै[7]र्महाभटनृपैः कृत्वा रजनीचरौघो बभूव । कीदृक् । भयार्तोत एवापगमो गतिरहितोत एव च विगतो वशः प्रभुत्वं यस्मात्स विवशो निःसहः । यतः किंभूतैः । चारुधनुर्ग्रहै[8]र्निःप्र(निष्प्र)-कम्पधनुर्ग्रहणैस्तथा शरवर्षभाग्भिः । यथा वृकोदजेन[9] वृकाणां[10] प्रेरणेन पशूनां समजश्छागौघो भयार्तोपगमो विवशश्च स्यात् ॥

**निनदैः निनादैः । निगदैः निगादैः । निपठैः[11] निपाठ[12][13] । निस्वनैः निस्वान । निक्कणैः निक्काण । इत्यत्र "नेर्नद॰" [ २६ ] इत्यादिना वाल् ॥**

**विक्कणिवल्लकीकाः वैणविक्काण[14] । अत्र "वैणे कणः" [ २७ ] इति वाल्[15][16] ॥**

**चर्यैः । स्तवम् । चैरः । आदरात् । विवशः । रणे । अपगमः ॥ श्ट । शर । ग्रहैः । अत्र "युवर्ण॰" [ २८ ] इत्यादिनाल् ॥**

---

१ **ए** °णा वा°. २ **सी डी** हि वा°. ३ **ए** °णमा°. ४ **सी डी** °निपाठैः कृ°. ५ **ए** °ठैः कृ°. ६ **ए** °मिरे. ७ **ए सी डी** नृपैर°. ८ **डी** °निग्रहै°. ९ **ए** वृकोद°. १० **ए डी** वृक्षाणां. ११ **ए** निपा°. **सी डी** निपाठै नि°. १२ **बी** निःपा. १३ **सी** °पाठै । नि°. १४ **बी** °काणः । अ°. १५ **ए** वान् । वर्यां मर्वावैर ..वशः. १६ **सी** °ल् । वर्यौ सर्वावारे ..वशः. **डी** °ल् । वर्यौ सर्वावैर ...वशः

वर्ष । भय । इत्येतौ "वर्षादयः क्लीबे" [ २९ ] इति निपात्यौ ॥

समजः पशूनाम् । वृकोदजेन । इत्यत्र "समुदोजः पशौ" [ ३० ] इत्यल् ॥

**कितवो ग्लहं नृदधदस्त्रमागाद्धनिपातितासोपसरोदरोथ ।**
**प्रमदाढ्यनृन्शाकपणं नु भोक्तुं युधि बर्बरः संमदकृन्निजानाम् ६५**

६५. अथ प्रमदाढ्यनृन्विजयेन सहर्षान्नरभटान् शाकमुष्टिमिव भोक्तुं बर्बरो नाम राक्षसाधिपो युध्यागात् । कीदृक्सन् । अस्त्रमुद्दधदुत्पाटयन् यथा कितवो द्यूतकारो ग्लहमक्षाणां गृहीतान्पाशकानित्यर्थः । द्यूतफलके पातनाय तस्मादुद्दधाति । तथोपसरो गर्भग्रहणार्थं स्त्रीषु प्रथमं सरणम । अत्र चोपचारात्तदुत्पान्नो गर्भ उच्यते । आप्तः प्राप्त उपसरो यकाभिस्ता गर्भिण्यो ध्वनिना सिंहनादेन पातितानि भयातिरेकोत्पादेन भ्रंशितान्याप्तोपसराणामुदराण्युपचारादुदरस्था गर्भा येन स तथात एव निजानां रक्षसां संमदकृत् ॥

उपसर । ग्लहम् । अत्र "सृग्लहः०" [ ३१ ] इत्यादिनाल् ॥

शाकपणम् । अत्र "पणर्माने" [ ३२ ] इत्यल् ॥

संमद । प्रमद । इत्येतौ "संमद०" [ ३३ ] इत्यादिना निपात्यौ ॥

**यमभीष्मवेश्मप्रघणे मुखेन्तर्घणराजमन्तर्घनपानुजं च ।**
**निदधत्सह प्राट रणप्रघाणे नृभुगुद्धसंघैः स निघोद्घनांसैः ॥६६॥**

१ ए निदप्रघा°.

१ ए सी डी °र्षानु शा°. २ ए सी डी °त्पादय°. ३ सी डी कि...गृही°. ४ बी °णां ग्रही°. ५ ए सी डी °न्पाशिका°. ६ सी डी °मः...निना. ७ सी डी भ्रंसिता°. ८ ए सी डी °मरणा°. ९ ए °मुदारण्यप°. १० ए सी डी °पगंत्या°. ११ बी प्रगाद.

६६. स नृभुग्राक्षसो बर्बरो रणप्रघाणे रण एव कातरबालैर्दुर्लङ्घ्यत्वात्प्रघाणो द्वारालिन्दकस्तत्र प्राट बभ्राम। कीदृक्। यमस्य यद्भीष्मं रौद्रं वेश्म तस्य प्रघणे द्वारालिन्दकतुल्ये मुखे[1] वक्रेन्तर्घणराजमन्तर्घणाख्यदेशभेदनृपमन्तर्घनपानुजं[2] चान्तर्घनदेशराजलघुभ्रातरं च निदधन्निक्षिपंस्तथोद्धसंघैरुद्धानां प्रशस्यानां महाभटानां संघैः समूहैः सह सहितः। कीदृशैः। निविशेषेण[3] हन्यन्ते ज्ञायन्ते निघास्तुल्यारोहपरिणाहास्तथोद्धन्यन्त एष्वित्युद्धना यत्रच्छेदनाय कुट्टनार्थं वा काष्ठान्याधीयन्ते तत्तुल्या अतिबलिष्ठा अनेकशस्त्रघाताङ्किताश्चेत्यर्थः। अंसाः[4] स्कन्धा येषां तैः ॥

**अगमन्नृपोपघ्नमथाभिगर्जन्स घनं घनोच्चापघनो घनो नु।**
**विघनैः खगैः सूचितदुर्निमित्तो द्रुघनोग्रदंष्ट्रोरमयोघनांसः॥६७॥**

६७. अथ द्रुघनोग्रदंष्ट्रः कुठाररौद्रदाढस्तथायोधनो घनस्तद्वन्निविडावंसौ स्कन्धौ यस्य स तथा स बर्बरो नृपोपघ्नं जयसिंहसमीपमरं शीघ्रमगमत्। कीदृक्सन्। वयः पक्षिणो हन्यन्ते यैस्तैर्विघनैः खगैर्गृध्रादिपक्षिभिः सूचितदुर्निमित्त उपरिभ्रमणेन ज्ञापितारिष्टः। तथा घनो नु मेघ इव घना निविडा उच्चा उत्प्लवनेनोन्नता अपघना अङ्गावयवा यस्य सः। तथा घनं निरन्तरमभिगर्जन् ॥[7]

अन्तर्घन। अन्तर्घण। इत्येतौ "हनः०" [ ३४ ] इत्यादिना निपात्यौ ॥

प्रघणे। प्रघाणे। इत्येतौ "प्रघण०" [ ३५ ] इत्यादिना निपात्यौ ॥

१ डी °नोधनस्तद्व°.

१ बी सी डी °खे स्यत°. २ ए सी डी °नके°. ३ सी डी निर्विशे°. ४ बी अंशाः स्क°. ५ सी डी यैर्वि°. ६ बी °नं बहुतरम°. ७ बी °त्यौ। निप। उ°.

निघ । उद्ध । संघैः । उद्धन । अपघनः । उपघ्नम् । इत्येते "निघोद्घ०" [ ३६ ] इत्यादिना निपात्याः ॥

घनैं । घनम् । घनः । एते "मूर्ति०" [ ३७ ] इत्यादिना निपात्याः ॥

विघनैः । अयोघन । द्रुघन । इत्येते "व्ययः०" [ ३८ ] इत्यादिना निपात्याः ॥

**निजघान स स्तम्बपरघ्नमुष्टी रथवाजिनः स्तम्बहनन्य ऋष्ट्या ।**
**असिमग्रहीत्स्तम्बघनं नु मुष्ट्या नृप उत्तरंस्तम्बपदादिहेत्या ६८**

६८. स्तम्बः स्थुडं हन्यतेनेन स्तम्बघ्नो मतान्तरे तु स्तम्बघ्ना मुष्टिर्यस्य स स्तम्बपरघ्नमुष्टिर्महाबलः सन्स बर्बरः स्तम्बहनन्या ऋष्ट्या खड्गेन कृत्वा रथवाजिनो जयसिंहरथाश्वान्निजघान । ततश्चोत्तरन्रथादवरोहन्नृपः स्तम्बपदादिहेत्या स्तम्बो हन्यते यया तया स्तम्बहेत्या मुष्ट्या कृत्वासिमग्रहीत् । कीदृशम् । महाभरत्वात्स्तम्बघनं नु प्रचण्डदण्डमिव ॥

स्तम्बघ्न । स्तम्बघनम् । एतौ "स्तम्बाद् घ्नश्च" [ ३९ ] इति निपात्यौ। स्त्रियां तु परत्वादनडेव । स्तम्बहनन्या ॥ केचित्तु कप्रत्यये निपातनं कृत्वा स्त्रियामपि स्तम्बघ्ना इतीच्छन्ति । तदपि स्तम्बपरघ्नमुष्टिरित्यत्र वाक्यकाले प्रकटितम् ॥ अन्ये तु स्तम्बपूर्वस्यापि हन्तेः सानिहेनीति निपातनात्स्तम्बहेत्येनीच्छन्ति ॥

**परिघद्रुजो बर्बरकाह्वयेन विहवोन्मुखः सोपहवेन तेन ।**
**निहवोन्मुखश्चाभिहवोन्मुखेन स समाह्वये त्वाहवमूर्ध्न्यदीव्यत् ६९**

१ ए सी डी °न निह°. २ ए °न । विह°. सी डी °न । वह°.

१ बी °त्याः । विघनैः. २ ए °नम्. ३ ए °श्वा ज°. सी डी श्वान्जघा°. ४ ए °ते त°. ५ बी °हाभार°. ६ सी डी °म्बघ्नं नु. ७ डी °म्बघ्नं । स्त°. ८ सी डी °म्बघ्नं । ए°.

६९. समाहूयन्ते प्राणिनोत्रेति समाह्वयः कुक्कुटादियुद्धद्यूतं कौतुकार्थिलोकमेलापकहेतुत्वादङ्गाङ्गमहायुद्धहेतुत्वाच्च तत्तुल्य आहवमूर्ध्नि रणमस्तके स नृपो बर्बरकाह्वयेन सहादीव्यद्युद्धक्रीडयाक्रीडत्। कीदृक्। परिघन्तावर्गले इवाचरन्तौ भुजौ यस्य स तथा। तथा विहवोन्मुखः स्पर्धायामभिमुखो निहवोन्मुखश्च सिंहनादाभिमुखश्च सन्। कीदृशा सता। सोपहवेन सस्पर्धेनाभिहवोन्मुखेन च सिंहनादेच्छुना च ॥

परिघ। इत्ययं "परेर्घः" [ ४० ] इति निपात्यः ॥

समाह्वये। आह्वयेन। इत्येतौ "ह्वः०" [ ४१ ] इत्यादिना निपात्यौ ॥

निहव। अभिहव। उपहवेन। विहव। इत्यत्र "न्यभि०" [ ४२ ] इत्यादिनाल्। वाशब्दश्चोकारः स्यात् ॥

आहव। इत्यत्र "आङो युद्धे" [ ४३ ] इत्यल्। वाशब्दश्चोकारः ॥

**जपकृद्व्यधाहावसद्व्रदालेर्हवकर्तुराह्वायकृदुन्मदस्य।**
**गतयामतुर्ये यमवद्वधेच्छुर्नृपतिर्व्यधान्मूर्ध्न्यसिनास्य घातम् ॥७०॥**

७०. नृपतिरस्य बर्बरस्य मूर्ध्न्यसिना घातं व्यधात्। कीदृक्सन्। आह्वायकृत्स्पर्धावांस्तथास्य वधेच्छुर्यथा गतयामस्य यातयामस्य वृद्धस्य तुर्ये वृद्धावस्थायाश्चतुर्थे भागे यमो वृद्धस्य वधेच्छुः स्यात्। यतः कीदृशस्यास्य। जपकृतां मुनीनां व्यधो हिंसा यतः सा तथाहावसद्भ्काहावो निपानं यस्य पार्श्वभागे जलावष्टम्भाय काष्ठानि पाषाणा वा बध्यन्ते तद्वत्स्थूलोन्नता च रदालिर्दन्तपङ्क्तिर्यस्य तस्य तथोन्मदस्य बलाद्यवलेपेन मत्तस्यात एव हवकर्तुः स्पर्धाकृतः ॥

१ ए सी डी °धेच्छुर्नृ°.

१ ए °न्मुखेन च. २ सी डी °श्च सन्. ३ बी °स्य मू°. ४ बी °त्स्पर्धावांस्त°. ५ सी डी तथो°.

**हसकृत्त्विषा हासकृतोस्य मूर्ध्नि कणवानसिः काणवति द्विधाभूत् ।**
**नृप उत्स्वनः स्वानकृताथ तेन युयुधे भुजाभ्यां विहिताखाभ्याम् ॥ ७१ ॥**

७१. त्विषा कान्त्या कृत्वा हसकृद्धसन्निवासिर्जयसिंहखड्गोस्य बर्बरस्य काणवति खड्गघातेन सशब्दे मूर्ध्नि कणवान् शिलातुल्ये मूर्ध्न्यास्फ(स्फा?)लनाद्भङ्गाच्च सशब्दः सन्द्विधाभूद्विखण्डो बभूव । "विचाले च" [७. २. १०५] इति धा । अत एव कीदृशोस्य । हास-कृत उपहासकारिणः । अथासिभङ्गानन्तरं नृप उत्स्वन उद्गतसिंहनादः सन्स्वानकृता तेन बर्बरेण सह विहिताखाभ्यां मिथःसंघट्टेन कृत-शब्दाभ्यां भुजाभ्यां कृत्वा युयुधे ॥

**नृभुजस्तदाराव्यसृगाप्लवं सोजनयद्भुजप्रग्रहबन्धमूढात् ।**
**नृपतिर्जलाप्लावमवग्रहास्तं जलदादवग्राहजयी ग्रहो नु ॥ ७२ ॥**

७२. तदा नृपतिर्नृभुजो बर्बरादारावी संभारेण पातात्सशब्दो योसृगाप्लवो रक्तौघस्तमजनयदुदपादयत् । यतः किंभूतात् । भुजावेव बन्धहेतुत्वात्प्रग्रहो रज्जुस्तुलासूत्रं वा तेन यो बन्धस्तेन मूढान्मूर्छि-तात् । यथावग्रहास्तं वृष्टिप्रतिबन्धेन रुद्धं जलाप्लावं वृष्टिमवग्राहजयी वृष्टिप्रतिबन्धस्य जेता ग्रहः सूर्यादिर्जलदाज्जनयति ॥

**प्रग्राहवान्प्रावरदस्त्रधारोच्छ्रायस्य तस्य प्रवरत्प्रभोघः ।**
**प्रावारवद्राग्भुजयोः समुच्छ्र्युद्यावमुद्रावकरोकरोद्राद् ॥ ७३ ॥**

१ ए सी डी °ताव ते°. २ ए °प्रगृह°.

१ सी डी °नाद् स. २ ए बी °मूर्ध्नि खण्डे च°. ३ सी कृभुजाभ्यां स-शब्दाभ्यां कृत्वा. डी कृभुजाभ्यां सशब्दाभ्यां कृत्वा. ४ ए सी डी °तिर्नृभु°. ५ बी °प्रव°.

७३. समुच्छ्रयी महापुरुषत्वादुन्नतस्तथा प्रवरैन्बाहुल्येनाङ्गस्याच्छादकत्वशोभाहेतुत्वादिना वस्त्रविशेष इवाचरन्प्रभौघस्तेजःपूरो यस्य स तथा राड् जयसिंहस्तस्य वर्बरस्य भुजयोरुद्यावं मीलनं बन्धं द्रागकरोत् । कीदृक्सन् । प्रग्राहवान्बर्बरबन्धनाय गृहीतरज्जुस्तथोद्यूयेते बन्धनायोर्ध्वीक्रियेते उद्यावौ करौ पाणी येन सः । किंभूतस्य तस्य । प्रावरन् रक्तत्वात्संततीभूतत्वाच्च वस्त्रभेदवदाचरन्नस्रधारोच्छ्रायो रक्तप्रवाहौन्नत्यं यस्य तस्य । प्रावारवदिति । यथा प्रग्राहवांस्तुलासूत्रवान्वणिक्प्रावारस्य वस्त्रस्योद्यावं मीलनं करोति । कीदृक्सन् । भुजयोः समुच्छ्रयी वस्त्रस्य भूमिलग्ने मलिनत्वस्य भयेन बाह्वोरौन्नत्यवानुद्रावकरश्च ॥

**निग्राहस्ते स्तादवग्राह इत्युद्राहं स्वस्मिन्विद्ध्यनुत्पाव सत्यम् ।**
**स्रुक्प्रग्राहेणाटदर्थिद्विजानां राज्ञेत्युक्त्वाबन्धि संग्राहवत्सः ॥७४॥**

७४. स बर्बरः संग्राहवन्मुष्टिरिव राज्ञाबन्धि बद्धः । किं कृत्वा । उक्त्वा । किमित्याह । रे अनुत्पावापवित्र स्रुक्प्रग्राहेण दक्षिणादिलिप्सया यज्ञोपकरणाङ्गीकारेणाटदर्थिद्विजानां चरतां याचकानां ब्राह्मणानामुद्राहं भणनं शापमित्यर्थः । स्वस्मिन्सत्यं मयैवं बन्धनादवितथं विद्धि जानीहि । किंभूतमुद्राहम् । रे बर्बरावग्राहोरात्यादेः सकाशात्पराभवस्तथा निग्राहस्तीव्रदण्डश्च ते स्तादित्येवंविधमिति ॥

आहाव । इत्ययम् "आहावो निपानम्" [ ४४ ] इति निपात्यः ॥

हव । इत्यत्र "भावे०" [ ४५ ] इत्यादिनाल् ॥ अनुपसर्गादिति किम् । आह्वाय ॥

---

१ बी स्रुक्प्रग्रा°.

---

१ बी °रत्वाच्छादु°. २ ए सी डी °रत्प्रभौ°. ३ बी °तत्त्रीभू°. ४ सी डी °रयस्य. ५ बी °येव ब°. ६ सी डी °विधिमि°. ७ बी °ति । अहा°.

वध घातम् । अत्र "हनो वा वध् च" [ ४६ ] इत्यल् वा तत्संनियोगे च वधादेशोस्य ॥

व्यध । जप । उन्मदस्य । इत्यत्र "व्यध०" [ ४७ ] इत्यादिनाल् ॥

क्वण क्वाण । यम याम । हस हासे । उत्स्वनः स्वान । इत्यत्र "न वा क्वण०" [ ४८ ] इत्यादिना वाल् ॥

आरवाभ्याम् आरावि । आप्लवम् आप्लावम् । अत्र "आङो रुप्लोः" [ ४९ ] इति वाल् ॥

अवग्रह अवग्राह । इत्यत्र "वर्ष०" [ ५० ] इत्यादिना वाल् ॥

प्रग्रह प्रग्राहवान् । इत्यत्र "प्राद्रश्मि०" [ ५१ ] इत्यादिना वाल् ॥

प्रवरत् प्रावारवत् । इत्यत्र "वृगो वस्त्रे" [ ५२ ] इति वाल् । "घञ्युपसर्गस्य बहुलम्" [ ३. २. ८६ ] इति प्रस्य दीर्घः ॥ अन्ये तु प्राङ्पूर्व एव वृणोतिः स्वभावाद्वस्त्रविशेषे वर्तते । तेन प्रावारवत् प्रावरत् इति स्यात् ॥

समुच्छ्रयी उच्छ्रायस्य । इत्यत्र "उदः श्रेः [ ५३ ] इति वाल् ॥

उद्यावम् । अनुत्पाव । उद्राव । इत्यत्र "युपूद्रोर्घञ्" [ ५४ ] इति घञ् ॥

उद्ग्राहम् । अत्र "ग्रहः" [ ५५ ] इति घञ् ॥

निग्राहः । अवग्राहस्ते स्तात् । इत्यत्र "न्यवाच्छापे" [ ५६ ] इति घञ् ॥

स्रुक्प्रग्राहेण । इत्यत्र "प्राल्लिप्सायाम्" [ ५७ ] इति घञ् ॥

संग्राहवत् । इत्यत्र "समो मुष्टौ" [ ५८ ] इति घञ् ॥ शालिनी छन्दः ॥

**दोःसंयावाद्रावसंदावमाप्तेस्मिन्क्रव्यादा दावसंद्रावयावात् ।**
**नेशुश्चाहृष्यंश्च विप्राः सुराज्ञस्तेजोनायान्निर्द्रवा निर्दवास्ते ॥७५॥**

१ सी डी संद्राव .

१ बी °म । स्वन । स्वा°. २ ए सी डी आरवि. ३ ए सी डी वर्षे इ°. ४ ए सी डी प्राङ्यपूर्व. ५ ए सी डी प्रावर°. ६ सी डी °व । अ°. ७ ए °प्र । शालि°. ८ ए सी °ह । अ°. ९ ए °ग्राह । अ°.

७५. द्रावसंद्रावयावात्पराभवोत्थकष्टेन संतापस्वेदयोः संबन्धाद्धेतोः क्रव्यादा नेशुश्च । क्व सति । अस्मिन्बर्बरे । कीदृशे । दोःसंयावाद्दाह्वोर्बन्धनाद्द्रावसंदावं द्रावमायासजं स्वेदं संदावं संतापं चाप्ते । तथा सुराज्ञः कर्तरि षष्ठी । पूजितनृपेण जयसिंहेन यस्तेजोनायो विजयोत्थप्रतापप्राप्तिस्तस्माद्धेतोस्ते पूर्वोक्ता विप्रा अहृष्यंश्च । किंभूताः सन्तः । निर्द्रवाः खेदाभावान्निःस्वेदा निर्दवा निःसंतापाश्च ॥

**भियो यवात्पिङ्गलिकास्य पत्नी कृताञ्चलोन्नायनयोन्नयोचे ।**
**जितस्त्वयासौ स्वभुजावनायाद् द्यूतीव शारीपरिणायघातात् ७६**

७६. अस्य बर्बरस्य पिङ्गलिकाख्या पत्नी भियो भर्तृमृत्युभयस्य यवात्संबन्धाद्धेतो राज्ञोग्र ऊचे । कीदृक्सती । कृताञ्चलोन्नायेन निरुञ्छनाय वस्त्रप्रान्तोच्छ्रायेण नयस्य स्त्रीजनोचितस्य भक्त्युपचाररूपन्यायस्योन्नय उच्छ्रायो यया सा तथा । यदूचे तदाह । हे राजन्नसौ बर्बरस्त्वया स्वभुजावनायात्स्वभुजाभ्यां कर्तृभ्यां योवनायो बर्बरस्य बन्धनं तस्माज्जितः । यथा शारीणां परिणायेन समन्तान्नयनेन हननाद्यूती द्यूतकारो जीयते ॥

संयावात् । संदावम् । संद्राव । इत्यत्र "युदुद्रोः" [ ५९ ] इति घञ् ॥

नय नायात् । यवात् यावात् । निर्दवाः दाव । निर्द्रवाः द्राव । इत्यत्र "नियश्च०" [ ६० ] इत्यादिना वा घञ् ॥

उन्नाय उन्नया । इत्यत्र "वोदः" [ ६१ ] इति घञ् वा ॥

---

१ ए °वात्पराभि°. सी डी °वात्पन°.

१ ए सी डी °द्रावसं°. २ ए सी डी °योनुप्र°. ३ ए सी °पथास्तिरत°. डी °पथाभि°. ४ ए सी डी °प्रा आह्°. ५ ए °जनेचि°. सी डी °जनेचत°. ६ ए सी भक्तयप°. ७ सी डी °व । सं°.

अवनायात्। इत्यत्र "अवात" [ ६२ ] इति घञ्॥

शारीपरिणाय। इत्यत्र "परेर्द्यूते" [ ६३ ] इति घञ्॥ उपजातिश्छन्दः[1]॥

**संस्तावपरिग्राहभागृषीणामपरिभवः परिभावमेष चक्रे।**
**तत्क्षान्त्वासौ मुच्यतां पतिर्मे प्रस्तावे ते पत्तितां हि कर्ता ७७**

७७. एष बर्बरो न विद्यते शत्रुभ्यः परिभवो[2] यस्य स तथा सन् परिभावं न्यक्कारं चक्रे। केषाम्। समेत्य स्तुवन्ति यस्मिन्देशे छन्दोगाः स यज्ञदेशः संस्तावस्तस्य यः परिग्राहः स्वीकारस्तं यद्वा संस्तावं[3] च परिग्राहं[4] च वेदेर्यज्ञाङ्गभूताया ग्रहणविशेषं भजन्ते य ऋषयस्तेषाम्। तदृषीणां परिभवरूपं कुकर्म। शिष्टं स्पष्टम्॥ औपच्छन्दसिकाप-रान्तिका छन्दः॥

[1]**अप्रद्रावाः प्रस्तारभाजः सहाज्यप्रस्रावैर्बर्हिष्प्रस्तरैश्चात्र तीरे।**
**राजद्विस्तारे सल्लताविस्तरेद्य द्राक्कुर्वन्त्वेते यज्ञमृग्विस्तरेण॥७८॥**

७८. अद्य सांप्रतमत्र सारस्वते तीरे एत ऋत्विज ऋग्विस्तरेण ऋचां मन्त्रविशेषाणां विस्तीर्णतया द्राग्यज्ञं कुर्वन्तु। किंभूते। सहा-ज्यप्रस्रावैर्हव्यघृतक्षरणयुक्तैः स्रुग्भ्यः क्षरितेन घृतेन युक्तैरित्यर्थः। बर्हिष्प्रस्तरैर्दर्भसंस्तरणैः कृत्वा राजद्विस्तारे शोभमानविस्तीर्णत्वे तथा सन्तः शोभना लतानां विस्तराश्छादनानि यस्मिंस्तत्र लतामण्डपोपेते। किंभूताः सन्तः। अप्रद्रावा भयाभावात्पलायनरहितास्तथा प्रस्ता-

१ ए अप्रद्रा°. २ ए सी डी °प्रस्रावै°.

१ बी °तिश्छन्दः. २ ए सी डी रिभावो. ३ ए सी डी °वमृग्भ्यः. ४ सी डी °वं प°. ५ बी °रिग्रहं. ६ ए °च्छन्दःसका°. सी डी °च्छन्दसका°. ७ ए सी डी तीरे त. ८ ए सी डी °प्रस्रावै°. ९ ए सुग्भ्यः क्ष°. सी सुग्भ्य क्ष°. डी सुग्भ्यक्षारि°. १० बी °र्भसंस्तर. ११ ए सी डी विस्तारा°.

रभाजः प्रस्तारं सामगणनाङ्गभूतानामुदुम्बरकाष्ठकुशानां रचनाविशेषं भजन्तः ॥

परिभावं परिभवः । अत्र "भुवोवज्ञाने वा" [ ६४ ] इति वा घञ् ॥

परिग्राह । इत्यत्र "यज्ञे ग्रहः" [ ६५ ] इति घञ् ॥

संस्ताव । इत्यत्र "संस्तोः" [ ६६ ] इति घञ् ॥

प्रस्रावैः । अप्रद्रावाः । प्रस्तावे । अत्र "प्रात्स्रुद्रुस्तोः" [ ६७ ] इति घञ् ॥

प्रस्तार । इत्यत्र "अयज्ञे स्त्रः" [ ६८ ] इति घञ् । प्रस्तारो हि सामगणनाङ्गं न तु यज्ञाङ्गमिति घञ् ॥ अयज्ञ इति किम् । बर्हिष्प्रस्तरैः ॥

विस्तारे । अत्र "वेर्०" [ ६९ ] इत्यादिना घञ् ॥ प्रथन इति किम् । लताविस्तरे ॥ अशब्द इति किम् । ऋग्विस्तरेण ॥ वैश्वदेवी छन्दः ॥

**विप्रा विष्टारास्तारपङ्क्त्यादिगीतेर्विश्रावोद्गारान्कुर्वतां निर्निगाराः ।**
**नीवारोत्काराञ्श्यामकानां निकारांश्चोच्चैर्विक्षावा निर्भया निर्लुनन्तु ॥ ७९ ॥**

७९. विप्रा निर्निगारा निगाराद्रक्षोभक्षणान्निर्गताः सन्तो विश्रावोद्गारान् विश्रावान्विविधश्रवणान्युद्गारांश्चोच्चारणानि च कुर्वतां कुर्वन्तु । कस्याः । विष्टारास्तारपङ्क्त्यादिगीतेर्विष्टारास्ताराभ्यां परे ये पङ्क्ती ते आदी यस्याः सा या गीतिश्छन्दस्तस्या विष्टारपङ्क्त्याख्यस्यास्तारपङ्क्त्याख्यस्य च छन्दस इत्यर्थः । यद्वा । यस्या आदौ विष्टारपङ्क्तिरास्तारपङ्क्तिश्चच्छन्दोविशेषौ स्तस्तस्या गीतेः सामविशेषस्येत्यर्थः । तथा नीवारोत्कारान्वनव्रीहिसमूहान् श्यामकानामारण्यकधान्यभेदानां च निकारांश्च राशींश्च निर्लुनन्तु । किंभूताः सन्तः । निर्भया रक्षोभयरहिता अत एवोच्चैरुदात्तो विक्षावैश्शिक्का येषां ते ॥

१ ए सी डी °गणाना°. २ ए सी डी °रिभावः. ३ ए सी डी प्रस्तावैः. ४ डी °गणाना°. ५ ए सी बर्हिष्प्र°. ६ बी °भयान्नि°. ७ सी डी °वश्चिका.

विष्टारपङ्क्तिः । इत्यत्र "छन्दोनाम्नि" [ ७० ] इति घञ् ॥ केचित्तु वेरन्यतोपीच्छन्ति । आस्तारपङ्क्तिः ॥

विश्राव । विक्षावाः । अत्र "क्षुश्रोः"[ ७१ ] इति घञ् ॥

निर्गारा[1]ः । उद्गारान् । इत्यत्र "न्युदो ग्रः" [ ७२ ] इति घञ् ॥

श्यामकानां निकारान् । नीवारोत्कारान् । इत्यत्र "किरो धान्ये" [ ७३ ] इति घञ् ॥

नीवार । इत्यत्र "नेर्वुः"[2] [ ७४ ] इति घञ् ॥

न्यायं श्रयिष्यति न तु न्ययमस्य नन्तुं
पर्याय आश्रमविशाय इहावनाय ।
राजोपशायवदितीह परिभ्रुवत्यां
रक्षःपतिं तममुचज्जयसिंहदेवः ॥ ८० ॥

८०. जयसिंहदेवस्तं रक्षःपतिममुचन्[3] । कस्यां सत्याम् । इह पिङ्गलिकायां परिभ्रुवत्याम् । किमित्याह । हे राजन्बर्बरो न्यायं नीतिं श्रयिष्यति न तु न्ययं निकृष्टमयनं न्ययोन्यायस्तं[4] न श्रयिष्यति । यतोस्य बर्बरस्य नन्तुं त्वां मुनींश्च[5] प्रणन्तुं पर्यायोवसरस्तथास्येह नदीतीरेवनाय मुनीनां रक्षार्थमाश्रमविशाय आश्रमेषु मुनिस्थानेषु क्रमप्राप्तं पर्यायसाध्यं शयनं[6] राजोपशायवद्यथास्य राज्ञोवनाय[7] राजनि जयसिंह उपशायः समीपे शयितुं पर्यायः । यतोसौ त्वां मुनींश्च नंस्यति रक्षार्थं समीपावस्थानेन सेविष्यते[8] चातो युष्माकं शिक्षयान्यायमसौ न करिष्यतीत्यर्थ इति ॥

---

१ **बी** °गार । उ°. २ **प** नेर्वुपरिरिति. **सी** नेर्वुपरिनिति. **डी** नेर्वुपरिति. ३ **डी** °ममुंच°. ४ **सी डी** °स्तंश्र°. ५ **प सी डी** मुनींश्च. ६ **प सी डी** °यनीं रा°. ७ **प** °वनीय. ८ **प सी डी** °ते वातो.

न्यायम् । अत्र "इणोऽभ्रेषे" [ ७५ ] इति घञ् ॥ अभ्रेष इति किम् । न्ययम् ॥

पर्यायः । अत्र "परेः क्रमे" [ ७६ ] इति घञ् ॥

अस्याश्रमविशायः । राजोपशाय । अत्र "व्युपाच्छीङः" [ ७७ ] इति घञ् ॥ वसन्ततिलका छन्दः ॥

पुष्पावचायसुफलोच्चयपल्लवाद्यो-
च्चायैरचौर्यकुसुमावचये वने तैः ।
आकायचिद्भिर्ऋषिभिर्विहितातिथेयः
स्थित्वा नृपो निजनिकायमगात्सुकायः ॥ ८१ ॥

८१. सुकायः शोभनमूर्तिर्नृपो निजनिकायं स्वावासमगात् । किं कृत्वा । चौराणामुच्छेदादविद्यमानश्चौर्येण कुसुमानामवचयस्त्रोटनं यत्र तस्मिन्वने स्थित्वोषित्वा । यत आकायं यज्ञाग्निभेदं चिन्वन्त्याहुतिभिरुपचितीकुर्वन्ति ये तैर्यायजूकैरित्यर्थः । तैः प्रसिद्धैर्ऋषिभिर्विहितातिथेयः कृतातिथ्यः । कैः कृत्वा । पुष्पावचायसुफलोच्चयपल्लवाद्योच्चायैर्भावानयने द्रव्यानयनमित्यवचीयमानैः पुष्पैरुच्चीयमानैः सुफलैरुच्चीयमानैः पल्लवाद्यैः पल्लवपत्रादिभिश्चेत्यर्थः ॥

पुष्पावचाय । पल्लवाद्योच्चायैः । अत्र "हस्त०" [ ७८ ] इत्यादिना घञ् ॥ उदो नेच्छन्त्यन्ये । फलोच्चय । अस्तेय इति किम् । अचौर्यकुसुमावचये ॥

आकाय । सुकायः । निकायम् । अत्र "चिति०" [ ७९ ] इत्यादिना घञ् । आदेः कश्च ॥

इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तौ द्वादशः सर्गः समर्थितः ॥

---

१ बी °द्भिऋषि°. २ बी °थेय स्थि°.

---

१ ए °म् । न्याय°. २ बी °शायः । अ°. सी डी °शायः । इत्यत्र. ३ ए सी °द्धैरुषि°. बी द्धैऋषि°. ४ डी °ल्लवप°. ५ बी °च्चयः । अ°. डी °च्चयं । अ°. ६ ए अचौर्य°.

# द्व्याश्रयमहाकाव्ये

## त्रयोदशः सर्गः ।



राज्ञो रक्षोनिकायेशो रैनिकायानपूरयत् ।

माणिक्यनिक(च)यांश्चैकदृषन्निश्रायलीलया ॥ १ ॥

१. रक्षोनिकायेशो राक्षसौघस्वामी बर्बरो रैनिकायान्स्वर्णानामुपर्युपरि राशीकरणानि माणिक्यनिचयांश्च प्रभूतान्मणिभेदांश्च राज्ञोपूरयद्ददौ । कया । एको दृषदां यो निश्रायो मानविशेषस्तस्य लीलया सुखेनेत्यर्थः ॥

अनिच्छुरन्नसंग्राहेप्यविघ्नं पत्तिसंस्थया ।

स नन्दथुकृते भूपमकृत्रिममसेवत ॥ २ ॥

२. स बर्बरो नन्दथुकृते राज्ञ आह्लादनायाविघ्नं सदेत्यर्थः । अकृत्रिमं सद्भावेनेत्यर्थः । भूपमसेवत । कया । पत्तिसंस्थया । पदातिव्यवस्थया । कीदृक्सन् । अन्नसंग्राहेपि धान्यमुष्टावप्यनिच्छुर्भोजनमात्रमप्यवाञ्छन्नित्यर्थः ॥

यज्ञरक्षणे सयत्नोभूत्स्वप्नेप्यप्रश्नयाचथुः ।

राक्षसो यत्प्रसादं राट् तेनायाचित्रिमं व्यधात् ॥ ३ ॥

३. यद्यस्माद्राक्षसो बर्बरो यज्ञरक्षणे यागरक्षायां सयत्न आदृतोभूत् । कीदृक्सन् । स्वप्नेपि चित्तेपीत्यर्थः । न विद्यते प्रश्नस्य किं

१ ए °निश्चयांनैकवर्षन्नश्चा°. सी °निश्चयांनैकर्षन्नि°. डी °निश्चयांनैकवृषन्नि°.

१ डी रैनिका°. २ सी °द्दो । ए°. ३ ए डी °दौ । ए°. ४ ए °खेननें°. ५ सी °त् । स्व°.

यज्ञरक्षां करोमि न वेति कथं वा करोमीत्यादिपृच्छाया[1] याचथुर्याञ्चा यस्य स तथा स्वयमेवेत्यर्थः । तेन हेतुना राड् जयसिंहोयाचित्रिमं याञ्जयानिर्वृत्तं[2] स्वाभाविकं प्रसादं बर्बरस्य व्यधात्[3] ॥

रैनिकायान् । इत्यत्र "चिति०" [ ७९ ] इत्यादिना घञ् । आदेश्च कः ॥

रक्षोनिकाय । इत्यत्र "संघेनूर्ध्वे" [ ८० ] इति घञ् कश्चादेः ॥ संघ इति किम् । माणिक्यनिचयान् । बहुत्वमात्रमत्र विवक्षितं न संघ इति व्यावृत्तिः ॥

एकद्वपञ्चिश्चाय । अन्नसंग्राह(हे) । इत्यत्र "माने" [ ८१ ] इति घञ् ॥

संस्थया । अविघ्नम् । इत्यत्र "स्थादिभ्यः कः" [ ८२ ] इति कः ॥

नन्दथु । इत्यत्र "द्वितोथुः"[4] [ ८३ ] इत्यथुः ॥

अकृत्रिमम् । अयाचित्रिमम् । अत्र "ड्वितः०" [ ८४ ] इत्यादिना त्रिमक् ॥ ट्वियाचिरिति कश्चित् । याचथुः ॥

यंज्ञ[5] । स्वप्ने । रक्षणे । यत्नः । प्रश्न । इत्यत्र "यजिस्वपि०" [ ८५ ] इत्यादिना नः ॥

स विश्वविधिनाब्ध्यादावपि सान्तर्धिराज्ञया ।
त्यक्तसंकुटनोसांकोटिनं नृपमरञ्जयत् ॥ ४ ॥

४. स बर्बरोब्ध्यादावपि समुद्रनद्यादावपि विश्वविधिना प्रवेशकरणेन हेतुनासांकोटिनमकुटिलं नृपमरञ्जयत् । कीदृक्सन् । त्यक्तसंकुटनो[6] मुक्तकौटिल्योत एवाज्ञया नृपादेशेन सान्तर्धिर्मन्त्रादिशक्त्यादृश्यः ॥

---

१ प °या । रक्त°.

---

१ प °दिनापृ°. २ बी °निवृत्तं. ३ प व्यवधा°. ४ सी °तोथूः । अ°. डी °तोथुः । अ°. ५ प बी यज्ञः । स्व°. ६ सी डी °संकट°. ७ प सी डी मुकुटकौ°.

विश्न । इत्यत्र "विच्छो नङ्" [ ८६ ] इति नङ् ॥

आदौ । विधिना । इत्यत्र "उपसर्गाद्दः किः" [ ८७ ] इति किः ॥

अब्धि । इत्यत्र "व्याप्यादाधारे" [ ८८ ] इति किः ॥

अन्तर्धिः । "अन्तर्धिः" [ ८९ ] इति निपात्यते ॥

संकुटनः । असांकोटिनम् । अत्र "अभि०" [ ९० ] इत्यादिनानञिनौ ॥

नीतिप्रतिश्रुता श्रोतुं राजैकाकी जनश्रुतीः ।
सार्तीनां चार्दिकां हर्तुं कदाचिन्निरगान्निशि ॥ ५ ॥

५. कदाचिदेकाकी सन्राजा निशि निगरात् । किं कर्तुम् । जनश्रुतीर्लोकवार्ताः श्रोतुम् । कया हेतुना । नीतिप्रतिश्रुता । राजा लोकचराचरितपरिज्ञानाय प्रच्छन्न एकाकी रात्रौ चरेदिति राजनीतेरङ्गीकारेण । तथा सार्तीनां रोगपराभवादिना पीडितानामर्दिकां पीडां हर्तुं च ॥

नीति । इत्यत्र "स्त्रियां क्तिः" [ ९१ ] इति क्तिः ॥

श्रुतीः । सार्तीनाम् । इत्यत्र "श्वादिभ्यः" [ ९२ ] इति क्तिः ॥ वक्ष्यमाणैः किबादिभिः सह समावेशार्थं वचनम् । तेन प्रतिश्रुता । अर्दिकाम् । इत्याद्यपि स्यात् ॥

सासुतीनां मिथो यूत्या जूत्या वाक्समितिं नृपः ।
भावज्ञस्यै काप्यपश्यत्कीर्तीप्सुर्हेतिसातिमान् ॥ ६ ॥

६. नृपः कापि स्थाने सासुतीनामासुत्या मद्येनान्वितानां मद्यपानां भावज्ञप्त्या अभिप्रायं ज्ञातुं तेषां मिथो वाक्समितिं वाग्युद्धमपश्यत् । कया कृत्वा । मिथो यूत्या जूत्या मिथो यूत्या संपर्केण

१ ए सी डी °त्कीर्तिप्सु°.

१ सी डी सं ट°. २ ए सी डी °वार्ताश्रो°. ३ ए सी डी राजलो°. ४ ए सी डी श्रुतीना°.

या जूतिर्गतिस्तया सासुतिभिः सह मिलित्वा गमनेनेत्यर्थः । कीदृक् । कीर्तीप्सुस्तथा हेतीनामस्त्राणां सातिः[1] षिञ् बन्धने । सीयते सातिः संबन्धस्तद्वान् ॥[2]

संपीत्या मत्तसंगीतौ कचित्स्वगुणकीर्तनाम् ।
शृण्वन्ननास्थया चक्रे नान्नपक्तिमवस्थितिम् ॥ ७ ॥

७. संपीत्या सहपानेन कृत्वा मत्तानां मद्यपानां संगीतिः सहगानं यत्र तस्मिन्मत्तसंगीतौ कचित्स्थानेन्नपक्तिं यावता कालेनान्नपाकः[3] स्यात्तावन्तमपि कालमवस्थितिं राजा न चक्रे । कीदृक्सन् । स्वगुणकीर्तनां शृण्वन् । कया नास्थान् । अनास्थया महापुरुषत्वेन स्वगुणेष्ववहेलया ॥

समितिम् । सासुतीनाम् । अत्र "सम्०" [ ९३ ] इत्यादिना क्तिः ॥

सातिं । हेतिं । यूत्या । जूत्या । ज्ञप्त्यै । कीर्तिं । इत्येते "साति०" [ ९४ ] इत्यादिना निपात्याः ॥ कीर्तनाम् । इत्यपि कश्चित् ॥

संगीतौ । संपीत्या । पक्तिम् । अत्र "गापा०" [ ९५ ] इत्यादिना क्तिः ॥

अवस्थितिम् । अनास्थया । अत्र "स्थो वा" [ ९६ ] इति वा क्तिः ॥

प्रव्रज्येज्याजुषामास्यासमज्यास्वट्यया च सः ।
विद्याभृत्यान् कचित्पश्यन्मेने चर्याफलं महत् ॥ ८ ॥

८. स राजा चर्याफलं महन्मेने । कीदृक्सन् । कचिद्विद्यैव भृत्या वेतनं येषां तान्विद्याभृत्यान्यज्ञविद्योपजीविनो महायाज्ञिकानित्यर्थः । पश्यन् । कया । अट्यया भ्रमणेन । कासु । प्रव्रज्येज्याजुषां प्रव्रज्यां दीक्षाविशेषमिज्यां च यागं[4] च सेवमानानां यज्ञोपाध्या-

---

१ ए सी डी °तिः षिञ्°. २ सी डी °बद्धस्त°. ३ सी डी °पाचकः. ४ सी डी °गं से°.

यानामास्यासमज्यास्वास्यायायुपवेशनाय समज्यासु सभासु यज्ञपाटकेष्वित्यर्थः । यदीदृशाः पुण्यात्मानो विद्याभृत्या मया दृष्टास्तेन चर्यायाः फलं महज्जज्ञ इत्यज्ञासीदित्यर्थः ॥

निपद्यायां निपद्यानिपत्याशय्याजुषश्चरान् ।
सोज्ञासीच्छद्मसुत्यापः स्थिरमन्येत्यया क्वचित् ॥ ९ ॥

९. क्वचित्स नृपश्चरान् शत्रुहेरिकानज्ञासीत् । किंभूतान । निपद्यायां राजमार्गे निपद्या हट्टास्ता एवात्युच्चत्वान्निपत्या भैरवपातभूमयस्तासां शय्या रचनाविशेषास्तज्जुषः । तथा छद्मना किल वयं यागार्थं सुत्याविक्रायिणो द्विजा इति व्याजेन सुत्यां सोमाधानपात्रं पान्ति ये तांश्छद्मना वल्लीरसपात्रधारकानित्यर्थः । एवंविधानपि कथमज्ञासीदित्याह । स्थिरमन्येत्यया स्थिरा मन्या कन्धरा यत्र सा येत्या गतिस्तया कृत्वा । तान क्षुद्रतया जनानां राजवार्तां कुर्वतां सावधानत्वान्निश्चलग्रीवया श्रावं श्रावं गच्छतो दृष्ट्वा । चरा एत इति राजाज्ञासीदित्यर्थः ॥

आस्या । अव्यया । प्रव्रज्या । इज्या । इत्यत्र "आस्यटि०" [ ९७ ] इत्यादिना क्यप् ॥

भृत्यान् । अत्र "भृगो नाम्नि" [ ९८ ] इति क्यप् ॥

समज्यासु । निपत्या । निपद्यायाम् । निपद्या । शय्या । सुत्या । विद्या । चर्या । मन्या । इत्यया । इत्यत्र "समज०" [ ९९ ] इत्यादिना क्यप् ॥

जनेच्छाकृत्ये जिज्ञासुः क्वापि गूढाकृतिक्रियः ।
तृष्णां याञ्चां कृपां श्रद्धां भान्तर्धां च स निर्ममे ॥ १० ॥

१ सी डी °त्याप स्थि. २ बी °द्धां चान्त°.

१ ए सी डी °त्रुहरि°. २ सी डी निपद्या. ३ डी क्षुप्रत°. ४ ए सी डी °त्वान्निश्च°.

१०. स्पष्टः । किं तु जनेच्छाकृत्ये लोकानामभिप्रायं चेष्टां च । गूढे आकृतिक्रिये आकारगमनादिचेष्टे यस्य स तथा भान्तर्धा भाया राज्यशोभाया अन्तर्धा गोपनं च ॥

मृगयापरिसर्येच्छुरिवच्छन्नपदः क्वचित् ।
परिचर्याकृतोटाट्यां जज्ञेटाटां परस्य च ॥ ११ ॥

११. क्वचिच्च राजा परिचर्याकृतो भक्तस्याटाट्यां गतिं जज्ञे निःशङ्कत्वादिगुणैर्ज्ञातवान् । परस्य च शत्रोश्चाटाटां गतिं साशङ्कत्वादिना जज्ञे । कीदृक्सन् । छन्नावलक्षितौ पादौ पादन्यासौ यस्य सोज्ञात इत्यर्थः । मृगयाखेटस्तदर्थं परिसर्या परिगमनं तदिच्छुर्लुब्धको यथा छन्नपदः स्यात ॥

क्रियः कृत्ये । अत्र "कृगः श च वा" [ १०० ] इति शो वा चकारात्क्यप् च ॥ पक्षे । आकृति ॥

मृगया । इच्छा । याञ्चाम् । तृष्णाम् । कृपाम् । भा । श्रद्धाम् । अन्तर्धाम् । एते "मृगयेच्छा०" [ १०१ ] इत्यादिना निपात्याः ॥

परिसर्या । परिचर्या । इत्यत्र "परेः०" [ १०२ ] इत्यादिना यः ॥

अटाट्याम् । अटाटाम् । अत्र "वाटाट्यात्" [ १०३ ] इति वा यः ॥

जागर्यया निशार्धस्य ज्ञात्वेहां जागरावताम् ।
प्रशंसां च जुगुप्सां च कुर्वन्स निरगात्पुरात् ॥ १२ ॥

१२. स्पष्टः । किं तु प्रशंसां विद्याभृत्यादेः । जुगुप्सां चच्छद्मवतां चरादीनाम् ॥

जागर्यया । जागरा । इत्यत्र "जागुरश्च" [ १०४ ] इति-अः । यश्च ॥

१ ए °त्वारिगु°. २ बी °टकस्त°. ३ ए °गुरुश्च. सी डी °गुरेश्च. ४ बी अः । अश्च.

प्रशंसाम्। जुगुप्साम्। अत्र "शंसि०" [१०५] इत्यादिना-अः॥

ईहाम्। अत्र "क्टेः०" [१०६] इत्यादिना-अः॥

क्षमां भिदाच्छिदाभीपां सोसिभूपो व्यलङ्घयत्।
पूर्वाद्भुतकथाचिन्ताचर्चापूजास्पृहापरः॥ १३॥

१३. स नृपो[1] भिदाच्छिदाभीपां पशुमत्स्यादिविदारणद्विधाकरणै[2][3] रौद्रां क्षमां पूर्वोह्यचण्डालमात्सिकादिसंबन्धिभूमिं व्यलङ्घयत्। कीदृक्। असिना भूषा यस्य सोसिभूपस्तथा पूर्वेषां रामादीनामद्भुता याः कथास्तासां या चिन्ता स्मरणं चर्चा मनसि विचारः पूजा बहुमानः स्पृहेच्छा तत्परः॥

अदोलातोलचित्तः सोप्रमाः कुम्नाश्च लङ्घयन्।
चित्रकामनया प्राप नदीं ब्राह्मीमवेदनः॥ १४॥

१४. स राजा चित्रकामनयाश्चर्याभिलाषेण ब्राह्मीं नदीं सरस्वतीं प्राप। कीदृक्सन्। न दोलायाः प्रेङ्खायास्तोला साम्यं यस्य[6] तच्चित्तं यस्य सः। सात्विकत्वान्निश्चलचित्तोत एवावेदनो भयोत्थदुःखरहितोत एवाप्रमाः प्रमाणरहिता असंख्याः कुम्नाश्च न केवलं भिदाच्छिदाभीपां क्षमां सुगहना यज्ञवृत्ती(ती?)श्च लङ्घयन्॥

वन्दनोपासने कृत्वा सोञ्जलिग्रन्थनादिभिः।
पादाभिघट्टनोदूर्मिश्रन्थनामुत्ततार ताम्॥ १५॥

१५. स राजाञ्जलिग्रन्थनादिभिरञ्जलिरचनास्नानादिभिः कृत्वा

१ ए °त्वा तां नदी°.

१ ए °पो सिदा°. २ बी °रणाद्वि°. ३ डी °रणे रौ°. ४ बी °मात्स्यका°. ५ ए सी डी °भूमिमभ्यल°. ६ बी °स्य सः. ७ डी °न्। चन्द°. ८ डी °त्वा चन्द°.

वन्दनोपासने कृत्वा तां नदीमुत्ततार । किंभूताम । पादाभिघट्टनया पादाक्रमणेनोदुच्छलन्त्यूर्मिश्रन्थना कल्लोलरचना यस्यां ताम ॥

क्षमाम् । अत्र "षितोङ्" [ १०७ ] इत्यङ् ॥

भिदाच्छिदे । "भिदादयः" [ १०८ ] इति साधू ॥

भीषाम् । भूषः । चिन्ता । पूजा । कथा । कुम्बाः । चर्चा । स्पृहा । तोल । दोला । इत्यत्र "भीषि०" [ १०९ ] इत्यादिनाङ् ॥

अप्रमाः । अत्र "उपसर्गादातः" [ ११० ] इत्यङ् ॥

कामनया । अवेदनः । उपासने । श्रन्थनाम् । अभिघट्टना । वन्दना । इत्यत्र "णिवेत्ति०" [ १११ ] इत्यादिनानः ॥ ग्रन्थेरपीत्यन्ये । ग्रन्थना ॥

आश्चर्यान्वेषणेष्या चार्तपर्येषणया च सः ।
परीष्ट्याध्येषणाभाजां चाटत्तीरेनधीष्टिकृत् ॥ १६ ॥

१६. स राजा तीरे नदीतट आटद्भ्राम्यत् । कैर्हेतुभिः । आश्चर्यान्वेषणेष्या चाश्चर्यविलोकनेच्छया चार्तपर्येषणया च पीडितानां विलोकनेन च । तथाध्येषणाभाजां सत्कारपूर्वो व्यापारोध्येषणा । तद्भाजां मुनीनां परीष्ट्या च शुश्रूषणया च । न च वाच्यमसौ द्रव्येच्छया कस्यापिच्छलं वीक्षितुमत्राटद्यतो नाधीष्टिं याच्ञां करोत्यनधीष्टिकृन्निर्लोभत्वात्कस्यापि किमप्यगृह्णन्नित्यर्थः ॥

अन्वेषणा । इत्यत्र "इषोनिच्छायाम्" [ ११२ ] इत्यनः ॥ अनिच्छायामिति किम् । इष्टया ॥

---

१ डी चाश्चर्यवि°.

---

१ ए भूष । चि°. २ बी कथाः । कु°. डी कथां । कु°. ३ सी डी कुम्बा । च°. ४ बी °न्थन । अ°. ५ ए सी डी °ना । वेदना. ६ बी °षणाय च. ७ डी °ष्ट्या अध्ये°. ८ ए °म् । ईष्ट्या.

पर्येषणया । परीष्ट्या । अध्येषणा । अनधीष्टि । इत्यत्र "पर्यधेर्वा" [ ११३ ] इति वानः ॥

**क्रुधा काकयुदुलूके कुञ्जेथाभीः स भीतिदे ।**
**समसंपद्विपद्भूप इति दीनं वचोशृणोत् ॥ १७ ॥**

१७. अथ स राजा कुञ्जे वनगहनमध्य इति वक्ष्यमाणं दीनमार्तं वचोशृणोत् । कीदृक्सन् । समे तुल्ये संपद्विपदौ यस्य स तथा महापुरुषत्वात्संपद्यहृष्यन्विपदि चाविषादीत्यर्थः । अत एवाभीः । किंभूते कुञ्जे । भीतिदे भयप्रदेपि । यतः क्रुधा हेतुना काकयुधि काकैः सह रण उदुद्गता घूका यत्र तस्मिन् ॥

यद्वचोशृणोत्तदाह ।

**नाथोज्झसि किमह्रीर्मां ह्रीतिं त्यक्त्वा मया कृताम् ।**
**व्यावभाषीं व्यतीहां च व्यतीक्षां चास्मरन्निव ॥ १८ ॥**

१८. हे नाथाविद्यमाना ह्रीर्मत्त्यागविषया लज्जा यस्य सोह्रीः संस्त्वं ह्रीतिं लज्जां त्यक्त्वा मां किमित्युज्झसि । कीदृगिव । अस्मरन्निव । काम् । मया कृतां व्यावभाषीं विनिमयेन प्रेमालापं तथा व्यतीहां विनिमयेन नखक्षतादिस्मरचेष्टां च तथा व्यतीक्षां च विनिमयेन कटाक्षैरीक्षणं च । एकान्तानुरक्तां स्वप्रेयसीं मामजानन्निवेत्यर्थः ॥

क्रुधां । युत् । संपत् । विपत् । इत्यत्र "कृत्०" [ ११४ ] इत्यादिना क्विप् ॥

---

१ ए सी डी °ह्रीमां ह्री°. २ ए सी डी °तीक्षा च.

---

१ ए अध्येष°. २ ए सी डी °लापं त°. ३ बी °ष्टां त°. ४ सी डी °रक्ताम्व°. ५ ए सी डी °भा । यत.

अभीः भीति । अह्रीः ह्रीतिम्[1] । अत्र "भ्यादिभ्यो वा" [ ११५ ] इति वा क्विप् ॥

व्यावभाषीम् । अत्र "व्यतिहारे०" [ ११६ ] इत्यादिना ञः ॥ अनीहादिभ्य इति किम् । व्यतीहाम् । व्यतीक्षाम् ॥

अद्यैवाजीवनिर्मेऽस्तु यावद्वीक्षे वराक्यहम् ।
ग्लानिहानी न ते नाथ म्लानिज्यानी कुलस्य च ॥१९॥

१९. हे नाथाहं वराकी कृपापात्रं यावत्ते ग्लानिहानी हर्षक्षयाङ्गक्षयौ कुलस्य तव वंशस्य म्लानिज्यानी त्वन्मृत्युना मालिन्यं क्षयं च न वीक्षे[2] तावन्मेऽद्यैवाजीवनिर्मृत्युरस्तु ॥

अजीवनिः । अत्र "नञोनिः शापे" [ ११७ ] इत्यनिः ॥

ग्लानिहानी । ज्यानी । अत्र "ग्लाहाज्यः" [ ११८ ] इत्यनिः ॥ ग्लानि । इत्यपि कश्चित् ॥

का कारिः कान्त कर्पूरे कस्तूर्यां का च कारिका ।
का कृतिश्चन्दने कृत्या कागरौ[1] सख्यु का क्रिया ॥ २० ॥
इति पृष्टस्य प्रत्येकं सर्वेत्युक्तं पुरा तव ।
स्मरन्त्यर्हाम्यहं वह्निवेशिकां कासिकाद्य मे ॥ २१ ॥

२०, २१. अहं वह्निवेशिकामग्नौ प्रवेशमर्हामि[3] । कासिकाद्य मे कोऽद्य ममावस्थातुं पर्यायः । कीदृक्सत्यहम् । स्मरन्ती । किमित्याह । हे कान्त कर्पूरे । निमित्तसप्तमीयम् । यथा शरदि पुष्पन्ति(?)[4] । आतपे क्लाम्यतीति । कर्पूरनिमित्ता कर्पूरहेतुका या कारिर्विलेपनमण्डन-

१ सी डी कागुरौ.

१ बी °ति । अ°. २ बी वीक्ष्ये ता°. ३ ए °र्हामि । का°. ४ ए सी डी °ष्पन्ते । आ°.

केशवस्त्रगृहवासनादिका[1] क्रिया सा का । कोर्थः । कर्पूरहेतुकं किं विलेपनं क्रियते मण्डनं वा केशादिवासना वेत्यादिः[2] । एवं कस्तूर्यां का च कारिका । चन्दने का कृतिस्तथागरौ[3] का कृत्या क्रिया तथा स्रक्षु पुष्पमालासु च का क्रियेत्येवंप्रकारेण पुरा पूर्वं मया पृष्टस्य तैव[4] प्रत्येकमेकं कर्पूरादि प्रति सर्वा विलेपनादिका समस्ता कारि-(रिः) कारिका[5] कृतिः कृत्या क्रिया चेत्येवंविधं प्रेमातिशयोत्थमुक्तं वचनम् ॥

मममेधोभक्षिकोत्पेदे[1] धारयामीक्षुभक्षिकाम् ।
यां ते तां[2] मुञ्च मेन्ताय[3] यत्त्वदापद्विपूचिका[4] ॥ २२ ॥

२२. यद्यस्मात्त्वदापद्विपूचिका[6] तवापदेव विपूचिका[7] मरणान्त उदरमहारोगस्त्वज्जीवितायां मेन्ताय[8] मृत्युहेतुरस्ति तस्मान्ममैधोभक्षिका[9] काष्ठभक्षणमुत्पेदेवश्यकर्तव्यतया संपन्नेत्यर्थः । मृत्युहेतावुपस्थिते हि सत्त्वाधिकाः काष्ठभक्षणादि कुर्वन्ति । तस्माद्यामिक्षुभक्षिकामिक्षुभक्षणं ते तुभ्यं धारयामि तां मुञ्च । अनृणीभूयैव हि काष्ठभक्षणं क्रियत इति स्थितिः ॥

अरोचकः कारिकायां जीविते भापणे च मे ।
पयःपानं सुखं प्रेत्य करिष्यामि त्वया सह ॥ २३ ॥

२३. मे मम कारिकायां भोजनादिक्रियायां जीविते भापणे च विषये न रोचतेत्रारोचको रोगविशेपोरुचिरित्यर्थः । तस्मात्प्रेत्य भ-

---

१ ए ममेधो°. २ ए सी डी यां त तां. ३ सी डी मेताय. ४ बी °द्विशूचि°.

---

१ बी °केमव°. २ बी सी डी °त्यादि । ए°. ३ सी डी °थागुरौ. ४ ए सी डी तत्र प्र°. ५ बी सी डी °रिका कृ°. ६ बी °द्विशूचि°. ७ बी विशूचि°. ८ ए सी डी मेताय. ९ बी °न्ममेधोभ°

वान्तरं गत्वा त्वया सह सुखं त्वयाविरहितत्वेनैव सुखकारि पयःपानं दुग्धपानं करिष्यामि । एषा हि नागभार्या । नागानां च दुग्धमेव प्रियमित्युक्तं पयःपानं करिष्यामीति ॥

**राजाच्छादनवस्त्रा प्रागनन्दनी रमणीषु या ।**
**प्रसादकारणात्ते सा यायां प्रपतनं न वा ॥ २४ ॥**

२४. याहं प्राक्प्राचि काले ते तव प्रसादकारणात्प्रसादाद्धेतो रमन्ते कान्तेषु रमण्यस्तास्वन्यभार्यासु मध्ये नन्दनी समृद्धा मुख्येत्यर्थः । अभूवम् । कीदृक्सती । राजाच्छादनानि राजभिः परिधेयान्यतिश्रेष्ठानीत्यर्थः । वस्त्राणि यस्याः सा साहं ते प्रपतनं झम्पादानस्थानं न वा यायां काका किं तु यातुमर्हामि । "शक्तार्हे कृत्याश्च" [ ५. ४. ३५ ] इत्यर्हे सप्तमी । त्वया सहास्म्यपि झम्पां दास्यामीत्यर्थः ॥

**भोजनाच्छादने लुब्धा प्राप्ते प्रस्कन्दनं त्वयि ।**
**इध्मव्रश्चनगोदोहनीभृत्स्थास्यामि किं न्वहम् ॥ २५ ॥**

२५. त्वयि प्रस्कन्दनं कूपे पतनाय तत्तटं प्राप्ते सति भोजनाच्छादने भोजने वस्त्रे च लुब्धा सती किं न्वहं स्थास्यामि । कीदृशी । इध्मव्रश्चनगोदोहनीभृत्काष्ठभारानयनाय गवां दोहनाय च परशुपारिकाधारिणी । इदमुक्तं स्यात्पतिं विना हि स्त्रिया भोजनायाच्छादनाय च काष्ठभारानयनगोदोहनादिनीचकर्माण्येव कार्याणि तान्यहं पतिमनुगच्छन्ती नैव करिष्यामीत्यर्थः ॥

---

१ बी °नां हि दु°. २ ए °सादाद्धे°. ३ ए ससुद्धा मुख्येत्य°. सी डी समुद्धा मु°. ४ बी °द्धा मुख्येत्य°. ५ बी साहं. ६ डी स्त्रियो भो°.

का कारिः । का कारिका । का क्रिया । का कृत्या । का कृतिः ॥ आख्याने । सर्वा कारिः । सर्वा कारिका । सर्वा क्रिया । सर्वा कृत्या । सर्वा कृतिः । अत्र "प्रश्न०" [ ११९ ] इत्यादिना वेञ् ॥

कासिका । अग्नि(वह्नि?)वेशिकामर्हामि । इक्षुभक्षिकां ते धारयामि । ममेधोभक्षिकोत्पेदे ॥ प्रश्ने । का कारिका ॥ आख्याने । सर्वा कारिका । इत्यत्र "पर्याय०" [ १२० ] इत्यादिना णकः ॥

विपूचिका । अरोचकः । अत्र "नाम्नि पुंसि च" [ १२१ ] इति णकः ॥

कारिकायाम् । अत्र "भावे" [ १२२ ] इति णकः ॥

जीविते । अत्र "क्लीबे क्तः" [ १२३ ] इति क्तः ॥

भाषणे । अत्र "अनट्" [ १२४ ] इत्यनट् ॥

पयःपानं सुखम् । राजाच्छादनवस्त्रा । इत्यत्र "यत्कर्म०" [ १२५ ] इत्यादिनानट् ॥

रमणीषु । नन्दनी । इत्यत्र रम्यादित्वादनट् [ १२६ ] ॥

कारणात् । इति "कारणम्" [ १२७ ] इति साधु ॥

भोजनाच्छादने । प्रपतनम् । प्रस्कन्दनम् । अत्र "भुजि०" [ १२८ ] इत्यादिनानट् ॥

इध्मव्रश्चन । गोदोहनी । इत्यत्र "करणाधारे" [ १२९ ] इत्यनट् ॥

ऊपाकरे प्रवानेर्हेसंचरेगोचरव्यजे ।
वहाभस्कन्धवत्रास्यमक्षिकाव्रजसंकुले ॥ २६ ॥
खलस्य मृत्योर्निगमे कूपेसिन्नापदापणे ।
त्वं वेक्ष्यस्यहमीक्षिष्ये धिक् स्त्रियो वक्रचेष्टिताः ॥ २७ ॥

१ ए सी डी °हास्त्र°.

१ डी कारिका. २ सी डी °शिका°. ३ बी विशूचि°. ४ बी साधुः ॥ भो°. ५ डी °तनीम्.

२६, २७. अस्मिन्कूपे त्वं वेक्ष्यसि प्रवेक्ष्यस्यहमीक्षिष्येतश्च बकचेष्टिता बकवृत्तीः स्त्रियो धिग्गर्हे । यदि स्त्रियो बकवन्मायाविन्यो नाभविष्यंस्तदाहं स्त्री तव प्राणेभ्योप्यतिप्रिया त्वत्पुर एव कूपे प्रा-[1]वेक्ष्यमित्यर्थः । किंभूतेस्मिन् । ऊ[2]पाकरे द्रवरूपक्षारद्रव्यविशेषस्य स्थाने तथा प्लवानर्हेतिसंकीर्णत्वात्प्लवेनोडुपेन तरीतुमशक्य इत्यर्थः । तथा नास्ति संचरः प्रवेशमार्गो यत्र तस्मिंस्त[3]थातिनिम्नत्वादत्यन्धकारवत्त्वान्मक्षिकातिव्याप्तत्वा[4]च्चागोचरोविषयोदृश्य इत्यर्थः । व्यज ऊपाकर्षणाय रज्जुबद्धघट्यादीनां निक्षेपमार्गो यत्र तस्मिंस्तथा वंहाभागोस्कन्धदेशतुल्याः स्कन्धा यासां तास्तथा वज्रास्या वज्रवत्तीक्ष्णप्रचण्डवक्त्रा या मक्षिकास्तासां व्रजेन समूहेन संकुले व्याप्तेत एवापदापणे क्रयाणकवत्सुप्राप्यत्वाद्विपदां हट्टेत एव च खलस्य मृत्योर्निर्गमे मार्गतुल्ये[6] पत्तनतुल्ये वा ॥

सत्त्वाकषो धीनिकषो ममासौ कुलयोः कषः ।
सुभगोपस्थितापत्ते ज्वलन्निपकदारुणा ॥ २८ ॥

२८. हे सुभग[7] निपचन्त्यनेन[8] निपक[9]ः कुलालभाण्डपाकस्थानम । ज्वलन्योसौ निपकस्तद्वद्दारुणा संतापिकासौ प्रत्यक्षा ते तवोपस्थितापन्मम सत्त्वाकषः सत्त्वस्य परीक्षोपलस्तथा धीनिकषो बुद्धिपरीक्षोपलस्तथा कुलयोर्मातापितृपक्षयोः श्व[10]शुरपितृपक्षयोर्वा कषः । अस्यां विपदि त्वदनुगमनेन निर्व्यूढाया मम सत्त्वादीनि प्रमाणीभविष्यन्तीति भा[11]वः ॥

---

१ ए सी डी °वेक्षामि°. २ डी °पाकारे. ३ बी °थाति°. ४ ए °त्वागो°. सी डी °त्वादगो°. ५ ए सी डी वज्रा°. ६ डी °ल्ये वा. ७ डी °ग विप°. ८ डी °न विप°. ९ ए डी °पकस्त°. सी °पक्वस्त°. १० बी श्वसुर°. ११ ए °वः । कार°.

करणे । प्लव ॥ आधारे । आकरे । अत्र "पुंनाम्नि घः" [ १३० ] इति घः ॥

गोचर । संचरे । वह । व्रज । व्यजे । खलस्य । आपणे । निगमे । बक । सुभग । कंषः । आकंषः । निकषः । एते "गोचर०" [ १३१ ] इत्यादिना निपात्याः ॥ निपक । इत्यपि कश्चित् ॥

दशावतार्या आरामान्नद्युत्तारेवतारभाक्।
चेष्ट्यवस्तारयुग्मा गाद्विघ्नः कोपीत्यथोच्चल ॥ २९ ॥

२९. अथाथ वा किं बहूक्तेनेत्यर्थः । उच्चल मया सह कूपे प्रवेशाय शीघ्रं प्रचल । कस्मात् । इति हेतोः । तमेवाह । अवतरति विष्णुरेष्वित्यवतारा मत्स्यादय एषां पूजार्थं प्रतिकृतयोप्यवतारा मत्स्यादीनां प्रतिमाः । दशावताराः समाहृता दशावतारी तदर्थं भवनमप्युपचाराद्दशावतारी तस्या दशावतारीभवनस्य संबद्धात्सरस्वतीनिकटवर्तिन आरामादुद्यानात्सकाशान्नद्युत्तारे नद्यास्तीर्थेवतारभागवतरन्कोपि नरो मा गान्मा यासीत् । कीदृक् । चेष्टन्तेनेन चेष्टो बलमस्यास्ति चेष्टी तथावस्तृणन्त्यनेनावस्तारः पटभेदस्तेन युग्युक्तश्च सन् । विघ्नो बलेन ग्रहणाद्वस्त्रेण बन्धनाच्च त्वामनुगच्छन्त्या मम कूपप्रवेशेन्तरायहेतुः ॥

करणे । चेष्टी ॥ आधारे । आरामात् । इत्यत्र "व्यञ्जनाद्घञ्" [ १३२ ] इति घञ् ॥

---

१ ए सी डी °क् । चेष्ट्य°. २ ए डी °च्चलः । अ°.

---

१ डी °रे । अ°. २ ए सी कष । आ°. ३ ए °कष । नि°. सी °कथ । नि°. ४ सी डी °गभ°. ५ डी °ष्टतेने°. ६ सी °न् । ब°.

अवतार्यः । अवस्तार । इत्यत्र "अवेस्तृस्तृभ्याम्" [ १३३ ] इति घञ् ॥ बहुलाधिकारादसंज्ञायामपि । अवतार । भावेत्र घञ् । उत्पूर्वादपि । उत्तारे ॥

शुक्संहारः कृपाधारो गुणावायोथ भूपतिः ।
वचः कुञ्जे लतोद्यावे श्रुत्वेत्यभिससर्प सः ॥ ३० ॥

३०. अथ स भूपतिर्जयसिंह इति पूर्वोक्तं वचः श्रुत्वा लतोद्याव उद्यूयन्ते तिलादयोस्मिन्नुद्यावो यज्ञपात्रं लतानामुद्याव इव वल्लीनामाधार इत्यर्थः । कुञ्जे वनगहनेभिससर्पाभिमुखं ययौ । यतः कीदृक् । शुचः शोकस्य संहारो मधुरवचनादिना प्रलयकालतुल्यस्तथा कृपाधारः कृपालुः । कृपाधारोपि यदि शौर्यादिगुणहीनः स्यात्तदा तत्र गन्तुं न शक्नुयादित्याह । गुणावाय एत्य वयन्त्यत्रावायस्तन्तुवायशाला गुणाः शौर्यादय एव गुणास्तन्तवस्तेषामावाय इव ॥

तत्र स्वदारसंतुष्टो न्यायाध्यायो ददर्श सः ।
अजारचेष्टितं द्वन्द्वमवहारालयोपमः ॥ ३१ ॥

३१. अवहारालयो ग्राहाकरोब्धिस्तेनोपमा यस्य स तथाब्धिगम्भीरः स राजा तत्र कुञ्जे द्वन्द्वं स्त्रीपुरुषमिथुनं ददर्श । कीदृशम् । न जाराणां चेष्टितं चौर्यरतव्यञ्जिका व्याकुलत्वादिचेष्टा यस्य तत् । न च वाच्यमसौ कामवासनया स्त्रीदर्शनाभिलाषेणैतद्ददर्श । यतः स्वदारसंतुष्टः । एतदपि कुत इत्याह । न्यायाध्यायो न्यायस्याध्याय इव मूर्त नीतिशास्त्रमिवेत्यर्थः ॥

न्याय । आवायः । अध्यायः । उद्यावे । संहारः । अवहार । आधारः । दार । जार । इत्येते "न्याय०" [ १३४ ] इत्यादिना निपात्याः ॥

१ ए °वात्तृस्तृ°. बी °वात्तृस्तृभ्या°. २ सी °यशा°. ३ ए सी डी गुणा शौ°. ४ बी °णाः मौर्या°. ५ बी न्यायध्या°. ६ बी °य । अवा°. ७ सी डी °ध्याय । उ°. ८ ए बी सी °हारः । आ°.

**ऊचे शुष्काखरानायगतमीनातुरं नरम् ।**
**क्षरत्सुधोदङ्करसोपमस्मितभृताखनः ॥ ३२ ॥**

३२. राजा नरमूचे । कीदृक्सन । सुधोदच्यतेनेन सुधोदङ्कस्तस्य रसः सुधैव क्षरन्यः सुधोदङ्करसस्तेनात्याह्लादकत्वादुपमा यस्य तत्तथा यत्स्मितमीषद्धास्यं तेन भृता आखनाः खानकानि येन स तथा । किंभूतं नरम । शुष्काखरः शुष्काखानकमानायो जालं द्वन्द्वे तयोर्गतः पतितो यो मीनस्तद्वदातुरमाकुलम् ॥

यदूचे तदाह ।

**उदकोदञ्चनी कस्त्वमत्राखविषमे तटे ।**
**स्वभासाखनिकवकान् व्योमाखानं च पूरयन् ॥ ३३ ॥**

३३. आखविषमे खानकैर्विषमेत्र तटे कूपतीरे कस्त्वम् । कीदृक् । स्वभासा स्वकान्त्याखनिकवकान्खानकानि व्योमाखानं चाकाशमेव खानकं च पूरयंस्तथोदकोदञ्चन्युदकोदञ्चनयुक्तः ॥

**सुलभापदि देशेस्मिन्महाखनिकदुर्गमे ।**
**शुचिम्लायतिखेदीनां विषयः का न्वियं च ते ॥ ३४ ॥**

३४. अस्मिन्देशे प्रदेशे ते तव संबन्धिनीयं प्रत्यक्षा स्त्री च का नु का । किंभूते । महाखनिकैर्दुर्गमं दुःखेन गमनं यत्र तस्मिन्नत एव सुलभेन सुखप्राप्या प्रधाना आपदो यत्र तस्मिन । किंभूतेयम् । शुचिम्लायतिखेदीनां शुचीति म्लायतीति खेदीति शब्दानां विषयः शुच्-म्ला-खिद्-धातूनां शोचति म्लायति खिद्यत इत्यादिप्रयोगेषु क-

१ बी °हाखानि°. २ बी °निप्राखय°.

१ सी डी °धोदुच्य°. २ ए सी डी शुष्काख°. ३ ए सी डी शुष्काखा°. ४ डी °कानि. सी °कान्खन°. ५ ए सी डी °नी प्र°. ६ सी °यते म्ला°.

त्र्तित्वेन गोचर इत्यर्थः । यद्वा शुचिः शोको म्लायतिर्म्लानिः खेदिर्दैन्यं धात्वर्थास्तेषामाधारत्वेन विषयः ॥

यच्चानीषत्करं कृत्यं तत्रापीषद्वचं त्वया ।
सुवचं दुर्वचमपि सज्जनैर्हि सतां पुरः ॥ ३५ ॥

३५. अनीषत्करं च न केवलं सुखसाध्यं[1] दुःखसाध्यं च यत्कृत्यमास्ते तत्रापि विषये[2] त्वयेषद्वचमनायासेन वक्तव्यं दुःसाध्यमपि निःशङ्कमुच्यतामित्यर्थः । हि यस्माद्दुर्वचमपि[3] कष्टहेतुत्वाद्दुःखेन वाच्यमपि सतां साधूनां पुरः सज्जनैः सुवचमुभयेषामपि साधुत्वेनैक्यात् ॥

ईषन्म्लानंभवं स्वार्तंभवं वा दुःस्थिरंभवम् ।
कस्मात्त्वया त्वदार्त्या यदीषदार्द्रंकरोस्म्यहम् ॥ ३६ ॥

३६. यद्यस्मात्त्वदार्त्या कर्त्र्याहमीषदार्द्रंकरो[4]नायासेनार्द्रचित्तीक्रियेतिपीड्य इत्यर्थः । तस्मादहो नर त्वं वदेतिगम्यते । कस्माद्धेतोस्त्वयेषन्म्लानंभवमीषदनायासेन म्लानीभूयते स्वार्तंभवं[5] वा सुखेनार्तीभूयते च[6] । दुःस्थिरंभवं वा विमनस्कत्वेनात्र दुःखेन स्थिरीभूयते च ॥

सुविक्लवंकरः कच्चिदसि दुर्विक्लवंकरैः ।
द्विड्भिर्दुःशासनैर्दुर्योधनैर्दुर्दर्शनैरथ ॥ ३७ ॥

३७. कच्चिदिष्टपरिप्रश्ने । असि त्वं द्विड्भिः शत्रुभिरथ किं सुविक्लवंकरः सुखेन विक्लवीक्रियसे[7] परिभूयस इत्यर्थः । किंभूतैः । दुर्द-

[1] ए सी डी °ध्यं च. [2] डी °येष°. [3] ए सी डी °चनम°. [4] बी सी डी °दार्द्रक°. [5] ए सी डी स्वातंभ°. [6] ए सी डी च । दुःस्थि°. [7] ए सी डी °से भू°.

शैनैरतितेजस्वित्वाद्दुःखेनावलोक्यैस्तथा दुःशासनैर्बलिष्ठत्वाद्दुःखेन शिक्षणीयैरत एव दुर्योधनैरन्तर्भूतणिगर्थत्वेन दुःखेन योधनीयैरत एव च दुःखेनाविक्लवा[1] विक्लवाः क्रियन्ते ये तैर्दुरभिभवनीयैरित्यर्थः ॥

**अनीषच्छासनो[1] दुर्धर्षणो[2] दुर्मर्षणोपि च ।**

**मया सुशासनस्तेरिर्दुरुत्थानं न तत्त्वया ॥ ३८ ॥**

३८. तेरिर्मया सुशासनः सुखेन शिक्षणीयः । किंभूतोपि । अनीषच्छासनोपि तथा दुर्धर्षणो[2] दुरभिभवनीयोपि दुर्मर्षणोपि च दुःसह्योपि च । तत्तस्मात्त्वया न दुरुत्थानं किं तु सुखेन त्वयोदेतव्यमित्यर्थः ॥

**ईषद्दानं मयानीषद्दानेपि त्वत्कृते[3] सखे ।**

**सुयानमसुयानेपि दुर्ज्ञानं तद्वदेहितम्[4] ॥ ३९ ॥**

३९. हे सखेनीषद्दाने दुःखेन देयेपि वस्तुनि विषये त्वत्कृते त्वदर्थं मयेषद्दानं सुखेन दीयते तथासुयानेपि महाकूपादौ सुयानं सुखेन गम्यते तत्तस्माद्दुर्ज्ञानं दुर्ज्ञेयमीहितं स्वाभिप्रायं वद ॥

**तेजोदुर्दर्शदुर्धर्षमूचे सोपीति भूपतिम् ।**

**शृणु दुःशास दुर्योध दुर्मर्षाशेषमावयोः ॥ ४० ॥**

४०. स्पष्टः । किं त्वावयोः संबन्धयशेषं समस्तमर्थाद्वृत्तान्तम् ॥

उदञ्क । इति "उदङ्कोतोये" [ १३५ ] इति निपात्यम् ॥ अतोय इति किम् । उदकोदञ्चनी[3] ॥

आनाय । इति "आनायो जालम्" [ १३६ ] इति निपात्यम् ॥

---

१ प दुर्मे॰. २ सी ॰णो नं. डी ॰णोपि. ३ डी ॰ते सुखे. ४ डी ॰हिनां । हे.

---

१ प सी डी ॰क्लवाः क्रि॰. २ डी ॰णोपि च. ३ सी ॰र्ना । अना॰.

आख । आखर । आखनिक । आखनिकवकान् । आखनः । आखानम् । अत्र "खनो ड०" [ १३७ ] इत्यादिना ड-डर-इक-इकवक-घ-घञ्-प्रत्ययाः ॥

खेदीनाम् । शुचि । म्लायति । इत्यत्र "इकि०" [ १३८ ] इत्यादिना-इकिस्तिवः ॥

भावे । दुर्गमे । सुलभ । ईषद्वचं त्वया ॥ कर्मणि । दुर्वचम् । सुवचम् । अनीषत्करम् । अत्र "दुःसु०" [ १३९ ] इत्यादिना खल् ॥

दुःस्थिरंभवम् । स्वातंभवम् । ईषन्म्लानंभवम् । दुर्विक्रुवं[ करः । सुविक्रुवं]करः । ईषदाढ्यंकरः । अत्र "च्व्यर्थे०" [ १४० ] इत्यादिना खल् ॥

दुःशासनैः । सुशासनः । अनीषच्छासनः । दुर्योधनैः । दुर्दर्शनैः । दुर्धर्षणः । दुर्मर्षणः ॥ आदन्त । भावे । दुरुत्थानम् । सुयानम् । ईषद्दानम् ॥ कर्मणि । दुर्ज्ञानम् । असुयाने । अनीषद्दाने । अत्र "शास(सू ? )युधि०" [ १४१ ] इत्यादिनानः ॥ आदन्तवर्जितेभ्यः केचिद्विकल्पमिच्छन्ति । तन्मते दुःशास । दुर्योधः(ध) । दुर्दर्श । दुर्धर्ष[म्] । दुर्मर्ष । इति ॥

एकोनविंशः पादः ॥

**मर्त्यलोकात्कदायात एष आयामि नन्वहम् ।**
**गमिष्यसि कदा तत्र गच्छाम्ययमहं ननु ॥ ४१ ॥**
**आयान्तं पश्य यान्तं मामित्यन्योन्योक्तिशालिभिः ।**
**नागै रम्यास्ति पाताले नाम्ना भोगवती पुरी ॥ ४२ ॥**

४१, ४२. अहो त्वं मर्त्यलोकात्कदायात आगम इति प्रश्ने । एकः कश्चित्प्रत्याह । नन्विति प्रतिवचने । एष आयाम्यधुनैवागा-

१ ए °म्यह. २ ए डी °त्यन्योक्ति°.

१ डी °खरनिक । आखानिक । आ°. २ बी आखानः. ३ ए इति किश्तिवः. ४ ए °क्रुवं । ई°. ५ डी °म् । ई°. ६ डी दुर्म°.

मित्यर्थः । अपरस्त्वाह । आयान्तं पश्याधुनैवागतं जानीहीत्यर्थः । तथाहो तत्र मर्त्यलोके कदा त्वं गमिष्यसीति प्रश्न एकः प्रत्याह । नन्वयमहं गच्छाम्यधुनैव गमिष्यामीत्यर्थः । अपरस्त्वाह । यान्तं मां पश्याधुनैव गमिष्यन्तं जानीहीत्यर्थः । इत्येवंविधा या अन्योन्यमुक्तयस्तच्छालिभिः । शिष्टं स्पष्टम् ॥

कदागा अयमागां कर्हेष्यस्येष्याम्यसौ विभो ।
इतीशालापवांस्तत्र रत्नचूडोस्ति नागराट् ॥ ४३ ॥

४३. तत्र भोगा(ग)वत्यां रत्नचूडो नाम नागराडस्ति । कीदृक् । ईशस्य वासुकेरालापः संभाषणा तद्वान् । आलापमेवाह । अहो कदागाः सेवार्थं मत्पार्श्वे कस्यां वेलायामायासीरिति प्रश्ने प्रत्या[ह] । हे विभो अयमागां तवा(था)हो कर्हे(र्ह्ये)ष्यसि । अधुना मत्पार्श्वाद्गतः पुनः कदागमिष्यसीति प्रश्न आह । असावेष्यामीति । अतिमान्यत्वाद्वासुकिस्त्वकण(किस्तं क्षण?)मपि सु(स्व?)पार्श्वान्मोक्तुं नेच्छतीत्यर्थः ॥

कदायातः । एष आयामि । आयान्तं पश्य । कदा गमिष्यसि । अयं गच्छामि । यान्तं पश्य । इत्यत्र "सत्०" [ १ ] इत्यादिना वर्तमानावत्प्रत्ययाः । वावचनाद्यथाप्राप्तं च । कदागा अयमागाम् । कर्ह्येष्यसि एष्याम्यसौ ॥

शङ्खपालकुलोत्तंस त्वमायासी रणे यदि ।
दैत्यानजैषमित्यूचे स्वयं वासुकिनापि यः ॥ ४४ ॥

४४. स्पष्टः । किं तु । आयासीरागमिष्यसि । अजैषं जेष्यामि । यो रत्नचूडः । एतेनास्यातिविक्रान्तत्वोक्तिः ॥

१ प कर्हेष्यस्येष्या°. २ प °नजीष°.

१ सी अजेषं. २ प °स्या वि°.

यद्यधीषे प्रहृष्याम इति नित्यं प्रशासितुः ।
नाम्ना कनकचूडोहं पुत्रस्तस्य महौजसः ॥ ४५ ॥

४५. स्पष्टः । किं तु हे पुत्र यदि त्वमधीषे पठिष्यसि तदा वयं प्रहृष्यामो हर्षिष्याम इत्येवंप्रकारेण प्रशासितुः शिक्षयितुः । तस्य रत्नचूडस्य ॥

यद्येष्यति गुरुश्छन्दोध्येष्ये चेच्छ्रोरमेष्यति ।
श्वोध्येष्ये तर्कमप्याश्वित्युक्त्या तातमर्पयः(महर्पयम् ?)४६

४६. स्पष्टः । किं तु गुरुरुपाध्यायः । छन्दश्छन्दःशास्त्रम् । चेच्छ्वः कल्ये । गुरुररं शीघ्रमेष्यति । तदाहं तर्कमपि न केवलं छन्दः ॥

यद्यादेक्ष्यस्यथाशंसेधीयीय मि(नि)खिलागमान् ।
त्वं चेत्प्रसन्नः सिद्धा मे विद्येति गुरुमस्तवम् ॥ ४७ ॥

४७. अहं गुरुमुपाध्यायमस्तवम् । कथमित्याह । हे गुरो त्वं यद्यादेक्ष्यस्याज्ञापयिष्यसि । अथानन्तरं तदेत्यर्थः । अहमाशंसे संभावये निखिलागमानधीयीय पठिष्यामीत्यर्थः । यतस्त्वं चेत्प्रसन्नो मयि प्रसन्नीभविष्यसि तदा मे विद्या सिद्धा सेत्स्यतीति ॥

रणे यदि त्वमायासीर्दैत्यानजैषम् । यद्यधीषे प्रहृष्यामः । अत्र "भूतवच्चाशंस्ये वा" [ २ ] इति भूतवत्सद्व्च प्रत्ययाः ॥ पक्षे यद्येष्यति गुरुश्छन्दोध्येष्ये ॥

क्षिप्रार्थे । चेच्छ्रोरमेष्यति । श्वोध्येष्ये तर्कमप्याशु ॥ आशंसार्थे । यद्यादेक्ष्यस्यथाशंसेधीयीय निखिलागमान् । इत्यत्र "क्षिप्र०" [ ३ ] इत्यादिना भविष्यन्तीसप्तम्यौ ॥ क्षिप्रार्थैते न(र्थ एते नेति ?) वक्तव्ये भविष्यन्तीवचनं स्व(श्व)स्तनीविषयेपि भविष्यन्ती यथा स्यादित्येवमर्थम् ॥

१ सी डी °ष्यसि । श्वो°. २ ए °त्युक्तनो । तम°. ३ सी तातेम°.

१ सी डी °सप्तमी°.

त्वं चेत्प्रसन्नः सिद्धा मे विद्या । इत्यत्र "संभावने सिद्धवत्" [ ४ ] इति सिद्धवत्प्रत्ययाः ॥

अद्य यावद्भृशमदा यावज्जीवं च दास्यति(सि) ।
प्रीतिं ममेति संतुष्टो गुरुर्मां पर्यपाठयत् ॥ ४८ ॥

४८. कीदृक्सन । संतुष्टः संतोषवाक्यं भणन्नित्यर्थः । कथमित्याह । अद्य यावदद्यतनं दिनं यावद्भृशमत्यर्थं मम प्रीतिं विनयादिना प्रमोदमदास्तथा यावज्जीवं च दास्यसि । यावज्जीवसि तावद्दास्यसि चेति ॥

अतीता याष्टमी तस्यामनि(न)ध्यायोजनिष्ट यत् ।
यापि चागामिनी तस्यामनि(न)ध्यायो भविष्यति ॥४९॥
तद्गन्ताध्वा य आवेश्मास्यावरार्धेपि संहिताम् ।
गुणयिष्यामि तातैवं ब्रुवन् गुरुमरञ्जयम् ॥ ५० ॥

४९, ५०. स्पष्टौ । किं तु तत्तस्मादनध्यायस्य भूतत्वाद्भविष्यत्वाच्च हेतोरावेश्म वेश्म यावद्योध्वा मार्गो गन्तां(न्ता) मया यास्यते कर्मणि श्वस्तनी । अस्याध्वनोवरार्धेप्यर्वाग्भागेपि संहितां सप्तशतप्रमाणं ग्रन्थभेदं गुणयिष्याम्यनध्यायद्वयेगुणनेन शास्त्राणां विस्मरणभयाद्यथा सर्वेषां शास्त्राणां गुणनं स्यादिति संहितां प्रयत्नेने(त्ने)न शीघ्रं गुणयिष्यामीत्यर्थः । हे तात गुरो ॥

अद्य यावद्भृशं प्रनी(प्रीति)मदाः । यावज्जीवं प्रीतिं दास्यसि ॥ आसत्तौ । अतीता याष्टमी तस्यामनध्यायोजनि[ष्ट] । यापि चागामिनी तस्यामनध्यायो भविष्यति । इत्यत्र "नानद्यतनः०" [ ५ ] इत्यादिना ह्यस्तनीस्व(श्व)स्तन्यौ न ॥

गन्ताध्वा य आवेश्मास्यावरार्धेपि संहितां गुणयिष्यामि । इत्यत्र "एष्यति०" [ ६ ] इत्यादिना श्वस्तनी न ॥

---

१ **सी डी** °नं या°. २ **सी डी** °श्म या°. ३ **प** °यत्नेन. ४ **बी** °ना स्वस्त°.

योयं हेमन्त आगाम्याग्रहायण्यास्ततोवरे ।
पुष्पिष्यन्ति ममोद्याने लवल्यः सर्वतोपि हि ॥ ५१ ॥
आगामी पौषमासो यो दशरात्रोस्य योवरः ।
तत्र कर्तास्महे युक्ता मित्रैरुद्यानिकोत्सवम् ॥ ५२ ॥
त्रिंशद्रात्रो य आगाम्यवरे तस्यार्धमासि तु ।
श्रोतास्मि द्विर्गुरोर्व्याख्यां पृथग्व्याख्या हि तन्मम ॥५३॥
त्रिंशद्रात्रो य उक्तोस्यावरे पञ्चदशाहके ।
न स्वप्तासीति दमनः सहाध्याय्यब्रवीन्मम ॥ ५४ ॥

५१–५४. मम सहाध्यायी दमनो नाम नागकुमारो ममाग्रेब्रवीत् । किमित्याह । योयमित्यादि । स्पष्टम् । किं तु । अयमैपमस्तनः । ततस्तत्र हेमन्ते । आग्रहायण्या मार्गशीर्ष्याः सकाशादवरेर्वाग्भागे । लवल्यो लताविशेषाः । दशानां रात्रीणां समाहारो दशरात्रोवरोर्वाग्भागरूपः । उद्यानं विषयतयास्त(स्त्य?)स्याः क्रीडाया उद्यानिका तस्या उत्सवं कर्तास्महे लवलीपुष्पोच्चयनाद्यर्थं करिष्यामः । तथा त्रिंशद्रात्रस्त्रिंशद्रात्रसमाहाररूपो मासोर्थात्कार्तिक आगामी तस्यावरेर्वाग्भागवर्तिन्यर्धमासि त्वर्धमासे पुनरहं गुरोरुपाध्यायात् । द्वौ वारावस्या द्विर्व्याख्यां श्रोतास्मि । पौषाद्यदशरात्रे ह्युद्यानिकोत्सवेन व्याख्याभङ्गो भावीत्यत्र द्वे व्याख्याने भणिष्यामीत्यर्थः । तत्तस्माद्धेतोर्हि स्फुटं मम पृथगन्यसहाध्यायिभ्यो भिन्ना व्याख्या भविष्यति ।

१ ए सी डी °द्यानको°. २ सी डी हि तान्मनः । त्रि°. ३ ए सी डी न सुप्ता°.

१ ए सी डी °द्यासिका. २ ए °र्तास्महे व°. सी डी °र्तास्महे. ३ ए सी डी °द्रात्रिम . ४ सी °मागे. ५ बी °वस्यां द्वि°.

तथा यस्त्रिंशद्रात्रः कार्तिक उक्तः पूर्वमागामितया भणितस्तस्यावरे पञ्चदशाहस्केर्वाग्भागवर्तिषु पञ्चदशसु दिनेष्वहं न स्वप्नास्मि व्याख्याद्वयभणनचिन्तनव्याप्रुतत्वेन स्वापवेलाया अभावान्न शयिष्य इति ॥

अयमागामिमासस्य परतः पर्ववासरात् ।
पठित्वा भविता सिद्धो लवलीर्दर्शयिष्यति ॥ ५५ ॥
अदर्शयिष्यो लवलीस्त्वं तक्षककुलाग्र्य चेत् ।
अत्याश्चर्यं न कस्योदपादयिष्यः सचेतसः ॥ ५६ ॥
दृष्टस्त्वं कुहकस्यार्थी तद्दातान्यश्च भिक्षुकः ।
अप्यद्रक्ष्यत्स चेदप्याप्नास्यद्दृष्टो न तु त्वमु ॥ ५७ ॥
प्रत्यष्ठास्यः कथं मिथ्यैतद्विगर्हामहे वयम् ।
कथं प्रतीयाच्छ्रद्धत्तेन्योपि चेति तमब्रु(ब्र)वम् ॥ ५८ ॥

५५–५८. इत्येवमुपहासप्रकारेणासत्यवादित्वप्रकारेण च तं दमनकमहमब्रु(ब्र)वम् । प्रकारमाह । अहो अयं दमनक आगामिमासस्य कार्तिकस्य संबन्धिनः पर्ववासरात्पूर्णिमादिनात्परतः पश्चात्पठित्वानेकविद्या अधीत्य सिद्धो विद्यासिद्धो भविता भविष्यति । ततो विद्याप्रभावेन लवलीर्दर्शयिष्यति । तथा हे तक्षककुलाग्र्य चेत्त्वं लवलीरदर्शयिष्यस्तदा कस्य सचेतसोत्याश्चर्यं नोदपादयिष्यो हेमन्ते लवल्यो न पुष्पन्त्येवेति । तत्र लवलीः पुष्पिता न दर्शयिष्यसि न च कस्याप्याश्चर्यं करिष्यसीत्यर्थः । हेमन्ते लवल्यः पुष्पन्त्येव परमसौ हेमन्ते लवल्यो न पुष्पन्त्येवेति भ्रान्त्या जानन्नेवं वक्ति । तथा उ हे दमनक मया त्वं कुहकस्येन्द्रजालाश्चर्यस्यार्थी दृष्टस्तद्दाता कुहकस्य

१ डी °यिक्षा ल°. २ ए सी डी °ब्रवाम्.

१ ए उक्तं पू°. २ बी °शदि°. ३ सी डी °यार्थी°. ४ बी सी °विष्य°. ५ सी °या तु कु°.

दातान्यश्च भिक्षुको दृष्टः । परं स भिक्षुकश्चेत्त्वामप्यद्रक्ष्यद्गाढं दृष्टवानभविष्यत्तदा त्वामाम्नास्यत्कुहकविद्यामपाठयिष्यत् । न तु त्वं भिक्षुकेण दृष्टस्तस्मादसतीर्लवलीस्त्वं दर्शयितुं नालं भविष्यसीत्यर्थः । अतश्चैतद्धेमन्ते लवलीनां पुष्पोद्भवनं मिथ्यालीकं कथं त्वं प्रत्यप्रास्थः स्थापितवान्न कथमपीत्यर्थः । वा यद्वा यदि त्वं मिथ्यैतत्प्रतिप्रितवांस्तदा प्रतितिप्र परमित्यर्थः । अन्योपि न केवलमहमपरोपि जनः कथमलीकमेतत्प्रतीयात्प्रतीतवांस्तथा कथं श्रद्धत्ते संभावितवान्न कथमपीत्यर्थः । तस्मादेतद्विस्फुटं गर्हामह इति ॥

योयं हेमन्त आगाम्याग्रहायण्यास्ततोवरे पुष्पिष्यन्ति लवल्यः । अत्र "कालस्य०" [ ७ ] इत्यादिना न श्वस्तनी ॥ अनहोरात्राणामिति किम् । आगामी पौषमासो यो दशरात्रोस्य योवरस्तत्र कर्तास्मह उद्यानिकोत्सवम् । त्रिंशद्रात्रो य आगाम्यवरे तस्यार्धमासि श्रोतास्मि व्याख्याम् । त्रिंशद्रात्रो य उक्तोस्यावरे पञ्चदशाहके न स्वप्तास्मि । इति त्रिविधेप्यहोरात्रे मा भूत् ॥

अयमागामिमासस्य परतः पर्ववासराल्लवलीर्दर्शयिष्यति । भविता सिद्धः । अत्र "परे वा" [ ८ ] इति न श्वस्तनी वा ॥

चेल्लवलीरदर्शयिष्योत्याश्चर्यं कस्य नोदपादयिष्यः । अत्र "सप्तम्यर्थे०" [ ९ ] इत्यादिना क्रियातिपत्तिः ॥ लवलीदर्शनं हेतुराश्चर्योत्पादनं फलं चात्र सप्तम्यर्थः ॥

दृष्टस्त्वं कुहकस्यार्थी तद्दातान्यश्च भिक्षुकः । अप्यद्रक्ष्यत्स चेद्दृष्टयाम्नास्यदृष्टो न तु त्वम् । अत्र "भूते" [ १० ] इति क्रियातिपत्तिः ॥

---

१ बी °द्रक्षद्गा°. २ ए त्वान्नाम्ना°. सी त्वानाम्ना°. डी त्वाम्ना°. ३ बी °थं प्र°. ४ सी °ना श्व°. ५ बी °द्रक्षत्स. ६ डी °दृष्ट्याम्स°. ७ ए °ष्यान्नास्य°. ८ ए ते क्रिया इ°. बी °ते क्रि°.

प्रत्यक्षाख्यः कथं मिथ्यैतद्गर्हामहे वयम् । अत्र "वोतात्प्राक्" [ ११ ] इति वा क्रियातिपत्तिः ॥ वावचनाद्यथाप्राप्तं च । कथं प्रतीयात् । कथं श्रद्धत्ते गर्हामहे ॥

सोपि मामब्रवीदेवं[1] जातु त्वं दुर्जनायसे ।
अपि त्वं विब्रवीष्यस्मानहो गर्हामहे वयम् ॥ ५९ ॥

५९. स्पष्टः । किं तु जात्वपी क्षेपद्योतकौ ॥

अपि त्वं विब्रवीष्यस्मान् । जातु त्वं दुर्जनायसे । अत्र "क्षेपेपि०" [ १२ ] इत्यादिना कालत्रयेपि वर्तमाना ॥ निन्दसि । निन्दि[2]ष्यसि । निन्दितवान् । दुर्जनायसे । दुर्जना[3]यिष्यसे । दुर्जनायितवान् । एवमन्यत्रापि भावना कार्या ॥

कथं हसेर्न्यक्कुरुषे मर्मास्प्राक्षीरुपारु[2]जः ।
परित्यक्ष्यसि साधुत्वं दौर्जन्यं श्रयितासि धिक् ॥ ६० ॥

६०. कथं किमिति त्वं हसेर्मा[4]मुपहसेस्तथा कथं त्वं न्यक्कुरुष उपहासेन मां पराभवसि । कालत्रये प्रयोगावि[5]मौ । तथा कथं मर्मास्प्राक्षीर्दृष्टस्त्वं कुहकस्यार्थीत्यादिना मम मर्मोद्घट्टयस्तथा कथमुपा[6]रुजो मर्मोद्घट्टनेन मामपीडयोत एव कथं त्वं साधुत्वं शिष्टतां परित्यक्ष्यसि । अत एव च कथं दौर्जन्यं श्रयितासि । अत एव च त्वं धिग्धिक्कृतः ॥

कथं हसेः । कथं न्यक्कुरुषे धिक् । इत्यत्र "कथमि०" [ १३ ] इत्यादिना सर्वकालेषु सप्तमीवर्तमाने ॥ वावचनाद्यथाप्राप्तं च । मर्मास्प्राक्षीः । उपारुजः । श्रयितासि । परित्यक्ष्यसि धिक् ॥

---

१ बी °देव जा°. २ ए सी डी °क्षीरपारुजा । प°.

१ डी °त्प्राप्तं. २ ए सी डी °न्दित°. ३ ए सी डी °यित°. ४ डी °मेस्त°. ५ ए सी डी °विधौ । त°. ६ ए सी डी °रुजा म°.

**भुजंगमः स को नाम योस्मान्द्विष्याद्धसिष्यति ।**

**न श्रद्दधे न क्षमे वास्मान्वि(वा वि ?)रोत्स्यति मिषेच्च यः ॥६१॥**

६१. नामेत्याक्षेपे । कः स भुजंगमो योस्मान्द्विष्यात्तथा योस्मान्हसिष्यति । तथा न श्रद्दधे न वा क्षमे यद्योस्मान्विरोत्स्यति विग्रहीष्यति । तथा योस्मान्मिषेच्च स्पर्धेत । कालत्रयेप्यमी प्रयोगाः । सर्वेपि भुजङ्गा अस्मत्तो हीना इति कीदृगेकस्त्वं य एवमस्मासु द्वेषोपहासविरोधस्पर्धाः करोपीत्यर्थः । स्पर्धमानः स कृष्णमित्यादाविवास्मान्मिषेदित्यत्र सकर्मकत्वम् ॥

**न श्रद्दधे न क्षमे वा पुराहमपि दुर्मते ।**

**किं भवानेवमस्मासु ब्रूयाच्चेष्टिष्यतेथ वा ॥ ६२ ॥**

६२. हे दुर्मते कुटिलाशय किं भवानेवमुपहासादिप्रकारेणास्मासु विषये ब्रूयाद्भाषेत । अथ वैवमुपहासादि चेष्टिष्यते चक्षुर्भ्रूविक्षेपविशेषादिना करिष्यति । कालत्रये प्रयोगाविमौ । इदमहं पुरा पूर्वं न श्रद्दधेपि न क्षमेपि वा । "पुरायावतोर्वर्तमाना" [ ५. ३. ७. ] इत्यतीते वर्तमाना । तव मायिनस्त्रिकालविषये एवं वचनचेष्टे परैरुक्ते अप्यहं सरलाशयत्वात्पुरा न संभावितवानपि न च सोढवानपीत्यर्थः ॥

भुजंगमः स को नाम योस्मान्द्विष्याद्धसिष्यति । इत्यत्र "किंवृत्ते०" [१४] इत्यादिना सप्तमीभविष्यन्त्यौ ॥

न श्रद्दधे न क्षमे वा योस्मान्मिषेद्विरोत्स्यति च ॥ किंवृत्तेपि । न श्रद्दधे न

१ बी °ष्यमि । न.

१ ए सी डी °थाम्मा°. २ सी° दुर्गते. ३ ए सी डी °रिति. ४ सी डी °धेषि वा. ५ डी °ष्यतेथ.

क्षमे वा पुरा किं भवानेवमस्मासु ब्रूयाच्चेष्टिष्यतेथ वा । इत्यत्र "अश्रद्धा०" [ १५ ] इत्यादिना सप्तमीभविष्यन्त्यौ ॥

न श्रद्दधे न च सहे लवलीर्दर्शयिष्यति ।
हेमन्ते किंकिलेत्युक्तिर्दौर्जन्यव्यञ्जिका तव ॥ ६३ ॥

६३. अहो कनकचूडेत्येवंविधा तवोक्तिर्दौर्जन्यव्यञ्जिका । केत्याह । न श्रद्दधे न च सहे यदहो दमनक । किंकिलेति वाक्यालंकारे प्रसिद्धिद्योतने वा । पुष्पितत्वेन लोके प्रसिद्धाः पुष्पिता इत्यर्थः । लवलीर्हेमन्ते भवान्दर्शयिष्यति कालत्रये प्रयोगोयं न कदापि दर्शितवान्न च दर्शयिष्यति न च दर्शयतीत्यर्थ इति ॥

भार्या मेत्र पणो यन्न श्रद्दधे न क्षमेष्यहम् ।
अस्ति लोके स यो मां हि विवादेन विजेष्यते ॥ ६४ ॥

६४. अत्र लवलीपुष्पादर्शने भार्या मे पणो यदि हेमन्ते पुष्पिता लवलीर्न दर्शयामि तदा भार्यां हारयामीत्यर्थः । यद्यस्माद्धेतोर्हि स्फुटं यो मां विवादेन विजेष्यते जितवाञ्जेष्यति जयति वा स लोके जगत्यस्तीदमहं न श्रद्दधे नापि क्षमे न कोप्यस्तीत्यर्थः ॥

न श्रद्दधे न च सहे लवलीर्दर्शयिष्यति हेमन्ते किंकिल । न श्रद्दधे न क्षमेष्यहमस्ति लोके स यो मां विजेष्यते । अत्र "किंकिल०" [ १६ ] इत्यादिना भविष्यन्ती ॥

अथाहमब्रु(ब्र)वं चैवं न श्रद्दधे न च क्षमे ।
मिषेत्कोपि मया जातु गर्वी वा विवदेत यत् ॥ ६५ ॥

---

१ सी डी न क्ष°.

१ सी डी °न कि. २ ए सी डी °ली हेम°. ३ डी भार्या हा°. ४ बी °ति म. ५ सी डी °मे नको°.

भवेर्यदि विवादी त्वं हारयेयमहं[1] यदा ।
तदङ्गीकृत एवायं त्वत्पणेन पणो मया ॥ ६६ ॥

६५, ६६. अथ दमनस्यैवंभणनानन्तरमहं चाहमप्येवमब्रु(ब्र)वम । यथाहं न श्रद्दधे न क्षमे च यत्कोपि कश्चिदपि गर्वी गर्विष्ठः सञ्जातु कदाचिदपि मया सह मिषेद्विवदेत वा । परं यदि त्वं विवादी भवेस्तथा यदाहं हारयेयं हरन्तं पणं प्राप्नुवन्तं त्वामनुकूलाचरणेन प्रयुञ्जीय । कालत्रयेमी प्रयोगाः । तत्तदा त्वत्पणेन कृत्वायमेव भार्यालक्षण एव पणो मयाङ्गीकृतः । भवेर्हारयेयमित्यत्रापि न श्रद्दधे न च क्षम इति योज्यम् । यतोसौ दमनस्यापि वादित्वं स्वस्य हारकत्वं चाश्रद्दधानोक्षाम्यंश्चाह ॥

न श्रद्दधे न क्षमे मिषेत्कोपि मया जातु । गर्वी वा विवदेत यत् । हारयेयमहं यदा । भवेर्यदि विवादी त्वम् । इत्यत्र "जातु०" [ १७ ] इत्यादिना सप्तमी ॥

धिग्यत्रेत्याक्षिपेर्निन्देस्त्वं तर्जेर्वा यच्च यत्र वा ।
प्रगल्भेथा जयेर्यच्च न क्षमे श्रद्दधे न तत् ॥ ६७ ॥

६७. हे दमन यत्र निमित्तसप्तम्यर्थे[2] तत्र पू(भू?)तोयमर्थो येनासत्यलवलीपुष्पसमर्थनरूपेण निमित्तेन नोस्मानिति जातु त्वं दुर्जनायस इत्यादिप्रकारेणाक्षिपेर्निन्देस्तथा यच्च तर्जेर्वा । यच्चेति क्रियाविशेषणं भार्या मे[3]त्र पण इति यद्दण्डमाविष्कुर्याश्च तद्भिन्निन्दामस्तथा यत्र वा यस्मिंश्च हैमनलवलीपुष्पदर्शनविषये त्वं प्रगल्भेथा धार्ष्ट्यं

१ ए सी डी °हं चाह°.

१ सी डी सत्वथा त्वत्पण्येन. २ ए °र्थेत्रत्र. ३ सी डी मे प°. ४ सी डी °श्च हे दमन ल°. ५ डी °गल्भथा. ६ ए सी डी °था नक्षमे न श्रद्दधे तत् । इत्य°.

कुर्या यच्च जयेस्तन्न क्षमे न श्रद्दधे चालीकत्वात्। कालत्रयेमी प्रयोगाः ॥

धिग्यच्च तर्जेः। यत्रेत्याक्षिपेर्नस्त्वम्। यच्च जयेः। यत्र प्रगल्भेथाः। न क्षमे न श्रद्दधे तत्। इत्यत्र "क्षेपेपि(च?)०" [१८] इत्यादिना सप्तमी ॥

**चित्रं यत्रैवं[1] जल्पेस्त्वं कुप्येर्यच्चेतिवादिभिः।**
**स्वैर्निषिद्धौ कलेरावां प्रतिज्ञाय पणं स्थितौ ॥ ६८ ॥**

६८. आवां पणं भार्यापणं प्रतिज्ञाय स्थितौ वाक्कलहान्निवृत्तौ। यतः स्वैः[1] स्वजनैः कलेर्वाक्कलहान्निषिद्धौ। किंभूतैः सद्भिः। इतिवादिभिः। यथा चित्रमाश्चर्यं यत्र देशे काले प्रयोजने वा त्वमप्येवं साध्वनुचितं जल्पेर्यच्च त्वमपि कुप्येः। कालत्रये प्रयोगाविति[2] ॥

चित्रं यच्चैवं कुप्येस्त्वम्। यत्रैवं जल्पेः। अत्र "चित्रे" [१९] इति सप्तमी ॥

**चित्रमन्धोद्रिमारोक्ष्यत्ययं यदि जयेद्धि नः।**
**एवमावां प्रजल्पन्तौ ततो निजगृहं गतौ ॥ ६९ ॥**

६९. ततोनन्तरमावां निजगृहं गतौ। किंभूतौ[3] सन्तौ। हि[4] स्फुटं चित्रमाश्चर्यं यद्ययं नोस्माञ्जयेत्तदा चित्रमन्धोद्रिमारोक्ष्यति। कालत्रये प्रयोगौ। एवं जल्पन्तौ ॥

चित्रमन्धोद्रिमारोक्ष्यति। इत्यत्र "शेषे०" [२०] इत्यादिना भविष्यन्ती। अयदाविति किम्। चित्रमयं यदि जयेद्धि नः। अत्राश्रद्धाप्यस्तीति "जातुयद्यदायदौ सप्तमी" [१७] इति सप्तमी ॥

१ सी °त्रैव ज°.

१ सी डी स्वैः क°. २ ए सी डी °ति ॥ य°. ३ बी °भूतौ हि. ४ डी °र्ट चैवमा°.

एषोपि हारयेन्नोत हारयेयं मृशन्निति ।
तेनाहूतोन्यदोद्याने लवलीद्रुमभ्यगाम् ॥ ७० ॥

७०. अहमन्यदा हेमन्ते तेन दमनेनाहूत उद्याने लवलीद्रुमभ्यगाम् । कीदृक्सन । मृशंश्चिन्तयन् । किमित्याह । एष दमनोपि बाढं हारयेत्तथोत बाढमहं न हारयेयं दमनोग्रेपि बाढं हारितवान हारयत्यतोधुनापि हारयिष्यति । नाहं त्वेवमित्यर्थ इति ॥

उत हारयेयम् । अपि हारयेत् । इत्यत्र "सप्तमी०" [ २१ ] इत्यादिना सप्तमी ॥

लवल्याः प्रेक्ष्य पुष्पाणीत्यध्यायं हन्त मायसौ ।
प्रदर्शयेदपि फलान्यपि कल्पद्रुमानयेत् ॥ ७१ ॥

करिष्यत्यन्यदप्येष शक्तो दमनकश्छलम् ।
संभावयामि याचेत पणं म्लानिं च दास्यति ॥ ७२ ॥

७१, ७२. लवल्याः पुष्पाणि प्रेक्ष्येत्यध्यायमचिन्तयं यथा मायी कुहकविद्यया दाम्भिकोसौ दमनोपि लवलानि लवलीफलान्यपि दर्शयेत्तथापि कल्पद्रुमानयेन । मायाबलेनासौ त्रिकालविषयेपि लवलानामपि दर्शने कल्पद्रोरप्यानयने शक्तः संभाव्यत इत्यर्थः । तथैष दमनकोन्यदप्यत्यसंभाव्यमपरमपिच्छलं मायां करिष्यति । यतः शक्तश्छले समर्थोत एव संभावयामि पणमपि याचेत शक्तोयमधुना पण-

१ डी °वल्योः प्र°. २ ए सी डी पणम्ला°.

१ ए बाढम°. २ ए प्रक्षेत्य°. ३ ए दाम्भिको°. *अनया व्याख्यया 'दर्शयेदपि लवलान्यपि कल्पद्रुमानयेत्' इति मूलेन भाव्यमिति भाति. ४ ए सी डी °मनोन्य°. ५ बी °लेन स°.

मपि याचिष्यते याचते याचितवानेवेति[2] संभावयामीत्यर्थः । अत एवं[3] च संभावयामि शक्तोमौ म्लानिमपि दास्यति ॥

अथोचे दमनः संभावयामि लवलानि यत् ।
पश्येर्दातुं[1] पणं चेच्छेर्न मां निन्दितुमिच्छसि ॥ ७३ ॥

७३. स्पष्टः । किं तु लवलानि लवलीपुष्पाणि पश्येः शक्तस्त्वं पश्यसि द्रक्ष(क्ष्य)स्यपश्यश्चेत्यर्थः ॥

तथाहीन्स्माह कोप्येत्य यात्रां वाञ्छति हुल्लडः ।
वाञ्छेदागमनं वोत्र[2] यस्य वारः स गच्छतु ॥ ७४ ॥

७४. स्पष्टः । परं यात्रां पूजाविशेषम । हुल्लडो नाम फणी । वो युष्माकं स्वपार्श्वे आगमनं वाञ्छति । अत्रैतेषु युष्मासु मध्ये यस्य वारो गमनपर्यायः ॥

शक्यसंभावने । अपि फलानि प्रदर्शयेत् ॥ अशक्यसंभावने[4] । अपि कल्पद्रुमानयेत् । अत्र "संभावने०" [ २२ ] इत्यादिना सप्तमी ॥ तदर्थानुक्ताविति किम् । करिष्यत्यन्यदप्येष शक्तः ॥

संभावयामि याचेत पणम् । अत्र "अयदि०" [ २३ ] इत्यादिना वा सप्तमी । पक्षे यथाप्राप्तम् । म्लानिं दास्यति ॥ ददाति । अदात् । इति स्वयं ज्ञेयम् ॥ अयदीति किम् । संभावयामि लवलानि यत्पश्येः । पूर्वेण नित्यं सप्तमी ॥

इच्छेः[5] । इच्छसि । वाञ्छेत् । वाञ्छति । इत्यत्र "सतीच्छार्थात्" [ २४ ] इति वा सप्तमी ॥

---

१ बी °श्येदातुप°. २ ए °नं चोत्र. सी °नं वात्र. डी °नं चात्र.

---

१ ए सी डी याचिते. २ ए °नेवये°. ३ सी डी °व मं°. ४ सी डी °ने इत्या°. ५ डी इच्छ°.

नागैर्दमन आहूयाथोचे वारस्तवैषमः ।
यदि गच्छेद्भवांस्तत्र जीवेन्नागकुलं ततः ॥ ७५ ॥

७५. स्पष्टः । किं त्वैषमोस्मिन्वर्षे । तत्र हुल्लडपार्श्वे यदि भवान् गच्छेद्यास्यति । ततस्तदा नागकुलं जीवेज्जीविष्यति । यद्वा कालत्रये प्रयोगावेतौ ॥

मां सोप्यूचेत्र चेत्त्वं यास्यसि मोक्षा(क्ष्या)मि ते पणम् ।
हिमघ्नं वानयस्यूपं चेत्ततोपि त्यजाम्यहम् ॥ ७६ ॥

७६. स्पष्टः । किं तु सोपि दमनश्च । अत्र हुल्लडपार्श्वे ॥

चेन्नाजैपीर्न मादिक्षस्तन्मे श्रद्धानयेयमु ।
ऊपं कच्चित्पणं मुञ्चस्युक्त्वेत्यत्राहमागमम् ॥ ७७ ॥

७७. अत्र स्थानेहमागमम् । किं कृत्वा । उक्त्वा । किमित्याह । उ हे दमन चेत्त्वं मां नाजैपीस्तदा मा मां नादिक्षो हुल्लडयात्राया- मूपानयने वा नाज्ञापयस्तत्तस्माच्छ्रद्धाभिलाषो म ऊपमहमानयेयमधु- नानेष्याम्यानयाम्यानीतवानेवं चेत्यर्थः । परं कच्चिदिष्टपरिप्रश्ने । त्वं पणं मुञ्चसीति ॥

यदि गच्छेद्भवांस्तत्र । जीवेन्नागकुलं ततः । अत्र "वर्त्स्यति०" [ २५ ] इत्यादिना वा सप्तमी ॥ पक्षे । चेत्त्वं यास्यसि । मोक्ष्यामि ते पणम् ॥ केचित्तु सर्वेषु कालेषु सर्वविभक्त्यपवादं वा सप्तमीं मन्यन्ते । तेन पक्षे आनयस्यूपं चेत्ततोपि त्यजामि । चेन्नाजैपीर्न मादिक्ष इत्यपि ॥

१ ए सी °न्नामकु°. २ ए °ल ततः. ३ ए °पीमदि°. सी डी °पीमैदि°.

१ डी °मिष्याम्या°. २ ए सी °त्व मा ना°. ३ बी °दा मां. ४ बी °पो ऊ°. ५ ए सी °हममा°. ६ ए सी डी °व चेत्य°. ७ बी वर्त्मति. ८ सी डी °ना म°. ९ बी मोक्षामि. १० ए °पदं म. डी °पद. ११ बी सी °दं म°.

श्रद्धानयेयम् । अत्र "काम०" [ २६ ] इत्यादिना सप्तमी ॥ अकच्चितीति किम् । कच्चित्पणं मुञ्चसि ॥

तदिच्छाम्यनुमन्येथाः प्रार्थये गच्छ संप्रति ।
अत्रोपार्थ प्रवेक्ष्यामि कूपे वत्रासमक्षिके ॥ ७८ ॥

७८. तत्तस्मादिच्छाम्यहं हे पुरुष त्वमनुमन्येथाः कूपप्रवेशेनुमतिं दद्यास्तथाहं प्रार्थये त्वं संप्रति स्वस्थानं गच्छ । शिष्टं स्पष्टम ॥

इच्छाम्यनुमन्येथाः । प्रार्थये गच्छ । इत्यत्र "इच्छार्थे०" [ २७ ] इत्यादिना सप्तमीपञ्चम्यौ ॥

सहैव नय मां कुर्याः प्रसादमितिवादिनी ।
कूपप्रवेशंविघ्नोयं वल्लभा मे सुलोचना ॥ ७९ ॥

७९. नाम्ना सुलोचना । शिष्टं स्पष्टम ॥

संध्यामर्चेत्विनं चार्चेदिहामीताथ गच्छतु ।
रात्र्यन्तेस्मिन्भवान्किं मे चिन्तया हि मुमूर्षतः ॥ ८० ॥

८०. अस्मिन्निदानींतने रात्र्यन्ते रात्रिपर्यवसाने भवान्संध्यां प्रभातसंध्यामर्चेत्विनं चादित्यं चार्चेत्तथेहास्मिन्स्थान आसीत तिष्ठेदथाथ वा गच्छतु । हि यस्मान्मुमूर्षतो मे चिन्तया किं न किंचित । मच्चिन्तां मुक्त्वा त्वं संध्यार्चनादिस्वार्थं कुर्वित्यर्थः ॥

अथ भूपस्तमित्यूचे रक्षेः स्वं रक्ष च प्रियाम् ।
कुर्यां हुल्लडयात्रां किमुतोपं तेर्पयाण्यहम् ॥ ८१ ॥

८१. स्पष्टः । किं नृताथ वा । ते तुभ्यम् ॥

आख्याहि हुल्लडः कोयं ब्रूयास्तस्य च चेष्टितम् ।
धेहि स्वास्थ्यं न भीर्धेया दध्याश्चानुमतो मुदम् ॥ ८२ ॥

---

१ ए सी डी स्थाम्यां न.

---

१ डी मन्ये०. २ ए डी रात्रान्ते. ३ बी मम चिन्ता.

८२. पूर्वार्धं स्पष्टम् । त्वया भीर्द्रमनाङ्कीतिर्न धेया न धार्या किंतु स्वास्थ्यं धेहि । त्वं हि प्रेषितोनुज्ञातस्त्वावसरश्च भियोधारणे स्वस्थताधारणे च । तथानुमतो मयानुज्ञातः संस्त्वं मुदं दध्याश्च ॥

विधौ । प्रसादं कुर्याः नय माम् ॥ निमन्त्रणे । इनं चार्चेत्संध्यामर्चेत् ॥ आमन्त्रणे । इहासीताथ गच्छतु ॥ अधीष्टौ । रक्षेः स्वं रक्ष च प्रियाम् ॥ संप्रश्ने । कुर्यां हुल्लडयात्रां किमुतोपं तर्पयाणि ॥ प्रार्थने । भृयाश्चेष्टितमाख्याहि हुल्लडः कोयम् । इत्यत्र "विधि०" [ २८ ] इत्यादिना सप्तमीपञ्चम्यौ ॥

भीर्न धेया धेहि स्वास्थ्यम् । अत्र "प्रैष०" [ २९ ] इत्यादिना कृत्यपञ्चम्यौ ॥ अनुज्ञायां सप्तमीमपि केचिदाहुः । दध्याश्चानुमतो मुदम् ॥

ऊर्ध्वं मुहूर्तान्मदत्तं प्राप्नुयास्त्वं स्वमीप्सितम् ।
गच्छ स्ववेश्म द्रष्टव्यः स्वलोकस्तं स नन्दय ॥ ८३ ॥

८३. स्पष्टः । किं तूर्ध्वं मुहूर्ताद्घटिकाद्वयानन्तरं मद्दत्तं स्वमात्मीयमीप्सितमूपं तथा स्मः प्राकट्ये । उत्सवेन प्रकटं यथा स्यादेवं तं स्वलोकं नन्दय । त्वं हि प्रेषितोनुज्ञातस्त्वावसरश्च स्वेप्सितप्राप्तौ स्ववेश्मगमने स्वलोकदर्शननन्दनयोश्च ॥

ऊर्ध्वं मुहूर्तादीप्सितं प्राप्नुयाः । स्वलोको द्रष्टव्यः । स्ववेश्म गच्छ । इत्यत्र "सप्तमी च०" [ ३० ] इत्यादिना सप्तमी कृत्याः पञ्चमी च ॥

ऊर्ध्वं मुहूर्तात्तं स नन्दय । इत्यत्र "स्मे पञ्चमी" [ ३१ ] इति पञ्चमी ॥

नागोथोचे स शृण्वेतत्कालो मे शंसितुं त्वयि ।
यथाभूतसमयो गन्तुं नागानां हुल्लडं प्रति ॥ ८४ ॥

---

१ सी डी °लोकं तं स. २ ए °न्दयः । स्प°. सी °न्दय । स्प°. ३ बी स्म सृण्वे°.

१ सी °स्तथाव°. २ ए सी डी °णे च. ३ ए सी डी °दिकृ°. ४ सी °न्दयं । त्वं. ५ डी °षितानुज्ञातस्तथाव°. ६ सी डी °मी कृ°. ७ ए सी डी °र्तात्त्वं स.

८४. अथ नागः कनकचूड ऊचे । यथा । अहो महापुरुष त्वयि विषये मम शंसितुं वक्तुं कालः प्रस्तावस्तस्माद्यथा हुल्लडं प्रति गन्तुं नागानां समयोभूत्तथा शृणु स्म प्रकटमाकर्णय ॥

**नागान्प्लावयितुं वेला जयस्येति विचिन्तयन् ।**
**प्रचेतोवरदृप्तोगात्पातालं हुल्लडः फणी ॥ ८५ ॥**

८५. हुल्लडः फणी पातालमगात् । कीदृक्सन् । प्रचेतोवरदृप्तो वरुणदत्तप्लावनविषयप्रसाददर्पिष्ठोत एव नागान्प्लावयितुं मम वेला जयस्य च नागपराभवस्य च वेलेति[1] विचिन्तयन् ॥

शृणु स्म । इत्यत्र "अधीष्टौ" [ ३२ ] इति पञ्चमी ॥

कालः शंसितुम् । प्लावयितुं वेला । समयो गन्तुम् । अत्र "काल०" [ ३३ ] इत्यादिना तुम् ॥ वावचनाद्यथाप्राप्तं च । वेला जयस्य ॥

**ऊचुर्नागास्तमेत्येति कालोयं यज्जयेद्भवान् ।**
**समयो यद्वेन्नश्च न वेला यन्निमज्जयेत् ॥ ८६ ॥**

८६. स्पष्टः ॥

कालोयं यज्जयेद्भवान् । न वेला यन्निमज्जयेत् । समयो यद्वेत् । इत्यत्र "सप्तमी यदि" [ ३४ ] इति सप्तमी ॥

**त्वमेवार्हश्च[1] शक्तश्च भारो वाह्यस्त्वयैव नः ।**
**त्वमेवाज्ञापयेरस्मांस्तदादिश कृतं क्रुधा ॥ ८७ ॥**

८७. हे हुल्लड त्वमेवार्हश्च[3] शक्तश्चास्माकं भारवहन आज्ञापने च योग्यः समर्थश्च । तस्मान्नोस्माकं भारः कार्यप्राग्भारस्त्वयैव वाह्यस्त-

१ ए सी डी °वार्हश्च.

१ सी डी °ति चि°. २ बी °न् । ( °. ३ डी °मेवार्हश्च. ४ ए सी °वार्हश्च. ५ सी डी °स्माक.

था त्वमेवास्मानाज्ञापयेरादिशेस्त्वत्किंकरा वयमित्यर्थः । तत्तस्मादादिश कृतं मृतं क्रुधा ॥

त्वयैव भारो वाह्यः । त्वमेवाज्ञापयेः । त्वमेवार्हश्च शक्तश्च । इत्यत्र "शक्त०" [ ३५ ] इत्यादिना कृत्याः सप्तमी च ॥

हुल्लडः स्माह कश्मीरेष्ववश्यं स्थायिनो मम ।
उत्तरायणमहे गाम्यर्चां दाय्यनुहायनम् ॥ ८८ ॥

अवश्यगेयो गाथानां गीतेर्गेयश्च भक्तिमान् ।
वारेणैकोस्तु वो नो चेत्प्लावयिष्ये रसातलम् ॥ ८९ ॥

८८, ८९. हे नागा ममोत्तरायणमहे गाम्यवश्यं गन्तानुहायनं प्रतिसंवत्सरमर्चां दायी ऋणाद्दाता च वो युष्माकं मध्य एको नागो वारेणास्तु । कीदृशस्य । कश्मीरेषु देशेष्ववश्यं स्थायिनस्तिष्ठतः । कीदृक्सन् । भक्तिमांस्तथा गाथानां मद्वर्णनाप्रधानार्याणामवश्यगेयो निश्चयेन गायंस्तथा गीतेश्छन्दोविशेषस्य गेयश्चाधमर्ण्याद्गायंश्च । नो चेद्यद्येवं न तदा रसातलं प्लावयिष्ये ॥

आवश्यके । अवश्यं स्थायिनः । अवश्यगेयः ॥ आधमर्ण्ये । अर्चां दायी । गीतेर्गेयः । अत्र "णिन् च०" [ ३६ ] इत्यादिना णिन् कृत्याश्च ॥

वोढा त्वमस्मदर्चाया जीया जीवेतिवादिनः ।
हुल्लडस्तान्विसृज्यागात्कश्मीरान्हिमदुर्गमान् ॥ ९० ॥

---

१ सी गीतैर्गे°. २ बी सी डी वारेणै°. ३ डी °नः । कुत°. ४ बी °त्कश्मीरा°.

---

१ सी कृत क°. डी कृत मृ°. २ ए सी डी °वाह्यश्च. ३ ए सी डी °नाथ वो. ४ सी °वश्यस्था°. ५ सी डी °नानाम°.

९०. हे हुल्लड त्वमस्मदर्चाया अस्मत्कर्तृकपूजायाः कर्मणो वोढा वोढुमर्हः सञ्जीया जीवेतिवादिनस्तान्नागान्विसृज्य मुत्कलयित्वा । शिष्टं स्पष्टम ॥

क्ष्मामप्युत्पाटयामेवंवादिनो ये पुराहयः ।
मा कुपद्धुल्लड इति भीता वारेषु तेप्ययुः ॥ ९१ ॥

९१. स्पष्टः ॥

वोढास्मदर्चायाः । अत्र "अर्हे तृच्" [ ३७ ] इति तृच् ॥

जीयाः । जीव । इत्यत्र "आशिषि" [ ३८ ] इत्यादिनाशीःपञ्चम्यौ ॥ कश्चित्तु समर्थनायां पञ्चमीमिच्छति । क्ष्मामप्युत्पाटयाम ॥

मा कुपत् । इत्यत्र "माङ्यद्यतनी" [ ३९ ] इत्यद्यतनी ॥

मा स्म धाक्षीद्धिमं मेति हिमघ्नोपाय मादिशत् ।
दमनो मा स्म गृह्णान्मे दारानित्यागमं त्विह ॥ ९२ ॥

९२. हिमं मा स्म मा मां धाक्षीदहदिति हेतोर्दमनो हिमघ्नोपाय मामादिशदहं तु मे दारान्दमनो मा स्म गृह्णादिति हेतोरिह स्थान आगमम् ॥

मा स्म गृह्णात् । मा स्म धाक्षीत् । इत्यत्र "सस्मे ह्यस्तनी च" [ ४० ] इति ह्यस्तन्यद्यतन्यौ ॥

तत्पतित्वात्र कूपेहमप्राप्नोपोपि चान्तरा ।
वज्रास्यमक्षिकाक्षुण्णो भविष्यामि सुखी क्षणात् ॥ ९३ ॥

९३. स्पष्टः ॥

मक्षिकाक्षुण्णो भविष्यामि । इत्यत्र "धातोः०" [ ४१ ] इत्यादिना क्षु-

१ बी °प्युनाट°. २ सी डी °यामेवं°. ३ ए सी डी °मघ्नोपा°. ४ ए सी डी °गमन्वि°.

१ ए सी डी °मघ्नोपा°.

पणेति भूतकालः प्रत्ययो भविष्यामीति भविष्यत्कालेन प्रत्ययेनाभिसंबध्यमानो यथाकालमपि साधुः। बहुवचनादधात्वधिकारविहिता अपि तद्धिता धातुसंबन्धे सति कालभेदे साधवः स्युः। सुखी भविष्यामि ॥

तवोपं देहि देहीति ददामीति वदन्नथ।
धेहि धेहीति तमधान्नृपतिः पाणिना भुजे ॥ ९४ ॥

९४. अथ हे नाग तवोपं देहि देहीति ददामि भृशमभीक्ष्णं वा ददामीत्यर्थः। इति वदन्नृपतिस्तं नागं भुजे पाणिना धेहि धेहीत्यधात्कूपे पतन्तं भृशमभीक्ष्णं वा दधार ॥

याहि याहीति यास्यन्ति मक्षिका ध्वनिनेत्यथ।
राज्ञा हन्यस्व हन्यस्वेति जघ्ने तटवेतसः ॥ ९५ ॥

९५. ध्वनिना वेतसाघातशब्देन मक्षिका भृशमभीक्ष्णं वा यास्यन्तीति हेतोरथ राज्ञा तटवेतसः कूपतटस्थवेतसवृक्षो भृशमभीक्ष्णं वा हतः ॥

नश्यत नश्यतेत्येव नश्यथेतीव तद्ध्वनौ।
उड्डयस्वोड्डयस्वेत्युड्डयन्ते स्माथ मक्षिकाः ॥ ९६ ॥

९६. भृशमभीक्ष्णं वा यूयं पलायध्वमितीवेदृश इव तद्ध्वनौ वेतसाघातशब्दे सत्यथ मक्षिका भृशमभीक्ष्णं वोड्डीनाः ॥

तिष्ठत तिष्ठत यूयं स्थेयास्तेत्युरगं ब्रुवन्।
अत्रान्तरेकरोज्झम्पां कूपे निर्मक्षिके नृपः ॥ ९७ ॥

९७. स्पष्टः। किं तु तिष्ठत तिष्ठतेत्यत्रेतिशब्दो वाक्यसंबन्धाया-

१ डी °णिनो भु°. २ डी °न्यस्वे°. ३ सी डी °श्यते°.

१ ए °यं पालय°. २ डी °शमभी°. ३ ए सी °त्यपि म°. ४ ए °ड्डीनः। ति°.

ध्याहार्यः । भृशमभीक्ष्णं वा यूयमत्रैव तिष्ठतेत्येवंप्रकारेणोरगं ब्रुवन् । यूयमित्यत्र युष्मदर्थस्य पूज्यत्वविवक्षया बहुवचनम् ॥

विभृध्वं विभृध्वमिति बिभ्रीध्वमितिवादिनीम् ।
भृत्वोपेण घटीं भूपो झगित्युदपतत्ततः ॥ ९८ ॥

९८. स्पष्टः । किं तु बिभृध्वं विभृध्वमिति बिभ्रीध्वमितिवादिनीम् । अत्रैवोवसेयः । भरणकाले बुडबुडारवकरणमिषेण भृशमभीक्ष्णं वा मामूपेण यूयं पूरयतेत्येवंप्रकारेण नृपं भाषमाणामिव घटीमूपेण भृत्वा । ततः कूपात् ॥

आदत्स्वादत्स्व इत्येवमाददीध्वमिति ब्रुवन् ।
नागायोपघटीं सोदात्समं तेनान्यतो ययौ ॥ ९९ ॥

९९. स्पष्टः । किं तु हे नाग यूयं भृशमभीक्ष्णं वोपघटीं गृह्णीध्वमिति ब्रुवन् । आदत्स्व इतीत्यत्र विरामविवक्षया न संधिः । इत्येवमिति निपातसमुदाय इत्यर्थे ॥

देहि देहीति ददामि । धेहि धेहीत्यधात् । याहि याहीति यास्यन्ति । उड्डयस्वोड्डयस्वेत्युड्डयन्ते । एवं भावकर्मणोरपि । हन्यस्व हन्यस्वेति जघ्ने तटवेतसः । तध्वमौ च तद्युष्मदि । नश्यत नश्यतेत्येव नश्यथ । चकारात्प्रसक्तस्य हेः प्रयोगः स्वयं ज्ञेयः । बिभृध्वं बिभृध्वमिति बिभ्रीध्वम् । आदत्स्वादत्स्व इत्येवमाददीध्वम् । एवमन्यास्वपि विभक्तिषु । तिष्ठत तिष्ठतेति स्थेयास्म । अत्र "भृश०" [ ४२ ] इत्यादिना सर्वविभक्तिसर्वर्वचनविषये हिस्वौ । तद्युष्मदि

१ ए सी घटीभू°.

१ सी डी °तिवा°. २ बी °डारव°. ३ ए नृपभा°. ४ सी °मार्णाम°. ५ सी °ति यास्यति या°. ६ ए °यस्व°. ७ बी °मो °न°. ८ ए सी डी °माददी°.

बहुत्वविशिष्टे च युष्मदभिधेये तध्वमौ हिस्वौ च । देहि देहीत्यादिष्विति शब्दः संबन्धोपादानार्थोन्यथासत्त्वभूतार्थवाचिनोराख्यातयोर्मिथः संबन्धो नावगम्येत ॥

व्योमाटाट तिरः कूपमटेत्याटुश्च मक्षिकाः ।
पतोत्पत रसेत्युच्चैरयतन्तोपरक्षिकाः ॥ १०० ॥

१००. मक्षिकाश्च व्योमाटाट तिरः कूपमटेत्याटुर्व्योमाटुस्तिरस्तिरश्चीनमाटुः कूपमाटुरित्येवंप्रकारेणाटुर्भ्रेमुस्तथा मक्षिका ऊपरक्षिका ऊपं रक्षितुमुच्चैरत्यन्तं पतोत्पत रसेत्ययतन्तापतन्नुदपतन्नरसन्नध्वनन्निति प्रयत्नं चक्रुः ॥

अथाह नागो राजानं जगज्जयसि रक्षसि ।
शास्सीत्यधिकरोपि त्वं प्रसीदेहि रसातलम् ॥ १०१ ॥

१०१. नागो राजानमथाह बभाषे । अथशब्दस्य पुरादौ पाठादनीते वर्तमाना । हे राजंस्त्वं जगद्विश्वत्रयं जयसि रक्षसि शास्सि शिक्षयसि चेत्येवंप्रकारेण जगदधिकरोपि नियुङ्क्षे सकलजगत्स्वामीत्यर्थः । तस्मात्प्रसीद रसातलमेहि ॥ प्रसीदेहीत्यत्र "ओमाङि" [ १. २. १८ ] इत्यलुक् ॥

संगच्छस्व प्रमोदस्व श्लाघस्वेत्युच्छ्वसिष्यति ।
नागलोकः समग्रोपि नेत्रेन्दौ त्वय्युपागते ॥ १०२ ॥

१०२. स्पष्टः । किं तु संगच्छस्व प्रमोदस्व श्लाघस्वेत्युच्छ्वसि-

---

१ ए व्योगाटा°. २ ए सी डी शास्सील°.

---

१ ए सी डी °ष्मयभि°. २ बी °दानर्थो°. ३ बी °गम्यते । व्यो°. ४ ए °टुर्भमु° ५ ए रहितु°. ६ डी °न्नस°. ७ सी शासि शि°. ८ ए सी डी °दविक°. ९ ए डी °युङ्क्ष म°. सी °युक्ते म°. १० ए सी डी °माहि इ°.

ष्यति त्वया सह संगंस्यते । त्वद्दर्शनात्प्रमोदिष्यते । त्वां श्लाघिष्यते । इत्येवंप्रकारेण हर्षातिरेकादुल्लसिष्यति । उपागते पातालमायाते ॥

आहते भिन्त उच्छिन्त इति वर्त्मनि बाधते ।
ऊधार्थं यदि मे कोपि सापि हानिस्तवैव हि ॥ १०३ ॥

१०३. स्पष्टः । तस्मान्मार्गे रक्षार्थमपि त्वं मया सह पाताल-मागच्छेत्यर्थः । आहते । अत्र "आङो यमहनः स्वा(स्वे?)ङ्गे च" [ ३. ३. ८६. ] इत्यात्मनेपदम् । म इत्यस्य हननादिक्रियाभिर्व्याप्यत्वेपि संबन्धमात्रविवक्षया षष्ठी ॥

राजाथेत्यवदद्यूयं यात सिध्यत नन्दत ।
इतीहध्वे यद्रक्षार्थं तत्रादेक्ष्यामि रक्षकान् ॥ १०४ ॥

१०४. अथ राजावदत् । किमित्याह । तत्र वर्त्मनि रक्षार्थं रक्ष-कान्नरानहमादेक्ष्यामि । यद्यस्माद्यूयं यात सिध्यत नन्दतेतीहध्वे पातालं गच्छथ दमनायोपदानेन सिद्धकार्या भवथ लक्ष्मीकीर्त्या-दिना वर्धध्व एवंप्रकारेण चेष्टध्व इति ॥

आगृह्णीथोपरुन्द्धावरुन्द्धेति प्रयतध्व उ ।
किं मयीति वदन्रक्षार्थं दिदेशेति राक्षसान् ॥ १०५ ॥

१०५. राजा रक्षार्थमिति वक्ष्यमाणरीत्या राक्षसान्वर्बरादीन्दि-देशाज्ञापयत् । कीदृक्सन् । वदन् । किमित्याह । उ हे नाग यूयं मयि

---

१ ए °ते । अत्र. २ बी °च्छिन्त उ°. ३ सी °दि ते को°. डी °दि नो कोपि सोपि हानिस्तथैव.

---

१ बी उपग°. २ ए सी डी °स्मात्न न. ३ ए सी डी °म । ऊम. ४ बी सी डी °भिर्व्याप्य°. ५ ए °यथस्माद्यूय. बी °यथा यूय. ६ ए राजर°. ७ बी °न् । उ.

विषये किमित्यागृह्णीथाग्रहं कुरुथोपरुन्द्ध दाक्षिण्ये पातयथावरुन्द्ध पादादिग्रहणं कुरुथेत्येवंप्रकारेण प्रयतध्वे पाताले नयनायात्यादरं कुरुथेति ॥

संगच्छध्वं निषेवध्वमयध्वं च पुरः पथि ।
इतीहध्वे मयि यथा यूयं बर्बरकादयः ॥ १०६ ॥
संगच्छेध्वं निषेवेध्वमयेध्वं च पुरोध्वनि ।
इतीहेध्वं तथैवास्मिन्मित्रे मे प्राणवल्लभे ॥ १०७ ॥

१०६, १०७. हे राक्षसा यथा यूयं मयि विषये संगच्छध्वं निषेवध्वं पथि पुरोयध्वं चेतीहध्वे सेवार्थं संबद्धीभवथ तथा सेवध्वे तथा मार्गेग्रतो गच्छथ चैवंप्रकारेण चेष्टध्वे तथैवास्मिन्मम प्राणवल्लभे मित्रे नागविषये संगच्छेध्वं निषेवेध्वमध्वनि पुरोयेध्वं गच्छेत चेतीहेध्वम् ॥

स्वतः समुच्चये । पतोत्पत रसेत्ययतन्त । पक्षे । जगज्जयसि रक्षसि शास्सीत्यधिकरोषि ॥ साधनभेदेन समुच्चये । व्योमाट तिरोट कूपमटेत्याटुः । अस्य च पक्षोदाहरणं स्वयं ज्ञेयम् ॥ तथा संगच्छस्व प्रमोदस्व श्लाघस्वेत्युच्छ्वसिष्यति । पक्षे । आहते भिन्त उच्छिन्त्त इति बाधते ॥ तध्वमौ च तद्युष्मदि । यूयं यात सिध्यत नन्दतेतीहध्वे । पक्षे । आगृह्णीथोपरुन्द्धावरुन्द्धेति प्रयतध्वे । संगच्छध्वं निषेवध्वमयध्वं च पुरः पथीतीहध्वे । पक्षे । संगच्छेध्वं निषेवेध्व-

१ बी पुराध्व°.

१ ए °क्षिण्योपेत°. २ बी °द्ध पा°. ३ ए सी डी °गच्छे°. ४ सी °सि शा°. ५ ए सी डी शा सीत्य°. ६ डी °टय ति°. ७ ए सी डी °रुन्द्धे प्र°. ८ ए सी डी °च्छेध्वं नि°.

मयेध्वं च पुरोध्वनीतीहेध्वम् । अत्र "प्रचये०" [ ४३ ] इत्यादिना हिस्वौ वा तध्वमौ च त ध्वमदि वा ॥

खलु क्षुभित्वा भीत्वालमित्यालापाः क्षपाचराः ।
परिवृत्य सभार्यं तं पातालं प्राविशन्नथ ॥ १०८ ॥

१०८. स्पष्टः । किं तु क्षुभित्वा खलु क्षोभेण सृतं भीत्वालं भयेन सृतमितीदृगालापो येषां ते तथा ॥

अस्मिन्नलं विहरणेन खलु स्थितेना-
तिक्रम्य यद्गगनमिन्दुरनाप्य चास्तम् ।
आरादहं सरिदतिक्रमणेन चेति
ध्यात्वा नृपः पुरमभि त्वरितः प्रतस्थे ॥ १०९ ॥

१०९. नृपः पुरमभि त्वरितः प्रतस्थे । किं कृत्वा । ध्यात्वा । किमित्याह । यद्यस्माद्धेतोर्गगनमतिक्रम्योल्लङ्घ्यास्तमस्ताचलमनाप्य चालब्ध्वा चेन्दुर्वर्तते गगनात्परेणास्ताच्चावरेणेन्दुरस्तीत्यर्थः । तस्मा-द्यस्मादहं च सरिदतिक्रमणेन सरस्वत्या उल्लङ्घनेनाराद्दूरं वर्ते सरितः परस्माद्दूरप्रदेशेऽहमस्मीत्यर्थः । यस्माद्रात्रिशेषोभूदहं च पुराद्दूरं वर्त इति तात्पर्यार्थः । तस्मादलक्ष्यपुरप्रवेशस्य विघ्नभूतत्वेनास्मिन्नरण्ये विहरणेन विचरणेनालं सृतं तथास्मिन्स्थितेनावस्थानेन खलु सृतमिति ॥

भीत्वालम् । विहरणेनालम् । खलु क्षुभित्वा । खलु स्थितेन । इत्यत्र "नि-षेधेलंखल्वोः क्त्वा" [ ४४ ] इति वा क्त्वा ॥

अतिक्रम्य गगनमिन्दुः । अवरे । अस्तमनाप्येन्दुः । अत्र "परावरे" [ ४५ ] इति क्त्वा वा ॥ पक्षे । सरिदतिक्रमणेन ॥

---

१ ए °रिदिति°. सी डी °रिति.

---

१ सी डी किं क्षु°. २ सी डी °रदे°. ३ बी °ति वा क्त्वा प°.

ध्यात्वा । इत्यत्र "प्राक्काले" [ ४७ ] इति क्त्वा । अर्थानुलोम्यात्सूत्रक्रम-भङ्गेनेदमुदाहरणम् । वसन्ततिलका छन्दः ॥

नेत्रे निमील्य हसतां वदतां प्रकाश्य
दन्तांश्च मूलकपणाद्यपमाय याताम् ।
मौग्ध्योद्यमौ नरपतिः पथि कच्छियूनां
पश्यन्ययौ निजमलक्षित एव हर्म्यम् ॥ ११० ॥

११०. अलक्षित एव नृपतिर्निजं हर्म्यं ययौ । कीदृक्सन् । कच्छियूनां कच्छोनूपप्रायो देशविशेषोस्त्येषां ते कच्छिनः काच्छिका ये युवानस्तेषां मौग्ध्योद्यमौ मौग्ध्यं नेत्रनिमीलने हसनरूपं दन्त-प्रकाशने वचनरूपं च मौर्ख्यमुद्यमं च तावत्यां वेलायां मूलकपणादि-प्रतिदानाय यानं पथि पश्यन् । यतो नेत्रे निमील्याज्ञत्वेन हास्याति-रेकाल्लोचनसंकोचने सति हसतां तथाज्ञत्वादेव दन्तांश्च प्रकाश्य द-न्तोद्घाटने सति वदतां वार्तयतां तथात्युद्यमित्वेन मूलकपणादि मूल-कमुष्ट्यादि । अत्रादिपदात्पत्रपुष्पफलाद्यपमाय प्रतिदातुमन्यत्र यातां गच्छताम् ॥

नेत्रे निमील्य हसताम् । दन्तान्प्रकाश्य वदताम् । अपमाय याताम् । अत्र "निमील्यादि०" [ ४६ ] इत्यादिना क्त्वा वा ॥

इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्रा-भिधानशब्दानुशासनद्व्याश्रयवृत्तौ त्रयोदशः सर्गः ॥

---

१ ए °त्रकपथि. २ बी °लकाछन्दः. ३ सी °नः कच्छि°. ४ ए डी यानं यथा तथा. सी यान यथा तत्पु°. ५ बी °णाद्यत्रा°. ६ सी डी °ष्ट्या-द्यादि°. ७ ए °दिप°.

# द्व्याश्रयमहाकाव्ये

## चतुर्दशः सर्गः ।



**इत्याटमाटं निशि कर्म कृत्वा कृत्वाद्भुतं वेश्मनि पूर्वमायम् ।**
**स रात्रितुर्ये प्रथमं प्रबोधमानर्च देवान् गुरुमग्र आसम् ॥ १ ॥**

१. स नृपो देवान्गुरुं चानर्च । किं किं कृत्वा । इत्युक्तनीत्या नि-श्याटमाटमभीक्ष्णं विचर्य तथाद्भुतं कर्म नागाय तथोपदानरूपम-वदातं कृत्वा कृत्वाभीक्ष्णं विधाय तथा वेश्मनि पूर्वं लोकजागरणा-त्प्रथममायमागत्य तथा रात्रितुर्ये रात्रेश्चतुर्थे यामे लोकप्रबोधात्प्रथमं प्रबोधं जागरित्वा तथाग्र आसं देवानां गुरोश्च पुरः स्थित्वा ॥ सर्गे-स्मिन्नुपजातिश्छन्दः ॥

**गजं प्रभाते प्रथमं प्रपद्य पूर्वं समारुह्य हयं कदाचित् ।**
**अग्रेऽधिरुह्याथ वशामटन्स नाज्ञाय्युपासंचरितो जनेन ॥ २ ॥**

२. स नृप उपासंचरितो रात्रौ चर्यया भ्रान्तो जनेन नाज्ञायि । यतः कीदृशः । प्रभातेऽटन् राजपाटिकया भ्राम्यन् । किं कृत्वा । प्रथममन्यक्रियाभ्यः पूर्वं गजं प्रपद्यारुह्य कदाचित्पूर्वं हयं समारु-ह्याथ तथा कदाचिच्चाग्रे पूर्वं वशां हस्तिनीमारुह्य । प्रभाते स्वापेहि रात्रौ जागर्या शङ्क्यतेयं तु जागरूकत्वात्प्रातरेवोत्थाय राजपाटिका-यामगमत्तेनास्य रात्रौ चर्या न ज्ञातेत्यर्थः ॥

---

१ **ए** ॰माटं नि॰.

१ **सी** किं कृ. २ **ए डी** ॰योपदा॰. ३ **सी** ॰त्याभी॰. ४ **बी सी** ॰थ यथा. ५ **ए** ॰तुर्य या॰. ६ **बी** ॰स्मिन्छन्दः. **सी** ॰स्मिन्छन्दः । ग॰. ७ **सी** ॰मिता रा॰. ८ **बी** ॰टिकायां भ्रा॰. ९ **सी** ॰हत्या ह॰. १० **ए** ॰पाटिका॰.

आढमाढम् । कृत्वा कृत्वा । इत्यत्र "रेऽणम्च०" [ ४८ ] इत्यादिना रणम् क्त्वा च ॥

पूर्वमायम् । अग्र आगम् । प्रथमं प्रबोधम् । इत्यत्र "पूर्व०" [ ४९ ] इत्यादिना णम् वा ॥ पक्षे । पूर्वं समारुह्य । अग्रेधिरुह्य । प्रथमं प्रपद्य ॥

**वेत्त्यन्यथाकारमशेषमेवंकारं कथंकारमिदं रहो नः ।**
**तत्कोपि विद्याधर एष इत्थंकारं जनै रात्रिविहार्यतर्कि ॥ ३ ॥**

३. एष राजा रात्रिविहारी प्रच्छन्नं रात्रौ चरन्मन्त्रतर्कि शङ्कितः । कथमित्याह । अन्यथाकारमन्यथा यदि विद्याधरो न स्यात्तदा कथंकारं कथं नाम नोस्माकमिदं प्रत्यक्षमनेनोच्यमानमशेषं रहः प्रच्छन्नवृत्तमेवंकारमनेन यथावृत्तभणनप्रकारेण वेत्ति जानाति तत्तस्मादेष जयसिंहः कोप्यज्ञातो विद्याधरः । विद्याधरो हि विद्याबलेनाज्ञायमानश्चरन्रहोपि जानातीत्थंकारमनेन प्रकारेण ॥

**जनोन्यथाकृत्व ऋजूक्तिरेवंकृत्वा कथंकृत्व ऋतं सुखी स्यात् ।**
**छलोन्मुखं शाकिनिकाद्यपीत्थंकृत्वा नृपो मन्त्रकृदन्वशात्सः ॥४॥**

४. स नृपश्छलोन्मुखं शाकिनिकाद्यपि कुत्सितशाकिनीभूताद्यप्यास्तामन्यायिजनादीत्यप्यर्थः । इत्थंकृत्वानेन रात्रौ चर्यारूपेण प्रकारेणान्वशान्मन्त्रैरशिक्षयत् । यतो मन्त्रान्कृतवान्साधितवान्मन्त्रकृन्मान्त्रिकः । हेतुमाह । अन्यथाकृत्वान्यथा यदि शाकिन्याद्यहं नानु-

१ सी डी °कृत्वा क्र°. २ सी डी °व स्यात्कि°. ३ डी °पो यत्र°.

१ ए रणम इ°. २ सी डी रात्रवि°. ३ सी °तर्कि शाकिनं क°. डी °तर्कि शङ्कितं क°. ४ डी °था य°. ५ ए °नोन्यमा°. ६ सी °त्तमेवं का°. ७ ए °र्णावित्ति°. ८ डी °त्ति । त°. ९ सी डी °तोपि वि°. १० डी °धरा हि. ११ सी शाकनि°. डी शाकमिका°. १२ डी चर्यारु°. १३ बी °शिष्यत°. १४ डी °दि पाकि°. १५ सी डी °द्यदहं.

शासिष्यामि तदेत्यर्थः । एवंकृत्वा एवं रात्रौ चर्यया स्वयं दृष्टप्रकारेण ऋजूक्तिः सरलवचनो जन ऋतं सत्यं यथा स्यादेवं कथंकृत्वा कथं सुखी स्यादिति । ऋजूक्तीञ्जनानवचनच्छलेनच्छलकं शाकिन्यादि मा स्मच्छलयदिति रात्रौ प्रच्छन्नचर्यया तज्ज्ञात्वा मन्त्रध्यानेनाशिक्षयदित्यर्थः ॥

अन्यथाकारम् । एवंकारम् । कथंकारम् । इत्थंकारम् । अत्र "अन्यथा०" [ ५० ] इत्यादिना खणम्वा ॥ पक्षे । अन्यथाकृत्वा । एवंकृत्वा । कथंकृत्वा । इत्थंकृत्वा ॥

**योगिन्यवन्त्या अपरेद्युरेका योगिन्यशङ्कं तमवोचदेवम् ।**
**वयं यथाकारमहो तथाकारमप्यटामस्तव किं त्वनेन ॥ ५ ॥**

५. अन्येद्युरवन्त्या मालवदेशसंबन्धिन्येका योगिनी योगिन्यशङ्कं योगिनीषु विषयेशङ्कं निर्भयं सन्तं तं नृपमेवमवोचत् । यथा यूयं कथमटथेत्येवं पृष्टासूयया तं प्रत्याह । वयमित्यादि स्पष्टम् ॥

यथाकारमहो तथाकारमप्यटामस्तव किंत्वनेन । इत्यत्र "यथा०" [ ५१ ] इत्यादिना खणम्वा ॥

**किं शाकिनिकारमु नः शपेः स्वादुंकारमत्तासि न भोज्यमत्र ।**
**न भोक्ष्यसे भोगमथेह मृष्टंकारं मुधायस्यसि चर्चया नः ॥ ६ ॥**

१ ए °परद्य°. २ सी डी °मुनेः श°. ३ ए शपे स्वा°. ४ सी °स्यति स°. ५ ए चर्यया.

१ बी °त्वा रा°. २ बी °क्तिः स°. ३ ए मतं य°. ४ डी °व कृ°. ५ बी °शिष्यदि°. ६ बी सी डी °र । ए°. ७ ए °म । अ°. ८ सी डी अनेद्युरवन्त्यां मालादवासं°. ९ ए °देश ब°. १० बी °चयत. ११ सी डी किं कृत्व°. १२ डी °नेत्य°.

६. उ हे नृप किं किमिति नोस्मान् शाकिनिंकारं शपेः शाकिनीशब्दमुच्चार्याक्रोशसि शाकिन्यो यूयमित्याक्रोशसीत्यर्थः । तथा किमित्यत्र पृथ्व्यां भोज्यं भक्ष्यं स्वादुंकारं रुच्यं कृत्वा नात्सि न भोक्ष्यसे । अथ तथा भोगं वैषयिकं सुखं मृष्टंकारं रुच्यं कृत्वेह जगति किमिति न भोक्ष्यसे । तथा नोस्माकं चर्चया विचारेण किं मुधा निरर्थकमायस्यसि खिद्यसे ॥

**विलासिनीनां पिबसीह मृष्टां कृत्वा न किं गीतसुधां हताश ।**
**किं योगिनीदर्शमिह व्यराध्यस्त्वं वैरिणीवेदमिवातिमूढ ॥ ७ ॥**

७. पूर्वार्धं स्पष्टम् । हेतिमूढेह पृथ्व्यां योगिनीदर्शं यां यां योगिनीमपश्यस्तां तां वैरिणीवेदमिव वैरिणीं ज्ञात्वेव लब्ध्वेव विचार्येव वा किमिति त्वं व्यराध्योभ्यभवः ॥

शाकिनिंकारं शपेः । अत्र "शापे व्याप्यात्" [ ५२ ] इति खणम्वा ॥

स्वादुंकारम् । मृष्टंकारम् । अत्र "स्वादु०" [ ५३ ] इत्यादिना वा खणम् ॥
अदीर्घादिति किम् । मृष्टां कृत्वा ॥

वैरिणीवेदम् । योगिनीदर्शम् । अत्र "विद्दृभ्यः०" [ ५४ ] इत्यादिना णम्वा ॥

**यदीच्छसि स्वस्य सुखानि यावज्जीवं चिरायोदरपूरमाशु ।**
**तच्चर्मपूरं ननु देहि यावद्बदं बलिं नः परिखादिनीभ्यः ॥ ८ ॥**

१ डी °ह व्यरा°.

१ बी भक्षं स्वा°. २ बी °कार कृत्यं कृ°. ३ डी °कार कृत्वां कृ°. सी °कार कृस्त्यं कृ°. ४ बी °ष्ट कृत्वा कृ°. ए °कार कृ°. ५ ए °ति ना भो°. ६ सी डी यां यो°. ७ सी °स्तां वै°. ८ बी °र्णा वरिणीं ज्ञा°. ९ डी °ति ध्वं विरा°. १० सी त्वं विरा°. ११ डी °किनीं का°.

८. ननु हे राजन्नाशूदरपूरमिष्टभोज्यैरुदरं पूरयित्वा यावज्जीवं यावज्जीवसि तावच्चिराय चिरकालं स्वस्य यदि सुखानीच्छसि तत्तदा यावद्वेदं यावल्लभामहे तावत्परिखादिनीभ्यो भक्षिकाभ्यो नोस्मभ्यं चर्मपूरं कण्डित्रं पूरयित्वा बलिं देहि ॥

यावद्वेदम् । यावज्जीवम् । अत्र "यावतः०" [ ५५ ] इत्यादिना णम् ॥

चर्मपूरम् । उदरपूरम् । अत्र "चर्म०" [ ५६ ] इत्यादिना णम् ॥

**रुष्टासु चास्मास्वभिवर्षिताब्दो न सिन्धुपूरं न च गोष्पदप्रम् ।**
**न कम्बलक्नोपमहो न चेलक्नोपं च देशे तव राजजाल्म ॥ ९ ॥**

९. अहो राजजाल्म नृपाधमास्मासु रुष्टासु सतीषु तव देशे यावता सिन्धुर्नदी गोष्पदं च पूर्यते तावत्किंबहुना यावता कम्बलचेले क्नूयेते आर्द्रीभवतस्तावदप्यब्दो मेघो न वर्षिता न वर्षिष्यति ॥

गोष्पदप्रम् । सिन्धुपूरम् । अत्र "वृष्टि०" [ ५७ ] इत्यादिना णम्वौ । ऊकारस्य लुक्च वा ॥

चेलक्नोपम् । कम्बलक्नोपम् । अत्र "चेल०" [ ५८ ] इत्यादिना णम् ॥

**मेघे च गात्रात्पुरुषात्परस्थस्तायं ह्यवृष्टे स्वदनाय पिंषन् ।**
**कः शुष्कपेषं क उ रूक्षपेषं कक्षूर्णपेषं च भवेन्न गर्ह्यः ॥ १० ॥**

१०. उ हे राजन् हि स्फुटं स्वदनाय धान्याभावेन बुभुक्षया म्रियमाणत्वादत्यन्तं भोजनाय को नरः शुष्कपेषं पिंषन् शुष्कं बद-

१ सी डी गोष्पद॰. २ ए न गोत्रा॰. ३ सी डी ॰त्रापुरुषापर॰.

१ ए ॰ज्जीवसि. २ बी ॰म्वादि॰. ३ ए ॰म । अहो. ४ सी डी गोष्पदं. ५ डी मेघामवर्षा॰. ६ सी ॰भोमवर्षा॰. ७ सी डी वर्षिष्य॰. ८ डी ॰ति । मास्पद॰. ९ सी गोष्पद . १० सी णम्ता । ओका॰. डी णम्या । ऊ॰. ११ ए ॰म्वा । ओका॰. १२ बी सी डी को वरः.

रीफलादि पिंपन्कश्च रूक्षपेपं रूक्षमस्नेहं कण्टकादि[1] पिंपन्कश्च चूर्णपेपं चूर्णं तुषबुसादि पिंपन्सन्नगर्ह्यो निन्द्यो न भवेत् । क सति । मेघे । [2]किंभूते । गात्रस्नायं पुरुषस्नायं चावृष्टे यावता[3] गात्रं पुरुषश्च[4] स्नाप्येते तावत्यप्यवृष्टे[5] ॥

गात्रस्नायम् । पुरुषस्नायम् । अत्र[6] "गात्र०" [ ५९ ] इत्यादिना णम् ॥

शुष्कपेषम् । चूर्णपेषम् । रूक्षपेषं पिंपन् । इत्यत्र "शुष्क०" [ ६० ] इत्यादिना णम् ॥

**करोष्यदश्चाकृतकारमुच्चैर्निमूलकापं कपसीह यन्त्रैः ।**
**तद्योगिनीस्तोपय[1] मूढ जीवग्राहं[2] न गृह्णन्ति यथा हि तास्त्वाम् ॥ ११ ॥**

११. हे राजन् यदिति क्रियाविशेषणम् । यस्त्वं नोस्मान्नु(तु)चै[7]रिह निमूलकापं कपसि मन्त्रैर्निर्मूलं[8] कपसि निःसन्ताना: करोषीत्यर्थः । अद एतदकृतकारं करोष्यकृतमकृत्यं करोषि परिणामे कटुविपाकत्वात्तवेदं[9] कर्तुं न युक्तमित्यर्थः । तत्तस्माद्धेतो रे मूढ योगिनीस्तोपय मानयेत्यर्थः । यथा हि स्फुटं ता योगिन्यस्त्वां जीवग्राहं न गृह्णन्ति योगप्रभावबन्धैर्बद्ध्वा जीवन्तं न गृह्णन्तीत्यर्थः ॥

अकृतकारं करोषि । जीवग्राहं गृह्णन्ति । इत्यत्र "कृ[ग्]ग्रहः०"[10] [ ६१ ] इत्यादिना णम् ॥

निमूलकापं कपसि । इत्यत्र "निमूलात्कपः" [ ६२ ] इति णम् ॥

---

१ ए °गिनीः स्तो°. २ ए °हं निगृह्णन्ति.

---

१ ए सी डी कण्टिकादि पि°. २ ए कि ते । गोत्र°. ३ ए °ता गोत्रं. ४ सी डी °श्च स्नाप्ये°. ५ ए °ष्टे । गोत्र°. ६ ए °त्र गोत्र°. ७ सी डी °स्मान्नुचै°. ८ सी डी °मि निम°. ९ ए त्तदेव क°. १० बी कृतग्र°.

समूलकाषं कषितुं समूलघातं निहन्तुं द्विषतोसिघातम्[1] ।
क्षमं यशोवर्मनृपं स्वपोषं पुष्टं च योगिन्यनुदत्तशक्तिम् ॥ १२ ॥

त्वं मित्रयित्वार्चय कालिकाद्या[2] एत्योज्जयिन्यां[3] पुरि भक्तियुक्तः ।
यद्यात्मपोषं धनपोषमश्वपोषं पुपुक्षस्यथ बन्धुपोषम् ॥ १३ ॥

१२, १३. हे राजंस्त्वमात्मना शरीरेण धनेनाश्वैरुपलक्षणत्वात्सैन्यैर्बन्धुभिश्च यद्यात्मानं पुष्टं कर्तुमिच्छसीत्यर्थः[1] । तदा त्वं भक्तियुक्तः सन्नुज्जयिन्यां[2] पुर्येत्य कालिकाद्या योगिनीरर्चय[3] । किं कृत्वा[4] । यशोवर्मनृपं मित्रयित्वा मित्रं कृत्वा । अन्यथा ह्युज्जयिनी त्वया गन्तुमशक्येत्यर्थः । किंभूतम् । योगिनीभिरन्वनुरूपं दत्ता शक्तिर्विद्याबलं यस्य तं तथा स्वपोषं पुष्टं च पराक्रमादिगुणविशिष्टेनात्मना समर्थं चेत्यर्थः । अत एव क्षमं समर्थम् । किं कर्तुम् । द्विषतः समूलकाषं कषितुं सान्वयाद्राज्यादुन्मूलयितुमसिघातं च निहन्तुं खड्गेन हिंसितुं समूलघातं निहन्तुं सान्वयान्हिंसितुं चेत्यर्थः । अन्यथात्मना श्रिया सैन्यैर्बन्धुभिश्च सह विनङ्क्ष्यसीत्यर्थः[6] ॥

तां स्माह राजेत्युदपेषमाज्यपेषं नु पिंषन्स[4] गिराथ मृद्या ।
कालीं करग्राहमथ स्वहस्तग्राहं यशोवर्मनृपं जिघृक्षुः ॥ १४ ॥

१४. अथ स राजा जयसिंहस्तां योगिनीमिति वक्ष्यमाणरीत्याह स्म । यतः कालीमथ तथा यशोवर्मनृपं च बद्ध्वा स्वपाणिना ग्रही-

१ सी डी °म । क्षेम. २ सी डी कान्का°. ३ ए °ज्जयन्यां. ४ ए सी डी राज्येत्यु°.

१ सी °च्छन्तीत्य°. डी °च्छन्तीत्य°. २ ए °ज्जयन्यां. सी डी °ज्जन्यां. ३ ए °र्चनाय. ४ सी डी °त्वा । यशो°. ५ ए सी डी °न नि°. ६ सी डी विनंक्षसी°. ७ ए °नक्षर्गा. ८ ए राजन°.

तुमिच्छुरित्यर्थः । कीदृक्सन्नाह स्म । मृद्व्या श्रूयमाणकोमलयार्थतस्तु कठोरया गिरा कृत्वोदपेषमाज्यपेषं पिंषन्नुदकेन घृतेन वा वर्तयन्निव ॥

**यो वर्तयन्वः करवर्तमर्चां गन्धाढ्यचर्चामथ हस्तवर्तम् ।**
**हुं वर्तते वः किल हस्तवर्तं रक्ष्यः स युष्माभिरवन्तिनाथः ॥१५॥**

१५. हुमित्यमर्षे । सोवन्तिनाथो युष्माभी रक्ष्यः । किलेति सत्ये । यो वो युष्माकं हस्तवर्तं वर्तते हस्तेन वर्तते यो युष्माकं वश्ग इत्यर्थः । कीदृक्सन् । वो युष्मदर्थमर्चामर्चार्थमुपचाराच्चन्दनाद्यर्च्यां तां करवर्तं वर्तयन्करेण वर्तयन्भक्त्यतिरेकाज्जलादिना सह स्वयं घर्षयन्नित्यर्थः । अथ तथा गन्धाढ्यचर्चां सौरभोत्कटं विलेपनार्थकर्पूरादि च हस्तवर्तं वर्तयन् ॥

समूलघातं निहन्तुम् । समूलकाषं कषितुम् । अत्र "हनश्च०" [ ६३ ] इत्यादिना णम् ॥

असिघातं निहन्तुम् । इत्यत्र "करणेभ्यः" [ ६४ ] इति णम् ॥

स्वपोषं पुष्टम् । आत्मपोषम् । अश्वपोषम् । बन्धुपोषम् । धनपोषं पुपुक्षति(सि) ॥ स्नेहनार्थात् । उदपेषम् । आज्यपेषं पिंषन् । इत्यत्र "स्व०" [ ६५ ] इत्यादिना णम् ॥

हस्तग्राहम् । करग्राहं जिघृक्षुः । हस्तवर्तम् । करवर्तं वर्तयन् । हस्तवर्तं वर्तते । अत्र "हस्तार्थात्०" [ ६६ ] इत्यादिना णम् ॥

---

१ ए °रमर्तवर्चां.

---

१ सी डी वर्तय°. २ ए वर्त°. ३ सी डी °ते यु°. ४ डी °म् । व°. ५ डी °म् । पु°. ६ बी °पुक्ष्यति.

**स क्रौञ्चबन्धं मम गुप्तिबन्धं बन्ध्यो न चेन्नंक्ष्यति[1] जीवनाशम् ।**
**प्रेष्यः स वः[2] पूरुषवाहमाज्ञां[3] वोढा वृथा तं हि न यद्यवेत[4] ॥१६॥**

१६. स यशोवर्मनृपश्चे[1]द्यदि न जीवनाशं नङ्क्ष्यति[2] जीवन्न पला-यिष्यत[3] इत्यर्थः । तदा स मम मया क्रौञ्चबन्धं[4] बन्ध्यः क्रौञ्चाका-रेण बन्धविशेषेण बन्धनीयस्तथा[5] गुप्तिबन्धं बन्ध्यो गुप्तौ कारायां बन्धनीयस्तत॰ हि स्फुटं[6] तं यशोवर्मनृपं यदि यूयं नावेत मया ब-ध्यमानं न रक्षेत तदा स नृपो युष्माकं प्रेष्यो[7] दासः सन्वृथा निर-र्थकं युष्माकमाज्ञां[8] पूरुषवाहं वोढा[9] पूरुषस्य कर्तुर्वहनं यथा स्यादेवं धारयति पुरुषः संप्रेष्यो[10] भूत्वा वृथा युष्मदाज्ञां वहतीत्यर्थः ॥

क्रौञ्चबन्धं बन्ध्यः । अत्र "बन्धेर्नाम्नि" [ ६७ ] इति णम् ॥

गुप्तिबन्धं बन्ध्यः । अत्र "आधारात्" [ ६८ ] इति णम् ॥

जीवनाशं नङ्क्ष्यति[11] । पूरुषवाहं वोढा । इत्यत्र "कर्तुर्॰" [ ६९ ] इत्या-दिना णम् ॥

**मया स पूरिष्यत ऊर्ध्वपूरं रणे न शुष्येद्यदि चोर्ध्वशोषम् ।**
**मंस्ये तदा वो महिमोरुपूज्यास्तदा च यूयं मम मातृपूजम् ॥१७॥**

१७. सोवन्तीशो यदि रणे मया सहोर्ध्वपूरं पूरिष्यत ऊर्ध्वस्य[12] सतः पूरणं यथा स्यादेवं पूरणीभविष्यति[13] । ऊर्ध्वः स्थास्यतीत्यर्थः ।

१ ए बी °न्नक्षति. २ ए वः पुरु°. ३ सी डी °मान्यां वो°. ४ ए °द्यचेतः । य°.

१ ए °वर्मो नृ°. २ ए °शं तक्षति. ३ ए °ष्यति इ°. ४ ए °न्धंक्रौ°. ५ ए °न्धनी°. ६ सी डी °टं य°. ७ ए प्रेक्षो दा°. ८ सी डी °मान्यां पुरु°. ९ बी सी डी °ढा पुरु°. १० ए °न्प्रेक्ष्यो भू°. ११ ए °ति । पौरु°. सी °ति । पुरु°. १२ सी डी °र्ध्वशोषं. १३ बी पूर्णीभ°.

तथा मया सह रणे सति यदि स ऊर्ध्वशोषं न शुष्येन्न मद्बाणैः पीतरक्तो यदूर्ध्व एव न शुष्येदित्यर्थः । तदा वो युष्माकमुरु महन्महिम माहात्म्यं मंस्ये ज्ञास्यामि । महिमशब्दो नपुंसकोपि । तदा च यूयं मम मातृपूजं पूज्या मातृवत्पूजनीया इत्यर्थः ॥

**तद्गच्छ तत्राहममांवुपेमि यूयं न चेन्नश्यथ काकनाशम् ।**
**लूयादुपस्कारमसावसिर्वस्तदा नसः श्रुत्युपदंशमत्तुम् ॥ १८ ॥**

१८. यदि यूयं काकवन्न पलायिष्यध्वे तदासौ प्रत्यक्षोसिर्वो युष्माकं नसो नासिका अत्तुं भक्षयितुमुपस्कारं विक्षिप्य लूयाच्छिन्द्यात् । किं कृत्वा । अत्तुं श्रुत्युपदंशं श्रुतिभिः कर्णैरुपदश्योपदंशं कृत्वा केवलानां नासिकानां भक्षणादरुचौ रुचिविशेषोत्पादनायान्तरान्तरा श्रुतीरपि जग्धे(ग्ध्वे?)त्यर्थः । शिष्टं स्पष्टम् ॥

**श्रुत्योपदश्यात्स्यति नो नसोसिरसिप्रहारं च विजेष्यसेस्मान् ।**
**सहासमुक्त्वेति रदोपपीडमोष्ठं दशन्ती दिवि सोत्पपात ॥ १९ ॥**

१९. स्पष्टः । किं तु तवासिर्नोस्माकं नसो नासिकाः श्रुत्या श्रवणजात्योपदश्य रोचकं कृत्वात्स्यति त्वं चास्मानसिप्रहारं खङ्गेन प्रहृत्य विजेष्यसे रदोपपीडं कोपाद्दन्तैर्दन्तेषु वोपपीड्यौष्ठं दशन्ती ॥

**चित्तोपरोधं विमृशन्विधेयं गृह्णन्नृपोसिं स्वकरोपकर्षम् ।**
**ग्रामानुरोधं पुरसीमरोधं द्राग्मेलयन्सैन्यमथ प्रतस्थे ॥ २० ॥**

१ ए °साधुपै°. सी डी °सामुपैनि यू°. २ सी °न्नक्षयका°. डी °न्नक्षयकारक°. ३ सी डी °क्त्वेपि र°. ४ सी डी द्राग्मैल°.

१ सी डी °स्कारविवक्षि°. २ सी डी नाशिका°. ३ सी °णादिरुचि°. डी °णादिरु°. ४ सी डी नाशिका श्रु°. ५ डी प्रपद्य वि°. ६ ए सी °पीड्योष्ठं.

२०. अथ नृपो जयसिंहो द्राक्प्रतस्थे। कीदृक्सन्। विधेयं रणं चित्तोपरोधं चित्तेन चित्ते वोपरुध्य संस्थाप्य विमृशंस्तथासिं स्वकरोपकर्षं स्वकरेण स्वकरे वोपकृष्य समीप आनीय गृह्णंस्तथा ग्रामानुरोधं ग्रामेण ग्रामे वान्यसैन्यमेलनायानुकूलं स्थापयित्वैवं पुरसीमरोधं च सैन्यं मेलयन्॥

**शैलान्बलैर्मूर्ध्न्युपपीडमस्यन्कुर्वन्नृपाज्ञ् शासनकर्षमग्रे।**

**क्रोशाष्टकोत्कर्षमहन्यहन्यच्छिनत्स पन्थानमनूनशक्तिः॥२१॥**

२१. स राजाहन्यहनि पन्थानं क्रोशाष्टकोत्कर्षं क्रोशाष्टकेन क्रोशाष्टके वोत्कृष्य परिच्छिद्याच्छिद(न?)ल्लङ्घे। कीदृक्सन्। अनूनशक्तिः शक्तित्रयोपेतोत एव नृपाज्ञ् शासनकर्षमाज्ञयाकृष्याग्रे कुर्वन्नत एव च शैलान्बलैरुपपीडं पीडयित्वा मूर्ध्नि शृङ्गेपूपपीडमस्यन्नितस्ततः क्षिपन्॥

**आरोहिणोंसेष्वथ केशपङ्क्त्या ग्राहं भटा अत्वरयंस्तथाश्वान्।**

**क्रोशे यथा क्रोशयुगेन वा व्योम्न्युत्कर्षमिद्धोधिरुरोह रेणुः॥२२॥**

२२. अंसेषु ग्राहं स्कन्धेषु गृहीत्वाथाथ वा केशपङ्क्त्या ग्राहं स्कन्धस्थवालपङ्क्त्या गृहीत्वारोहिणोश्वानारोहन्तो भटा अश्ववारा अश्वांस्तथा वेगेनात्वरयन्यथेद्धः स्फीतो रेणुर्व्योम्न्यधिरुरोह। किं कृत्वा। क्रोशे क्रोशयुगेन वोत्कर्षमुत्कृष्य परिच्छिद्य क्रोशं क्रोशौ वा यावदित्यर्थः॥

---

१ सी °हिणोशेंष्वथे के°. डी °हिणांशेष्वथ. २ डी °थाश्वान। क्रो°. ३ सी °रेणः। अशेषु. डी रेणः। अशेषु.

---

१ ए °धेयर°. २ सी डी °ष्टके वोकृष्य. ३ ए बी अंशेषु. ४ डी °त्वाव्यण वा. ५ ए सी डी °रोहणो°.

ऊर्ध्वपूरं पूरिष्यते । ऊर्ध्वशोषं शुष्येत् । इत्यत्र "ऊर्ध्वात्पूः शुषः" [ ७० ] इति णम् ॥

मातृपूजं पूज्याः ॥ कर्तुः । काकनाशं नेङ्क्ष्यथ । अत्र "व्याप्याच्चेवात्" [७१] इति णम् ॥

उपस्कारं लूयात् । इत्यत्र "उपात्०" [ ७२ ] इत्यादिना णम् ॥

श्रुत्युपदंशमत्तुम् । श्रुत्योपदश्य । इत्यत्र "दंशेस्तृतीयया" [ ७३ ] इति णम्वा ॥

असिप्रहारम् । अत्र "हिंसा०" [ ७४ ] इत्यादिना णम्वा ॥ पक्षे । असिना प्रहृत्येति स्वयं ज्ञेयम् ॥

बलेरुपपीडम् । मूर्ध्न्युपपीडम् । चित्तोपरोधम् । स्वकरोपकर्षम् । अत्र "उपपीड०" [ ७५ ] इत्यादिना णम्वा ॥ पक्षोदाहरणानि ज्ञेयानि ॥ अन्ये तूपपूर्वादेव पीडेरिच्छन्ति । रुधकर्षाभ्यां तु कामचारेण । तेन पुरसीमरोधम् । उपपूर्वादपि । चित्तोपरोधम् । अन्योपसर्गपूर्वादपि । ग्रामानुरोधम् । एवं शासनर्षकम् ।

प्रमाणे । क्रोशयुगेनोत्कर्षम् । क्रोश उत्कर्षम् । क्रोशाष्टकोत्कर्षम् ॥ समासत्तौ । केशपङ्क्त्या ग्राहम्[3] । अंसेषु[4] ग्राहम् । अत्र "प्रमाण०" [ ७६ ] इत्यादिना णम्वा । पक्षोदाहरणानि ज्ञेयानि ॥

**शय्यात[1] उत्थायमयुः किराता यतिंक च नारोहमुपासितुं तम् ।**
**नृपोपि पथ्या(भक्त्या?)लपति[2] स्म तान्भ्रूविक्षेपमुत्क्षिप्य शिरः प्रसन्नः[3]**
**॥ २३ ॥**

१ ए °तमुत्था°. २ ए °लपितस्मा ता°. ३ सी डी प्रपन्नः.

१ ए सी डी नक्षथ. २ ए अशानि प्र°. ३ सी डी °म् असे°. ४ बी अंशेषु.

२३. तं नृपमुपासितुं किराताः शय्यात उत्थायं शयनात्त्वरयोत्थाय तथा यत्किं च न गर्दभादिकमप्यारोहमयुरेवं नाम नृपसेवार्थमत्वरन्त यावता प्राभातिकमवश्यकृत्यमश्वादि वाहनं च नापेक्षन्ते स्मेत्यर्थः । नृपोपि [भक्त्या?] भक्तिसूचकतत्संभ्रमातिरेकागमनेन प्रसन्नः संस्तान्किरातानालपति स्म । किं कृत्वा । शिर उत्क्षिप्योर्ध्वीकृत्य भ्रूविक्षेपं भ्रुवौ तत्संमुखं क्षिप्त्वा च ॥

शय्यात उत्थायम् । अत्र "पञ्चम्या०" [ ७७ ] इत्यादिना णम्वा ॥

यत्किंचनारोहम् । अत्र "द्वितीयया" [ ७८ ] इति णम्वा ॥

भ्रूविक्षेपम् । अत्र "स्वाङ्गेनाध्रुवेण" [ ७९ ] इति णम्वा । [अ]ध्रुवेणेति किम् । शिर उत्क्षिप्य ॥

हृत्पेषमायद्भिरगान्प्रवेशं प्रवेशमुच्चैर्विषमप्रवेशम् ।
वनं वनं वेशमरण्यपातमोपातमापातमथापगाश्च ॥ २४ ॥
सरस्सरः पातमपश्च पादं पादं प्रपादं च तटं तटं द्राक् ।
द्रुमं द्रुमं स्कन्दमनध्वपादमास्कन्दमास्कन्दमनापतन्तम् ॥२५॥
फलाद्यवस्कन्दमलं क्षणासं मुहूर्तमत्यासमथोत्फलद्भिः ।
यामप्रतर्षं दृतिवाः पिबद्भिः स तैर्जहर्ष प्लवगैर्नु रामः ॥ २६ ॥

२४-२६. स नृपो राम इव तैः किरातैः प्लवगैर्नु कपिभिरिव कृत्वा जहर्ष । यत आयद्भिः सहागच्छद्भिः । किं किं कृत्वेत्याह ।

१ सी वेश्मम°. डी वेश्यम . २ सी °मानापम°. डी °मापम°. ३ ए °म । पला°. ४ ए °त्याशम°.

१ ए °नायत्त्व°. २ सी °ता प्रभा°. ३ ए °नं चा ना°. ४ सी डी °पेक्ष्यन्ते. ५ ए °नालिपित स्म. ६ ए °य । अ°. सी डी °यम् । तत्र.

हृत्पेपमतिवंहीयस्त्वेनान्योन्यं संघर्षाद्धृदयानि पिष्ट्वा तथागाञ्छैला-न्प्रवेशं[1] प्रवेशं पर्वतवासित्वेन तदारोहकुशलत्वादभीक्ष्णं प्रविश्य तथो-च्चैर्विषमप्रवेशं कौतुकादिना विषमं[2] विषमं वनगह्वरादि प्रविश्य विषमं प्रविश्य प्रविश्य वा तथा वनं वनं तरु[3]खण्डं तरु[4]खण्डं[5] वेशं फलादिलि-प्सया प्रविश्याथ तथारण्यपातमारण्यपशुवधाद्यर्थमरण्यमरण्यं पति-त्वारण्यं पतित्वा पतित्वा वापगाश्च नदीश्चापातमापातं तथा सरः[6] सरः पातमपश्च जलानि च पादं पादं पानाद्यर्थमभीक्ष्णं गत्वा तथा द्राक् नद्यादीनां तटं तटं प्रपादं विश्रामाद्यर्थमाश्रित्य तथा द्रुमं द्रुमं स्कन्दं छायादिसुखलिप्सया गत्वा तथानध्वपादं मार्गस्य सैन्यैः संकीर्णत्वेन दुः-संचरत्वादमार्गममार्गं गत्वामार्गं गत्वा गत्वा वा तथानापतन्तं श्रान्तत्वे-नानागच्छन्तं जनमास्कन्दमास्कन्दमश्रान्तत्वेन शीघ्र[9]गत्वा[10]दुल्लङ्घ्योल्लङ्घ्य तथालमत्यर्थं फलाद्यवस्कन्दं फलपुष्पादि[11] फलपुष्पादि मुषित्वा[12] फलादि मुषित्वा[13] मुषित्वा वा तथो[14]त्फलद्भिरुच्छलद्भिः । किं कृत्वा । क्षणासं क्ष-[15]णमिति सूक्ष्मं कालभेदमतिक्रम्य तथा मुहूर्तं[16] द्विघटीमत्यासमतिक्र-म्योत्प्लुत्य क्षणं मुहूर्तं वा स्थित्वा पुनरुत्प्लवमानैरित्यर्थः । तथा या-मप्रतर्षं[17] प्रहरं प्रतृष्य[18] दृतिवाः खल्लस्थं जलं पिबद्भिश्च । वाःशब्दं क्लीबेपि केचित् ॥

---

१ **सी** °शं प°. २ **ए** °म व°. ३ **बी सी डी** °रुषण्ड. ४ **बी सी डी** °रुषण्डं. ५ **सी डी** °ण्ड ना°. ६ **ए** °रः पा°. ७ **सी** गत्वा दमार्गममार्ग गत्वा गत्वा वां तथा ना°. ८ **डी** °मार्गममार्ग गत्वा गत्वा वा. ९ **ए सी डी** शीध ग°. १० **ए** °दुर्लङ्घ्योल°. ११ **ए** °दि मु°. १२ **ए** त्वा वा. १३ **सी डी** °त्वा वा. १४ **ए सी डी** °थोत्पलवद्भिरुल्लद्भिः. १५ **ए** °ण म°. १६ **ए** द्विघटा°. १७ **ए** प्रकृष्य. १८ **ए** °त । पा.

**तर्पं च यामावपरेह्नि नामग्राहं मिथोह्वायिभिरग्रसैन्यैः[1] ।**
**सिप्रापयोपीयत मङ्क्षु नामादेसं(शं) समा वासभुवो गृहीताः २७**

२७. अपरेह्नि यामौ प्रहरद्वयं[1] तर्पं तर्पित्वाग्रसैन्यैः सिप्रापय उज्जयिनीसमीपस्थसिप्रानदीजलमपीयत । किंभूतैः सद्भिः । नामग्राहं मिथोह्वायिभिः । तथा मङ्क्षु नामादेशमियं जयसिंहस्येयं समरसिंहस्येति नामान्युच्चार्येत्यर्थः । समाः समस्ता वासभुव आवासस्थानानि गृहीताः[2] ॥

हत्पेषमायद्भिः । अत्र "परिक्लेश्येन" [ ८० ] इति णम्वा ॥

वनं वनं वेशम् । विषमप्रवेशम्[3] ॥ अगारप्रवेशं[4] प्रवेशम् । विषमप्रवेशम् ॥ सरः सरः पातम् । अरण्यपातम् ॥ आपगा आपातमापातम् । अरण्यपातम् ॥ तटं तटं प्रपादम् । अनध्वपादम्[5] ॥ अपः पादं पादम् । अनध्वपादम्[6] ॥ द्रुमं द्रुमं स्कन्दम् । फलाद्यवस्कन्दम् ॥ अनापतन्तमास्कन्दमास्कन्दम् । फलाद्यवस्कन्दम् । अत्र "विशपत०" [ ८१ ] इत्यादिना णम्वा ॥ वनं[7] वनं प्रविश्य[8] । वनं प्रविश्य प्रविश्य । इत्यादीनि पक्षोदाहरणानि स्वयं ज्ञेयानि ॥

यामौ[9] तर्पं पयोपीयत । यामतर्पं[10] पिबद्भिः । मुहूर्तमत्यासम्[11] । क्षणान्[12]समुत्फलद्भिः । अत्र "कालेन०" [ ८२ ] इत्यादिना णम्वा ॥

नामग्राहम्[13] । नामादेशम् । अत्र "नाम्ना०" [ ८३ ] इत्यादिना णम्वा ॥

---

१ बी °सैन्यः । सि°.

---

१ डी °यं तर्पंतेर्पि°. २ ए °हीतानि ॥ ह°. ३ ए °म । प्रवेशम । अ°. ४ डी °शं । वि°. ५ सी डी अध्वनपा°. ६ डी अध्वनपा°. ७ ए °नं प्र°. ८ सी डी °श्य । प्रविश्य । इ°. ९ सी डी यामौ न°. १० सी डी °म-तर्पं. ११ डी °त्यामसु°. १२ ए °णात समुमल°. १३ सी डी °मग्रहणम.

प्राप्ताग्रगैरुज्जयिनीत्यनुच्चैःकारं शनैःकृत्य किमात्थ तर्हि ।
रुद्धा च सा तैर्ननु कश्चिदुच्चैः कृत्वेत्यथ प्रत्यवदन्नृपाग्रे ॥ २८ ॥

२८. यद्यग्रगैरुज्जयिनी प्राप्ता तर्हीति प्राप्ताग्रगैरुज्जयिनीत्येतत्किं किमित्यनुच्चैःकारमनुदात्तस्वरेण तथा शनैःकृत्य मन्दमात्थ भणसि । उच्चैर्नाम प्रियमाख्येयमिति राज्ञोक्ते नन्विति पृष्टोक्तौ ननु सोज्जयिनी तैरग्रगै रुद्धा चेत्येवंप्रकारेणोच्चैः कृत्वा कश्चिद्वर्धापको नृपाग्रे जयसिंहाग्रे प्रत्यवदत् ॥

प्राप्ताग्रगैरुज्जयिनीत्यनुच्चैःकारम् । शनैःकृत्य किमात्थ तर्हि । इत्यत्र "कृगः" [ ८४ ] इत्यादिना क्त्वाणमौ ॥ अनिष्टोक्ताविति किम् । रुद्धा च सा तैरित्युच्चैः कृत्वा प्रत्यवदत् ॥

द्राक्पृष्ठतःकृत्य पयांसि तिर्यक्कारं समावासमथो नियुक्ताः ।
ते पार्श्वतःकारमिभांश्च तिर्यक्कृत्वाश्वशाला जगदुर्नृपाय ॥ २९ ॥

२९. अथो नियुक्ता नृपाय जगदुरावासादि कृतमस्तीत्यूचुः । किं कृत्वा । पयांसि नद्यादिस्थजलानि द्राक्पृष्ठतःकृत्य पृष्ठे कृत्वा तथा समावासमावासनिकां तिर्यक्कारं समाप्य रचयित्वेत्यर्थः । तथेभान्पार्श्वतःकारमावासपार्श्वभागे कृत्वा तथाश्वशालास्तिर्यक्कृत्य(त्वा?) समाप्य च ॥

स्राक्पार्श्वतोभावमुपेत्य नानाभूयाङ्कतोभूय च वारवध्वः ।
आवासमभ्यापततोस्य नानाभावं स्थितश्रीवदभानुपास्त्यै ॥ ३० ॥

---

१ ए °कृतकि°. २ ए डी °कृत्येत्य°. ३ ए °पास्तौ । वा°.

---

१ डी °रुज्जायि°. २ सी डी भणिमि. ३ बी सी डी °क्तेन न°. ४ बी डी °त् । आप्ता°. ५ ए सी डी °र्सान°. ६ बी °च । श्राक्पा°.

३०. वारवध्वो नानाभावं स्थितश्रीवन्नानाभावमनेकरूपीभूय स्थिता याः श्रियो लक्ष्म्यस्ता इवाभान् । किं कृत्वा । आवासमभ्यापततो-भिमुखमागच्छतोस्य जयसिंहस्योपास्त्यै सेवायै स्त्रागुपेत्यागत्य तथा पार्श्वतोभावं राज्ञः पार्श्वयोर्भूत्वा तथा नानाभूय वेषावस्थानादिवि-च्छित्तिभिरनेकप्रकारीभूय तथाङ्कतोभूय च सकलपरिच्छदस्य मध्ये भूत्वा च ॥

**भीरून्विनाकृत्य बलानि नानाकारं विनाकारमथान्यकार्यम् ।**
**क्षान्तेर्विनाभूय नृपः स नानाकृत्यादिशद्भङ्कुमवन्तिवप्रम् ३१**

३१. अथ नृपोवन्तिवप्रमुज्जयिनीकोट्टं भङ्क्तुं नानाकृत्यानेकप्र-कारमादिशन् । किं कृत्वा । अन्यकार्यं विनाकारं मुक्त्वा तथा क्षा-न्तेर्विनाभूय क्रुद्धीभूयेत्यर्थः । तथा भीरून्कातरान्विनाकृत्य मुक्त्वा तथा बलानि सैन्यानि नानाकारमनेकीकृत्य ॥

**सैन्याद्विनाभावमथ द्विधाभूय च द्विधाकृत्य च केपि यन्त्रम् ।**
**ग्राव्णो द्विधाकारमिहायतन्त मङ्क्ष्वद्विधाभावमधीशभक्तौ ३२**

३२. अथ केपि भटा इह वप्रभङ्गविषये मङ्क्ष्वयतन्त । किं कृत्वा । अधीशभक्तौ विषये द्विधाभूयै(धाभावमे ?)कीभूय स्वामिभक्त्यैकचित्ती-भूयेत्यर्थः । तथा सैन्याद्विनाभावं कटकं मुक्त्वा द्विधाभूय च द्वाभ्यां भागाभ्यां स्थित्वा च तथा शिलाः क्षेप्तुं यन्त्रं जातावेकवचनं यन्त्राणि द्विधाकृत्य च भागद्वयेन कृत्वा च ग्राव्णः शिला द्विधाकारं च ॥

---

१ ए °रमादिशत् ।. २ सी डी °वप्रम्. ३ ए °धाकृ°. ४ ए °म् । ग्ला-वाद्वि°.

---

१ डी °पास्त्यै से°. २ ए °भूयात्रे°. ३ सी °त्वा वा । भी°. ४ सी डी °य च द्वा°. ५ डी च । तिर्यक्कारम् । तत्र.

तिर्यकृत्वा । तिर्यक्कारम् । अत्र "तिर्यचा०" [ ८५ ] इत्यादिना क्त्वाणमौ ॥

अङ्गतोभूय । पार्श्वतोभावम् । पृष्ठतःकृत्य । पार्श्वतःकारम् । नानाभूय । नानाभावम् । नानाकृत्य । नानाकारम् । विनाभूय । विनाभावम् । विनाकृत्य । विनाकारम् । द्विधाभूय । अद्विधाभावम् । द्विधाकृत्य । द्विधाकारम् । अत्र "स्वाङ्ग०" [ ८६ ] इत्यादिना क्त्वाणमौ ॥

चखनुस्तथाज्ञामनु केपि तूष्णींभावं कुशीपाणय आशु वप्रम् ।
तस्थौ यथा द्वेषिजनोपि तूष्णींभूयैव तत्साहसदर्शनेन ॥ ३३ ॥

३३. कुशीपाणयः सन्तः केपि भटा आज्ञामनु नृपादेशेन हेतुना तूष्णींभावं वप्रभङ्गप्रच्छन्नतार्थं मौनेन स्थित्वाशु तथा वप्रं चखनुर्व्यदारयन् । यथा तत्साहसदर्शनेन तेषां भटानां दुष्करकर्मालोकनेन द्वेषिजनोपि तूष्णींभूयैव तस्थौ । तत्साहसदर्शनोत्थविस्मयातिरेकाद्यथा क्षणं निर्वचनक्रियोभूदित्यर्थः ॥

तूष्णींभूय । तूष्णींभावम् । अत्र "तूष्णीमा" [ ८७ ] इति क्त्वाणमौ ॥

केप्येकशोपि प्रभुकार्यमन्वग्भावं विदध्याम समेषिणोयुः ।
अमूनवेमेत्यभिकाङ्क्षिणोन्वग्भूयान्वसर्पन्नपरे च तूर्णम् ॥३४॥

३४. केपि भटा अयुर्वप्रभङ्गाय गताः । किंभूताः सन्तः । समेषिण इच्छन्तः । किमित्याह । वयमेकशोप्येकाकिनोप्यन्वग्भावं प्रभावनुकूलीभूय प्रभुकार्यं वप्रभङ्गं विदध्याम कुर्यामेति । इतिरत्र ज्ञेयः । तथापरे च भटा अन्वग्भूयानुकूलीभूय तूर्णमन्वसर्पन्वप्रभ-

१ सी डी कुवप्रं चखनु°. २ बी समिषि°.

१ डी °नाका°. २ ए सी डी °य । द्वि°. ३ सी डी °त्य । अ°. ४ डी °भूयेव. ५ ए °शमात्तवि°. ६ सी डी °नक्षयो°. ७ सी डी °टा आयु°. ८ ए °भावानु°.

ङ्गाय गतानेकाकिनो भटाननुजग्मुः । यतो वयममून्वप्रभङ्गायैकाकिनो गतान्भटानवेम साहाय्येन रक्षेमेत्यभिकाङ्क्षिणः ॥

अन्वग्भूय । अन्वग्भावम् । अत्र "आनुलोम्येन्वचा" । [ ८८ ] इति क्त्वाणमौ ॥

विद्ध्याम समेषिणः । अवेमेत्यभिकाङ्क्षिणः । अत्र "इच्छार्थे०" [ ८९ ] इत्यादिना सप्तमी ॥

**जज्ञेशकत्प्रारभताभ्यधृष्णोदासीद्विषेहे जघटेर्हति स्म ।**
**मिथो विलेभे खनितुं समर्थो वप्रं भटौघो न मनाक्च जग्लौ ॥ ३५ ॥**

३५. भटौघो वप्रं खनितुं जज्ञे कोट्टखननविद्यानिपुणत्वाज्ज्ञातवान् । तथा वप्रं खनितुं समर्थो बलिष्ठत्वात्प्रभुरत एव खनितुमभ्यधृष्णोदुदयच्छत् । ततः खनितुमर्हति स्म खनितुं शक्यानां वप्रप्रदेशानां प्राप्त्या खननसामग्रीसंपत्त्या च योग्योभूत् । ततः खनितुं मिथो विलेभेन्योन्यं विभागेन स्थापितवांस्ततश्च खनितुं प्रारभत ततश्च खनितुं जघटे संबद्धोभूत्संततं चखानेत्यर्थः । तथा खनितुमासीत्स्थितः कोट्टान्निपतदस्त्रभयेन न नष्ट इत्यर्थः । तथा खनितुं विषेहे खननं सोढवान्न खननेन श्रान्त इत्यर्थः । अत एव खनितुं मनाक्स्तोकमपि न जग्लौ न क्षीणहर्षोभूदत एव खनितुमशकत्खननं समाप्तवानित्यर्थः ॥

---

१ डी भटोघो.

---

१ ए वचनमूत्थप्र°. २ सी डी भटोघो. ३ डी °क्यामां वप्रदे°. ४ डी °ग्रीप°. ५ सी डी °तुमश°. ६ ए नष्ट°. ७ ए खने°. ८ बी °ने श्रा°.

अपारयत्प्राक्रमताध्यवास्यदविद्यतालं क्षमते स्म चाप्नोत् ।
ऐषीदवेदीद्युयुजेविदच्च संभाषितुं तं नृपतिर्न मम्लौ ॥ ३६ ॥

३६. नृपतिर्जयसिंहस्तं भटौघं संभाषितुं सस्नेहमालपितुमवेदीदज्ञासीत्तथा संभाषितुमलं समर्थोत एव संभाषितुमैषीदभ्यलषदत एव संभाषितुमध्यवास्यदुदयच्छदत एवं च संभाष्यभटसामीप्यप्राप्त्या संभाषितुमाप्नोत्संभाषणं भाषणमर्हति स्म । अत एवं च संभाषितुं प्राक्रमत प्रारेभे । तथा संभाषितुं युयुजे संबद्धोभूत्संततं संबभाष इत्यर्थः । तथा संभाषितुमविदच्च लेभे न केनापि निषिद्ध इत्यर्थः । तथा संभाषितुमविद्यतासीन्निपतदस्त्रादिभयं मुक्त्वा संभाषणे स्थिरोभूदित्यर्थः । तथा संभाषितुं क्षमते स्म संभाषणं सोढवान्संभाषणेन न श्रान्त इत्यर्थः । अत एव संभाषितुं न मम्लौ संभाषणेन न म्लानवानित्यर्थः । अत एव च संभाषितुमपारयत्संभाषणं परिपूर्णीचक्रे ॥

खनितुमशकत् । अभ्यधृष्णोत् । जज्ञे । प्रारभत । विलेभे । विषेहे । अर्हति । जग्लौ । जघटे । आसीत् । समर्थः ॥ संभाषितुमपारयत् । अध्यवास्यत् । अवेदीत् । प्राक्रमत । अविदत् । क्षमते । आप्नोत् । मम्लौ । युयुजे । अविद्यत । अलम् । इच्छार्थेषु । ए(ऐ)षीत् । इत्यत्र "शकधृष०" [ ९० ] इत्यादिना तुम् ॥

विंशः पादः ॥

---

१ बी °त्प्राक्रम°. सी त्प्राकम°. डी त्प्राक्षुमवाध्य°. २ सी डी °त् । एषी°. ३ बी °षितुं नृ°. सी डी °षि तं.

---

१ डी °टौघे सं°. २ ए डी °षितुमै°. सी °षितुंमै°. ३ सी डी °वासदु°. ४ बी सी डी °व सं°. ५ सी डी °पणम°. ६ सी डी °व सं°. ७ सी डी °तुं क्षम°. ८ ए °भाषिणं. ९ डी °त्यर्थात ए°. १० सी °षे एवं संभाषेतुं अ°. ११ ए °मत् । अ°. १२ बी °ते । प्राप्नो°.

तत्तद्धितं कर्तृभिरात्मभर्तुः समेत्य वृद्धैर्युवभिः क्षणाद्वा ।
दुःस्थैरथावन्तिभटैः स वप्रोध्यारोह्यभीतै रणतूर्यवाद्यात् ॥ ३७ ॥

३७. अथावन्तिभटैर्मालवभटैर्युवभिर्वृद्धैर्वा क्षणात्समेत्य मिलित्वा स वप्रोध्यारोहि रक्षार्थमध्यारूढः । किंभूतैः सद्भिः । आत्मभर्तुस्तत्प्रसिद्धं विजयादिकं हितमनुकूलं कर्तृभिर्भक्तत्वात्साधु कुर्वद्भिस्तथा दुःस्थैर्वप्रखननादिनारिभिराक्रान्तत्वाद्दुर्दशैस्तथा रणतूर्यवाद्याद्रणतूर्याणां वाद्यं शत्रुभिर्वादनं तस्मादभीतैश्च शूरत्वादक्षुब्धैश्च ॥

तद्धितमित्यनेन "तद्धितोणादिः" [ १ ] इति तद्धितसंज्ञा वृद्धैरित्यनेन "पौत्रादि वृद्धम्॰" [ २ ] इति वृद्धसंज्ञा युवभिरित्यनेन "वंश्य॰" [ ३–५ ] इत्यादिसूत्रेपूक्ता युवसंज्ञा दुःस्थैरित्यनेन "संज्ञा दुर्वा" [ ६–१० ] इत्यादिसूत्रोक्ता दुसंज्ञा वाद्यादित्यनेन "वाद्यात्" [११] इति सूत्रं चासूचि ॥

ते प्रेरिताः पैङ्गलकाण्वजैह्वाकातादिभिर्हारितकातयुक्तैः ।
त्रातुं पुरीं धानपतीं नु राष्ट्रपतीं ततः सौपगवाः प्रजह्रुः ॥ ३८ ॥

३८. ततोनन्तरं सौपगवा औपगवैर्भटभेदैर्युक्तास्तेवन्तिभटा राष्ट्रपतीं राष्ट्रपतेर्देशपतेर्यशोवर्मण इमां पुरीमुज्जयिनीं त्रातुं प्रजह्रुः शत्रुभिः सह युयुधिरे । यतो धानपतीं नु धनपतेर्धनदस्येयं धानपत्यलका महर्धिकत्वादिना तत्तुल्याम् । किंभूताः सन्तः । प्रेरिताः । कैः पैङ्गलकाण्वाः पिङ्गलस्य काण्व्यस्यर्षेश्छात्रा जैह्वाकाताश्च जिह्वाचपलस्य

१ सी पैगलाकात्वजै°. २ बी डी °ङ्गलिका°. ३ बी °ह्वाकांतादिदिभि°. ४ ए °जहुः । त°.

१ ए °था दुस्थै°. २ ए बी वंश इ°. ३ ए °क्ता दुःसं°. ४ ए सी °पते°. ५ ए °ज्जयनीं. ६ ए °जहुः श°. ७ ए °तीं भुवन°. ८ सी °तेन धन°. ९ ए काण्व्य°. १० बी सी डी काणवस्य°.

कात्यर्षेश्छात्रास्तदादिभिः पण्डितेति नाम्ना प्रसिद्धैः प्रधानैः । कीदृशैः । हा(ह?)रितकात्यस्येमे छात्रा हारितकातास्तद्युक्तैः ॥

यथा काण्व्यस्येमे[1] काण्वा इत्यत्र[2][3] "शकलादेर्यञः"[4] [ ६. ३. २७. ] इत्यञ् । तथा पैङ्गलकाण्वा इत्यत्र[5] "गोत्रोत्तर०" [ १२ ] इत्यादिनाञ् ॥ अजिह्वाकात्यहरितकात्यादिति[6] किम् । यथेहेयो[7] भवति कात्यस्य छात्राः कातीयास्तथेह न[8] । जैह्वाकात हारितकात ॥

औपगवाः । इत्यत्र "प्राग्जितादण्" [ १३ ] इत्यण् ॥

धानपतीम् । राष्ट्रपतीम् । अत्र "धनादेः पत्युः" [ १४ ] इत्यण् ॥

अत्रान्तरे दैत्यभिदस्तमामोदादित्य [आदित्य]मयुङ्क कर्म ।
विधातुमादित्यसमः सबार्हस्पत्यो नृपो वारितयाम्यकर्मा ॥३९॥

३९. अत्रान्तरे दैत्यभिदादित्योदित्याख्यमातुरपत्यं सूर्योस्तमाप्नोत् । ततश्च नृपो जयसिंह आदित्यमादित्यदैवतं कर्म संध्यावन्दनादिक्रियां विधातुमयुङ्क संबद्धोभूत् । कीदृक्सन् । सह बार्हस्पत्येन बृहस्पतेरपत्येन बृहस्पतिदैवतेन वा पुरोहितेनाभिगाख्येन[9][10] सह यः स तथा । तथा निवारितं याम्यं यमदैवतं कर्म प्राणिवधाद्यशुभक्रिया येन स तथा । ननु तादृशि युद्धसंरम्भेन्यो नृपजन आदित्यं कर्म स्मरत्यपि न तत्कथमसौ तत्कृतवानित्याह । यत आदित्यसमोदितिर्देव-[11]

१ ए सी °स्पतो नृ°.

१ बी काण्वस्ये°. सी काण्वास्ये°. २ ए °त्यथ शंक°. ३ बी °त्र सक°. सी °त्र सवला°. ४ ए °र्येञ् इत्यस्तथा पिङ्ग°. ५ सी °त्यस्तथा. °त्यत्रपपै°. ६ सी °त्यहारि°. ७ बी सी °थेयो. ८ ए न । जेह्वा°. सी न । जिह्वाकातहरि°. ९ बी °हितनामगा°. १० सी °तेन पिगोख्ये°. ११ सी °दित्यासैमेदिति देव°.

तास्य मातृत्वेन ञ्ये आदित्यः सूर्यस्तस्यापत्यं पुनर्ञ्ये आपत्यत्वाभावाद्यलोपाभावे आदित्यो(त्य्यो ?) मनुस्तेन धार्मिकत्वादिगुणैः समः ॥

**अथादितीयेस्तमयेत्र वानस्पत्यादिवोत्पत्य तमोग्रसिष्ट ।**

**अबाह्यबाहीकपदार्थसार्थं याम्यो नु कालेयमथो नु किं तत्**

**॥ ४० ॥**

४०. अथ तथादितीयेर्कसक्तेस्तमयेस्तगमने सति तमोबाह्यबाहीकपदार्थसार्थमबाह्यानां बाह्यानां च सर्वेषामित्यर्थः । पदार्थानां समूहमग्रसिष्टाद्दृश्यकारित्वाद्ग्रस्तवानि(वदि?)व । किं कृत्वा । अत्र वानस्पत्यादिवोत्पत्यात्र जगति यो वनस्पतीनां समूहस्तस्माद्वनगहनेभ्य इत्यर्थः । उत्प्लुत्येव । दिने हि तद्वननिकुञ्जेष्वासीदित्येवमाशङ्का । उत्प्रेक्षते । नैतत्तमः किं तर्हि याम्यो नु यमस्यापत्यमिवाथो अथवा किं कालेयं नु कलिकालस्यापत्यमिव कलेरागतमिव वा । किल यमो मृत्युभावेन कलिश्च कलिभावेन सर्वं वस्तुजातं ग्रसेते तमोपि सर्वं ग्रस्तवदतो ज्ञायते यमकल्योरपत्यमिव पितुरनुहर्तृत्वात्पुत्रस्येत्यर्थः । यद्वातिकृष्णत्वादेवमाशङ्का । कालेयमित्यत्र मतभेदेन क्लीबत्वम् ॥

**आग्नेयरुग्राडथ पार्थिवामप्यपार्थिवीं न्वीक्षितुमुज्जयिन्याः ।**

**बहिर्निवेशश्रियमङ्गरक्षावौत्सौदपानावपि वर्जितागात् ॥ ४१ ॥**

४१. अथ राड् जयसिंह उज्जयिन्या बहिर्निवेशश्रियं बाह्यप्रदेशलक्ष्मीमीक्षितुमगात् । यतः पार्थिवामपि पृथिव्यां भवां जातां

१ बी °वेशेश्रि°. २ सी °श्रियं बाह्य°.

१ सी ञ्ये अप°. २ बी आपात्य°. ३ सी °दितिगुणैस°. ४ ए °स्तग°. ५ बी °दार्थे सा°. ६ बी °ने ह त°. ७ सी °शक्य उ°. ८ बी सी °वत्तनो. ९ बी °देशे ल°.

पृथिव्या इमामपत्यमपि वा । एवं यथासंभवमन्यत्राप्यर्था अभ्यूह्याः । अपार्थिवीं न्वत्युत्कृष्टत्वोत्स्वर्गभवामित्र[1] । कीदृक्सन् । औत्सौदपा[2]नावपि सदा सहचरावुत्सोदपानाख्यदेशयोर्भवौ जातौ वा । यद्वोत्सो[3]दपानदेशराजयोरपत्ये अङ्गरक्षावपि वर्जिता त्यजनशील एकाकीत्यर्थः । यत आग्नेयरुग् निर्भीकतादिगुणैः कार्तिकेयसमः ॥

दैत्यः(त्य) । आदित्यः । आदित्यम् । याम्य ॥ पत्युत्तरपद । बार्हस्पत्यः[4] ॥ अणपवादे[5] च । आदित्य्य[6] । याम्यः । वानस्पत्यात् । इत्यत्र "अनिदमि०" [१५] इत्यादिना[7] ञ्यः ॥ अनिदमीति किम्[8] । आदितीये ॥

बाहीक[9] । अबाह्य । इत्यत्र "बहिषष्टीकण्च" [ १६ ] इति टीकण् ञ्यश्च ॥

कालेयम् । आग्नेय । इत्यत्र "कलि०" [ १७ ] इत्यादिनैयण् ॥

पार्थिवाम् । अपार्थिवीम् । अत्र "पृथिव्या ञाञ्" [ १८ ] इति ञाञौ ॥

औत्सौदपानौ । इत्यत्र "उत्सादेरञ्" [ १९ ] इत्यञ् ॥

**दैवीं स सौवष्कयिवाष्कयाश्वत्थामोड(डु)लोमैरुपयुक्ततीर्थाम् ।**
**सिप्रां ययौ दैवमसिं दधानः श्रियं च दैव्यां महिमापि दैव्यम् ॥ ४२ ॥**

४२. स राजा सिप्रां ययौ । कीदृक्सन् । दैवं[10] देवैरधिष्ठितत्वाद्देवानामिममसिं दैव्यां देवसंबन्धिनीं श्रियं चाङ्गलक्ष्मीं च दैव्यं महिमापि प्रभावमपि दधानः । किंभूतां सिप्राम्[11] । दैवीं देवैरधिष्ठितत्वेन देवसंबन्धिनीम् । तथा सौवष्कयिवाष्कयाश्वत्थामोडुलोमैः[12] सुवष्कयवष्कयाश्वत्थामोडुलोम्नामृषीणामपत्यैरुपयुक्ततीर्थां संयुक्तावताराम् ॥

---

१ प सी °त्वात्सर्ग°. २ प औत्सोद°. सी औमौद°. ३ प °द्वोत्सौद°. ४ सी °स्पतः । अ°. ५ सी °दे यः । आ°. ६ प °दित्य । या°. बी °दित्य्यः । या°. ७ प °त्यादिना. ८ प °म् । अदि°. ९ सी °हीकः । अ°. १० प °वं दैवै°. ११ प °म् । दैवीं. १२ प सी °ष्कयवा°.

वाष्कय । इत्यत्र "वष्कयाद्०" [ २० ] इत्यादिनाञ् ॥ असमास इति किम् । सौवष्कयि ॥

दैव्यम् । दैवम् । इत्यत्र "देवाद्यञ्" [२१] इति यञञौ ॥ यञन्तादञन्ताच्च ङ्यां देवीम् । यञन्ताद्दैव्यायनीत्यपि स्यात् ॥ केचित्तु ञ्यप्रत्ययमपीच्छन्ति । दैव्याम् ॥

अश्वत्थाम । इत्यत्र "अः स्थाम्नः" [ २२ ] इति-अः ॥

उडुलोमैः । अत्र "लोम्नोपत्येषु" [ २३ ] इति-अः ॥

**षाण्मातुराभो द्विरथर्षभांसस्त्रिवेदवन्ध्यां तटिनीमटन्सः ।**
**स्त्रैणं बलिं पाञ्चकपालमास्वादयत्ततोपश्यदपौंस्नमारात् ॥ ४३ ॥**

४३. ततः स नृप आरान्निकटे स्त्रैणं स्त्रीसमूहमपश्यत् । कीदृक् । द्वयो रथयोर्द्विरथ्या वा वोढा द्विरथो य ऋषभस्तस्येवातिवलिष्ठावंसौ स्कन्धौ यस्य स तथात एव षाण्मातुराभः षण्णां मातॄणां कृत्तिकानामपत्यं षाण्मातुरः स्कन्दस्तत्तुल्यस्तथा त्रिवेदैस्त्रीन्वेदान्विद्वद्भिरधीयानैर्वा तीर्थत्वाद्वन्ध्यां तटिनीं नदीमटन्सन् । किंभूतं स्त्रैणम् । अपौंस्नं पुरुषौघरहितं तथा पाञ्चकपालं पञ्चकपालस्य पञ्चसु कपालेषु संस्कृतस्य हविरादेरिमं बलिमास्वादयद्भक्षयत्सत् ॥

द्विरथ । इत्यत्र यप्रत्ययस्य त्रिवेद । इत्यत्राणश्च "द्विगोर्०" [ २४ ] इत्या-

---

१ प °वध्यां त°. २ प °दपोस्न°.

---

१ प सी यत्राञौ. २ प °ङ्यां देवी°. ३ प °न्ताद्देव्या° सी °न्ताद्दैवायिनी°. ४ बी °द्देवाय°. ५ प °त्तु ञप्र°. ६ बी सी दैव्यम्. ७ सी अः । षण्मा°. ८ प °यो द्विरश्या वा. ९ प सी °न्दतत्तु°. १० प सी °अपैस्नं. ११ प °रुषोध°. १२ प सी °था पञ्च°. १३ प °रिव मंय°.

दिना लुप् ॥ अनपत्य इति किम् । षाण्मातुर[1] ॥ अद्भिरिति किम् । पञ्चसु कपालेषु संस्कृतं पञ्चकपालं तस्येमं पाञ्चकपालम् ॥

स्त्रैणम् । अपौंस्नम्[2] । इत्यत्र० "स्त्री०" [ २५ ] इत्यादिना नञ्स्नञौ ॥

स्त्रीत्वेपि चौग्र्यादतिलङ्घ्य पुंस्तास्त्रैणे मिथो जल्पति तत्र राजा ।
तद्योगिनीवृन्दमिति व्यबुद्धाश्रणोद्दिरं चेत्यनवद्यपौंस्नः ॥ ४४ ॥

४४. स्पष्टम् । किं तु स्त्रीत्वेपि च नारीत्वेप्यौग्र्यात्प्रचण्डिम्ना पुंस्तास्त्रैणे पुरुषत्वस्त्रीत्वे अतिलङ्घ्य स्त्रीपुंसावतिक्रान्तं प्रागल्भ्यमाश्रित्येत्यर्थः । तत्र स्त्रीसमूहे । अनवद्यपौंस्नो निष्कलङ्कपौरुषः ॥

स्त्रैणे स्त्रीत्वे । पौंस्नः पुंस्ता । इत्यत्र "त्वे वा" [ २६ ] इति वा नञ्स्नञौ ॥

गव्ये पुरो दर्भमयं[1] चुलुक्यं कृत्वा तथा कीलय लोहकीलैः ।
द्रौग्गार्ग्यगार्ग्यायणदाक्षिवाहव्यौदश्विमत्रैर्न[2][3][4] यथैष रक्ष्यः ॥४५॥

४५. स्पष्टः । किं तु हे गव्ये[3] गोः पुत्रि गोदेवते वा । लोहकीलैः स्तम्भनमन्त्रानुविद्धलोहमयकीलकैः । गर्गस्यापत्यं पौत्रादि गार्ग्यो गार्गेरपि गार्ग्यो गार्ग्यस्यापि गार्ग्यो[4] गार्ग्यायणस्यापि गार्ग्यस्तथा गर्गस्यापत्यं वृद्धं गार्ग्यस्तस्यापत्यं युवा गार्ग्यायण एवमादय ऋषयः ॥

गव्ये । अत्र "गोः स्वरे[5] यः" [ २७ ] इति यः ॥

औपगवाः । दैत्य[6] । औत्स । एषु "ङसोपत्ये" [ २८ ] इति यथाविहितमणादयः ॥

---

१ सी दर्कम°. २ बी सी द्राग्जार्ग्य°. ३ ए °र्ग्यगग्या°. ४ सी °वाहिन्यौद°.

---

१ ए सी °तुरः । अ°. २ ए अपौंस्तम्. ३ सी °व्ये गोपु°. ४ सी गार्ग्या°. ५ बी °रे इ°. ६ सी दैत्यः । औ°.

गार्ग्य । इत्यत्र "आद्यात्" [ २९ ] इत्यपत्येणादय आद्यात्परमप्रकृतेरेव ॥

गार्ग्यायण । इत्यत्र "वृद्धाद्यूनि" [ ३० ] इति यून्यपत्ये विवक्षिते यः प्रत्ययः स आद्याद्वृद्धप्रत्ययान्तात्स्यात् ॥

दाक्षि । इत्यत्र "अत इञ्" [ ३१ ] इति-इञ् ॥

वाहवि । औदञ्चि । इत्यत्र "बाह्वादिभ्यो गोत्रे" [ ३२ ] इति-इञ् ॥

त्वं[1] सैन्द्रवर्मिं सह चाक्रवर्मणेनाजवा(बा ?)ष्कादिकधेनविभ्याम् ।
पातासि चेदुज्जयिनीपतिं तत्कार्णिं क्षिप ब्राह्मणधेनविग्रः ॥४६॥

४६. हे ब्राह्मणधेनविग्रो ब्राह्मणधेनवेर्मुनिभेदस्य[2] ग्रासिके सैन्द्रवर्मिमिन्द्रवर्मणोपत्येन[3] राजभेदेन सहितमुज्जयिनीपतिं चेत्पातासि रक्षिष्यसि । कैः सह । चाक्रवर्मणेन नृपविशेषेण तथाजवाष्कादिकधेनविभ्यामाजधेनविवाष्कधेनविभ्यां प्रधानाभ्यां च सह । तत्तदा कार्णिं जयसिंहं क्षिप निरस्य ॥

न खल्वयं ब्राह्मणधेनवाम्भी सांभूयिभौयी न च नामितौजिः ।
नौदिर्न शालङ्किरथो न[2] षाडि[3]वैयासकिर्नापि न वाड्वलिर्वा ॥४७॥
न वैम्बकिर्वारुट(ड ?)किर्न सौधातकिर्न नैपादकिरेष नापि ।
किं तु प्रतापी जयसिंह एष हन्तुं यतध्वं तदिहोग्रमन्त्रैः ॥४८॥

४७, ४८. ब्राह्मणधेनवाम्भी सांभूयिभौयी औदिः शालङ्किर्वाग्वद(ड्वल ?)स्यापत्यं वाड्वलिः सौधातकिर्नैपादकिश्च ऋषयः । आमितौजिर्वैव(वैम्ब ?)किश्च नृपौ । तथा प्रसिद्धानां षण्णां पूर्वजानाम-

---

१ सी त्वं सेन्द्रवानेस°. २ सी न खाडिवैया°. ३ ए °डिविया°. बी °डिवैया°.

---

१ सी इव्यपत्योणा°. २ सी °स्य ग्रसिके सेद्रवमिमिद्रवर्म°. ३ बी °मिद्रव°. ४ सी बी °भ्यां च. ५ बी नृपः । त°.

पत्यं[1] षाडिः पुरुषविशेषः । यद्वा षण्णां कृत्तिकानामपत्यं षाडिः कार्तिकेयः । षाडिरिवानेकशक्तियुक्त[2]त्वात्षाडिः कश्चिन्नृपः । तथा व्यासस्यापत्यं वैयासकिर्ऋषिः पाण्डववंश्यः कश्चिद्राजा वा । तथा [3]वरुटस्य गन्छकस्यापत्यं वारुटकिः । एते सर्वेपि महामन्त्रशक्त्यानुपेता अपि युष्माभिश्छलिताः । एष तु राजा नैतत्सदृशः किं तु प्रतापी जयसिंहस्तत्तस्मादिह जयसिंहविषय उग्रमन्त्रैः प्रचण्डैरभिचारमन्त्रैः कृत्वा हन्तुं[4] यतध्वमित्यर्थः ॥

**चाण्डालकिं चण्डि यथाथ कार्मारकिं सवैयाघ्रकिमाशिथ प्राक् ।**
**विभज्य पौनर्भवमाग्निशर्मक्युदारनानान्द्रमथो यथा वा ॥ ४९ ॥**
**भीमस्य पौत्रं जयकेशिनश्च दौहित्रमेनं न तथात्सि किं तु ।**
**हतप्रभावा पवमानपारस्त्रैणेयसूनोरिव मन्त्रजातैः ॥ ५० ॥**

४९, ५०. हे चण्डि चण्डिकाख्ययोगिनि यथा प्राक् चाण्डालकिं[5] चण्डालापत्यं महामान्त्रिकमाशिथाखादोथाथ वा यथा सवैयाघ्रकिं व्याघ्राख्य[6]नरभेदापत्ययुक्तं कार्मारकिं महामान्त्रिकं लोहकारापत्यमाशिथाथो वाथ वा यथा पौनर्भवं पुनर्भ्वाः पुनरूढाया अनन्तरमपत्यमाग्निशर्मक्युदारनानान्द्रमाग्निशर्मक्या अग्निशर्माह्वब्राह्मणपुत्र्याः संबन्धिनमुदारं मन्त्रबलेनोद्भटं ननान्दुरपत्यं विभज्यान्ययोगिनीभिः सह विभागेन कृत्वाशिथ । तथा भीमस्य पौत्रं जयकेशिनश्च मयणल्लापितुर्दौहित्रमेनं जयसिंहं किं तु किमिति नात्सि न खादसि । कीदृक्सती । हतप्रभावेव । कैर्मन्त्रजातैर्मन्त्रौघैः[7] । कस्य पवमानपारस्त्रैणेयसूनोः परस्य स्त्री परस्त्री तस्या अपत्यं पारस्त्रैणेयः । पवमानस्य

---

१ ए °त्यं पु°. २ ए °क्त क°. ३ ए वरूढछक°. ४ बी °न्तुं प्रय°. ५ सी °किं चाण्डा°. ६ ए °घ्रास्य न°. ७ ए °मैत्रौघैः.

वायोः पारस्त्रैणेयो यः सूनुस्तस्य हनूमतः । हनूमान्ह्यञ्जनामर्कट्यां परयोषिति वायुना मर्कटरूपेण सङ्गे सति जात इति लोकोक्तिः । हनूमद्दैवतमन्त्रैर्हि भूतशाकिन्यादिप्रभावा हन्यन्ते[2] ॥

सार्या हि नः पारशवा वि(बि ?)दास्ते[1]
सगार्ग्यवात्स्याश्छलिताः[2] पुरा ये ।
यद्रूप और्वाग्निरिव प्रतापी
संस्पृश्यमानोपि दहत्यसौ नः ॥ ५१ ॥

५१. स्पष्टः । किं तु नै[3] इत्यत्र "कृत्यस्य वा" [ २. २. ८८. ] इति[4] कर्तरि षष्ठी । अस्माभिरित्यर्थः । पारशवाः पराः पुरुषाद्भिन्नवर्णाः स्त्रियः परस्त्रियस्तासामपत्यानि[5] । विदा विदर्[6]ष्यपत्यानि । यद्यस्माद्धेतोः ॥

सैन्द्रवर्मिम् । इत्यत्र "वर्मणोचक्रात्" [ ३३ ] इतीञ् ॥ अचक्रादिति किम् । चाक्रवर्मणेन ॥

आजधेनविवाष्कधेनविभ्याम् । अत्र "अजादिभ्यो धेनोः" [ ३४ ] इतीञ् ॥

ब्राह्मणधेनवि ब्राह्मणधेनव । इत्यत्र "ब्राह्मणाद्वा" [ ३५ ] इति वा-इञ् ॥

भौयी । सांभूयि । आंम्भी[7] । आमितौजिः । अत्र "भूयः" [ ३६ ] इत्यादिनेञ् सस्य लोपश्चैषाम् ॥

शालङ्किः । औदिः । पाडिः । वाड्वलिः[8] । इत्येते "शालङ्कि०" [ ३७ ] इत्यादिनेञन्ता निपात्याः ॥

---

१ प वियस्ते संगा°. २ सी °लिना परा.

---

१ सी भूतिशा°. २ प °न्ते । मायां हि. ३ प न रूपेणत्य°. ४ प °तितक°. ५ प °स्त्रियास्ता°. ६ प °दर्श्यप°. ७ बी आम्भीः । आ°. ८ प सी °लिः । एते.

वैयासकिः । वारुटकिः । सौधातकिः । नैषादकिः[1] । बैम्बकिः । चाण्डालकिम् । अत्र "व्यास०" [ ३८ ] इत्यादिनेञ् । अक् इत्यन्तादेशश्चैषाम् ॥ कर्मारव्याघ्राग्निशर्मभ्योपीच्छन्त्येके । कार्मारकिम् । वैयाघ्रकिम्[2] । आग्निशर्मकी ॥

पौनर्भवम् । पौत्रम् । दौहित्रम् । नानान्द्रम् । अत्र "पुनर्भू०" [ ३९ ] इत्यादिना-अञ् ॥

पारशवाः[3] । अत्र "पर०" [ ४० ] इत्यादिनाञ् परस्त्रीशब्दस्य परशुभावश्च ॥ असावर्ण्ये इति किम् । पारस्त्रैणेय । सङ्ककाले पवमानस्य मर्कटरूपत्वादसावर्ण्याभावः ॥

विदाः । और्व । इत्यत्र "विदादेर्वृद्धे" [ ४१ ] इत्यञ् ॥

गार्ग्यवात्स्याः । अत्र "गर्गादेर्यञ्" [ ४२ ] इति यञ् ॥

**सहैव माधव्यककाप्यबौध्यबाभ्रव्यवातण्ड्यवतण्ड्यपत्यैः[1] ।**
**श्वोसौ यशोवर्मनृपं ग्रहीताधुना[2] न चेच्छक्नुथ हन्तुमेनम् ॥५२॥**

५२. स्पष्टः । किं तु मधोरपत्यं वृद्धं ब्राह्मणो माधव्यो राज्ञस्त्राणासमर्थत्वात्कुत्सितो माधव्यो माधव्यक एवमाद्यैः प्रधानैस्तथा वतण्डस्यापत्यं वृद्धं स्त्र्याङ्गिरसी वतण्डी तस्या अपत्यं वतण्ड्यपत्यं तेन च प्रधानेन सहैव । असौ जयसिंहः ॥

माधव्य[6] । बाभ्रव्य । इत्यत्र "मधु०" [ ४३ ] इत्यादिना यञ् ॥

काप्यं[7] । बौध्य । इत्यत्र "कपि०" [ ४४ ] इत्यादिना यञ् ॥

---

१ **बी** °ड्यचतन्द्रप°. २ **ए बी सी** °पं गृही°.

---

१ **ए** °किः । चम्ब°. **बी** °किः । बेम्ब°. २ **बी** °म् । अग्नि°. ३ **ए** °शवः । अ°. ४ **ए** राजस्त्रा°. ५ **बी** °ज्ञस्त्रीणा°. ६ **सी** °धव्यः । बा°. ७ **सी** °प्य । बोध्य.

वातण्ड्य । इत्यत्र "वतण्डात्" [ ४५ ] इति यञ् ॥

वतण्डी । इत्यत्र "स्त्रियां लुप्" [ ४६ ] इति यञो लुप् ॥

कौञ्जादिगाणादिकयन्यकौञ्जायन्यादयः कष्टमहो अमूभिः ।
तटेत्र सन्तीति मृशन्समक्षीभूयेत्यथाह्वास्त स ताश्चुलुक्यः ॥५३॥

५३. अथ स चुलुक्यः समक्षीभूय प्रत्यक्षीभूय ता योगिनीरिति वक्ष्यमाणप्रकारेणाह्वास्त सस्पर्धमाकारयत् । कीदृक्सन् । मृशंश्चिन्तयन् । किमित्याह । अत्र तटेमूभिर्योगिनीभिर्हेतुभिः कौञ्जादिगाणादिकयन्यकौञ्जायन्यादयः कौञ्जायन्यग(गा ?)णायन्यकौञ्जायनीप्रभृतय ऋषय ऋष्यश्चाहो आश्चर्यं कष्टं दुःखेन सन्तीति । आश्चर्यं चानेकशक्तियुक्तानामृषीणामप्येतासां छलनभयेन कष्टमवस्थानात् ॥

कौञ्जायनानां श्चयथाद्यवेषं गाणायनानामथ मायया चेत् ।
शाङ्खायनाश्वायनतां च याथ ज्ञात्वा निगृह्णामि ततोप्यहं वः
॥ ५४ ॥

५४. स्पष्टः । किं तु माययालक्ष्यतार्थं छद्मना । शाङ्खायनाश्वायनतां च याथ शाङ्खायनाश्वायनमुनिवेषा वा भवथेत्यर्थः । ततोपि तदापि ज्ञात्वा योगिन्य एता इति बुद्धिप्रयोगेणावगम्य ॥

कौञ्जायन्य । गाणायन्य । इत्यत्र "कुञ्जादेर्ञायन्यः" [ ४७ ] इति ञायन्यः ॥

---

१ बी सी कौजादि°. २ सी °कौजाय°. ३ सी कौजाय°. ४ बी सी °षं गणा°. ५ प °तां य या°.

---

१ सी वक्ष्मा°. २ सी कौजादि°. ३ बी °दिय°. ४ प °श्वानयतां. सी °श्वामततां यथा शा°. ५ बी च यथा शा°.

कौञ्जायनी । कौञ्जायनानाम्[1] । गार्णायनानाम् । इत्यत्र[3] "स्त्री०" [ ४८ ] इत्यादिना-आयनञ् ॥

आश्वायनताम् । शाङ्खायन । इत्यत्र "अश्वादेः" [ ४९ ] इत्यायनञ् ॥

वित्रस्तशापायनबन्धुभारद्वाजायनाद्याश्रममारसन्त्यः[1] ।
भार्गायणाद्युद्भयमुत्पतन्त्यो योगिन्य एयुस्तमथास्त्रहस्ताः[2] ॥५५॥

५५. योगिन्यस्तं जयसिंहमेयुः । किंभूताः सत्यः । वित्रस्ता[4] भीताः शापायनस्यर्षेर्बन्धूनां भारद्वाजायनाद्यानामृषीणामाश्रमा उपचारादाश्रमस्था ऋषयं[5] ऋष्यश्च यत्र[6] तद्यथा स्यादेवमारसन्त्यो रौद्रं शब्दायमानास्तथा भार्गायणादीनामृषीणामुदुद्गतं भयं यत्र त[7]द्यथा स्यादेवमुत्पतन्त्य उच्छलन्त्यस्त[8]थास्त्रहस्ताः ॥

शापायन । भारद्वाजायन । इत्यत्र "शप०" [ ५० ] इत्यादिनायनञ् ॥

भार्गायण । इत्यत्र "भर्गात्०" [ ५१ ] इत्यादिनायनञ् ॥

नाडायनैरप्यवि[3]तर्जिता आत्रेयायणैरप्यहतास्तपद्भिः ।
चारायणैरप्यविचारिताश्च गार्ग्यायणैरप्यविबाधिता नः ॥ ५६ ॥
अन्यैश्च दाक्षायणहारितायनाद्यैरनुन्नास्तुदसीति वत्र्यः ।
क्रौष्टायनार्च्यास्तरसाथ ताः[4] कैदासायनेज्याः क्षितिपे प्रजहुः
॥ ५७ ॥

५६, ५७. स्पष्टे । किं तु । तपद्भिस्तपस्यद्भिः । अनेनैषां तप-

१ सी °सत्यः । भा°. २ बी °थात्रह°. सी °थाव ह°. ३ बी °विवर्जि°. ४ बी ताः कौदा°. सी ताः कैदा°.

१ बी °म् । गणा°. २ सी °णाथाय°. ३ ए °त्यस्मातगदेना. ४ सी °त्रस्ताः शा°. ५ सी °यत्र. ६ बी °त्र यथा त°. ७ ए तनद्य°. ८ सी °स्तह°. ९ ए °थास्वह°.

श्चरणोत्था अनेकाः शक्तय उक्ताः । तद्युक्तैरपि नाडायनादिमहर्षिभि-रकृततर्जनाहननाद्या नोस्मांस्तुदसीति वक्ष्यः । ईड्याः स्तुत्याः । ता योगिन्यः ॥

**दार्भायणैरप्युदितं स्मृतं शालङ्कायनैश्चेति यदागसि स्त्रीम् ।**
**प्रशासतो नांह इति स्मरन्नप्युच्छूकमाशु प्रजहार भूपः ॥ ५८ ॥**

५८. भूप उच्छूकं स्त्रीपु प्रहरणं नोचितमिति चिन्तयोद्गतघृणं यथा स्यादेवमाशु योगिनीपु प्रजहार । कीदृक्सन् । स्मरन्नपि जानन्नपि । किमित्याह । आगस्यपराधे सति स्त्रीं प्रशासतो यन्नांहः स्त्रीहत्योत्थं पापं न स्यादित्येतद्दार्भायणैरपि मुनिभेदैरप्युदितं शालङ्कायनैश्च स्मृतमिति ॥

**काष्र्णायनीव क्षुभिताग्निशर्मा-**
**यणीव राणायनिकेव किं वा ।**
**असीति जल्पन्त्यथ ता निनङ्क्षूः**
**कोपादुदस्थात्किल तत्र काली ॥ ५९ ॥**

५९. अथ किलेति सत्ये । तत्र योगिनीपु मध्ये काली पीठस्वामिनी कोपादुदस्थाद्युद्धायोदयच्छत् । कीदृक्सती । ता योगिनीर्निनङ्क्षूर्नंष्टुमिच्छूः प्रत्येकं जल्पन्ती । कथमित्याह । यथा कार्ष्णायन्याद्या ऋषिपुत्र्यः कातरत्वात्क्षुभ्यन्त्येवं त्वं किमिति क्षुभितासीति ॥

**किं शौनकायन्यहमस्मि शारद्वतायनी पार्वतिपत्न्यथो किम् ।**
**किं पार्वतायन्युत शंस जैवन्तायन्यथो सेति जहास भूपम् ॥६०॥**

१ प °यनैर°. २ बी °तो नाह. ३ प सी वा । आमी°. ४ बी भूपः । स्प°. सी भूप । स्प°.

१ बी चितयो°. २ बी सी यन्नाहः. ३ प °नक्षून°.

६०. स्पष्टः । किं तु शौनकायन्याद्या ऋषिपुत्र्यः । अस्मि वर्ते । पार्वतिपत्नी पार्वते[1]र्मुनेर्भार्या । शंस हे राजन् कथय । सा काली ॥

**जैवन्तिवद्रौणिवदद्य तिष्ठ तिष्ठेति वक्त्र्याविरनेकरूपा ।**
**चौलुक्य राजंस्तरसातिशैवद्रौणायनं सापिदधेस्त्रवर्षैः ॥ ६१ ॥**

६१. स्पष्टः । किं तु हे राजञ्जैवन्तिवज्जीवन्तापत्यराजवद्रौणिव-द[2]श्वत्थामनृपवदद्य तिष्ठ[3] तिष्ठ मा नेश इत्यर्थः । इति सा काली । अतिशैवद्रौणायनं शौर्यादिगुणै(णैः) कार्तिकेयाश्वत्थामावतिक्रान्तम् ॥

**काकुस्थ(त्स्थ)वच्छक्रजिता क्षणं राज्ञासिष्ठवद्गाधिसुतेन चोच्चैः ।**
**भैमेन कानीन इवावधूतः श्वाफल्कदाशार्हसमस्तथा(या?)स्त्रैः ॥ ६२ ॥**

६२. श्वफल्कस्यापत्यं श्वाफल्कोन्धकक्षत्रियभेदो दशा[4]र्हाणामपत्यं दाशार्हो विष्णुर्द्वन्द्वे ताभ्यां समो राड् जयसिंहस्तया कालयास्त्रैः क्षणमवधूतः क्षिप्तः । यथा[5] काकुस्थः(त्स्थः) ककुस्थ(त्स्थ)स्यापत्यं[6] काकुस्थो(त्स्थो) रामो लक्ष्मणो वा शक्रजिता रावणपुत्रेण यथा[7] च वासिष्ठः कामधेनुप्रत्याहरणव्यतिकरे [8]वसिष्ठर्षिणोत्पादितत्वाद्व[9]सिष्ठस्यापत्यं परमारादि(पराशरादि ?)पुरुषो गाधिसुतेन विश्वामित्रेण यथा च कानीनः कन्याया अपत्यं कर्णो भैमेन भीमस्य पाण्डोरपत्येन घटोत्कचेनोच्चैः क्षणमस्त्रैरवधूतः । एतैरुपमानैर्जयसिंहकर्तृकः काल्या भावी पराभवोसूचि । का[10]कुत्स्थादिभिः पश्चाच्छक्रजिदादीनां विजयात् ॥

---

१ **ए सी** °तेमुनेभार्या. २ **ए सी** °श्वस्थाम°. ३ **सी** °ष्ठ मा. ४ **ए** °शा-र्हणा°. ५ **ए** °था क°. ६ **बी** °पत्यं रा°. **सी** °पत्य रा°. ७ **ए सी** °था वा वशिष्ठः. ८ **ए सी** वशिष्ठ°. ९ **ए बी** °द्वशिष्ठ°. १० **बी** °कुस्थादि°.

यत्रैवर्णच्छागलशौङ्गवैकर्णाद्यैः स्वयं वैश्रवणेन चापि ।
सुदुर्लभं रावणजित्समौजा मायाघ्नमस्त्रं स्मरति स तत्सः ॥ ६३ ॥

६३. रावणजित्समौजा रामचन्द्रतुल्यबलैः स जयसिंहस्तन्मायाघ्नमनेकरूपकरणादिच्छद्मापहार्यस्त्रं स्मरति स्म । यन्महाप्रभावत्वात्त्रैवर्णच्छागलैशौङ्गवैकर्णाद्यैर्मुनिभेदैः स्वयं वैश्रवणेन चापि धनदेनापि सुदुर्लभम् ॥

आत्रेयायणैः । अत्र "आत्रेयाद्०" [ ५२ ] इत्यादिनायनञ् ॥

नाडायनैः । चारायणैः । इत्यत्र "नडादिभ्य आयनण्" [ ५३ ] इत्यायनण् ॥

गार्ग्यायणैः । दाक्षायन(ण) । अत्र "यञिञः" [ ५४ ] इत्यायनण् ॥

हारितायनं । कैदासायनं । इत्यत्र "हरितादेरञः" [ ५५ ] इत्यायनण् ॥

क्रौष्टायन । शालङ्कायनैः । अत्र "क्रोष्टृ०" [ ५६ ] इत्यादिनायनण् । तयोश्चान्तस्य लुक् ॥

दार्भायणैः । कार्ष्णायनी । आग्निशर्मायणी । राणायनिका । शारद्वतायनी । शौनकायनी । इत्यत्र "दर्भकृष्ण०" [ ५७ ] इत्यादिनायनण् ॥

जैवन्तायनी जैवन्तिवत् । पार्वतायनी पार्वतिं । इत्यत्र "जीवन्त०" [ ५८ ] इत्यादिनायनण्वा ॥

द्रौणायनम् द्रो(द्रौ)णि । इत्यत्र "द्रोणाद्वा" [ ५९ ] इति वायनण् ॥

शैव । काकुस्थ(त्स्थ) । इत्यत्र "शिवादेरण्" [ ६० ] इत्यण् ॥

---

१ ए °णच्छाग°. सी °णस्थाग°. २ ए सी °शौगवै°. ३ बी °न वापि.

---

१ सी °त्समौ राजा. २ ए °ल: ज°. ३ सी °णस्थाग°. ४ ए °लशौङ्ग.° ५ सी °शौगवं°. ६ बी °न । कैदा°. ७ बी °न । ह°. ८ बी सी °नी । अग्नि°. ९ ए °र्वति. १० बी °ण् । शिव.

ऋषि । वासिष्ठ[1] ॥ वृष्णि । दाशार्ह ॥ अन्धक । श्वाफल्क ॥ कुरु । भैमेन । इत्यत्र "ऋषि०" [ ६१ ] इत्यादिनाण् ॥

कानीनः । त्रैवण । इत्यत्र "कन्या०" [ ६२ ] इत्यादिनाण् । कनीनत्रिवणेत्यादेशौ च ॥

शौङ्ग । इत्यत्र "शुङ्गाभ्यां०" [ ६३ ] इत्यादिनाण् ॥

वैकर्ण[2] । छागल । इत्यत्र "विकर्ण०" [ ६४ ] इत्यादिनाण् ॥

वैश्रवणेन । रावण । इत्यत्र "णश्च०" [ ६५ ] इत्यादिनाण् तत्संनियोगे णश्चान्तादेशः । णसंनियोगे विशशब्दलोपश्चास्य वा ॥

**द्वैमातुरारातिसमोपि कोपात्सांमातुरत्वेन दयां दधानः ।**
**सोस्त्रेण तेनापहृतान्यरूपामेकाकिनीमित्यवदत्सितास्यः ॥ ६४ ॥**

६४. उत्तरार्धं स्पष्टम् । कोपाद्वैमातुरारातिसमोपि जरासंधपित्रा देवतावितीर्णायाः पुत्रोत्पत्तिहेतोरेकस्या गुटिकाया महाभारते तु स्वयमाम्रवृक्षान्नृपकरे पतितस्य चण्डकौशिकर्षिणा पुत्रहेतुत्वेनोपादिष्टस्यैकस्य[3] परिपक्वस्याम्रफलस्यार्धमर्धं विभज्यातिवल्लभयोर्द्वयोर्भार्ययोर्दानेनार्धस्यार्धस्य पुत्रस्य जन्मतो जराराक्षस्यावसंधानाद्वयोर्मात्रोरपत्यं द्वैमातुरो जरासंधस्तस्यारिर्विष्णुस्तस्य समोपि । अतिकोप्यपीत्यर्थः । सांमातुरत्वेन सर्वैर्दयालुत्वादिभिर्मातृगुणैः संगता माता संमाता मयणन्ना तदपत्यत्वेन दयां दधानः ॥

**त्वं भाद्रमातुर्यबलासि तत्किं कुर्या(र्यां) त्रपानार्मेदमग्र एषः ।**
**पूर्वांश्च शाकुन्तलजाह्नवेयादींस्त्रीवधात्किं बत लज्जयामि ॥ ६५ ॥**

६५. हे भाद्रमातुरि भद्रा प्रशस्या भद्रस्य वा या माता तस्याः[4]

---

१ बी वाशिष्ठ. सी वाशिष्ठः । वृ°. २ सी °र्ण । ला°. ३ ए °हेत्वे°. ४ बी °शस्य भ°.

पुत्रि त्वमबला ह्ययसि वर्तसे । तत्तस्मादेषोऽहं जयसिंहः किं कुर्याम् । यतस्त्वपैवागाधत्वान्नार्मदो नर्मदाया नद्या अपत्यं नीलाख्यो ह्रदस्तत्र निमग्नः । तथा शाकुन्तलो भरतश्चक्री जाह्नवेयो गाङ्गेयस्तत्प्रभृतीन्पूर्वांश्च सोमवंशान्पूर्वजांश्च स्त्रीवधात्किं लज्जयामि । सोमवंश्यनृपत्वात्त्वां स्त्रियं न हन्मीत्यर्थः ॥

**ऊचे च सा स्मेरमुखीति जाम्बवतेयपित्रंश यथा हि गीतः ।**
**पैलेयपैलीपतिसाल्वमित्रसाल्वेयमाण्डूकमुखैस्तथासि ॥ ६६ ॥**

६६. स्पष्टः । किं तु हे जाम्बवतेयपित्रंश जम्बवत्या अपत्यं जाम्बवतेयः शा(सा)म्बकुमारस्तस्य पिता विष्णुस्तस्यांश जयसिंह पैलेयादिमुनिभिर्यथा यादृग्गुणस्त्वं गीतस्तथा तादृशोऽसि ॥

**ध्यायन्ति माण्डूकिमुखाश्च माण्डूकेयोपमा यं मुनयोऽपरेऽपि ।**
**तस्यासि दैतेयभिदे ससौपर्णेयस्य दैत्यद्विषतोऽवतारः ॥ ६७ ॥**

६७. पूर्वार्धं स्पष्टम् । तस्य ससौपर्णेयस्य गरुडासनत्वाद्गरुडान्वितस्य दैत्यद्विषतो विष्णोरसि त्वं दैतेयभिदे दानवविनाशायावतारो मूर्तिः ॥

**धैर्येण सत्त्वेन च तेऽस्मि हृष्टा न यौवतेयः सदृशस्तवास्ति ।**
**त्वं काद्रवेयानिव वैनतेयो दात्तेयसैप्रादिनृपान्प्रजीयाः ॥ ६८ ॥**

६८. हे राजंस्ते तव धैर्येण चित्तावष्टम्भेन सत्त्वेन च साहसेन च हृष्टा । यतस्तव सदृशो धैर्यादिगुणैस्तुल्यो यौवतेयो युवतेरपत्यं

१ ए °यपुत्रं°. २ सी °श जम्बवत्या. ३ ए °नयोः प°. ४ ए च माह°. ५ बी सी कार्द्रवे°.

१ ए °गान्धत्वा°. २ बी °दान°. ३ ए °श्च मत्री°. ४ बी °सिंहः पै°. ५ सी °ह पैले°. ६ बी सी °नोर्विष्णो°.

नास्ति । अत एव च यथा त्वं दात्तेयसैप्रादिनृपान् दात्तेयो दत्ताख्यायाः कस्याश्चिद्राज्ञ्या[1] अपत्यं सिप्राया नद्या अपत्यं[2] सैप्रो[3] यशोवर्मनृपः । सिप्रा हि तस्य जलैः कृत्वा पोषणवपुःक्षालनाद्युपचारेण[4] मातृतुल्या द्वन्द्वे तत्प्रभृतीन्नृपान्प्रजीयाः । यथा काद्रवेयान्नागान्[5] वैनतेयो गरुडो जयति ॥ तद्वैनतेयोपम सैप्रकामण्डलेयदात्तेयनृपाञ्जय त्वमिति पाठान्तरं स्पष्टम् । किं तु हे वैनतेयोपम कमण्डल्वा अपत्यं कामण्डलेयो नृपः ॥

द्वैमातुर । सांमातुरः(र)[6] । भाद्रमातुरि । इत्यत्र "संख्या०" [ ६६ ] इत्यादिनाण् मातुश्च मातुरादेशः ॥

नार्मद । शाकुन्तल । इत्यत्र "अदोर्नदी०" [ ६७ ] इत्यादिनाण् ॥ अदोरिति किम् । जाह्नवेय । जाम्बवतेय[7] ॥

पैली पैलेय । साल्व साल्वेय[8] । माण्डूक माण्डूकि[9] । अत्र "पीला०" [ ६८ ] इत्यादिना वाण् ॥

दैतेय दैत्य । माण्डूकेय माण्डूकि । इत्यत्र "दितेश्चैयण्वा[10]" [ ६९ ] इत्येयण्वा ॥

सौपर्णेयस्य । वैनतेयः । यौवतेयः । कामण्डलेय[11] । काद्रवेयान्[12] । अत्र "ङ्याप्त्यूङः" [ ७० ] इत्येयण् ॥

दात्तेय । इत्यत्र "द्विस्वरादनद्याः" [ ७१ ] इत्येयण् ॥ अनद्या इति किम् । सैप्र ॥

१ बी °राज्ञा अ°. २ ए °त्य सिप्रो°. ३ बी सैप्रयो य°. ४ सी °नाद्यप°. ५ ए सी काद्रवे°. ६ बी सी °तुरः । सां°. ७ ए सी °म्वते°. ८ ए °ल्वे । मा°. ९ ए °ण्डूकः माण्डूकिः । अ°. १० बी दितिश्चैवय°. ११ सी °लेयः । काद्रवे°. १२ बी काद्रवया°.

**आत्रेयदाक्षायणशाकलेयशौभ्रेयशस्यां हरसिद्धिमुख्याः ।**
**कीर्तिं प्रगास्यन्ति तवेत्युदित्वा तिरोदधे सा सह योगिनीभिः ॥ ६९ ॥**

६९. स्पष्टः । किं त्वात्रेयादिमुनिभिः प्रशस्याम् । हरसिद्धिनाम्नी सर्वयोगिनीपीठस्वामिनी तदाद्या योगिन्यः । सा काली ॥

आत्रेय । इत्यत्र "इतोनिञः" [ ७२ ] इत्येयण् ॥ अनिञ इति किम् । दाक्षायण ॥

शौभ्रेय । शाकलेय । इत्यत्र "शुभ्रादिभ्यः" [ ७३ ] इत्येयण् ॥

**कौपीतकेयादथ लाक्षणेयाच्छ्यामेयतो निश्यपि तन्निशम्य ।**
**धारां यशोवर्मनृपः सवैकर्णेयः सुदुर्गं तदगात्तदैव ॥ ७० ॥**

७०. यशोवर्मनृपस्तदैव निश्येव तत्प्रसिद्धं सुदुर्गं शोभनं दुर्गं स्थानमगात् । किं तदित्याह । धारां धाराख्यां पुरीम् । कीदृक् । सवैकर्णेयः वैकर्णेयैर्विकर्णर्षेरपत्यैः प्रधानैः सहितः । किं कृत्वा । कौपीतकेयादिमुनिभ्यो निश्यपि तद्योगिनीजयरूपं वृत्तान्तं निशम्य ॥

श्यामेयतः । लाक्षणेयात् । इत्यत्र "श्याम०" [ ७४ ] इत्यादिनेयण् ॥

वैकर्णेयः । कौपीतकेयात् । इत्यत्र "विकर्ण०" [ ७५ ] इत्यादिनेयण् ॥

**भ्रौवेयमुख्यैरपि गीतकीर्तिः काल्याणिनेयः शिबिरं स्वमेत्य ।**
**सौभागिनेयैः सभटैरकौलटेयैरुपस्युज्जयिनीमभाङ्क्षीत् ॥ ७१ ॥**

७१. स जयसिंहः स्वं शिबिरं सैन्यमेत्योपसि प्रभाते भटैरु-

---

१ **बी सी** °यः सदु°. २ **ए** °रकौल°. ३ **सी** °जयनी°.

---

१ **बी** °भ्रयः । शा°. २ **सी** °मनदुर्गम्या°. ३ **बी** दुर्गम्या°. ४ **सी** धाराख्यं पु°. ५ **ए सी** °म्य । शामे°. ६ **बी** °त्र शाम°. ७ **बी** °ण् । विक°.

ज्जयिनीमभाङ्क्षीत् । कीदृक् । भ्रौवेयमुख्यैरपि[1] ब्रह्मणो भ्रुवोपत्यं भ्रौवेयो महर्षिस्तदाद्यैर्महर्षिभिरास्तामन्यः सामान्यर्षिव्रज इत्यप्यर्थः । गीतकीर्तिः संकीर्तितयोगिनीविजयोत्थयशास्तथा काल्याणिनेयः कल्याण्या भद्राया मयणल्लाया अपत्यम् । किंभूतैर्भटैः । सौभागिनेयैः सुभगाया अपत्यैः । एतेन शस्त्रादिकलाश्रयतोक्ता । सौभागिनेया एव हि पितृभिर्वाल्लभ्याच्छस्त्रकलादि शिक्ष्यन्ते । तथा कौलटेयैर्महर्द्धिकक्षत्रियसतीमतल्लिकासु जातत्वान्न कुलटानां भिक्षुकसतीनामपत्यैः । प्रतिज्ञातनिर्वाहकैरित्यर्थः । इन्द्रवज्रा छन्दः ॥

धाराप्रविष्टमथ कौलटिनेयबुद्ध्या
द्राक्चाटकैरमिव तं चटकारिपक्षी ।
जग्राह मालवपतिं युधि नर्तितासि
नाटेरकः सपुलकश्चुलुकप्रवीरः ॥ ७२ ॥

७२. अथ चुलुकप्रवीरो द्राक् तं मालवपतिं जग्राह । यथा चटकारिपक्षी चटकस्य चटकाया वापत्यस्य स्त्रियोरि(या अरि ?)र्यः पक्षी श्येनः । स चाटकैरं चटकस्य चटकाया वापत्यं गृह्णाति । कीदृक्सन् । सपुलको वीर्योत्कर्षाद्रोमाञ्चितोत एव युधि रणाय नर्तितोसिरेव नर्तनीयत्वान्नाटेरको नट्या अपत्यं नाटकिको येन सः । किंभूतम् । तं कौलटिनेयबुद्ध्या कुलाटापत्यबुद्ध्या धाराप्रविष्टं धारायां दुर्गे स्थितम् । भिक्षुकसत्यपत्यस्यैव हि नीचकुलत्वान्नंष्ट्वा दुर्गे प्रवेशनादिविषया नीचा बुद्धिः स्यात् । वसन्ततिलका छन्दः ॥

---

१ **सी** कौशलिने°. २ **ए** °श्चुलक°. ३ **सी** °वीणः । अ°.

---

१ **बी सी** °पि ब्राह्म°. २ **सी** °पत्यंकिं भूवेयो. ३ **ए सी** °वैमह°. ४ **ए सी** °ल्याणा भ°. ५ **सी** °लाशय°. ६ **सी** °टका°. ७ **बी** °याप°. ८ **ए** युधे र°. **सी** युधर°. ९ **सी** °द्धया धोरायां दुर्गस्थि°. १० **बी** °लकछ°.

काणेराम्बावत्क्रौर्यभाजं चुलुक्यो गुप्तावक्षैप्सीत्तं यशोवर्मभूपम्।
तां काणेयाम्बाकाणदृष्टिं न्वकान्तिं धारां नाटेयत्कीर्तिराश्वासयच्च ॥ ७३ ॥

७३. चुलुक्यस्तं यशोवर्मभूपं गुप्तावक्षैप्सीत्। यतः क्रौर्यभाजं जयसिंहं प्रति द्रोहाभिप्रायेण क्षुद्रचित्ततां भजन्तम्। काणेराम्बाव-द्यथा काणेरस्य काणाया अपत्यस्याम्बा माता काणा क्रौर्यभाक् क्रौर्यं क्षुद्रतामेकाक्षतया हीनाङ्गत्वं भजते तथा। चुलुक्यस्तां धारामाश्वास-यच्चावन्तिदेशमवासयच्चेत्यर्थः। कीदृक्सन्। नाटेयन्ती नट्यपत्यमि-वाचरन्ती सकलेपि विश्वे नृत्यन्तीत्यर्थः। कीर्तिर्यस्य सः। किंभूतां धाराम्। अकान्तिं निःश्रीकां काणेयाम्बाकाणदृष्टिं नु काणेयाम्बायाः काणाया यासौ काणा दृष्टिस्तामिव ॥

भ्रौवेय। इत्यत्र "भ्रुवो भ्रुव च" [७६] इति-एयण् भ्रुवादेशश्च ॥

काल्याणिनेयः। सौभागिनेयः। अत्र "कल्याण्यादेर०" [७७] इत्यादिना-एयण् इन्-चान्तादेशः ॥

कौलटिनेय अकौलटेयः। अत्र "कुलटाया वा" [७८] इत्येयण इन्-चान्तादेशः ॥

चाटकैरम्। चटका। इत्यत्र "चटकाद्०" [७९] इत्यादिना णैरः स्त्रियां तु णैरस्य लुप् ॥

काणेर। काणेय। नाटेर। नाटेयत्। इत्यत्र "क्षुद्राभ्य एरण्वा" [८०] इति वा-एरण्। वैश्वदेवी छन्दः ॥

१ ए °वक्षेप्सी°. २ बी सी °दृष्टि न्व°. ३ ए °यत्तु। न्तु°.

१ ए बी °वक्षेप्सी°. २ बी सी °वासय°. ३ ए °नेयः। अ°. ४ ए °ल्याणादे°. ५ ए °शः। कौल°. ६ सी °नेयः अ°. ७ बी सी °म्। चाट°. ८ सी बी °न्दः। गोधा°.

**गौधारदृढमुष्टिकार्मुकभृतो गौधेरदुष्टाशयां[1]-**
**न्प(न्पा)क्षारानपि तत्र सीमनृपतीञ्[2]जाण्टारपाण्टारवत् ।**
**सोबध्नादुत सौरभेयवदुताहो वाडवेयोद्य(याश्व?)व-**
**दृप्तान् रैवतिकाश्वपालिकसखान् गार्ष्टेयहार्ष्टेयधीः ॥७४॥**

७४. स जयसिंहस्तत्र धारासमीपे सीमनृपतीनबध्नात् । यतो[1] गोधाया अपत्यं[2] दुष्टं गौधेरो योहिना गोधायां जन्यते । एवं गौधारोपि । तस्यैव जिघांसया दुष्ट आशयो येषां तां[3]ञ्जिघांसूनित्यर्थः । किंवदबध्नात् । जाण्टारपाण्टारवज्जण्टपैण्टयोः[4] पक्षिविशेषयोरपत्ये[5] पक्षिभेदाविवाथा(वोता?)थ वा सौरभेयवद्वृषभानिवोताहो अथ वा वाडवेयोद्य(याश्व?)वद्वडवानां[6] बीजसेचकान(न?) वर्धितानश्वानिव । कांश्चित्पक्षिवत्काष्ठपञ्जरेषु कांश्चिच्च वृषभानिव लोहशृङ्खलाभिर्गलेषु कांश्चिच्चाश्वानिव लोह[7]निगडैः पादेषु बबन्धेत्यर्थः । किंभूतान् । गौधारन्ति सुदृढत्वेन गौधारा इवाचरन्ति दृढमुष्टीनि[8] बलिष्ठमुष्टिकानि[9] कार्मुकाणि बिभ्रति ये तानपि युद्धायात्तास्त्रानपीत्यर्थः । एतेनैते न च्छलाद्बद्धा इत्युक्तम् । तथा पाक्षारानपि पक्षस्य[10] वर्गस्य[11] महासन्तानस्यापत्यान्यपि[12] स्वपक्षसहितानपीत्यर्थः । तथा दृप्तानपि स्वबलाद्यवलेपेन दर्पिष्ठानपि नाकिंचित्करानित्यर्थः । तथा रैवतिकाश्वपालिकसखानपि रैवतिकाश्वपालिकौ रेवत्या अश्वपाल्याश्चापत्ये कौचिन्नृपौ तयोः[13] सहायानपि

१ **सी** °यानक्षा°. २ **ए** °आचार°.

१ **बी** यन्मे गो°. २ **ए** °त्यं गोधरो. **बी** °त्यं गौ°. ३ **बी** तान्निघांशून्नित्य°. ४ **बी सी** °पन्तयोः ५ **बी** °त्ये पकृतिशेषयोरपत्ये प°. ६ **ए** °सेनका°. ७ **सी** °कानां व°. ८ **बी** °हग°. ९ **सी** °मुखीनिव ब°. १० **सी** पक्ष्यस्य. ११ **ए** °स्य म°. १२ **सी** °त्यानपि. १३ **बी** °योः साहा°.

साहाय्यार्थागतमित्रैर्युक्तानपीत्यर्थः । नन्वेवंविधानपि नृपान्केन बलेनासौ बबन्धेत्याह । यतो गार्ष्टेयहार्ष्टेयौ मुनिभेदौ तयोरिव धीर्यस्य सः । सर्वबलोत्कृष्टबुद्धिबलोपेतत्वादित्यर्थः ॥

गौधार । गांधेर । इत्यत्र "गोधाया" [ ८१ ] इत्यादिना णार एरण्च ॥

जाण्टार । पाण्टार । इत्यत्र "जण्टपण्टात्" [ ८२ ] इति णारः ॥ केचित्तु पाक्षारानित्यपीच्छन्ति ॥

सौरभेय । इत्यत्र "चतुष्पाद्भ्य एयञ्" [८३] इत्येयञ् ॥

गार्ष्टेय । हार्ष्टेय । इत्यत्र "गृष्ट्यादेः" [ ८४ ] इत्येयञ् ॥

वाडवेय । इत्यत्र "वाडवेयो वृषे" [ ८५ ] इति-एयञ् एयण् वा निपात्यः ॥

रैवतिकाश्वपालिक । इत्यत्र "रेवत्यादेरिकण्" [ ८६ ] इतीकण् ॥ शार्दूलविक्रीडितं छन्दः ॥

इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तौ चतुर्दशः सर्गः ॥

---

१ ए °ण्ट पंचाटात्. २ सी °डिनछ°.

# द्व्याश्रयमहाकाव्ये

## पञ्चदशः सर्गः ।



**भ्रातृव्यान्सोतिगार्गास्तानथ गार्गिकमन्त्रिणः ।**
**सभ्रात्रीयानसस्वस्रीयान्धृत्वा निववृते ततः ॥ १ ॥**

१. अथ स जयसिंहस्ततो मालवदेशान्निववृते । किं कृत्वा । सभ्रात्रीयान्सस्वस्रीयान्भ्रात्रपत्यभगिन्यपत्यसहितानुपलक्षणत्वात्सबान्धवानित्यर्थः । तथा भ्रातृव्यान्भ्रातुरपत्यानि भ्रातृव्या एकद्रव्याभिलाषित्वाद्भ्रातृव्या इव भ्रातृव्यास्तान् महाशत्रूनित्यर्थः । तान् यशोवर्मादिनृपान्धृत्वा गुप्तौ क्षिप्त्वा । किंभूतान्सतः । गार्गिका गार्ग्या अपत्यानि स्वामिने स्त्रीजनोचितकुमन्त्रदानेनाज्ञेयपितृकत्वान्निन्द्या[१] युवानो मन्त्रिणो येषां तानत एवातिगार्गानेवं[२] राज्याद्भ्रंशेन स्वपूर्वजनाम्नोपि हारणे[३]तिनिन्द्यत्वाद्गार्ग्या अपत्यं निन्द्यं युवानमतिक्रान्तान् ॥

गार्गान्[४] । गार्गिक । इत्यत्र "वृद्ध" [ ८७ ] इत्यादिना णेकणौ ॥

भ्रातृव्यान् । इत्यत्र "भ्रातुर्व्यः" [ ८८ ] इति व्यः ॥

भ्रात्रीयान् । स्वस्त्रीयान् । इत्यत्र "ईयः स्वसुश्च" [ ८९ ] इतीयः ॥

**मार्गेभात्तैः समातृष्वस्त्रीयपैतृष्वसेयकैः ।**
**पैतृष्वस्त्रीयो नु हरेः सोतिमातृष्वसेयकः ॥ २ ॥**

२. स जयसिंहः समातृष्वस्त्रीयपैतृष्वसेयकैर्मातृभगिनीनां पितृ-

---

१ प सी °न्त्रिया यु°. २ बी °वागार्ग्याने°. ३ प °णे इनि°. सी °णेपि नि°.
४ बी गार्ग्यान्.

भगिनीनामपत्यैः सहितैस्तैः शत्रुभिः कृत्वा मार्गेभात् । कीदृक् । अतिमातृष्वसेयको मातुःष्वसुरपत्यं शिशुपालं करग्रह[1]णेनातिक्रान्तो यो हरेर्विष्णोः पैतृष्वस्रीयः पितुः[2]ष्वसुरपत्यं भीमः स इव बलिष्ठत्वादिगुणैर्भीमतुल्यः । हरेः पिता वसुदेवस्तद्भगिन्या अपत्यं भीम इति हरेः पैतृष्वस्रीयो भीममातुश्च शिशुपालमाता भगिनीति[3] भीमस्य शिशुपालो मातृष्वसेयः[4] ॥

मातृष्व[5]सेय । मातृष्वस्रीय । पैतृष्वसेय[6] । पैतृष्वस्रीयः । अत्र "मातृ०" [ ९० ] इत्यादि[7]ना रे(डे)यणीयणौ ॥

श्वशुर्यीभूय राजन्यैः स पथि क्षत्रियाग्रणीः ।
अमानुषो मनुष्येषु कैर्न भेजेतिमाणवैः ॥ ३ ॥

३. अतिमाणवैः पुरुषेषु श्रेष्ठत्वान्माणवान्मनोरपत्यानि कुत्सितानि मूढान्यतिक्रान्तैः कै राजन्यै राज्ञामपत्यैः क्षत्रिय[8]जात्या स नृपः पथि न भेजे । किं कृत्वा । श्वशुर्यीभूय स्वभगिनीदानेन श्वशुरापत्यीभूय[9] श्यालीभूयेत्यर्थः । यतः कीदृक् । क्षत्रियाग्र[10]णीः । एतेन सर्वगुणसंपद्राज्यसंपदोरतिशय उक्तः । तथा मनुष्येषु मनोरपत्येषु नरेषु मध्येऽमानुषोऽमर्त्यो देवः । एतेन[11] रूपातिशयोक्तिः ॥

श्वशुर्यीभूय । इत्यत्र "श्वशुराद्यः" [ ९१ ] इति यः ॥

राजन्यैः । इत्यत्र "जातौ राज्ञः" [ ९२ ] इति यः ॥

क्षत्रिय । इत्यत्र "क्षत्रादियः" [ ९३ ] इतीयः ॥

मनुष्येषु । मानुषः । इत्यत्र "मनोर्०" [ ९४ ] इत्यादिना[12] याणौ षश्चान्तः ॥

१ बी °ग्रहेणाति°. २ प °तुःस्वसु°. ३ बी °नीष्वसी°. ४ प सी °सेय । मा°. ५ प °ष्वस्रीयः । पैतृष्वस्री°. ६ सी °सेयः । पै°. ७ प °दिना केय°. बी °दित्यारेय°. ८ प °त्रिया जात्याः म. ९ सी °य श्याली°. १० बी °ग्रणी । ए°. सी °ग्रणी । ते°. ११ सी °न स्वरूपादिति°. १२ सी °ना उक्तस्त या°.

माणवैः । इति "माणवः कुत्सायाम्" [ ९५ ] इत्यनेन निपात्यते ॥

त्यक्त्वा बहुकुलीनांश्चाकुलीनांश्च तदा द्विपान् ।
राज्ञां भद्रकुलीनान्स[1] जग्राहोपायनीकृतान् ॥ ४ ॥

४. तदा पथि गमनकाले स नृप उपायनीकृतान्[1]ढौकनीकृतान्भद्रकुलीनान्भद्रजातीयेभेन्द्रकुलस्यापत्यानि[2] राज्ञां द्विपाञ्जग्राह । किं कृत्वा । त्यक्त्वा । कान् । बहुकुलीनांश्च मन्दजातित्वेनेषदसंपूर्णकुलापत्यानि तथाकुलीनांश्च मृगजातिमिश्रजातित्वान्न कुलस्यापत्यानि ॥

कौलेयकानामात्तानां[2] तेनेभानां पुरो बभौ ।
बहुकुल्यो न्वकुल्यो नु शङ्के शक्रद्विपोपि सः ॥ ५ ॥

५. शङ्के सर्वगजोत्कृष्टतया प्रसिद्धः शक्रद्विपोप्यैरावणोपि तेन राज्ञात्तानां राजभ्यो गृहीतानां कौलेयकानां भद्रजातीयानामिभानां[3] पुरो बभौ । कीदृग् । बहुकुल्यो न्वीषदसमाप्तकुलापत्यमिवाकुल्यो न्वकुलीन इव वा । केषांचित्तेषामपेक्षया हीनगुणत्वात्[4]केषांचिच्च हीनतमगुणत्वात्[5] ॥

प्रेक्ष्य जिष्णुं तमायान्तं[3] ग्राम्यैर्बाहुकुलेयकैः ।
दौष्कुलेयैर्दुष्कुलीननिम्नैश्चात्मा[4] कृतार्थितः ॥ ६ ॥

६. स्पष्टः । किंतु कैश्चिद्बाहुकुलेयकैः किंचिद्धीनकुलापत्यैः । कैश्चिच्च दौष्कुलेयैर्दुष्कुलस्यापत्यैः । कैश्चिद्दुष्कुलीननिम्नैश्च दुष्कुलापत्येभ्योऽपि नीचैरतिनीचकुलैश्चेत्यर्थः । आत्मा कृतार्थितोदृष्टपूर्वतादृग्नृपदर्शनात्स्वजन्म सफलितमित्यर्थः ॥

१ **ए** °न्स ग्रा°. २ **ए** °कानां मत्ता°. **बी** °कानामत्ता°. ३ **बी** °ष्णुं त्वमा°. ४ **सी** °ष्कुलः स्या°.

१ **ए** °पानीयकृ°. २ **बी** °येनकु°. ३ **बी** °यामि°. ४ **सी** °नकुलत्वा°. ५ **ए** °त्वात्.

अकुलीनान् । बहुकुलीनाम् । भद्रकुलीनान् । इत्यत्र "कुलादीनः" [९६] इतीनः ॥

अकुल्यः । कौलेयकानाम् । बहुकुल्यः । बाहुकुलेयकैः । अत्र "यैय०" [९७] इत्यादिना वा[1] यैयकञौ ॥ पक्षे । अकुलीनान् । बहुकुलीनान् ॥ असमास इति किम् । भद्रकुलीनान् ॥

दौष्कुलेयः दुष्कुलीन । इत्यत्र "दुष्कुलादेयणवा" [९८] इति-एयणवा ॥

**सोऽथ[1] माहाकुलो माहाकुलीनपरिवारितः ।**
**पुरीं महाकुलीनस्त्रीकृतार्थः प्राविशत्स्वकाम् ॥ ७ ॥**

७. स्पष्टः[2] ॥

माहाकुलः । माहाकुलीन[3] । महाकुलीन । इत्यत्र "महा०" [९९] इत्यादिनाञीनञौ वा ॥

**सोऽशाद् हार्दिक्यसाम्राज्यान्कौरव्यैर्मन्त्रिभिर्युतान् ।**
**भैमसेनिपितृव्यो नु[2] भैमसेन्यपितेव वा ॥ ८ ॥**

८. स जयसिंहो हार्दिक्यसाम्राज्यान्हृदिकस्य सम्राजश्च राज्ञोरपत्यानि क्षत्रियानन्वशाद्विजित्याशिक्षयत् । किंभूतान् । कौरव्यैः कुरोर्ब्राह्मणस्यापत्यैर्मन्त्रिभिर्युतान । यथा भैमसेनिपितृव्यो[4] भीमापत्यस्य घटोत्कचस्य पितृव्यो युधिष्ठिरो भैमसेन्यपितेव वा यथा वा भीमः । पाण्डवैर्हि कौरवयुद्धे हार्दिक्यसाम्राज्या जिताः ॥

**वार्द्धक्यरिसमं भूपास्तं लाक्ष्मण्यबला न के ।**
**पितृव्यं[3] लाक्ष्मणेर्नीलवार्द्धक्याद्या[4] इवाभजन् । ॥ ९ ॥**

१ बी °थ महाकुलो महाकुली°. २ बी नु भौम°. ३ बी °व्यं लक्ष्मणे नील°. ४ बी °द्धकाद्या.

१ बी सी वा येय°. २ सी °ष्टः । महा. ३ प °लीनः । म°. सी °लीन इ°. ४ प °सेनपि°.

९. यथा नीलवार्द्धक्याद्या नीलो नाम वानरो वार्द्धक्यश्च वर्द्धकेरपत्यं वृत्रभ्राता नलाख्यो वानरस्तदाद्याः कपयो लाक्ष्मणेर्लक्ष्मणापत्यस्याङ्गदस्य चन्द्रकेतोर्वा पितृव्यं राममभजंस्तथा तं जयसिंहं के भूपा नाभजन् । किंभूताः । लाक्ष्मण्यबला लक्ष्मणापत्यतुल्यौजसोपि । यतः किंभूतम् । वार्द्धक्यरिसमं वर्द्धकेरपत्यं वार्द्धकिर्वृत्रस्तस्यारिरिन्द्रस्तत्तुल्यम् ॥

कौरव्यैः । हार्दिक्य । इत्यत्र "कुर्वादेर्ञ्यः" [ १०० ] इति ञ्यः ॥

साम्राज्याम्(न्) । इत्यत्र "सम्राजः क्षत्रिये" [ १०१ ] इति ञ्यः ॥

भैमसेनि भैमसेन्य । वार्द्धकि वार्द्धक्य । लाक्ष्मणे(णेः) लाक्ष्मण्य । इत्यत्र "सेनान्त०" [ १०२ ] इत्यादिना-इञ् ञ्यश्च ॥

सौयामायनिफाण्टाहृतायनी मैमतायनिः ।
तमप्रीणन्फाण्टाहृतमैमतेभ्यः परेपि ये ॥ १० ॥

१०. सौयामायन्यादयो नृपाः । शिष्टं स्पष्टम् ॥

सौयामायनि । इत्यत्र "सुयाम्नः०" [ १०३ ] इत्यादिना-आयनिञ् ॥

फाण्टाहृत फाण्टाहृतायनी ॥ मैमतेभ्यः मैमतायनिः । अत्र "फाण्टाहृति०" [ १०४ ] इत्यादिना ण आयनिञ्च ॥

भागवित्तायनं शा(सा?)कशापेयितार्णबिन्दविम् ।
तार्णबिन्दविकं शा(सा?)कशापेयिकमथापरम् ॥ ११ ॥
सैवार्ष्यायणियामुन्दायनीयं भागवित्तिकम् ।
सौयामायनिकं यामुन्दायनिकयुतं तथा ॥ १२ ॥

१ सी °कस्याकेयक°. २ ए सी सत्वार्ष्या°. ३ ए सी °त्तिकिम्. ४ सी °यनीयौ°.

१ ए सी °श्च वार्द्ध°. २ ए °तुल्योज°. ३ बी °क्ष्मण्य. ४ सी °तायिनिः. ५ ए °यनि । अ°. ६ सी °ना आ°.

सौयामायनि[1]यामुन्दायनिवार्ष्यायणीयकान्।
वा[2]र्ष्यायणिकसौयामायनीयौ च मिथःश्रितौ ॥ १३ ॥

तैकायनीयमुख्यांश्च भूपजालमान्प्रशिष्य सः।
वर्त्म केदारदेवस्य सुस्थं चक्रे महाभुजः ॥ १४ ॥

११–१४. स्पष्टाः। किं तु भूपजालमान् यात्रिकोपद्रवकारित्वेन निन्द्यनृपान्। प्रशिष्यो[1]च्छिद्य। सुस्थं निरुपद्रवम् ॥

भागवि[2]त्तिकम् भागवित्तायनम्[3]। तार्णबिन्द[4]विकम् तार्णबिन्दविम्। [5]आकशापेयिकम् [6]आकशापेयि। इत्यत्र "भागवित्ति०" [१०५] इत्यादिना वेकण् ॥ पक्षे। भागवित्तेः "यञिञः" [६. १. ५४] इत्यायनण्[7] ॥ शेषयोरिञ् ॥

सौयामायनीयौ। सौयामा[8]यनिकम्। सौयामायनि। यामुन्दायनी[10]यम्। यामुन्दायनिक। यामुन्दायनि। वार्ष्यायणीयकान्। वार्ष्यायणि[11][12]क। वार्ष्या[13]यणि। इत्यत्र "सौयामायनि०" [१०६] इत्यादिना वा-ईयेकणौ ॥ पक्षे "ञिदार्षाद्-णिञोः" [६. १. १४०] इत्यणो लुप् ॥ कश्चित्त्वन्येभ्योपीच्छति। तैकायनीय।

कैतवायनितैकायन्य[3]र्हे सिद्धपुरेथ सः।
प्राच्यास्तीरे सरस्वत्याश्चक्रे रुद्रमहालयम् ॥ १५ ॥

१५. स्पष्टः। किं तु महातीर्थत्वात्कैतवायनितैकायनिमुनीनामर्हे वासयोग्ये चक्रे। केचित्त्वीगितो[14] धातोर्णिगर्थ एवात्मनेपदमिच्छन्ति। तन्मतेनाकारयदित्यर्थः ॥

---

१ वी °नियया°. २ वी वार्षावणि°. ३ वी °न्यर्हमि°.

---

१ बी सी °ष्योच्छेद्य. २ प °त्तिकम्. ३ वी °म्। तर्ण°. ४ प °विकिम्। आ°. ५ वी आकाशपे°. सी आकाशापेयक. ६ वी सी आकाशा°. ७ सी °नञ्। शे°. ८ सी °मायानि°. ९ वी °नि। यामु°. १० प °नीम्. ११ सी °णि। वर्षाय°. १२ वी °क। वर्षाय°. १३ प °ष्यांर्णी इ°. १४ वी °तोर्थानां°.

सैकायनि । कैतवायनि । इत्यत्र "तिक०" [ १०७ ] इत्यादिनायनिञ् ॥

दागव्यायनिकौशल्यायनिच्छाग्यायनीन्पथि ।
स्थापयन्विदधे चैत्यं तत्रैवान्त्यस्य सोर्हतः ॥ १६ ॥

१६. स जयसिंहस्तत्रैव सिद्धपुरेन्त्यस्यार्हतः श्रीमहावीरस्य चैत्यं विदधेकारयत् । कीदृक्सन् । दागव्यायन्यादीन्ब्राह्मणभेदान्पथ्यर्हच्चैत्यमननरूपे न्यायमार्गे स्थापयन् ॥

स वार्ष्यायणिकार्मार्यायणिकात्र्यायणीनपि ।
संबोध्यार्हतसंघस्य भक्त्याकारयदर्हणाम् ॥ १७ ॥

१७. स राजार्हतसंघस्य जैनस्य साधुसाध्वीश्रावकश्राविकासमुदायस्यार्हणां वस्त्रादिभिः पूजां भक्त्याकारयत् । किं कृत्वा । वार्ष्यायण्यादीनपिशब्दाद्दा(दा)गव्यायन्यादींश्च ब्राह्मणविशेषान्संबोध्यार्हतसंघपूजन ईर्ष्यतः सान्त्वयित्वा ॥

दागव्यायनि । कौशल्यायनि । कार्मार्यायणि । छाग्यायनीन् । वार्ष्यायणि । इत्यत्र "दगु०" [ १०८ ] इत्यादिना यकारादिरायनिञ् ॥

कात्र्यायणीन् । इत्यत्र "द्विस्वरादणः" [ १०९ ] इत्यायनिञ् ॥

पाञ्चालीपतिवत्पाञ्चालायन्याद्यैर्वृतोथ सः ।
सोमनाथं प्रत्यचालीत्पद्भ्यां दाक्षायणार्थितः ॥ १८ ॥

१८. स राजा सोमनाथं प्रति यात्रार्थं पद्भ्यां भक्त्युत्कर्षोत्पादचा-

१ सी °निकोश°. २ ए °च्छागाय°. ३ ए सी °वान्तस्य. ४ ए °कात्रीय°. सी °कात्राय°. ५ ए सी °र्हणम्. ६ सी °ञालयन्याद्यैवृतोष्य सः.

१ बी °रेन्तस्या°. सी °रेत्यस्या°. २ ए °पे मा°. ३ सी °संसस्य धु°. ४ सी °दायग°. ५ सी °पूज्यान ई°. ६ ए छागाय°. ७ ए बी °त्र दिगु°. ८ बी कात्राय°.

रेणाचालीत्। कीदृक्सन्[1] । पाञ्चालायन्याद्यैः पाञ्चालानां राजा पाञ्चालस्तस्यापत्यं पाञ्चालायनिस्तदादिभिर्नृपैर्वृ[2]तस्तथा दाक्षायणार्थितो दाक्षेरपत्यैर्युवभिऋ(ऋ)षिभिर्माङ्गलिक्याय प्रस्थाने कृतार्थः[3]। पाञ्चालीपतिवत्। यथा पाञ्चाल्या द्रौपद्याः पतियु(र्यु)धिष्ठिरः सोमनाथं प्रति पद्यामचालीत्सोपि[4] पाञ्चालायन्याद्यैर्धृष्टद्युम्नाद्यैः[5][6] श्यालकैर्वृतो दाक्षायणार्थितश्च ॥

पाञ्चालायनि[7]। पाञ्चाली । इत्यत्र "अवृद्धाद्दोर्न वा" [११०] इत्यायनिञ्वा ॥ अवृद्धादिति किम्। दाक्षायण[8] ॥

गार्गीपुत्रायणिं गार्गीपुत्रिश्चार्मिणवत्तदा[1] ।
चार्मिकायणिवच्चापि वार्मिणं वार्मिकायणिः ॥ १९ ॥
कार्कश्यायनवद्वारेटिं च गारेटकायनिः ।
काककायनिवत्कार्कश्यं(श्यि) च कार्कश्यकायनिः ॥ २० ॥
काकिवच्चापि लाङ्क्यं लाङ्काकायनिरुत्सुकः ।
लाङ्ककायनिवद्वाकिनिं च वाकिनकायनिः ॥ २१ ॥
स्थानप्रतीक्षमाणास्तं संभ्रमाद्यान्तमन्वयुः ।
लाङ्किगार्गीपुत्रकायण्यादिमार्गाश्रयान्तरे ॥ २२ ॥

१९–२२. तदा राज्ञो गमनकाले यथा गार्गीपुत्रायणिं चार्मिण[9] ऋषिरन्वयात्तथा गार्गीपुत्रिऋषिर्जयसिंहमन्वयात् । एवं सर्वत्र संबन्धः कार्यः । विनीतत्वादनुज्येष्ठमृषीननुव्रजन्तो राज्ञोनुयानेत्युत्कण्ठि[10]तत्वान्निजा[11]नप्यृषीनप्रतीक्षमाणाश्च[12] सन्तः सर्वेपि गार्गी-

१ बी °श्चार्मिणिव°.

१ बी सी °न्। पञ्चा°. २ बी सी °पैर्वृत°. ३ सी कृत्यार्थः. ४ ए °पि पञ्चा°. ५ बी °धृष्टद्यु°. ६ बी °द्यैः श्याल°. ७ बी °नि। पञ्चा°. ८ ए °यणः। गा°. ९ बी चार्म्मिण. १० सी °ने उत्क°. ११ बी °त्वान्निजा°. १२ सी °तीक्ष्यमा°.

पुत्र्याद्या ऋषय आदराज्जयसिंहमनुजग्मुरित्यर्थः । यतः किंभूतं तम् । लाङ्किगार्गीपुत्रकायण्यादिमार्गाश्रयान्तरे पूर्वोक्तानां लाङ्क्यादिऋषीणां ये मार्ग आश्रया आश्रमास्तेषां यदन्तरं मध्यं तत्र यान्तम् ॥

गार्गीपुत्रायणिम् गार्गीपुत्रिः । अत्र "पुत्रान्तात्" [१११] इति वायनिञ् ॥

चार्मिकायणि । वार्मिकायणिः । गारेटकायनिः । कार्कव्यकायनिः । काककायनि । लाङ्काकायनिः । वाकिनकायनिः ॥ पुत्रान्तादोः । गार्गीपुत्रकायणि । इत्यत्र "चर्मिवर्मि०" [ ११२ ] इत्यादिना-आयनिञ्वा । अन्त्यस्वरात्परः कान्तश्चैषाम् ॥ पक्षे । चार्मिणं । वार्मिणम् । गारेटिम् । कार्कव्यायन ॥ यदा त्वव्युत्पन्नः कार्कव्यशब्दस्तदा पक्ष इञेव । कार्कव्यिम् ॥ काकिवत् । लाङ्केयम् । वाकिनिम् । गार्गीपुत्रिः ॥ लङ्कशब्दं केचिदकारान्तमिच्छन्ति । तन्मते लाङ्ककायनि । लाङ्कि ॥

ग्लुचुकायनिरग्रेगाद् ग्लौचुक्यवरजोपि च ।
हस्तालम्बं सवैदेहो रामदत्तायनिर्ददौ ॥ २३ ॥

२३. स्पष्टः । किं तु ग्लुचुकायनिर्नृपविशेषः । विदेहानां राष्ट्रस्य राजा विदेहस्य राज्ञोपत्यं वा वैदेहस्तेन युक्तो रामदत्तायनिः पिता पुत्रश्च नृपभेदौ । हस्तालम्बं जयसिंहस्य वाहिकां पर्यायेण ददुः ॥

ग्लुचुकायनिः ग्लौचुकि । इत्यत्र "अदोर्०" [ ११३ ] इत्यादिनायनिर्वा ॥ अदोरिति किम् । रामदत्तायनिः ॥ आयनिञन्तादणो लुप् ॥

वैदेहः । अत्र "राष्ट्र०" [ ११४ ] इत्यादिनाञ् ॥

---

१ ए °चुकाव°.

---

१ ए बी °पुत्राद्या. २ सी °यास्ते°. ३ बी °यणि गा°. ४ ए °यणिः । गा°. ५ बी सी °यनिः । ला°. ६ सी °निः । काविनिकायनि । पु°. ७ बी °ण । कार्मिण°. ८ बी कार्काव्यम्. ९ ए °नि । गा°.

अस्य[1] गान्धारसाल्वेयौ वाङ्गः पौरवमागधौ ।
सौरमसः[2] कालिङ्गश्च पञ्चर्या दक्षिणतो ययुः ॥ २४ ॥

२४. गान्धारादयो नृपाः । शिष्टं स्पष्टम् ॥

गान्धारसाल्वेयौ । इत्यत्र "गान्धारि०" [ ११५ ] इत्यादिनाञ् ॥

पौरवमागधौ । कालिङ्गः । सौरमसः ॥ द्विस्वरे[1] । वाङ्गः । अत्र "पुरु०" [ ११६ ] इत्यादिनाण् ॥

औदुम्बरिः कालकूटिः[3] सम्प्रात्यग्रथिराश्मकिः[4] ।
नैषध्याम्बष्ठ्यकौरव्यावन्त्यं[5] वामे च पर्यगात्[6] ॥ २५ ॥

२५. स्पष्टः । किं तु नैषध्याम्बष्ठ्यकौरव्यावन्त्यमित्यत्र समाहारः ॥

ययुः कौशल्य आजाद्यः सपाण्ड्यो यवनः शकः ।
कुन्त्यवन्तीकुरुभर्तुः[7] पृष्ठे तस्यांह्रिचारिणः ॥ २६ ॥

२६. स्पष्टः । किं तु कुन्त्यवन्तीकुरुभर्तुः[2] कुन्त्यादिराज्ञीनां प्रियस्य तस्य[3] जयसिंहस्य ॥

कौरव्यायण्यथो शूरसेनी मद्री च सासुरी ।
मागध्यौशीनरी भार्गी चेति राज्यस्तमन्वयुः ॥ २७ ॥

२७. स्पष्टः ।

औदुम्बरिः । प्रात्यग्रथिः[4] । कालकूटिः । आश्मकिः । अत्र "साल्वांश०" [ ११७ ] इत्यादिनेञ् ॥

द्रु । आम्बष्ठ्य ॥ नादि । नैषध्य ॥ कुरु । कौरव्य ॥ इन्[5] । आवन्त्यम् । कौशल्य[6] । आजाद्यः । अत्र "दुनादि०" [ ११८ ] इत्यादिना ञ्यः ॥

---

१ सी अथ गा°.　२ बी °मः कलि°.　३ प °लकुटिः.　४ सी °प्रातिग्रंथि°.
५ बी °रादिमकः । नै°.　६ प °मे प प°.　७ प °कुरुभ°.

---

१ बी °र । याङ्गः.　२ प सी °कुरुभ°.　३ प °स्य मि°.　४ सी °त्यग्रंथिः.
५ प इन् । आ°.　सी इञ् । आ°.　६ बी सी °शल्यः । आ°.

पाण्ड्यः । अत्र "पाण्डोर्ड्यण्" [ ११९ ] इति ड्यण् ॥

शकः । यवनः । अत्र "शकादिभ्यो द्रेर्लुप्" [ १२० ] इति[1] द्रेः प्रत्ययस्य लुप् ॥

कुन्त्यवन्ती । इत्यत्र "कुन्ति०" [ १२१ ] इत्यादिना ञ्यस्य द्रेर्लुप् ॥

कुरू[2] कौरव्याणी । इत्यत्र "कुरोर्वा" [ १२२ ] इति द्रेर्ञ्यस्य लुब्वा[3] ॥

अञ् । शूरसेनी ॥ अण् । मद्री । इत्यत्र "द्रेर्०" [ १२३ ] इत्यादिना-अञणो द्रेर्लुप् ॥ द्रावनुवर्तमाने पुनर्द्रिग्रहणं भिन्नप्रकरणस्यापि द्रेर्लुबर्थम् । असुरी । असुरस्यापत्यं स्त्री । "राष्ट्र०" [ ६. १. ११४ ] इत्यादिनाञ् । शकादित्वाल्लोपः । "जातेर्०" [ २. ४. ५४ ] इत्यादिना ङीः ॥ सैव शस्त्रजीविसंघः स्त्रीत्वविशिष्टो विवक्षितः । स्वार्थे "पर्श्वादेरण्" [ ७.३.६६ ] तस्यापि "स्त्रियाम्" [ ६. १. ४६ ] अनेन लुप् । अप्राच्यभर्गादेरिति किम् । मागधी । मगधः प्राच्यो राष्ट्रस्वरूपः[4] क्षत्रियः । भर्गादि । भार्गी । औशीनरी[5] ॥

पञ्चालाः पाञ्चाल्यो[1] लौहध्वज्या लोहध्वजा अपि ।
यस्का लह्या विदागर्गास्तस्याग्रे[2] चर्चरीर्जगुः ॥ २८ ॥

२८. पञ्चाला नृपाः । पाञ्चाल्यो राज्यः । लोहध्वजा एव "पूगादमुख्यकाञ्ञ्यो द्रिः" [७.३.६०] इति ञ्ये[6] लौहध्वज्या अर्थकामप्रधाना नानाजातीयाः स्त्रीपूगाः । लोहध्वजा नरपूगाः । यस्कादयो मुनिभेदाः । शिष्टं स्पष्टम् ॥

सश्यापर्णा गौपवनाः सागस्तीया अगस्तयः ।
कुण्डिनाश्च पृथासूनोस्तीर्थयात्राकथा व्यधुः ॥ २९ ॥

---

१ प °ल्यो लोह°. २ प °स्या चर्चरी जगुः.

---

१ बी सी °ति द्रे प्र°. २ प सी कुरु कौ°. ३ बी लुग्वा । अ°. ४ प सी °पः क्षत्रि°. ५ प °शीनारी. ६ प °ञ्ये लोह°.

२९. सागस्तीया अगस्तीनामभिश्छात्रैर्युक्ता अगस्तयोगस्त(स्त्य?)-स्यापत्यान्यृपय एवं श्यापर्णादयोप्यृपयः । पृथासूनोर्युधिष्ठिरस्य । शिष्टं स्पष्टम् ॥

पञ्चालाः । लोहध्वजाः । इत्यत्र "बहुष्वस्त्रियाम्" [ १२४ ] इति द्रेर्लुप् ॥ अस्त्रियामिति किम् । पाञ्चाल्यः । लौहध्वज्याः ॥

यस्काः । लह्याः । अत्र "यस्कादेर्गोत्रे [ १२५ ] इति प्रत्ययस्य लुप् ॥

गर्गाः । विदाः । अत्र "यञि(ञ)ञः०" [ १२६ ] इत्यादिना यञञोर्लुप् ॥ अश्यापर्णान्तगोपवनादेरिति किम् । गौपवनाः । श्यापर्णाः ॥

कुण्डिनाः । अगस्तयः । अत्र "कौडिन्य०" [ १२७ ] इत्यादिना यञ ऋण्य-णश्च लुप् कुण्डिन्य( ना? )गस्त( स्त्य? )योश्च कुण्डिन-अगस्ति-आदेशौ । प्रत्यय-लुपं कृत्वादेशकरणमागस्तीया एवमर्थम् । प्रत्ययान्तादेशे हि कृतेगस्त्यशब्द-स्यादेराकाराभावाद् "वृद्धिर्यस्य०" [ ६. १. ८ ] इत्यादिना दुसंज्ञा न स्यात्तद-भावे "दोरीयः" [ ६. ३. ३२ ] इतीयोपि न स्यात् । यदा तु प्रत्ययस्य लुब्वि-धीयते तदा स्वरादावीयप्रत्यये भाविनि "न प्राग्०" [ ६.१.१३५ ] इत्यादिना प्रतिपेधात्प्रत्ययस्य लुन्न । तथा च सति दुसंज्ञत्वादीयः सिद्धः स्यात् ॥

वसिष्ठा गोतमाः कुत्सा भृगवोङ्गिरसोत्रयः ।
शंसन्तस्तीर्थमाहात्म्यं राज्ञोर्घ्या अभवन्भृशम् ॥ ३० ॥

३०. स्पष्टः ॥

भृगवः । अङ्गिरसः । कुत्साः । वशि(सि)ष्ठाः । गोतमाः । अत्राणः । अत्रयः । इत्यत्रैयणश्च "भृगु०" [ १२८ ] इत्यादिना लुप् ॥

---

१ ए सी वसिष्ठा.

---

१ सी °या आग°. २ ए सी °नामेभि°. ३ ए °प् । ग°. ४ बी सी अस्याप°. ५ सी स्पष्टम् । भृ°.

भक्त्या युधिष्ठिरा[1]: क्षीरकलम्भा[2] भागवित्तयः ।
चक्रुरार्जुनयश्चाग्रे पथि कण्टकशोधनम् ॥ ३१ ॥

३१ स्पष्टः । किं तु युधिष्ठिराद्या नृपभेदाः ॥

क्षीरकलम्भाः । अत्रात इञः । भरत । युधिष्ठिराः । अत्र बाह्वादीञः "प्राग्भरते०" [ १२९ ] इत्यादिना लुप् ॥ अपरे त्वाहुः । प्राग्ग्रहणं भरतविशेषणम् । क्षीरकलम्भादयो[1] वैश्याः प्राग्भरताः । युधिष्ठिरादयो राजान उदग्भरताः । तत्र प्राग्ग्रहणादुदीच्यभरतेषु राजसु लुब्न भवति । आर्जुनयः । भरतग्रहणाच्च प्राच्येषु राजसु न स्याद् भागवित्तयः ॥

उपकैर्लमका लामकायनैरौपकायनाः ।
रासकास्तिकैकितवैस्तथोब्जककुभा ददुः ॥ ३२ ॥

३२. स्पष्टः ॥

उपकैः[2] । लमकाः । अत्र नडाद्यायनणो "वोपकादेः" [ १३० ] इति वा लुप् ॥ पक्षे । औपकायनाः । लामकायनैः ॥

तैकायनयश्च[3] कैतवायनयश्च[4] तैस्तिककितवैः । इत्यत्र तिकाद्यायनिञ्[5] औब्जयश्च काकुभाश्चौब्जककुभाः । अत्रौब्जादिञः ककुभाच्छिवाद्यणश्च "तिक०" [ १३१ ] इत्यादिना लुप् ॥

वृकलोहध्वजकुण्डीवृशा[3] वङ्गाङ्गसुह्मकाः[4][5] ।
तामक्लेशगतिं[6] राज्ञः पश्यन्तो विस्मयं ययुः ॥ ३३ ॥

३३. स्पष्टः[6] ॥

---

१ ए सी °ष्ठिरा क्षी°. २ ए °कलिभा भा°. सी °कलम्भज्ञापवि°. ३ सी °ण्डीवृशा. ४ ए °सुब्रह्म°. ५ वी °ह्माकः । ता°. सी °ह्मगा । ता°. ६ ए °गतं रा°.

---

१ सी °लभादयो रा°. २ ए सी °पकै । ल°. ३ ए सी °नश्च. ४ ए सी °नश्च. ५ ए °नि औ औ°. ६ सी स्पष्टम् । वृ°.

वृकाः शस्त्रजीविसंघो "वृकाट्टेण्यण्" [ ७. ३. ६४ ] इति टेण्यणि वार्केण्यः । लोहध्वजाः पूगाः[1] । "पूगाद्०" [ ७. ३. ६० ] इत्यादिना ञ्ये लो(लौ)हध्वज्यः । कुण्डीदृशा[2] वाहीकेषु शस्त्रजीविसंघो "वाहीकेषु०" [ ७. ३. ६३ ] इत्यादिना ञ्यटि कौण्डीदृश्यो[3] द्वन्द्वे वृकलोहध्वजकुण्डीदृशाः[4] । इत्यत्र टेण्यणादेः वङ्गाङ्गसुह्मकाः । अत्र च द्विस्वरलक्षणाणश्च "द्र्यादेस्तथा" [ १३२ ] इति लुप् ॥

सोमेशः संमुखं न्वेति राजा वा शीघ्र इत्यभूत् ।
वादोङ्गवङ्गदाक्षीणां सहाङ्गवाङ्गदाक्षिभिः ॥ ३४ ॥

३४. अचिरादेवपत्तनसमीपे राज्ञ आगमनादित्येवंविधो वाद उक्तिरभूत् । शिष्टं स्पष्टम् ॥

अङ्गवङ्गदाक्षीणाम् आङ्गवाङ्गदाक्षिभिः । अत्र 'वान्येन" [ १३३ ] इति द्विस्वरलक्षणस्याणो लुप्वा(ब्वा) ॥

राजा गार्गकुलाद्वैदकुलं विदकुलादथ ।
ज्ञात्वा गार्ग्यकुलं[1] चेति दानं गच्छन्विवेक्यदात् ॥ ३५ ॥

३५. इति पूर्वोक्तप्रकारेण यात्रार्थं गच्छन्सत्राजा[5][6][7] दानमदाद्गर्गकुलविदकुलयोरेव[8] । किं कृत्वा । गर्गकुलाद्गार्ग्यस्य[9] गार्ग्ययोर्वा कुलाद्वैदकुलं वैदस्य वैदयोर्वा कुलं ज्ञात्वाथ तथा विदकुलाद्गार्ग्यकुलं च ज्ञात्वा । यतो विवेकी ॥

गर्गकुलात् गार्ग्यकुलम् । विदकुलात् वैदकुलम् । अत्र "द्वे(य्ये)केषु०" [ १३४ ] इत्यादिना लुप्वा(ब्वा) ॥

---

१ ए गार्ग्यें चे°.

---

१ ए पूगः । पू°. २ बी सी °ण्डीवृशा. ३ बी °ण्डीवृश्यो. सी °ण्डीवृशो द्व°. ४ बी °ण्डीवृशाः. ५ सी °दृश्याः । इ°. ६ सी °च्छत्रा°. ७ बी °न्स राजा. ८ सी °जा वासम°. ९ ए °द्गार्गस.

भृग्वङ्गिरसिकागर्गभार्गविकास्विवोन्मुदः ।
गार्गीयाः सह फाण्टाहृतैर्गार्गीयैश्च मङ्क्षुयुः ॥ ३६ ॥

३६. गार्गीया गर्गाणां छात्रा उन्मुदो हृष्टाः सन्तो राज्ञा सह मङ्क्षुयुः । कैः सह । फाण्टाहृतस्यापत्यं वृद्धं फाण्टाहृतिस्तस्यापत्यं युवा फाण्टाहृतः "फाण्टाहृति०" [ ६. १. १०४ ] इत्यादिना णस्तस्यच्छात्रा इति प्राग्जितीये स्वरादौ चिकीर्षिते णस्य लुप्त इञन्तात् "वृद्धेञः" [ ६.३. २८ ] इत्यञि फाण्टाहृतास्तैर्गार्गीयैश्च गार्ग्यायणच्छात्रैश्च भृग्वि(ग्व)ङ्गिरसिकागर्गभार्गविकास्विव । यथा भृगूणामङ्गिरसां च विवाहेषु गर्गाणां भृगूणां च विवाहेषु चोन्मुदः सन्तो गच्छन्ति ॥

गार्ग्यायणीयैर्हौ(हौ)त्रीयैरतिहो(हौ)त्रायणीयकैः ।
छात्रैः प्राध्ययनं प्राप भूपतिर्देवपत्तनम् ॥ ३७ ॥

३७. भूपतिर्देवपत्तनं प्राप । किंभूतम् । प्राध्ययनं प्रारब्धवेदादिपाठम् । कैः । छात्रैः । किंभूतैः । गार्ग्यायणीयैर्गार्ग्यायणसंबन्धिभिस्तथा कैश्चिद्धो(द्धौ)त्रीयैर्होत्रस्यापत्यं युवा "द्विस्वरादणः" [ ६. १. १०८ ] इत्य(त्या)यनिञि हौत्रायणिस्तत्संबन्धिभिस्तथा कैश्चिच्चातिहो(हौ)त्रायणीयकैर्गुणाधिक्येन हो(हौ)त्रायणीयकानतिक्रान्तैश्च ॥

गार्गीयाः । अत्र "न प्राग्०" [ १३५ ] इत्यादिना गोत्रोत्पन्नस्य लुन्न ॥ भृग्वङ्गिरसिका ॥ इत्यत्र कस्मान्निषेधो न स्यादुच्यते । प्रत्यासत्तेर्यस्य प्रत्ययस्य

१ ए °ङ्गिरिसि°. २ ए °हृतस्या°.

१ सी उन्मदो. २ ए °त्यं यु°. सी °त्यं फा°. ३ बी °तिस्तस्या°. ४ सी °द्धेञ्य इ°. ५ ए °ङ्गिरिसि°. ६ ए °सां विवाहेपु च ग°. ७ सी °पु चो° ८ ए °णां वि°. ९ बी सी चोन्मदः. १० ए °म् । प्रध्य°. ११ ए सी °णीयकैर्गा°. १२ ए °यणिसं°.

लुप्प्रतिषिध्यते तल्लोपिप्रत्ययान्तादेव विधीयमाने स्वरादौ प्रतिषिध्यते । अत्र द्वन्द्वाद्विधीयते न लोपप्रत्ययान्तादिति न प्रतिषेधः । "गर्गभार्गविका" इत्युत्तरसूत्रं वा नियमार्थं व्याख्यास्यते । गर्गभार्गविकाया अन्यत्र द्वन्द्वे वृद्धे यूनि वा प्रतिषेधो न स्यात् ॥

गर्गभार्गविका । इत्यत्र "गर्गभार्गविका" [ १३६ ] इत्यणो लुप्प्रतिषेधो निपात्यते ॥

फाण्टाहृतैः । इत्यत्र यूनि विहितस्य णस्य लुप् [ १३७ ] ॥

गार्गीयैः गार्ग्यायणीयैः । हौत्रीयैः हौत्रायणीयकैः । अत्र "वायनण्०" [ १३८ ] इत्यादिना यूनि विहितस्यायनण आयनिञश्च लुब्वा ॥

औदुम्बरिः पुराध्यक्षस्ततः सौदुम्बरायणः ।
सहतैकायनिस्तैकायनिश्चाभिमुखोभ्यगात् ॥ ३८ ॥

३८. ततः पुराध्यक्षो नगरस्य रक्षार्थमधिकृत औदुम्बरिरुदुम्बरस्यापत्यं "साल्वांश०" [ ६. १. ११७ ] इत्यादिनेञि औदुम्बरिस्तस्यापत्यं युव ऋषिर्गण्डेति नाम्ना तत्र प्रसिद्धो नृपस्याभिमुखोभ्यगात् । कीदृक्सन् । सौदुम्बरायण औदुम्बरेरपत्येन यूना । स्वभ्रात्रेत्यर्थः । युक्तस्तथा तैकायनिश्च तिकस्यापत्यं वृद्धमार्येति नाम्ना तत्र प्रसिद्ध ऋषिश्चोपलक्षणत्वादन्योप्यार्यौघोभिमुखोभ्यगात् । कीदृक्सन् । सहतैकायनिस्तैकायनेरपत्येन यूना युतः सपुत्र इत्यर्थः । उपलक्षणत्वात्स्वजनादिपरिवारोपेतः ॥

---

१ **बी सी** °ल्लोपप्र°. २ **प** न तोपिप्र°. ३ **प** °न्द्वे यू°. ४ **बी सी** °यैः होत्री°. ५ **बी** °यैः होत्रा°. **सी** °यैः हात्रा°. ६ **प** °म्बर°. ७ **प** °पस्तस्या°. ८ **प** °खोभ्यागा°.

आर्याग्रणीर्वासिष्ठश्च वासिष्ठेन सहोत्सुकः ।
अवासुदेवं तं वासुदेवं न्वाह्वातुमाययौ ॥ ३९ ॥

३९. आर्याग्रणीरार्येष्वारिये(ष्वार्ये?)त्याख्यया तत्र प्रसिद्धेष्वग्रणीः श्रेष्ठो वासिष्ठो वसिष्ठस्यापत्यं वृद्धमृषिर्वासिष्ठेन वासिष्ठस्यापत्येन यूना सह सपुत्र इत्यर्थस्तं नृपमाह्वातुं स्वमहासौधेवस्थानायामन्त्रयितुमाययौ । कीदृक्सन् । उत्सुकोन्येभ्यः पूर्वमाह्वातुमतित्वरावान् । किंभूतं तम् । वासुदेवं नु रूपवत्त्वपराक्रमित्वादिगुणैर्वसुदेवस्य वृद्धमपत्यमिव काममिवेत्यर्थः । किंभूतं वासुदेवम् । अवासुदेवं वासुदेवस्य कामस्यापत्यं युवा वासुदेवोनिरुद्धस्तेन रहितम् । एतेन राज्ञो निष्पुत्रत्वोक्तिः ॥

औदुम्बरिः औदुम्बरायणः । अत्र "द्रीञो वा" [ १३९ ] इति यून्यायनणो लुब्वा ॥

ञितः । तैकायनिः । सहतैकायनिः । अत्रौत्सर्गिकाणः ॥ आर्यात् । वासिष्ठः । वासिष्ठेन । इत्यत्रात इञश्च "ञिद्०" [ १४० ] इत्यादिना युवप्रत्ययस्य लुप् ॥

वासुदेवम् । अवासुदेवम् । इत्यत्र "अब्राह्मणात्" [ १४१ ] इति युवप्रत्ययस्यात इञो लुप् ॥

पैलः सपैलः शालङ्किः सशालङ्किस्त्वरान्वितः ।
पान्नागारिः सपान्नागारिरर्घं भूपतेर्ददौ ॥ ४० ॥

४०. सपैलः पुत्रयुक्तः पैल आर्य एवमग्रेपि । अर्घं भूपतेर्ददौ । चन्दनपुष्पाक्षतजलाद्यर्घमर्घमुपलक्षणत्वात्पाद्याचमनीयमधुपर्काद्यपि राज्ञोदात् । गुरुनृपादयः षडर्घ्या इति हि स्मृतिः ॥ शिष्टं स्पष्टम् ॥

---

१ बी सी °णीश्च वासिष्टो वा°. २ ए °ङ्किस्वरा°. ३ बी °ङ्कि–रा°. ३ बी सी °तः । पन्ना°. ४ बी सपन्ना°. सी सपन्नगा°.

---

१ सी वशिष्ठ°. २ बी सी वाशिष्ठ°. ३ ए °वं स्वरू°. ४ बी अत्रोत्स°. ५ सी आश्चर्य.

तौल्वलिं तैल्वलिं तौल्वलायनं तैल्वलायनम् ।
महत्तरान्पुरस्कृत्य सौमेशं वेश्म सोविशत् ॥ ४१ ॥

४१. स्पष्टः । किं तु महत्तरान्प्रधानानि[1] ॥

पैलः[2] । सपैलः । अत्र "द्विस्वरादणः" [ ६. १. १०९ ] इत्यायनिञः शालङ्किः । सशालङ्किः । अत्र "यञिञः[3]" [ ६. १. ५४ ] इत्यायनणश्च "पैलादेः" [ १४२ ] इति युवप्रत्ययस्य लुप् ॥

पान्नागारिः[4] । सपान्नागारिः[5] । अत्र "यञिञः[6] [ ६. १. ५४ ] इत्यायनणः "प्राच्येञः०" [ १४३ ] इत्यादिना लुप् ॥ तौल्वल्यादिवर्जनं किम् । तौल्वलिं पितरम् । तौल्वलायनं पुत्रम् । तैल्वलिं पितरम् । तैल्वलायनं पुत्रम् ॥

एकविंशः पादः[7] ॥

कौसुम्भं विद्रुमैः[1] सोथ पद्मरागैश्च लाक्षिकम् ।
वज्रै[2] रौचनिकं कार्दमिकं मरकतोत्करैः ॥ ४२ ॥
कार्दमं च महानीलैर्मिश्रैः शाकलिकं च तैः ।
रुचोलो(ल्लो)चं नु तन्वानैः स्नपयित्वेशमार्चिचत् ॥ ४३ ॥

४२–४३. अथ जयसिंह ईशं सोमनाथं स्नपयित्वार्चिचत् । कैः । विद्रुमैः प्रवालैः । किंभूतैः । रुचा पीतकान्त्या कृत्वा कौसुम्भं कुसुम्भेन रक्तमुल्लोचं नु चन्द्रोदयमिव तन्वानैः कुर्वद्भिः । एवं सर्वत्र योजना कार्या । पद्मरागैर्लोहितकैर्मणिभिर्लाक्षिकं लाक्षया रक्तं वज्रै[8]र्घृतवर्णैर्हीरकै रौचनिकं गोरोचनया रक्तं मरकतोत्करैः कृष्णवर्णैरश्म-

---

१ बी °सुभं वि°. २ बी वज्रे रौ°.

---

१ प °नाने । पैलः । अ°. २ सी पैल्यः । म°. ३ प °ञः अत्राय°. ४ सी °रिः । अ°. ५ बी सपन्ना°. ६ प °ञिञ अत्राय°. ७ बी °दः समाप्तः । कौ°. ८ प °कै रौ°.

गभेरत्नौघैः कार्दमिकं कर्दमेन कृष्णेन मृद्विशेषकादद्रव्येण रक्तं[1] महानीलैरिन्द्रनीलैः कार्दमं च कविमार्गे कृष्णनीलवर्णयोरैक्येन वर्ण्यत्वात्कर्दमेन रक्तं मिश्रैः संकीर्णैस्तैर्विद्रुमादिभिः शाकलिकं च शकलेन नानावर्णेन रागद्रव्यभेदेन रक्तम् ॥

शाकलैः पीतकैर्नीलैर[1]नीलैरपरैरपि ।

तं क्षौमैरार्चयद्भूपः कर्पूरा[2]गुरुधूपितैः ॥ ४४ ॥

४४. स्पष्टः । किं तु पीतकैः पीतेन कुसुम्भप्र[2]थमनिर्यासेन रक्तैः । नीलैर्नी[3]लेन रागविशेषेण रक्तैः । अनीलैर्नी[4]लीरक्तक्षौमवर्जितैरपरैरपि क्षौमैः । नील्या रक्तानि हि क्षौमाणि लोके पवित्राणि ॥

कौ[5]सुम्भम् । अत्र "रागाट्टो रक्ते" [ १ ] इत्यण् ॥

लाक्षिकम् । रौचनिकम् । अत्र "लाक्षा०" [ २ ] इत्यादिना इकण् ॥

शाकलिकम् शाकलैः । कार्दमिकम् कार्दमम् । अत्र "शकल०" [ ३ ] इत्यादिना वेकण् ॥

नीलैः । पीतकैः । अत्र "नील०" [ ४ ] इत्यादिना-अकश्च(अकौ?) ॥ लिङ्गविशिष्टग्रहणादनीलैः ॥

पौषोऽब्दोसौ निशा पौषी पुष्योद्यापीति शंसिनः ।

द्विजान्विसृज्य सोन्यांश्च समाधात्रविशद्रहः ॥ ४५ ॥

४५. स जयसिंहो रह एकान्ते समाधौ ध्यानार्थमविशत् । किं कृत्वा । द्विजानन्यांश्च भट्टादियाचकान्विसृज्य दानसन्मानादिना मु[6]त्कलयित्वा । किंभूतान् । इति शंसिनो वदतस्तदेवाह । असौ यत्र राजा सोमनाथस्य यात्रां चकार सोऽब्दः संवत्सरः पौ[7]षः पुष्येणोदितगुरुणा

१ प सी °रप°. २ सी °रागरु°.

१ सी रक्तमि°. २ प °प्रथनि° सी °प्रवनि°. ३ प °ले रा°. ४ प सी °नीलर°. ५ बी कौशुम्भ°. ६ सी मुत्काल°. ७ बी सी पौष पु°.

युक्तस्तथासावनन्तरागामिनी निशा पौषी पुष्येण चन्द्रयुक्तेन युक्ता तथाद्यास्मिन्यात्राहे पुष्योपि पुष्येण चन्द्रयुक्तेन युक्तः कालोपि । अयं संवत्सरोहोरात्रश्च सर्वकार्यसिद्धिकर इत्यर्थ इति ॥

पौषोब्दः । अत्र "उदित०" [ ५ ] इत्यादिनाण् ॥

पौषी निशा । इत्यत्र "चन्द्रयुक्तात्०" [ ६ ] इत्यादिनाण् । लुस्त्वप्रयुक्ते पुष्योद्य ॥

निशां राधानुराधीयां ध्यानस्तिमितदृष्टिना ।
जपन्किमपि चौलुक्यो व्यडम्बयन्मुखेन्दुना ॥ ४६ ॥

४६. चौलुक्यः किमप्यज्ञेयं रहस्यं जपन्ध्यायन्सन् निशां व्यडम्बयदन्वकरोत् । कीदृशीम् । राधानुराधीयां राधानुराधाभिर्विशाखानुराधाभिश्चन्द्रयुक्ताभिर्युक्ताम् । केन कृत्वा । ध्यानस्तिमितदृष्टिना समाधिनिश्चलाक्षेण मुखेन्दुना वक्त्रश्रेष्ठेन । इन्दुशब्दोत्र व्याघ्रादिशब्दवत्प्रशंसावचनः । एतेन राज्ञि समाधेः प्रकर्ष उक्तः । चन्द्रोदयोज्वलनिशातुल्यो राजा । राधानुराधायुक्तचन्द्रतुल्यो राज्ञो ध्यानस्तिमितदृष्टिमुखेन्दुः । यदा हि विशाखानुराधयोश्चन्द्रः स्यात्तदा तयोर्मध्यस्थत्वाच्चन्द्रस्यैवमुपमा ॥

राधानुराधीयां निशाम् । अत्र "द्वन्द्वादीयः" [ ७ ] इतीयः ॥

कण्ठप्रभानवाम्भोदैः श्रवणां दर्शयन्निव ।
अङ्गज्योत्स्नाभिरश्वेत्थां चाविरासीदथेश्वरः ॥ ४७ ॥

४७. अथेश्वर आविरासीत्प्रत्यक्षोभूत् । कीदृक्सन् । कण्ठप्रभानवाम्भोदैः कण्ठकान्तिभिरेव नीलत्वात्प्रावृषेण्यमेघैः कृत्वा श्रवणामिव

१ बी सी °क्यो वि°. २ सी °श्वत्थां चा°. ३ ए °रः । ईश्व°.

१ बी °न्तरगा°. २ सी युक्तः का°. ३ बी °प्रत्युक्ते. ४ ए °युक्तेः पु°. ५ सी °मपि ज्ञे°. ६ बी सी °शां विड°. ७ बी °विशेषानु°. ८ बी °शाखानु°. ९ ए °न्तिरे°.

श्रवणेन चन्द्रयुक्तेन युक्तां पूर्णिमामिव श्रावणपूर्णिमामिव दर्शयन् । तथाङ्गज्योत्स्नाभिरङ्गमेवातिश्वेतत्वाज्ज्योत्स्नास्ताभिः कृत्वाश्व[1]त्थामिवाश्व[2]त्थेनाश्विनीभिश्चन्द्रयुक्तेन युक्तां पूर्णिमामिवाश्विनपूर्णिमामिव[3] च दर्शयन् ॥

श्रवणाम् । अश्वत्थाम् । अत्र "श्रवण०" [ ८ ] इत्यादिना-अः ॥

इत्यूचे तं हरः स्थित्यानया जयसि तापसम् ।
भैक्ष[1]भुग्यौवतानीहं जेतः क्षौद्रकमालवीम् ॥ ४८ ॥

४८. हरस्तमित्यूचे । यथा क्षुद्रकाणां मालवानां च समूहः क्षुद्रकमालव्येवंनामा(म्नी?) काचित्सेना तां जेतर्जिष्णो हे जयसिंहानया स्थित्या योगिजनोचितावस्थानेन ता[4]पसं तापसौघं जयसि । किंभूतम् । भैक्षभुग्भिःसङ्गत्वाद्भिक्षासमूहं भुञ्जानं तथा यौवतानीहं जितेन्द्रियत्वाद्युवतिसमूहानभि[5]लाषि ॥

तापसम् । अत्र "षष्ठ्याः समूहे" [ ९ ] इत्यण्[6] ॥

भैक्ष[7] । यौवत । इत्यत्र "भिक्षादेः" [ १० ] इत्यण् ॥

क्षौद्रकमालवीम् । इत्यत्र "क्षुद्रक०" [ ११ ] इत्यादिनाण् ॥

वात्सकैरौक्षकैः प्रागप्याजकौरभ्रकौष्ट्रकैः ।
श्रितो मानुष्यकैश्चा[2]सि वार्धकैश्चातिगार्गकैः ॥ ४९ ॥

भक्तै राजन्यकै राजपुत्रकै[3]रतिराजकः ।
क्ष्मानृण्यायाधुना स्वर्णसिद्ध्या त्वं भव सि[4]द्धिराट् ॥ ५० ॥

१ बी भैक्ष्यभु°. सी भैक्षाभु°. २ सी °श्चातिगा°. ३ प °कैरा. ४ बी सिद्धरा°.

१ सी °श्वस्थामि°. २ बी °श्वत्थाश्वि°. सी °श्वस्थेमोश्वि°. ३ बी °व द°. ४ सी °पसौ°. ५ बी °भिलषि. ६ बी °ण् । भिक्ष. ७ सी भैक्ष्य । यौ°.

४९–५०. स्पष्टौ[१] । किं त्वतिगार्गकै[२]र्जितेन्द्रियत्वादिना गर्गर्षिसमूहानतिक्रान्तैर्वार्धकैश्च वृद्धसमूहै[३]श्च श्रितस्तथा भक्तै राजन्यकै[४] राजपुत्रकैश्च राजन्यानां राजपुत्राणां च समूहैः कृत्वातिराजको विजयेन राजौघ[५]मतिक्रान्तश्च वर्तसे[६] हे सिद्धिराड्[७] जयसिंह ॥

गोत्र । गार्गकैः[८] । औक्षकैः । वात्सकैः । औष्ट्रकैः । वार्धकैः । आजक । औरभ्रक । मानुष्यकैः । राजकः । राजन्यकैः । राजपुत्रकैः । अत्र "गोत्र०" [ १२ ] इत्यादिनाकञ् ॥

नृपो[१] भक्त्यम्बुकैदार्यं गुणकैदारकं स तम् ।
सिद्धिकै[२]दारिकं साहांहःकावचिकहास्तिकम् ॥ ५१ ॥

५१. स नृपस्तं सोमनाथ[१०]माह स्म । किंभूतम् । गुण[११]कै[१२]दारकं[१३] यथा कैदारकं[१४] क्षेत्रौघो[१५]नेकधान्यानां जन्मभूमिरेवमनेकगुणानामुत्पत्तिभूमिमित्यर्थः । तथांहांसि पापान्येव कावचिकं कवचिनां महाभटानां समूहस्तत्र हास्तिकं हस्तिनां हस्तिनीनां वा समूहं[१६] पापचूर्णकमित्यर्थः । अत एव सिद्धिकैदारिकमणिमादिसिद्धीनामुत्पत्तिभूमिमत एवं[१७] च भक्तय एव कठोरस्यापि भेदकत्वादम्बूनि[१८] तेषां कैदार्यमिव यथाम्बुभिः केदारौघः सिच्यते तथासंख्यभक्तिभिः सेव्यमाराध्यमित्यर्थः ॥

---

१ **बी** °पो भुत्तय°. २ **प** °द्धिकेदारकं.

---

१ **प** स्पष्टे । किं. २ **बी सी** °कैर्जितै°. ३ **बी** °हैश्चाश्रि°. ४ **प** °जपु°. ५ **प** राजोघ°. ६ **सी** °र्तते हे. ७ **बी सी** सिद्धरा°. ८ **प** °कैः । वा°. ९ **सी** °भ्रकः । मा°. १० **सी** °थस्यमा°. ११ **सी** गुणाकेदा°. १२ **बी** °णकेदा°. १३ **प** °दारिकं. १४ **प** °दारिकं. १५ **बी सी** क्षेत्रोघो°. १६ **प बी** °मूहः पा°. १७ **बी सी** °व भ°. १८ **प** °दभूमि तेषां केदा°. **सी** °दशानि.

आपूपिकैर्नु माणव्यमाधैनवं नु धैनुकैः ।
ब्राह्मण्यमिव निर्वापैर्हृष्टोस्मि त्वत्प्रसादतः ॥ ५२ ॥

५२. त्वत्प्रसादतः स्वर्णसिद्धिदानरूपात्त्वत्प्रसादादस्म्यहं हृष्टः यथापूपिकैः[1] पूपिकौघैर्माणव्यं बटुकौघो हृष्यति यथा वा धैनुकैर्धेन्वोघैराधैनवं न धेनवो येषां तेधेनवस्तेषामोघो हृष्यति यथा वा निर्वापैः पितृतर्पणैर्ब्राह्मण्यं द्विजौघो हृष्यति ॥

आवाडव्यान्महीमागाणिक्याद्विद्ध्यनृणां[1] कृताम्[2] ।
न्यस्य यत्र त्विमां साधयामि स्वं देहि तं सुतम् ॥ ५३ ॥

५३. स्पष्टः । किं त्वावाडव्याद्विजौघादारभ्यागाणिक्याद्गणिकौघं च यावदुत्तमं जनमारभ्य हीनं च यावदित्यर्थः । स्वमात्मानम् ॥

कैदार्यम् । कैदारकम् । इत्यत्र "केदाराण्यश्च" [ १३ ] इति ण्योकञ्च ॥

कावचिक । हास्तिकम् ॥ अचित्तात् । आपूपिकैः ॥ केदारात् । कैदारिकम् । अत्र "कवचि०" [ १४ ] इत्यादिनेकण् ॥

धैनुकैः । अत्र "धेनोरनञः" [ १५ ] इतीकण् ॥ अनञ इति किम् । आधैनवम् । उत्साद्यञ् । अनुशतिकादित्वादुभयपदवृद्धिः [ ७. ४. २७ ] ॥

ब्राह्मण्यम् । माणव्यम् । वाडव्यात् । इत्यत्र "ब्राह्मण०" [ १६ ] इत्यादिना यः ॥

गाणिक्याद् । इत्यत्र "गणिकाया ण्यः" [ १७ ] इति ण्यः ॥

मूर्ध्नि कैश्यं स्पृशञ् शंभुः पाणिना प्रत्युवाच तम् ।
भूभारं कैशिकमिवोत्तितारयिषुरागमः ॥ ५४ ॥

---

१ बी °नृणीं कृ°. २ ए °म् । नामा य°.

---

१ ए °पिकौ°.

५४. शंभुर्मूर्ध्नि कैश्यं केशौघं पाणिना स्पृशन्नाह्लादनायच्छुपन्संस्तं नृपं प्रत्युवाच । हे राजंस्त्वं भूभारमुत्तितारयिषुः स्वपुत्रे न्यसनेन स्वत उत्तारयितुमिच्छुरागमः । कैशिकमिव यथा केशौघमुत्तितारयिषुस्त्वमागमः । सोमनाथयात्रायां हि यात्रिकैः केशा उत्तार्यन्ते ॥

कैश्यम् । कैशिकम् । अत्र "केशाद्वा" [ १८ ] इति वा ण्यः ॥

त्वद्धात्रीयत्रिभुवनपालपुत्रोस्ति धूःक्षमः ।
कुमारपालः साश्वीयस्त्वदन्ते क्ष्मां धरिष्यति ॥ ५५ ॥

५५. स्पष्टः । किं तु धूःक्षमो भूमिप्राग्भारधरणक्षमः । साश्वीयोश्वौघेन सहितः ॥

इत्युक्त्वान्तर्हिते शंभौ यावदाश्वैर्नृपोचलत् ।
वेत्र्यादिष्टो नमन्पार्श्वे तावदागाद्विभीषणः ॥ ५६ ॥

५६. स्पष्टः । किं त्वाश्वैरश्वौघैः वेत्र्यादिष्टः प्रतीहारेण कथितो नमन् सन् विभीषणो रावणभ्राता पार्श्वे राज्ञः समीपे लङ्कात आगात् । विभीषणो हि लोकैरविनश्वर उच्यते ॥

साश्वीयः आश्वः । अत्र "वाश्वादीयः" [ १९ ] इतीयो वा ॥

पार्श्वे । अत्र "पर्श्वा ड्वण्" [ २० ] इति ड्वण् ॥

ऊचे सोहीनपृष्ठ्येषु गोत्राप्रीणितकाठक ।
विद्धि छिद्रतूलवातूल भृत्यं मां पूर्वजन्मनः ॥ ५७ ॥

५७. स विभीषण ऊचे । यथाहीनपृष्ठ्येषु । अह्नां समूहा अहीनाः पृष्ठानां समूहाः पृष्ठ्याः। द्वन्द्वे तेषु यागभेदेषु हे गोत्राप्रीणितकाठक गोसमू-

१ बी °नपुष्पेषु.

१ ए °न्नाह्लद°. २ ए °यन्नुप°. ३ सी °त्ताहिते । कै°. ४ बी °न्ते । केश्य°. ५ ए °रश्वोघेः. ६ बी °यः अश्वैः.

हाहादितर्कठौघ हे कठेभ्यो दत्तगोसहस्रेत्यर्थः । तथा हे द्विद्रतूलवातूल शत्रुष्वेवार्कतूलेषु वातौघ पूर्वजन्मनो रामचन्द्ररूपस्य पूर्वभवस्य भृत्यं मां विद्धि ॥

**रथकड्यां( ट्यां ?) लसत्पाश्यागव्यां मुक्त्वांह्रिचारिणम् ।**
**त्वामत्रायान्तमाकर्ण्यारेथ्यो वात्यावदागमम् ॥ ५८ ॥**

५८. अरथ्यो रथौघरहितो वात्यावदतिशीघ्रत्वाद्वातौघ इवात्राहमागमम् । किं कृत्वा । त्वामाकर्ण्य । किंभूतम् । अंह्रिचारिणं सन्तमत्रायान्तं यात्रार्थमागच्छन्तम । किं कृत्वा । रथकड्यां(ट्यां ?) रथौघं मुक्त्वा । किंभूताम् । लसन्ती स्वर्णपृष्टा(ष्ठा)दिना विच्छुरितत्वाद्देदीप्यमाना पाश्या पाशानां योत्राणां समूहो यस्याः सा तथा गव्या वृषौघो यस्यां ताम् ॥

**तदादिश सदाण्डं मां सेनाग्रे रक्षितुं विभो ।**
**महाखल्यो यथा शौवमूकिनीखलिनीमुखे ॥ ५९ ॥**

५९. तत्तस्माद्धेतोर्हे विभो सदाण्डं दाण्डिनां दण्डप्रहरणवतां समूहेनान्वितं मां सेनाग्रे रक्षितुमादिश । यासु भूमिषु धान्यानि वृषादिभिर्विगाह्यन्त उत्पूयन्ते च ताः खलानि तेषां समूहः खल्या । महती खल्या यस्य स महाखल्यो गृहपतिर्यथोकिनीखलिनीमुख ऊकानां समूह ऊकिनी धान्यराशिस्तस्या या खलिनी खलानां समूहस्तस्या मुखे क्षेत्रद्वारदेशे रक्षितुं चोरादिभ्यो रक्षार्थं शौवं कुकुरौघमादिशति व्यापारयति ॥

१ बी °त्पाश्यग°. सी °त्पास्याग°. २ ए °रथो वा°. सी °रथो व्योत्या°.

१ सी °कठे°. २ बी °स्य भ°. ३ ए सी रथोघ°. ४ ए सतमाया°. ५ बी सी °र्णपिष्टादि°. ६ ए °मूहा य°. ७ ए °विघाह्य°. ८ बी सी क्षेत्रे द्वा°. ९ सी °क्षितु दोरा° ए क्षितुं चौरा°. १० बी °र्थं कु°.

अहीन । इत्यत्र "ईनोह्नः क्रतौ" [ २१ ] इतीनः ॥

पृष्ठयेषु । इत्यत्र "पृष्ठाद्यः" [ २२ ] इति यः ॥

काठक । इत्यत्र "चरणाद्धर्मवत्" [ २३ ] इत्यकञ् ॥

गोत्रा । रथकड्या(ड्या ?)म् । वातूल । इत्यत्र "गोरथ०" [ २४] इत्यादिना त्रलकड्य(ड्य?)ल्लूलाः ॥

पाश्य( श्या )। महाखल्यः । गव्याम् । अरथ्यः । वात्या । अत्र "पाशादेश्च ल्यः" [ २५ ] इति ल्यः ॥

शौवम् । दाण्डम् । अत्र "श्वादिभ्योञ्" [ २६ ] इत्यञ् ॥

खलिनी । ऊकिनी । इत्यत्र "खलादिभ्यो लिन्" [ २७ ] इति लिन् ॥

इत्यूचुषा तेन सहानूज्जयन्तं नृपोचलत् ।
ग्रामताजनतां पश्यन्वात्सल्याद्बन्धुतामिव ॥ ६० ॥

६०. स्पष्टः । किं तु ग्रामताजनतां ग्रामौघस्य जनौघम् । बन्धुतामिव बान्धवौघमिव ॥

सहायतापौरुषेयगजतायुग्दिनेपरे ।
पौरुषेयोपौरुषेयं प्राप रैवतकं नृपः ॥ ६१ ॥

६१. स्पष्टः । किं तु सहायतापौरुषेयगजतायुक् सहायपुरुषगजौघैर्युतः । पौरुषेयः पुरुषेभ्यो हितः । अपौरुषेयं स्वभावसंसिद्धत्वादेवनिर्मितत्वाद्वा न पुरुषैः कृतम् । एतेनातिरम्यत्वोक्तिः ॥

पौरुषेयाद्वधाद्रक्षन्विकाराच्च स्वकानथ ।
पौलस्त्यो भावविद्रूपं पुरो भूत्वेदमब्रवीत् ॥ ६२ ॥

---

१ सी °त्यूचिषा.

---

१ बी सी °श्चलाः इ°. २ बी सी °त्र स्यादि°. ३ बी °म्यत्वेनोक्तिः.

६२. पौलस्त्यो विभीषणो राज्ञः पुरो भूत्वा भूपमिदं वक्ष्यमाणं रैवतकतीर्थस्वरूपमब्रवीत् । कीदृक्सन् । पौरुषेयात्पुरुषसंबन्धिनो वधाद्धिंसाया विकाराच्च हस्ताद्यवयवच्छेदादेश्च सकाशा[1]त्स्वकान्राक्षसा[2]न्रक्षन्निषेधन् यतो भावविद्राज्ञोभिप्रायज्ञः । राज्ञो हि राक्षसानामन्यायान्निषेधनं रैवतकतीर्थस्वरूपज्ञानं चाभिप्रेतम् ॥

ग्राम[3]ता । जनताम् । बन्धुताम्[4] । गजता । सहायता । इत्यत्र "ग्राम०" [ २८ ] इत्यादिना तल् ॥

अपौरुषेयम् । पौरुषेयः । पौरुषेयाद्वधाद्विकाराच्च । पौ[5]रुषेय । इत्यत्र "पुरुषात्कृत०" [ २९ ] इत्यादिनैयञ्[6] ॥

असावाश्मोपि वन्द्योद्रिर्नेमिस्तेपे तपोत्र यत् ।
छागेभ्यः सक्थिमांसेभ्य इवोद्वाहाज्जुगुप्सितः ॥ ६३ ॥

६३. स्पष्टः । किं त्वाश्मोश्मविकारः । नेमिर्द्वाविंशो जिनः । तपः सर्वसावद्यविरतिरूपम् । छागेभ्यश्छागानामवयवविकारेभ्यः । जुगुप्सितो विरक्तचित्ततया छागसक्थिमांसेभ्यो राजीमतीविवाहा[7]च्च जुगु[8]प्सित्वा निवृत्त इत्यर्थः[9] ॥

रजोप्यस्य गिरेः[1] पुंसा[2]मंहश्छेदाय जायते ।
कारीरं चैत्रकं काण्डे भस्म वास्रक्छिदे[3] यथा ॥ ६४ ॥

६४. स्पष्टः । किं तु करीरस्य[10] चित्रकौषधेश्च काण्डं हि[11] जलादिना

१ ए गिरे पुं°. २ बी सी पुंमां मं°. ३ बी °दे॑यथा.

१ ए °शाद्राक्ष°. सी °शास्वका°. २ सी °सान्या°. ३ बी °मतां । ज°. ४ ए °म् । राज°. सी °म । जगता. ५ ए °पेत्य°. ६ ए °ञ् । आसा°. ७ सी °हा जु°. ८ बी °प्सितत्वा. ९ बी °र्थः । राजो°. १० ए °रव.स्य. ११ सी हितं ज°.

घर्पित्वा[1] व्रणादौ दत्तं रुधिरच्छेदाय[2] स्याद्भस्म[3] वास्त्रप्रहारादौ दत्तं रक्त-निवृत्तये स्यात् ॥

आश्मः[4] । अत्र "विकारे" [ ३० ] इत्यण् ॥

प्राणिभ्यः[5] । छागेभ्यः । सक्थिमांसेभ्यः ॥ औषधिभ्यः । चैत्रकं काण्डम् । चैत्रकं भस्म ॥ वृक्षेभ्यः[6] । कारीरं काण्डम्[7] । कारीरं भस्म । अत्र "प्राणि०" [ ३१ ] इत्यादिना-अण् ॥

धन्वात्राकर्षतां तालं व्याधानां तीर्थतेजसा ।
हिंस्रा गलन्त्यभिप्राया जातुपत्रापुपा इव ॥ ६५ ॥

६५. अत्रादौ तालं तालवृक्षविकारं धन्व मृगव्यापादनाभिप्रायेण(णा)कर्षतां व्याधानामाखेटिकानामपि[8] तीर्थतेजसा तीर्थप्रभावेण[9] हिंस्रा हिंसनस्वभावा अभिप्राया गलन्ति विलीयन्ते । अत एवोत्प्रेक्ष्यन्ते[10] जातुपत्रापुपा इव । जतुनो लाक्षायास्त्रपुणो वावयवा इव विकारा इव वा[11] । ते ह्यग्निसङ्गेन विलीयन्ते ॥

तालं धन्व । इत्यत्र "तालाद्धनुषि" [ ३२ ] इत्यण् ॥

त्रापुषाः । जातुष । इत्यत्र "त्रपु०" [ ३३ ] इत्यादिनाण् षान्तश्च ॥

स्याद्रव्यघृष्टशामीलयष्टेरग्निरिवांमुतः[1] ।
धीरौष्ट्रकपयस्योपजीविनामपि[2] पावनी[3] ॥ ६६ ॥

---

१ ए °वास्तुतः. बी °वासुतः. २ ए °पि थाविनी. ३ बी पाविनी.

---

१ ए °त्वा दौ. २ बी °धिरेच्छे°. ३ ए °स चास्त्र°. बी °स वस्त्रे प्र°. ४ ए आसः । अ°. ५ ए °भ्यः । स°. ६ ए सी °भ्यः । कर्ा°. ७ ए °म् । करी°. ८ ए °माखिटि°. ९ सी °र्थप्र°. १० सी °क्ष्यते जा°. ११ सी वा । ह्य°.

६६. औष्ट्रकपयस्योपजीविनामप्युष्ट्रशा विकार औष्ट्रकं यत्पयस्यं पयसो दुग्धस्य विकारो वित्रुटितदुग्धादि तदुपजीविनामप्युष्ट्रपालानामपि । ते हि निर्दया निर्धर्माश्च स्युस्तेषामप्यमुतो गिरेः सकाशाद् गम्ययबपेक्षया पञ्चम्याममुं प्राप्य वा पावनी दयादिना पवित्रा धीः स्यात् । यथा द्रोर्दारुणो विकारः काष्ठखण्डं द्रव्यं तेन घृष्टा या शामीला शमीवृक्षावयवो यष्टिस्तस्याः सकाशात्तां प्राप्य वाग्निः स्यात् ॥

शामील । इत्यत्र "शम्या लः" [ ३४ ] इति लः ॥

पयस्य । द्रव्य । इत्यत्र "पयोद्रोर्यः" [ ३५ ] इति यः ॥

औष्ट्रक । इत्यत्र "उष्ट्रादकञ्" [ ३६ ] इत्यकञ् ॥

**सोथामुच्यौमकं वासः पौलस्त्येनौमवाससा ।**
**दत्तहस्तोद्रिमध्यास्त दर्शिताध्वौर्णकाम्बरैः ॥ ६७ ॥**

६७. स्पष्टः । किं त्वौमकमुमाया अतस्या विकारं वासो वस्त्रं धौतवस्त्रिकामित्यर्थः । आमुच्य परिधाय दत्तहस्तो दत्तवाहिकः । एतेन पादचारेणारोहकथनम् । और्णकमूर्णाया विकारोम्बरं येषां तैः सौराष्ट्रैः । ते ह्यूर्णवस्त्रं परिदधति ॥

**और्णेयत्वक्पटानां कौशेयान्यध्वदर्शिनाम् ।**
**मुक्तपारशवास्त्राणां दत्वा चैत्ये नृपोविशत् ॥ ६८ ॥**

१ बी सी और्णेये°. २ ए °र्णेय°. ३ बी °शवस्त्रा°. ४ ए °शयत्.

१ सी °ना उष्ट्रया. २ ए °रो त्रु°. ३ बी °मपि । ते. ४ सी °प्यमतो. ५ बी पाठर्ना. ६ बी °द्रो इ°. ७ बी °स्त्रिकमि°. ८ सी °र्थः । अमु°. ९ ए °धायाद°. १० सी दत्तावा°. ११ बी और्णमू°. १२ सी °ष्ट्रैः। ह्य.

६८. नृपश्चैत्ये श्रीनेमिनाथप्रासादेविशन् । किं कृत्वा । कौशेयानि कोशस्य विकारान्पटांशुकानि दत्त्वा । केषाम । और्णा ऊर्णाया विकारो ऐणेयत्वचश्च मृगयवयवत्वचः पटा येषां तेषामौर्णपटानां सौराष्ट्राणामैणेयत्वक्पटानां च पार्वतिकानाम् । कीदृशाम् । अध्वदर्शिनाम् । तथा परशव इदं परशव्यम "उवर्णयुगादेर्यः" [ ७. १. ३० ] इति यः । तस्यायसो विकारः पारशवानि मुक्तानि चैत्यद्वारदेशप्राप्तत्वात्त्यक्तानि पारशवान्यस्त्राणि परशव एव यैस्तेषाम् ॥

औमकम् औम । और्णकम्( क ) और्ण । इत्यत्र "उमोर्णाद्वा" [ ३७ ] इति वाकञ् ॥

ऐणेयत्वक् । इत्यत्र "एण्या एयञ्" [ ३८ ] इत्येयञ् ॥

कौशेयानि । इति "कौशेयम्" [ ३९ ] इत्यनेन निपात्यम् ॥

पारशव । इत्यत्र "परशव्याद्यलुक्च" [ ४० ] इत्यण् यस्य च लुक् ॥

**केपि द्रुवयमानाभाः कांस्यढक्का अवादयन् ।**

**घटिता हाटकैर्निष्कैः काहलाः केप्यपूरयन् ॥ ६९ ॥**

६९. केपि कांस्यढक्का मज्जनारम्भेवादयन । कीदृशीः । द्रुवयमानाभा द्रोर्दारुणो विकारो द्रुवयं यन्मानमष्टसेतिकाप्रमाणं हाराख्यं तदाभाः पृथुलवर्तुलमुखाः । तथा केपि काहला अपूरयन्मुखवातेन पूरितवन्तोवादयन्नित्यर्थः । कीदृशीः । हाटकैः स्वर्णस्य विकारैर्निष्कैः पलशतैर्घटिता निर्मिताः ॥

---

१ बी कांश्यढ°. २ ए सी °कैर्निष्कैः.

---

१ ए सी °मिप्रसा°. २ बी °रा एणे°. ३ सी °व्यर्ण°. ४ बी सी °ञ् ॥ एणे°. ५ ए °ण्या येय°. ६ ए °नेनेति नि°. ७ बी कांश्यढ°.

कांस्य । इत्यत्र "कंसीयाञ्ञ्यः" [ ४१ ] इति ञ्यः ॥

हाटकनिष्कैः । अत्र "हेम०" [ ४२ ] इत्यादिनाण् ॥

द्रुवय । इत्यत्र "द्रोर्वयः" [ ४३ ] इति वयः ॥

**शतिकान्द्विशतान्हैमान्राजतानपि केचन ।**

**सुवर्णमयपद्मार्चान्पूर्णकुम्भानसज्जयन् ॥ ७० ॥**

७०. केपि नृपा हैमान्स्वर्णविकारांस्तथा राजतानपि रूप्यमयांश्च पूर्णकुम्भानिक्षुरसघृतदुग्धदधिसुरभिवारिसंपूर्णकलशानसज्जयन् । किंभूतान् । शतिकान्द्विशतांश्च हेम्नो रजतस्य वा संबन्धिनः । शतस्य द्वयोः शतयोर्वा विकारांस्तथा सुवर्णमयानि सुवर्णस्य विकारा यानि पद्मानि तैरर्चा पूजा येषु तान् । सर्वानपि स्वर्णपद्मैः पिहितानित्यर्थः ॥

**सौवर्णं पट्टके केपि धौतकार्पासवाससः ।**

**अमण्डयन्वालिं मौञ्जं त्यक्त्वा तालमयं धनुः ॥ ७१ ॥**

७१. स्पष्टः । किं त्वमण्डयन्विच्छित्त्यारचयन् । उपशान्तचित्तत्वात्तालमयं तालतरोर्विकारं धनुस्त्यक्त्वा ॥

शतिकान् । इत्यत्र "मानात्क्रीतवत्" [ ४४ ] इति क्रीतवद्विकारे प्रत्ययविधिः ॥ वत्सर्वविधिसादृश्यार्थः । तेन लुबादिकस्याप्यतिदेशः स्यात् । द्विशतान् ॥

हैमान् । राजतान् । इत्यत्र "हेमादिभ्योञ्" [ ४५ ] इत्यञ् ॥

---

१ सी °वर्णपट्टके. २ सी °सवि । अ°. ३ सी °यलम्ब°.

---

१ बी °याञ्ञ्यः इति ञः । हा°. २ बी °लमान°. ३ बी °भून्. ४ ए °श्च हैम्नो. ५ सी द्वयोर्वा. ६ बी °नि स्वर्ण°. ७ सी °पु । स°. ८ बी °कारोप्र°. ९ बी °विधेः । व°. सी °विधि । यत्स°. १० ए वत्संबन्धि सा°. ११ ए लुदिवालक°. १२ बी °ञ् । स्वर्ण°. सी °ञ् । सौवर्ण°.

सुवर्णमय । सौवर्णे । अत्र "अभक्ष्य०" [ ४६ ] इत्यादिना मयड्वा ॥ अभक्ष्याच्छादन इति किम् । मौद्गं बलिम् । कार्पासवाससः ॥ भक्ष्याच्छादनयोर्मयडभावपक्षे च "तालाद्धनुषि" [ ६. २. ३२ ] इत्यादिको विधिः । सावकाशोयं च सुवर्णमय इत्यादौ । तत्रोभयप्राप्तौ परत्वादनेन मयट् स्यात् । तालमयं धनुः ॥

केचिच्छरमयीर्दर्भमयीस्तृणमयीः कुटीः ।
कूदीमयीश्च गत्वाह्वन्नाचार्याञ्श्वेतवाससः ॥ ७२ ॥

७२. स्पष्टः । किं तु कूदीमयीश्च तृणविशेषविकारान् । कुटीरुटजानि । आह्वन स्नानदर्शनायाकारयन् । गिरौ हि प्रायेण शरमय्यादय एव कुट्यः सुलभाः स्युरित्युक्तं शरमयीरित्यादि ॥

द्राग्वल्वजमयात्सोममयाच्च गन्धवेश्मनः ।
पात्रैः केचिन्मृन्मयाद्यैरानिन्युश्चन्दनादिकम् ॥ ७३ ॥

७३. केचिन्मृन्मयाद्यैर्मृद्विकारस्वर्णविकारादिभिः पात्रैर्भाजनैः कृत्वा गन्धवेश्मनो गन्धप्रधानापणाद्द्राक्चन्दनादिकमानिन्युः । किंभूतात् । वल्वजमयात्सोममयाच्च सुलभत्वेन वल्वजसोमाख्यतृणविशेषाणां विकारात् ॥

---

१ बी कूटीम°. २ बी सी °ञ् स्वेत°. ३ सी °ग्वल्वज°.

---

१ ए °वर्णेत्यत्र°. सी °वर्ण्य । अ°. २ ए °भक्षेत्या°. बी °भक्षत्या°. ३ बी °लिः । का°. सी °लि । का°. ४ ए °ससा । भ°. बी °सवः । भ°. ५ बी सी भक्षाच्छा°. ६ बी °यं सु°. ७ सी स्पष्टं किं. ८ ए तु कूदी°. ९ ए °र्शनयोः का°. १० ए °दि । टाम्वल्व°. ११ बी °नापाणा°. सी °नामाणद्रागंचन्द°. १२ ए वल्कज°. १३ ए वल्कज°.

शरमयीः । दर्भमयीः । कूदीमयीः । तृणमयीः । सोममयात् । वैल्वजमयात् । इत्यत्र "शर०" [ ४७ ] इत्यादिना मयट् ॥

मृन्मय । इत्यत्र "एकस्वरात्" [ ४८ ] इति मयट् ॥

भूपोथ तन्मयीभूय रत्नैश्चापमयीं प्रभाम् ।
बिभ्रद्भिरतिचापिं वा दीप्रान्कुम्भानुदासयत् ॥ ७४ ॥

७४. अथ सर्वस्नानसामग्रिकाविधानानन्तरं भूपस्तन्मयीभूय स्नानकर्मैकचित्तीभूयेत्यर्थः । कुम्भानुदासयदुदपाटयत् । किंभूतान् । रत्नैर्दीप्रान् । किंभूतैः । प्रभां बिभ्रद्भिः । किंभूताम् । चापमयीं चापाणां पञ्चवर्णपक्षिभेदानां विकारमिव पञ्चवर्णत्वेन चापकान्तितुल्यामित्यर्थः । अतिचापिं वा नैर्मल्याद्यतिशयाच्चापीं चापविकारं प्रभामतिक्रान्तां वा ॥

तन्मयी । इत्यत्र "दोर्०" [ ४९ ] इत्यादिना मयट् ॥ अप्राणिन इति किम् । अतिचापिम् । चापमयीम् ॥

प्रविश्य चैत्यगर्भेथ गोमयायितकुङ्कुमे ।
तुल्यैर्व्रीहिमयान्भोक्तुर्भव्यैः सोस्नपयज्जिनम् ॥ ७५ ॥

७५. गोमयायितं सान्द्रलेपेन गोमयवदाचरितं कुङ्कुमं यत्र तस्मिंश्चैत्यगर्भे प्रविश्य स नृपो जिनं नेमिमस्नपयत् । कैः सह । भव्यैर्भाविकल्याणपात्रैर्नृपादिभिः । किंभूतैः । व्रीहिमयान्यागादौ प्रदेयान्व्रीहेर्विकारान्पुरोडाशान्भोक्तुरिन्द्रस्य रूपवेषादिसंपदा तुल्यैः ॥

---

१ बी °द्भिरिति°. २ सी °यदुदपा°. ३ बी °ङ्कुमैः । तु°. ४ सी °न । नेमि°.

---

१ ए °मयी । ट°. २ ए कृदीम°. ३ वल्कज°. ४ ए °त् । र°. ५ सी °भूतैः. ६ ए °मिस्न°. ७ ए °र्भावक°.

गोमय । इत्यत्र "गोः पुरीषे" [ ५० ] इति मयट् ॥

व्रीहिमयान् । इत्यत्र "व्रीहेः०" [ ५१ ] इत्यादिना मयट् ॥

कुम्भैर्यवमयोत्पेषगौरैश्चक्रैरिवाबभौ ।
नेमिस्तिलमयक्षोदस्निग्ध ओघो नु यामुनः[1] ॥ ७६ ॥

७६. तिलमयक्षोदस्निग्धस्तिलवर्तिवदरूक्षकालिमगुणो नेमिः कुम्भैः स्वर्णकलशैः कृत्वाबभौ । किंभूतैः । यवानां विकारो यवमयं[1] यवपिष्टं तेन य उत्पेष उज्ज्वालनं तेन गौरैर्निर्मलैः । यथा तिलमयक्षोदस्निग्धो यामुन ओघः प्रवाहो गौरैः स्वर्णवर्णैश्चक्रैश्चक्रवाकैर्भाति ॥

युजा पिष्टमयैर्गन्धैर्यावगौरैरतैलया ।
उद्वर्तितः पिष्टिकया सोऽस्तहैयङ्गवीनया ॥ ७७ ॥

७७. पिष्टिकया दलिता मुद्गादयः पिष्टं तद्विकारेणातिसूक्ष्मेण पिष्टेन कृत्वा स श्रीनेमिनाथ उद्वर्तितो राज्ञोज्ज्वालितः । कीदृश्या । गन्धैः कुष्ठादिभिर्गन्धद्रव्यैर्युजा युक्तया । किंभूतैः । यवस्य लाक्षाया विकारो यावोलक्तकस्तद्वद्गौरैः पीतवर्णैस्तथा पिष्टमयैः कुष्ठादयः किंचिच्चूर्णिताः[3] पिष्टं तस्य विकारैरतिश्लक्ष्णपिष्टरूपैरित्यर्थः । तथातैलया तिलविकारेण स्नेहेन रहितयात[4] एवातिरूक्षत्वादस्तं क्षिप्तं[5] हैयङ्गवीनं ह्योगोदोहस्य विकारः प्रतिमालग्नं स्नानघृतं[6] यया तया ॥

तिलमय । यवमय । इत्यत्र "तिल०" [ ५२ ] इत्यादिना मयट् ॥ अनाज्ञीति किम् । अतैलया । याव ॥

---

१ ए यामनुः । ति°.

---

१ बी °यं पि°. २ सी उत्प्रेक्ष्य उ°. ३ ए सी चिचूर्णि°. ४ सी °त त्यत्र. ५ ए °सं हेयं°. ६ बी °तं तया त°.

पिष्टमयैः । अत्र "पिष्टात्" [ ५३ ] इति मयट् ॥

पिष्टिकया । अत्र "नाम्नि कः" [ ५४ ] इति कः ॥

हैयङ्गवीनया । इत्यत्र "ह्यः०" [५५] इत्यादिना-ईनञ् प्रकृतेर्हैयङ्गवादेशः ॥

आप्यैः स्नातोर्चितो राज्ञा हारैः सौम्मयमौक्तिकैः ।
मल्लिकाभिरथान्यैश्च पुष्पैर्मुस्तासुगन्धिभिः ॥ ७८ ॥

७८. अथ स श्रीनेमिराप्यैर्जलानां विकारैः कुङ्कुमादिसुगन्धिद्रव्यमिश्रजलविशेषैः स्नातः सन् राज्ञा हारैरुपलक्षणत्वादन्यैरप्याभरणैरर्चितः । किंभूतैः । अम्मयानि स्वातिवृष्टमेघजलकणविकारा मौक्तिकानि येषु तैः । तथा मल्लिकाभिर्मल्लिकाया विचकिलस्य विकारैरवयवैर्वा पुष्पैरन्यैश्चम्पकादिभिश्च पुष्पैरर्चितः । किंभूतैः । मुस्ताया विकारोवयवो वा मूलं मुस्ता तद्वत्सुरभिभिः ॥

शैरीषैर्वारणैः पूजां ह्रैवेरैश्चाप्यमण्डयत् ।
श्वासान्रुन्धन्स ह्रीवेरशिरीषसुरभीनपि ॥ ७९ ॥

७९. स राजा शैरीषैः शिरीषपुष्पैर्वारणैर्वरणवृक्षभेदपुष्पैर्ह्रैवेरैरपि वालकमूलैरपि नेमेः पूजाममण्डयद्विच्छित्त्यारचयत् । कीदृक्सन् । श्वासान्मुखनिश्वासान्रुन्धन्नाशातना(?)भयेन मुखकोशकरणान्निवारयन् । शिष्टं स्पष्टम् ॥

१ सी °सोमयेमौक्ति°. २ ए °यमोक्ति°. ३ ए सी °रणे पू°. ४ बी °प्यमुडय°. ५ ए °त् । स्मागा°.

१ सी °मानदि°. २ बी सी °निश्चाति°. ३ ए °काया. ४ ए विचिकि°. सी विचिकल°. ५ ए °ष्पै चम्प°. ६ ए °स्तास्तद्व°. ७ बी सी °हैवेरै°. ८ ए बी °न् । स्मागा°. ९ ए °निश्वागा°. सी °निश्वसा°. १० सी °खशो-कक°. ११ बी °न् । शेषं स्प°.

अथ सोस्तौदिति स्वामिन्यः शमिच्छेत्त्वदन्यतः ।
विहाय बदरीं मूलैर्धन्वैरण्डैः करोति सः ॥ ८० ॥

८०. स्पष्टः । किं तु त्वदन्यतस्त्वत्तोन्यस्माद्देवात्सकाशाच्छं स्वर्गापवर्गादिसुखं यो देवबुद्ध्याश्रयणेनेच्छेत् । बदरीं महासारत्वेन धनुर्दण्डयोग्यं बदरस्य विकारं वृक्षम् । यथासारत्वादेरण्डविकारैर्मूलैर्धनुर्न स्यात्तथा त्वत्तोन्यस्माद्देवाच्छं न स्याद्रागद्वेषकलुषात्मत्वेनेतरजनतुल्यतया स्वर्गापवर्गसुखदानेसमर्थत्वादित्यर्थः ॥

आप्यै(प्यैः)। अश्म(स्म)य । इत्यत्र "अपो यञ्वा" [ ५६ ] इति वा यञ् ॥

मल्लिकाभिः । मुस्ता । इत्यत्र "अभक्ष्य०" [ ६. २. ४६ ] इत्यादिना कृतस्याणो मयटो वा "लुब्०" [ ५७ ] इत्यादिना लुप् ॥ क्वचिन्न स्यात् । वारणैः । ऐरण्डैः ॥ क्वचिद्विकल्पः । शिरीष शैरीषः । ह्रीवेर ह्रैवेरः । क्वचित्पुष्पमूलाभ्यामन्यत्रापि । बदरीम् ॥

त्वां जम्बूश्याम पश्यन्तं करामलकवज्जगत् ।
निन्दतां धिग्व्रतं प्लाक्षाश्वत्थजाम्बवभोजिनाम् ॥ ८१ ॥

८१. हे जम्बूश्याम जम्बूतरुफलवत्कृष्णाङ्ग नेमे प्लाक्षाश्वत्थजाम्बवभोजिनां महातपस्वित्वेन धान्यानाहारकत्वात्प्लक्षपिप्पलजम्बूवृक्षफलभोजिनां वनेवासितापसानां व्रतं धान्याभोजनादिरूपं दुष्करं नियमं

१ बी सी °न्यः समि°. २ ए °लैर्धन्वैर°.

१ बी °त्वादेर°. २ बी °र्थः । आप्यै. ३ बी सी अश्माय. ४ सी °भक्ष्या°. ५ ए सी °णैः । एर°. ६ ए सी °रीषः शै°. ७ ए °वेरं ह्रीवे°. ८ बी °र ह्रीवे°. ९ सी °म्बूशाम. १० ए वनिवा°.

धिग्निष्फलत्वाद्गर्हामहे यतस्त्वामदेवबुद्ध्या निन्दताम्[1] । किंभूतम् । अपि करामलकवत्करस्थामलकीफलमिव जगत्केवलज्ञानेन पश्यन्तम्[2] ॥

आमलक । इत्यत्र "फले" [५८] इत्यणो मयटो वा लुप् ॥

प्लाक्षाश्वत्थ । इत्यत्र "प्लक्षादेरण्" [ ५९ ] इत्यण् ॥

जाम्बव जम्बू । अत्र "जम्ब्वा वा" [ ६० ] इति वाण् । पक्षे लुप् ॥

त्वयि भक्तस्तद्धितवद्भूयोप्यङ्गविकारतः[3] ।
भवेन्न हि भवे जन्तुर्जगदेकदयानिधे ॥ ८२ ॥

८२. हे जगदेकदयानिधे त्रिभुवनमध्ये दयाया एकस्थान श्री-[4]नेमे[5] त्वयि भक्तो जन्तुरङ्गविकारतोङ्गमेव योसौ विकार आत्मनो-विभिन्नत्वेन विकृतिस्तेन आद्यादित्वात्तस् । [ ७. २. ८४ ] शरीररूपेण विकारेण भूयोपि भवे न हि भवेत् त्वद्भक्त्यापुनर्भवावाप्तेः पुनः संसारे न जायेतेत्यर्थः[6] । तद्धितवदिति । अङ्गेति कोमलामन्त्रणे । यथा विकारतो विकारेर्थे कपोतस्य विकारोवयवो वा कापोतः । कापोतस्य विकारोवयवो वेत्यादौ पुनरपि तद्धितो "दोरप्राणिनः" [ ६. २. ४९. ] इत्यादिना मयडादिस्तद्धितप्रत्ययो "न द्विरद्रुवय०" [ ६. २. ६१ ] इत्यादिना निषेधान्न स्यात् ॥

त्वदाकृष्यान्यतश्चेतो नयेद्यः स कुधीः क्षिपेत् ।
कापित्थं द्रौवयात्पात्राद्रसं भस्मनि गोमये[3] ॥ ८३ ॥

---

१ बी °नभूयो°. सी °तद्ध°. २ ए °योग्यङ्ग°. ३ बी सी °नि गौम°.

---

१ सी निन्दिता°. २ बी °श्यन्ताम. ३ सी वाद्भयोप्यंगविकारित ङ°. ४ सी श्रीभूयेपि. ५ ए °नेमि त्व°. ६ बी सी जायनेत्य°.

८३. यो नरस्त्वत्त आकृष्यान्यतोन्यस्मिन्देवे चेतो नयेत्प्रापयेत्स कुधीर्दुर्बुद्धिर्द्रौवयाद् द्रोर्दारुणो विकारो द्रुवयं मानं तस्यापि विकारात्तद्भुक्त्वा कृतात्पात्रात्काष्ठभाजनात्कापित्थं कपित्थस्य विकारः फलं कपित्थम् अण्। "फले" [ ६. २. ५८ ] लुप्। तस्य विकारं रसमाकृष्य गोमये गोमयविकारे भस्मनि क्षिपेत्। सत्पात्रे त्वयि न्यस्तं मनः कापित्थरसवद्वाञ्छितकार्यसिद्धये स्यात्। भस्मतुल्येषु तु कुपात्रेष्वन्यदेवेष्वात्मानमपि कुवासनया विनाशयतीत्यर्थः ॥

तद्धितवद्भूयोपि विकारतो न भवेदित्यनेन "न द्विः०" [ ६१ ] इत्यादिसूत्रोक्तो निषेधो ज्ञापितः ॥ अद्रुवयगोमयफलादीति किम् ॥ द्रौवयात्पात्राद्गोमये भस्मनि कापित्थं रसम् ॥

पितृव्या मातुला वृद्धा मातामहपितामहाः ।
हेतवो बन्धनस्यैव त्वं तु मोक्षस्य कारणम् ॥ ८४ ॥

८४. स्पष्टः । किं तु बन्धनस्य रागद्वेषादिरूपस्य भावबन्धनस्य ॥

पितृव्याः । मातुलाः । अत्र "पितृ०" [ ६२ ] इत्यादिना व्यो डुलश्च ॥ पितामहाः । मातामह । इत्यत्र "पित्रोर्डामहट्" [ ६३ ] इति डामहट् ॥

संत्यज्याविमरीसानि देव त्वां द्रष्टुमागताः ।
प्रियाविसोढा आभीरा नाविदूसं किलास्मरन् ॥ ८५ ॥

८५. हे देवाविमरीसान्यजादुग्धानि संत्यज्य त्वां द्रष्टुमागता आभीरा अजापालाद्याः । त्वद्रूपामृतास्वादतृप्तत्वादविदूसमजादुग्धं किलेति सत्ये नास्मरन् । कीदृशाः । प्रियाविसोढा अपि । अपिरत्र ज्ञेयः । अजादुग्धाहारत्वादभीष्टाजादुग्धा अपि ॥

---

१ प °न्यसि°. २ प सी कृतत्पा°. ३ प सी °कारफ°. ४ प सी °रं म°. ५ प सी °ष्य गौम°. ६ प सी °त्। यत्पा°. ७ बी °तकर्मसि°. ८ प सी तु पा°. ९ प बी °न द्विः. १० प सी °तृ त्या°. ११ प °ग्धं ति कि°. १२ प °ढापिर°. सी °ढा अपिर°.

अविसोढाः[1]। अविदूसम्। अविमरीसानि। इत्यत्र "अवेर्०" [ ६४ ] इत्यादिना सोढदूसमरीसाः॥

शैवे(बे?) राष्ट्रेथ[1] वङ्गानामङ्गानामाङ्गवाङ्गयोः।
परतोपि[2] स्फुरेदाज्ञा तस्य यस्त्वयि भक्तिमान् ॥ ८६ ॥

८६. हे देव[3] यस्त्वयि भक्तिमांस्तस्याज्ञा शैवे शिवीनां राज्ञां सक्ते राष्ट्रे देशे तथा वङ्गानामङ्गानां च राज्ञां राष्ट्रे तथाङ्गवाङ्गयोः[4] परतोप्यङ्गवङ्गराष्ट्राभ्यां परस्मिन्नपि राष्ट्रे स्फुरेत्। स सार्वभौमः स्यादित्यर्थः[5]॥

शैवे(बे?) राष्ट्रे[6]। अत्र "राष्ट्रे०" [ ६५ ] इत्यादिनाण्॥ अनङ्गादिभ्य इति किम्। अङ्गानां राष्ट्रे[7]। वङ्गानां राष्ट्रे॥ केचित्त्वङ्गादिप्रतिषेधं नेच्छन्ति। आङ्गवाङ्गयोः॥

दैवयातवके राजन्यके वासातकेपि च।
वासातस्य परस्ताच्च शासनं जयतीश ते ॥ ८७ ॥

८७. हे ईश तव शासनमाज्ञा देवयातवानां राजन्यानां वसातीनां च राज्ञां राष्ट्रेषु वासातस्य परस्ताच्च जयति। सर्वेष्वपि देशेषु नृपा लोकाश्च तवाज्ञां कुर्वन्तीत्यर्थः॥

राजन्यके। दैवयातवके। अत्र "राजन्य[8]०" [ ६६ ] इत्यादिनाकञ्॥ वासातके वासातस्य। इत्यत्र "वसातेर्वा" [ ६७ ] इति वाकञ्॥

नेमिं स्तुत्वेति पौलस्त्यं विसृज्यावातरत्सभम्।
स तार्क्ष्यायणभक्तेषुकारिभक्तादिपार्थिवैः[3] ॥ ८८ ॥

---

१ ए °ष्ट्रे गंगानामाङ्ग°. २ ए °तो रफु°. ३ ए बी तार्क्षायणभक्तेषु°.

---

१ सी °विदू°. २ बी °माः। शौवे. ३ बी °वरत्व°. ४ बी °ङ्गवङ्ग°. ५ ए सी °र्थः। शौवे. ६ बी °ष्ट्रे इ°. ७ ए सी °ष्ट्रे। के°. ८ बी °जन इ°.

८८. स्पष्टः । किं तु तार्क्ष्यायणस्य राज्ञो राष्ट्रं तार्क्ष्यायणभक्तमे(मै)पुकारीणां राष्ट्रमैपुकारिभक्तं द्वन्द्वे तदादीनां राष्ट्राणां पार्थिवैः समं सह ॥

स भौरिकिविधं भौलिकिविधं शैवं(ब ?)वैदिशे ।
भोक्तृभिः सह धर्मज्ञैर्जल्पञ्शत्रुञ्जयं ययौ ॥ ८९ ॥

८९. स्पष्टः । किं तु भौरिकीणां राज्ञां राष्ट्रं भौरिकिविधमेवं भौलिकिविधं शिवीनां शिवानां वा राज्ञां निवासः शैवो देशो विदिशाया अदूरभवं वैदिशं नगरं द्वन्द्वे ते च भोक्तृभिर्नृपैः सह जल्पन्धर्मकथां कुर्वन् यतो धर्मज्ञैः ॥

भौरिकिविधम् । भौलिकिविधम् । ऐपुकारिभक्त । तार्क्ष्यायणभक्त । इत्यत्र "भौरिकि०" [ ६८ ] इत्यादिना यथासंख्यं विधभक्तौ प्रत्ययौ ॥

शैव(ब ?) । वैदिशे । अत्र "निवास०" [ ६९ ] इत्यादिनाण् ॥

सहौदुम्बरकौशाम्बीद्रुमतीमधुमन्नृपैः ।
सोध्यास्त विसवन्नाथदत्तहस्तोथ तं गिरिम् ॥ ९० ॥

९०. उदुम्बरा वृक्षा अत्र सन्त्यौदुम्बरं पुरम् । कुशाम्बेनर्षिणा निर्वृत्ता कौशाम्बी पुरी । द्रुमती नदी । मधून्यत्र सन्ति मधुमान्देशो द्वन्द्वे एषां नृपैः सह स जयसिंहस्तं गिरिमध्यास्त । कीदृक्सन् । विसवान्देशस्तन्नाथेन राज्ञा दत्तहस्तः ॥

---

१ बी स भैरि°. २ बी °वंवेदि°. ३ बी °द्रुमंती°. ४ ए °रि । उ°. सी °रि । औदु°.

---

१ ए तार्क्षाय°. २ सी °णमक्त रा°. ३ ए तार्क्षाय°. ४ सी °ज्ञैः । भूरिकवि°. ५ बी °रिकवि°. ६ बी °लिकवि°. ७ ए °शाम्बीपुरदु°.

औदुम्बर । इत्यत्र "तदत्रास्ति" [ ७० ] इत्यण् ॥

[1]कौशाम्बी । इत्यत्र "तेन०" [ ७१ ] इत्यादिनाण् ॥

द्रुमती । इत्यत्र "नद्यां मतुः" [ ७२ ] इति चातुरर्थिको मतुः ॥

मधुमत् । विसवत् । इत्यत्र "मध्वादेः" [ ७३ ] इति चातुरर्थिको मतुः ॥

**नड्वत्कुमुद्वद्वेतस्वच्छाद्वलिन्यद्रिमूर्धनि ।**

**नाभेयचैत्यं सोपश्यदतिमाहिष्मतीपतिः ॥ ९१ ॥**

९१. स राजाद्रिमूर्धनि नाभेयचैत्यं श्री(श्रि ?)ऋषभदेवभवनमपश्यत् । किंभूते । नड्वन्तो नडाख्यतृणभेदयुक्ताः कुमुद्वन्तः कैरवयुता वेतस्वन्तो वेतसवृक्षयुक्ताः शाड्व(द्व)लाश्च शादः पङ्कः सस्यं वा तद्युक्ताश्च प्रदेशा अत्र सन्ति तस्मिन् । कीदृक्सः । अतिमाहिष्मतीपतिर्महिष्मान्देशस्तस्यादूरभवा पुरी माहिष्मती तस्याः पतिः सहस्रार्जुनस्तं बलादिनातिक्रान्तः ॥

**सोविशत्तत्र रत्नांशुनड्वलायितभूतले ।**

**द्वारि मुञ्चञ्शैरीषकशिखावलमहीपती ॥ ९२ ॥**

९२. स राजा तत्र नाभेयचैत्येविशत् । किंभूते । रत्नांशुभिः कृत्वा नड्वलायितं नडाख्यतृणभेदान्वितप्रदेशतुल्यं भूतलं यत्र तस्मिन् । कीदृक्सन् । द्वारि चैत्यसिंहद्वारे जिघांसया शत्रूणां छलेन प्रवेशस्य रक्षार्थं शैरीषको ग्रामः शिखावलं पुरं तयोर्महीपती मुञ्चन्स्थापयन् ॥

१ बी °श्यदिति°. २ बी °पशि°. ३ बी °खाबल°.

१ ए कौशम्बी. २ ए सी °भेयं चै°. ३ ए बी °युक्ता कु°. ४ ए °श्च सादः. ५ बी °ङ्कः शस्यं. ६ बी सी चैत्ये सि°. ७ सी °क्षार्थशै°. ८ बी °पतीर्मुचन्स्था°. सी °पति मु°. ९ ए सी °न् । शरी°.

शिरीषिकेशहस्तेन रत्नैः शार्करिकेऽङ्गणे ।
शार्करादागतः शर्करीयेट् पुष्पाण्यथार्पयत् ॥ ९३ ॥

९३. शर्करीयेट् शर्कराः क्षुद्रपाषाणास्तद्वतो देशस्य स्वामी शिरीषिकेशहस्तेन शिरीषिकदेशराजपाणिना कृत्वा पुष्पाणि श्रीनाभेयपूजार्थं जयसिंहायार्पयत् । कीदृक् । अङ्गणे देवगृहाङ्गणे वर्तमानः । किंभूते । रत्नैः कृत्वा शार्करिके शर्करावद्देश इव कर्करैरिव रुल्लल(वोल्लस?)द्भिर्मणिभिराकीर्ण इत्यर्थः । तथा शार्कराच्छर्करावद्देशादागतः ॥

पुष्पाद्युपायनं दत्त्वान्येपि शर्करिकेशवत् ।
गह्वरे भूभुजस्तस्थुरद्रेः शार्करकाश्मरे ॥ ९४ ॥

९४. शर्करिकेशवद्यथा शर्करावद्देशस्वामी नाभेयपूजार्थं पुष्पाद्यादिपदादाभरणादि जयसिंहस्य ददावेवमन्येपि भूभुजः पुष्पादि पूजार्थं दत्वाद्रेः शत्रुञ्जयस्य गह्वरे गह्वा दुरवगाहाः प्रदेशा अत्र सन्ति गह्वरं वनगहनं तत्र तस्थुर्जयसिंहं प्रतीक्षमाणाः स्थिताः । किंभूते । शार्करकाश्मरे शर्करायुक्ते पाषाणयुक्ते च ॥

नड्वत् । कुमुद्वत् । वेतस्वत् । माहिष्मती । इत्यत्र "नड०" [ ७४ ] इत्यादिना डिन्मतुः ॥

नड्वल । शाद्वलिनि । इत्यत्र "नड०" [ ७५ ] इत्यादिना डिद्वलः ॥

---

१ सी °ट् शर्कराः. २ ए °ष्पाद्यपा°. २ ए दत्तान्ये°. ४ सी °त्वा द्रेः शत्रु°.

---

१ सी °पाणस्त°. २ बी °णातद्व°. ३ ए °रीषेके°. ४ बी सी °केसह°. ५ ए °षिके दे°. सी °षिकिदे°. ६ ए °सिंहस्यार्प°. ७ ए °व सलद्भि°. सी °वरुलद्भि°. ८ ए °शाग°. ९ बी °सिंहप्रतीक्ष्यमा°. १० ए °तीक्ष्यमा°. ११ ए °करिका°. १२ सी °क्ते च. १३ सी °ना इकण्–ईय–अण्. १४ ए बी शाड्वलि°. १५ ए सी °ना ड्वलः.

शिखावल । इत्यत्र "शिखायाः" [ ७६ ] इति वलः ॥

शिरीषिक । शैरीपक । अत्र "शिरीषाद्०" [ ७७ ] इत्यादिनेककणौ ॥

शार्करिके । शर्करीय । शार्करात् । शर्करिक । शार्करक । इत्यत्र "शर्करायाः०" [ ७८ ] इत्यादिना-इकण्-ईय-अण् चकारादिककणौ ॥

अश्मरे । गह्वरे । अत्र "रोश्मादेः" [ ७९ ] इति रः ॥

फलकिप्रेक्षितृणसानदसाकाशिलाधिपैः ।
समं जिनेन्द्रमर्चित्वा चौलुक्योद्रेरवातरत् ॥ ९५ ॥

९५. स्पष्टः । किं तु फलकया प्रेक्षया च निवृ(र्वृ)त्तौ फलकिप्रेक्षिणौ देशौ । तृणसानदसे नद्यौ । काशा अत्र सन्ति काशिलं नगरम् ॥

सोन्वद्रिं वाशिलारीहणकखाण्डवकागतान् ।
मन्त्राशीर्वादमुखरान्काश्वनैरार्चयद्विजान् ॥ ९६ ॥

९६. स्पष्टः । किं तु वाशाः पक्षिणोरीहणा अरिकर्त्तारः पुरुषाः खण्डवो भेदका वृक्षा वेषु सन्ति वाशिलारीहणकखाण्डवका देशास्तेभ्योन्वद्रिं शत्रुजयं लक्ष्यीकृत्यागतान् ॥

प्रेक्षि । फलकि । इत्यत्र "प्रेक्षादेरिन्" [ ८० ] इतीन् ॥

तृणसा । नदसा । इत्यत्र "तृणादेः सल" [ ८१ ] इति सल ॥

---

१ सी °सारनंद°.

---

१ **बी सी** °पकं । अ°. २ **ए** °पादिने°. ३ **ए** °त् । शार्क°. ४ **ए बी** °कारिक. ५ **बी सी** रोस्मादेः. ६ **बी सी** °प्रेक्षणौ. ७ **सी** तु वशाः. ८ **ए** °पाः खाण्ड° **सी** °पा पण्ड°. ९ **बी** °क्षा वेपु. **सी** °क्षा बेपु. १० **ए** °न्वद्रिश°. ११ **ए सी** °जयल°. १२ **ए बी** लक्षीकृ°. १३ **बी सी** °सा । दनसा.

कारिल । वारिल । इत्यत्र "काशादेरिलः" [ ८२ ] इतीलः ॥

आरीहणकं[1] । खाण्डवक । इत्यत्र "अरीहण०" [ ८३ ] इत्यादिना-अकण् ॥

**सोत्र सौपन्थ्य[1]सांकाश्य[2]सौतङ्गमिपुरोपमम् ।**

**स्थानं सिंहपुरं[3] चक्रे द्विजानां मौनिचित्तिजित् ॥ ९७ ॥**

९७. स जयसिंहोत्र शत्रुञ्जयसमीपे सिंहपुरं नाम द्विजानां स्थानं चक्रे[2]कारयत् । यद्विजानां निमित्तं पुरादिकं क्रियते दीयते वा तत्स्थानमित्युच्यते । कीदृशम् । शोभनाः पन्थानोत्र सन्ति गणपाठान्मा[3]-(न्ना ?)गमे सौपन्थ्यं संकाशेन सुतङ्गमेन चर्षिणा निर्वृत्तं[4] सांकाश्यं सौतङ्गमि[5] च द्वन्द्वे एतैः पुरैर्महर्द्धिकत्वादुपमा यस्य तत् । कीदृक्सः । मौनिचित्तिं[6] मुनिचित्तेन निर्वृत्तं[7] देशं जयति तत्स्वामि[8]जयेन स्ववशीकरोति मौनिचित्तिजित् ॥

सौपन्थ्य[9] । सांकाश्य । इत्यत्र "सुपन्था(न्थ्या ?)देर्ञ्यः" [८४] इति ञ्यः ॥

सौतङ्गमि । मौनिचित्ति । इत्यत्र "सुतङ्गमादेरिञ्" [८५ ] इतीञ् ॥

**बल्यचुल्याह्लसाखेयसाखिदत्तेयसंपदः ।**

**स स्थानाय ददौ ग्रामान् लौमपान्थायनोपमान् ॥ ९८ ॥**

९८. स राजा स्थानाय ग्रामान्ददौ सिंहपुरप्रतिबद्धाननेकान्ग्रामांश्चकारेत्यर्थः । किंभूतान् । बलेन निर्वृत्तं[10] बल्यं चुलानां निमज्ज[11]कानां निवासो चुल्यमह्ला निवृ(र्वृ)त्तमाह्लमेतानि पुराणि । सा[12]खेयसाखिद-

१ प °न्थ्यका°. २ बी °काश्यंसौ°. ३ प °पुरे च°.

१ सी °क । खण्ड°. २ प °क्रेवका. ३ सी °पावान्मामो मौ°. ४ सी निवृत्तं. ५ बी °मिकं च. ६ प सी °चित्तं मु°. ७ बी निवृत्तं. सी निवृक्षं दे°. ८ सी °मिनज°. ९ प °पथ्यं । कांश्य. सी °पन्थ्यं । सां°. १० सी निवृत्तं. ११ सी °ज्जनका°. १२ प माख्येय°.

त्तेयौ ग्रामौ । द्वन्द्वे एतत्तुल्यश्रीकान् । तथा लोमान्यत्र सन्ति लौमं पुरं पथां[1] निवासः[2] पान्थायनो ग्रामैस्[3]तयोस्तुल्यांश्च ॥

स पाक्षायणवासिष्ठायनिकार्णायनिद्विजैः ।
दत्ताशीः प्रास्थित स्थानात्संकरीयोत्करीयभात् ॥ ९९ ॥

९९. स जयसिंहः स्थानात्सिंहपुरात्[4]प्रास्थित[5] । कीदृक्सन् । पाक्षायणादिदेशविशेषाणां द्विजैर्दत्ताशीः । किंभूतात्स्थानात् । संकरेणोत्करेण च[6] निर्वृत्तौ संकरीयोत्करीयौ[7] पुरभेदौ तद्वच्छ्रिया भाति यत् "क्वचिद्" [५.१.१७१] इति डः । तस्मात्[8] ॥

बल्य । चुल्य । इत्यत्र "बलादेर्यः" [८६] इति यः ॥

आह्न[9] । लौम । इत्यत्र "अहरादिभ्योञ्" [८७] इत्यञ् ॥

साखेय । साखिदत्तेय । इत्यत्र "सख्यादेरेयण्" [८८] इत्येयण् ॥

पान्थायन । पाक्षायण । इत्यत्र "पन्थ्यादेरायनण्"[10] [८९] इत्यायनण् ॥

कार्णायनि । वासिष्ठायनि । इत्यत्र "कर्णादेरायनिञ्" [९०] इत्यायनिञ् ॥

उत्करीय । संकरीय । इत्यत्र "उत्करादेरीयः" [९१] इतीयः ॥

नडकीयप्लक्षकीयकार्शाश्वीयपुरेश्वरैः ।
सोन्वीयमानः स्वपुरीं प्रापारिष्टीयसंपदम् ॥ १०० ॥

१००. स्पष्टः । किं तु कृशाश्वेन राज्ञा निर्वृत्तं कार्शाश्वीयम् । आरिष्टीयसंपदमरिष्टा निम्बाः फेनिलवृक्षा वात्र सन्त्यारिष्टीयं पुरं तत्तुल्यर्द्धिकां स्वपुरीं पत्तनम् ॥

---

१ **प** पन्था नि°. २ **प** °वासाः पन्था°. ३ **प** °मस्तु°. ४ **सी** °रात्स प्रास्थि°. ५ **प** °स्थितः । की°. ६ **बी सी** निवृत्तौ. ७ **सी** °रीयौ. ८ **बी** त् । चुल्य. ९ **बी** आह्नः । लो°. १० **बी** पन्थादे°.

नडकीय । प्लक्षकीय । इत्यत्र "नडादेः कीयः" [ ९२ ] इति कीयः ॥

कार्शाश्वीय । आरिष्टीय । इत्यत्र "कृश०" [ ९३ ] इत्यादिनेयण् ॥

ऋश्यकादश्मकाद्वाराहकात्पालाशकादपि ।
देशात्कुमुदिकादिक्कटिकादाश्वत्थिकाच्च ये ॥ १०१ ॥
एत्य कौमुदिकादन्यदेशाद्वातं ययाचिरे ।
अदारिद्र्यान्स तांश्चक्रे वर्षन्नाषाढवन्नृपः ॥ १०२ ॥

१०१, १०२. स्पष्टौ । किं त्विक्कटिकादिक्कटाः शूराः पुरुषा वृक्षभेदा वात्र सन्तीक्कटिकं देशः पुरं वा तस्मात् । वर्षन्नाषाढवदाषाढाभिश्चन्द्रयुक्ताभिर्युक्ता पौर्णमास्याषाढी सा पौर्णमास्यस्याषाढो मासो यथा जलं वर्षत्येवं द्रव्यं वर्षन्ददित्यर्थः । आषाढे हि वर्षासांनिध्यान्मेघा वर्षन्ति तत्संबन्धादाषाढोपि वर्षन्नुच्यते ॥

ऋश्यकात् । अश्मकात् । इत्यत्र "ऋश्यादेः कः" [ ९४ ] इति कः ॥

वाराहकात् । पालाशकात् । इत्यत्र "वराहादेः कण्" [ ९५ ] इति कण् ॥

कुमुदिकात् । इक्कटिकात् । इत्यत्र "कुमुदादेरिकः" [ ९६ ] इतीकः ॥

आश्वत्थिकात् । कौमुदिकात् । अत्र "अश्वत्थादेरिकण्" [ ९७ ] इतीकण् ॥

आषाढ । इत्यत्र "सास्य०" [ ९८ ] इत्यादिनाण् ॥

चैत्रकार्त्तिकिकाश्वत्थिकेन्दुवत्प्रीणतो जगत् ।
आग्रहायणिकोषेव तस्य कीर्तिरवर्धत ॥ १०३ ॥

---

१ प °दसका°. २ प °पि। दशा°. ३ प °कात्त ये. ४ प °त्तिकका°. सी °त्तिकाका°.

---

१ प °कीयः । प्लु°. २ सी °श्वीयः । आपिष्टी°. ३ प °ण् । कश्य°. ४ बी °टाः सूराः. ५ सी सन्ति क°. ६ प °षाढे मा°. ७ प वर्षाले°. ८ प °न्ददि°. ९ सी °र्षन्नमुच्य°. १० प °ते कश्य°. ११ बी असका°. १२ प सी °त्र कश्या°.

१०३. स्पष्टः । किं त्वश्वत्थाश्वत्थेनाश्विन्या चन्द्रयुक्तेन युक्ता पौर्ण[1]मास्यस्याश्वत्थि[2]क आश्विनमासः । आग्रहायणिकोपेवाग्रहायणी मार्गशीर्षी पौर्णमास्यस्याग्रहायणिको मार्गशीर्षस्तस्योपा रात्रिर्यथा वर्धते ॥

चैत्रिको[1] ज्ञान्य[2]पुष्टानां श्रावणो वन्दिकेकिनाम् ।
स ददत्कार्त्तिकेन्द्वाभो भाद्रा[3]:श्रावणिर्केत्[4]करः ॥ १०४ ॥

१०४. स्पष्टः । किं तु ज्ञान्यपुष्टानां[3] पण्डितकोकिलानाम् । कार्त्तिकेन्द्वाभो दानोत्थया ज्ञैर्वन्दिभिश्चोत्कीर्तितया कीर्त्या कार्त्तिकचन्द्रतुल्यैः[4] । वाःश्रावणिकेत्करो[5] वारा निरन्तरं दानजलेन कृत्वा श्रावणिकत्[6] श्रावणमास इवाचरन् करः पाणिर्यस्य सः ॥

गते फाल्गुनिके[5] विश्वदारिद्र्यदलफाल्गुनः ।
हविर्भिरैन्द्र[6]पैङ्गाक्षीपुत्रीयैः सोकरोत्क्रतून् ॥ १०५ ॥

१०५. फाल्गुनिके[7] फाल्गुनमासे गते वसन्त इत्यर्थः । स राजा हविर्भि[8]र्घृतादिभिर्हव्यैः क्रतूनकरोत् । किंभूतैः । ऐन्द्र[9]पैङ्गाक्षीपुत्रीयैरिन्द्रदेवतैः[10] पैङ्गाक्षीपुत्रदेवतै[11]श्च । कीदृग् । विश्वदारिद्र्यदलफाल्गुनो यथा फाल्गुनः पत्राणि पातयत्येवं विश्वस्यापि दारिद्र्याणां पातक इत्यर्थः ॥

---

१ **सी** चैत्रको. २ **बी** °को न्यान्य°. ३ **प** °भाद्राश्रा°. ४ **प** °ककरः. ५ **बी** °ल्गुके. ६ **बी** °न्द्रपौङ्गाक्षी°.

---

१ **बी** पौर्णिमा°. २ **बी** °त्थिका आ°. ३ **सी** °नां खण्डि°. ४ **बी सी** °ल्यः । वाश्रा°. ५ **प** °ककगे. **बी** °कक्षरो. ६ **बी** °णिवत्र. ७ **बी** °ल्गुनके. ८ **प बी** °विभिर्घ°. ९ **प सी** °न्द्रदैव°. १० **बी** °तैः पिङ्गा°. ११ **प** °त्रदैव°.

हव्यैस्तार्णबिन्दवीयैः शुक्रियैः शतरुद्रियैः ।
तत्रातिशतरुद्रीयापांनप्त्रीयैश्च सोयजत् [1] ॥ १०६ ॥

१०६. स राजा हव्यैः कृत्वा तत्र क्रतुष्वयजदजुहोत् । किंभूतैः । तार्णबिन्दवीयैस्तार्णबिन्दवदेवतैः शुक्रियैः शुक्रदेवतैः । शतरुद्रियै रुद्रशतदेवतैः । अतिशतरुद्रीयापांनप्त्रीयैश्चातिशतरुद्रीयाणि शतरुद्रदेवतहव्येभ्योतिशायीनि यान्यपांनप्त्रीयाण्यपांनपाद्देवविशेषदेवतानि तैश्च ॥

अपोनप्त्रीयकैः सूक्तैः साध्वपोनप्त्रियं द्विजैः ।
महेन्द्रियं महेन्द्रीयैर्यज्ञेस्य जुहुवे हविः ॥ १०७ ॥

१०७. अस्य जयसिंहस्य यज्ञे द्विजैर्यज्वभिरपोनप्त्रियमपोनपाद्देवविशेषदेवतं हविः साधु विधिवज्जुहुवेग्नौ हुतम् । कैः कृत्वा । अपोनप्त्रीयकैरपोनपादधिष्ठातृदेवतैः सूक्तैर्मन्त्रैः । तथा महेन्द्रियं महेन्द्रदैवतं हविर्महेन्द्रीयैर्महेन्द्राधिष्ठातृदेवतैः सूक्तैर्जुहुवे ॥

अपांनप्त्रियमाहेन्द्रकायसौम्येषु कर्मसु ।
द्विजानां संशयं जातं सुधीः स स्वयमच्छिनत् ॥ १०८ ॥

१०८. स्पष्टः । किं त्वपांनप्त्रियमाहेन्द्रकायसौम्येषु कः प्रजापतिः सोमश्चेन्दुर्देवता येषां तानि कायानि सौम्यानि च ततश्चतुष्पदे विशेषणद्वन्द्वे तेषु । अपांनपादादीनुद्दिश्योक्तेष्वित्यर्थः । कर्मसु यागक्रियासु विषये जातं संशयम् । यतः सुधीः सर्वशास्त्रज्ञः ॥

आग्रहायणिक । आश्वत्थिक । इत्यत्र "आग्रहायणी०" [ ९९ ] इत्यादिनेकण् ॥

---

१ सी सोजयत्.

---

१ बी °ष्वजयाद°. सी °ष्वजयद°. २ ए °तदेव°. ३ ए °नपोनप्त्रीयकैः. ४ बी सी °तृदेव°. ५ सी °हेहवैव°. ६ बी °न्द्रवैव°. ७ ए सी °श्चेदुर्दे°. ८ सी °कण्वा । ऐ°.

चैत्रिकः चैत्र। कार्त्तिकिक कार्त्तिक । फाल्गुनिके फाल्गुनः[1] । श्रावणिकत् श्रावणः। अत्र "चैत्री०" [ १०० ] इत्यादिनेकण्वा ॥

ऐन्द्र। इत्यत्र "देवता" [ १०१ ] इत्यण्[2] ॥

पैङ्गाक्षीपुत्रीयैः। तार्णबिन्दवीयैः। अत्र[3] "पैङ्गाक्षी०" [१०२] इत्यादिनेयः ॥

शुक्रियैः। अत्र "शुक्रादियः" [ १०३ ] इतीयः ॥

शतरुद्रीय[4]। शतरुद्रियैः। अत्र "शत०" [ १०४ ] इत्यादिना-ईय-इयौ ॥

अपोनप्त्रीयकैः। अपोनप्त्रियम् । अपांनप्त्रीयैः । अपांनप्त्रियम्[5] । अत्र "अपोनप(पा)द्[6]०" [ १०५ ] इत्यादिना-ईय[7]-ई(इ)यौ ॥

महेन्द्रीयैः। महेन्द्रियम्। अत्र "महेन्द्राद्वा" [ १०६ ] इति वा-ईय[8]-इयौ ॥ पक्षेण्। माहेन्द्र ॥

काय। सौम्येपु। इत्यत्र "कसोमाट्ट्यण्" [ १०७ ] इति ट्यण् ॥

स द्यावापृथिवीयो नु द्यावापृथिव्यकर्मणि ।
अग्नीषोम्ये विधावग्नीषोमीयो[1] नूद्यतोभवत् ॥ १०९ ॥

१०९. द्यावापृथिवीयो नु द्यावापृथिवीदेवतपुरुष[9] इव स राजा द्यावापृथिव्यकर्मणि द्यावापृथिव्यौ देवते उद्दिश्योक्तायां क्रियायां विषय उद्यतोभूत्। एवमुत्तरार्धमपि व्याख्येयम् ॥

शुनासीर्याणि सूक्तानि शुनासीरीयवच्च सः ।
तथा वास्तोष्पतीयानि वास्तोष्पत्य इवाशृणोत् ॥ ११० ॥

---

१ ए °यो भूद्य°. २ बी °यो मूद्य°.

---

१ ए °ल्गुनिनः. २ सी °ण ॥ सद्या°. ३ ए °त्र पिङ्गा°. ४ ए °द्रीयः। द्रा°. ५ ए °प्त्रिय। अ°. ६ ए °नप इ°. ७ ए °ययौ. ८ बी °यईयौ. ९ सी °थिव्यौ.

११०. शुनो वायुः सीर आदित्यस्तौ देवते एषां तानि शुनासीर्याणि सूक्तानि मन्त्रान् यथा शुनासीरीयो वाय्वादित्यदेवतपुरुषः शृणोत्येवं स राजाशृणोत् । वास्तोष्पतिर्वास्तुदेवता देवता येषां तानि वास्तोष्पतीयानि । शिष्टं स्पष्टम् ॥

कर्माणि गृहमेध्यानि गृहमेधीयवन्मुदा ।
नृपो मरुत्वतीयानि मरुत्वत्य इवातनोत् ॥ १११ ॥

१११. गृहमेध्यानि गृहमेधं वास्तुदेवतामुद्दिश्योक्तानीत्यर्थः । मरुत्वानेकोनपञ्चाशन्मरुद्युक्तः शक्रो देवता येषां तानि मरुत्वतीयानि । शिष्टं स्पष्टम् ॥

द्यावापृथिवीयः । द्यावापृथिव्य । शुनासीरीय । शुनासीर्याणि । अग्नीषोमीयः । अग्नीषोम्ये । मरुत्वतीयानि । मरुत्वत्यः । वास्तोष्पतीयानि । वास्तोष्पत्यः । गृहमेधीय । गृहमेध्यानि । इत्यत्र "द्यावा०" [ १०८ ] इत्यादिना ईययौ ॥

वायव्यर्तव्यपित्र्योषस्यप्रौष्ठपदिकादिभिः ।
तं माहाराजिकैश्चौक्षन्मन्त्रैरवभृथे द्विजाः ॥ ११२ ॥

११२. अवभृथे यज्ञान्ते द्विजा यज्वानो मन्त्रैस्तमौक्षन्मन्त्रपूतं स्नानं तस्य चक्रुरित्यर्थः । किंभूतैः । वायव्या वायुदेवता ऋतव्या ऋतुदेवताः पितृव्याः पितृदेवता उषस्याः प्रातःसंध्यादेवताः प्रौष्ठपदिकाः प्रोष्ठपदाः पूर्वभद्रपदा उत्तरभद्रपदा देवता येषां ते तथा विशेषणद्वन्द्वे तदादिभिस्तथा माहाराजिकैश्च महाराजदेवविशेषदेवतैश्च ॥

१ बी सी °कैश्चोक्ष°. २ सी °न्त्रैरिवभृते द्वि°. ३ ए °भृते द्वि°.

१ ए °युः शीर. २ बी सी °नाशीर्या°. ३ बी सी °तिवास्तु°. ४ बी °स्तुदैवतदेवता ये°. ५ सी °ता ये°. ६ बी °नाशीर्या°. ७ ए °भृते °य°. ८ सी °दा दे°. ९ ए °षदैव°.

वायव्य । ऋतव्य । पि[1]त्र्य । उपस्य । इत्यत्र "वाय्वृ[2]तु०" [ १०९ ] इत्यादिना यः ॥

म(मा)हाराजि[3]कैः । प्रौष्ठपदिक । इत्यत्र "महाराज०" [ ११० ] इत्यादिनेकण् ॥

सूक्तपाङ्क्तप्रगाथेभ्यः प्रावृषेण्यत्करोम्भसा ।
सोदाद्भारतनेतेव द्विजेभ्यस्तत्र दक्षिणाः ॥ ११३ ॥

११३. तत्र यज्ञान्त[4]स्नाने सति स राजा द्विजेभ्यो दक्षिणा अदात् । कीदृक्सन् । अम्भसा कृत्वा प्रावृड्देवतास्य प्रावृषेण्यो वर्षा-मेघस्तद्वदाचरन्करः पाणिर्यस्य सः । कीदृग्भ्यो द्विजेभ्यः । सूक्तपाङ्क्तप्रगाथेभ्यः पङ्क्तिर्दशाक्ष[5]रच्छन्दोजातिरादि[7]रेषां पाङ्क्ता यत्र द्वे ऋचौ प्र[6]ग्रन्थनेन प्रकर्षगानेन वा तिस्रः क्रियन्ते ते मन्त्रविशेषाः प्रगाथाः सूक्ताः सुष्ठु भणिताः पाङ्क्ताः प्रगाथा यैस्तेभ्यः । भारतनेतेव भरता भरतगोत्रोद्भवा योद्धारोस्य युद्धस्य भारतं युद्धं तस्य नेतेव युधिष्ठिर इव । पाण्डवा हि भरतगोत्रोद्भवाः । यथा युधिष्ठिरो यज्ञान्ते द्विजेभ्यो दक्षिणा ददौ ॥

अतीत्य मैथिलं युद्धं राघवो नु कृतक्रतुः[1] ।
प्रापातेतरतिथ्यां स पूर्तं चक्रे महासरः ॥ ११४ ॥

११४. स राजा सहस्रलिङ्गाख्यं महासरः पूर्तं चक्रेकारयत् ।

वापीकूपतडागानि देवतायतनानि च ।
आरामान्नप्रदानानि पूर्तमर्घ्याः प्र[8]चक्षते ॥

१ बी °तुः । प्रपानेर°.

१ बी पितृव्य । उपम । इ°. सी पित्र्यः । उ°. २ बी सी °य्वृत्या°. ३ बी °कः । प्रोष्ठ°. सी °कैः । पोष्ठ°. ४ ए बी °स्नाते स°. ५ बी °क्षरंच्छ°. ६ सी °ग्रन्थने°. ७ बी °गादि दे°. ८ बी °चक्ष्यते.

क्ङ । प्रापातेतरतिथ्यां प्रपातो व्यतीपातो हानिर्वास्त्यस्यां प्रापाता तदितरस्यां तिथौ व्यतीपातदुष्प्रयोगरहितायां प्रवर्धमानायां वा तिथौ शुभतिथावित्यर्थः । कीदृक्सन् । कृतक्रतुर्यथा मैथिली सीता प्रयोजनमस्य तन्मैथिलं युद्धं रावणेन सह रणमतीत्य समाप्य राघवो रामः कृतक्रतुरभूत् ॥

प्रावृषेण्यत् । इत्यत्र "कालाद्भववत्" [ १११ ] इत्यतिदेशात् "प्रावृष एण्यः" [ ६. ३. ९२ ] इत्येण्यः ॥

पाङ्क्तप्रगाथेभ्यः । इत्यत्र "आदेः" [ ११२ ] इत्यादिना यथाविहित उत्साद्यञ् ॥

भारत । मैथिलं युद्धम् । अत्र "योद्धृ०" [ ११३ ] इत्यादिनाण् ॥

प्रापातेतरनिथ्याम् । अत्र "भाव०" [ ११४ ] इत्यादिना णः ॥

**पापकाककुलश्यैनंपातायां तत्तटीभुवि ।**
**सत्रशाला नृपश्चक्रे तैलंपातक्रियाजुषाम् ॥ ११५ ॥**

११५. नृपस्तैलंपातक्रियाजुषां तिलानां पातोभ्यादौ यस्यां क्रियायां यज्ञादिकायां सा तथा तत्सेविनां विप्राणां संबन्धिनीः सत्रशाला दानशालाश्चक्रेकारयत् । क्व । तत्तटीभुवि सरस्तीरप्रदेशे । कीदृश्याम् । पापमेव काककुलं तत्र श्यैनंपातः श्येनपातोस्यां वर्तते श्यैनंपाता तिथिः क्रियाभूमिः क्रीडा वा तस्यां धर्मार्थत्वेन पापोच्छेदिकायामित्यर्थः ॥

श्यैनंपातायाम् । तैलंपात । इत्यत्र "श्यैनंपाता०" [ ११५ ] इत्यादिना मोन्तो निपात्यः । प्रत्ययस्तु पूर्वेणैव सिद्धः ॥

---

१ बी सी °लस्यैनं°.

---

१ बी क्व । प्रपा°. २ ए प्रापते°. ३ ए सी °र्वास्तस्यां. ४ बी सी °स्यां प्रपा°. ५ सी °पातेदु°. ६ बी पातेभ्या°. ७ सी दानाश्च°. ८ सी °र्मार्थित्वे°. ९ ए °पात्याः । प्र°. बी °पात्यं । प्र°.

पादां मिथोंह्रिसंघट्टैः स्मरन्ति सहढौकिनः ।
तासु छान्दसनैमित्तमौहूर्ता भोज्यलिप्सवः ॥ ११६ ॥

११६. छान्दसनैमित्तमौहूर्ताश्छन्दो वेदं निमित्तं शकुनशास्त्रादि मुहूर्तं मुहूर्तवाचकज्योतिःशास्त्रं च विदन्तोधीयाना वा द्विजास्तासु सत्रशालासु मिथोंह्रिसंघट्टैर्गाढसंमर्दैन पादश्लेषैः कृत्वा पादां पादप्रहरणां क्रीडां स्मरन्ति । यतः सहढौकिनोहमहमिकया युगपदागच्छन्तः । एतदपि कुत इत्याह । यतो भोज्यलिप्सवः ॥

चक्रे नैमित्तिको मौहूर्तिको नैयायिकश्च सः ।
शंभोः सहस्रमष्टौ चायतनानि सरस्तटे ॥ ११७ ॥

११७. स्पष्टः । किं तु नैमित्तिको मौहूर्तिको नैयायिक इति विशेषणैः शुभे निमित्ते शुभे मुहूर्ते आयतनकरणव्ययितप्रभूतद्रव्योत्पादनाय लोकानां गाढदण्डपातनरूपस्यान्यायस्याकरणे चैषामायतनानां करणमुक्तमेवं चैषामतिस्थिरता सूचिता ॥

पौराणिकानुपदिकोत्रानुला(ल?)क्षणिकोकृत ।
स देवीनां शतं साग्रं प्रासादान्मातृकल्पिकः ॥ ११८ ॥

११८. स राजात्र सरस्तटे देवीनां चण्डिकादीनां साग्रं शतमष्टोत्तरं शतं प्रासादानकृताकारयत् । कीदृक् । पुराणं पञ्चलक्षणं पदान्यनुगतमनुपदं पदनिष्पादकं निरुक्तिशास्त्रमनुरूपं लक्षणमनुलक्षणं शब्दानुशासनं मातृकल्पं मातृविधिप्रतिपादकं शास्त्रं च विदन्नधीयानो वा ॥

१ बी सी मिथोहि°.

१ बी °मर्दन. सी °मर्दनेन. २ सी °पातानुरू°. ३ बी सी °मेव चैषामिति°. ४ सी °कानां. ५ प °णश°. ६ बी सी वा । अग्नि°.

आग्निष्टोमिकयावक्रीतिकवासवदत्तिकैः ।
दशावतारीं प्रकृतव्याख्यामत्र व्यधत्त सः ॥ ११९ ॥

११९. स राजात्र सरस्तटे दशावतारीं नारायणदशावतारप्रतिमाप्रासादं व्यधत्ताकारयत् । किंभूताम् । प्रकृतव्याख्यां प्रारब्धव्याख्यानाम् । कैरित्याह[1] । आग्निष्टोमिकयावक्रीतिकवासवदत्तिकैरग्निष्टोममग्निष्टोमक्रतुप्रतिपादकं ग्रन्थं यवक्रीतं गायता पठता चैकेन गोविन्देनैव[2] ग्रन्थिकेनाभिनेयमाख्यानं वासवदत्तामाख्यायिकां च विद्वद्भिरधीयानैर्वा व्यासादिभिः ॥

पादाम् । अत्र "प्रहरणात्०" [ ११६ ] इत्यादिना[3] णः ॥

मौहूर्ताः । नैमित्त । छान्दस । इत्यत्र "तद्वेत्त्यधीते" [ ११७ ] इत्यण् । केचित्तु मुहूर्तनिमित्तशब्दौ न्यायादौ पठन्ति तन्मते । मौहूर्तिकः । नैमित्तिकः ॥

नैयायिकः । पौराणिक[4] । अत्र "न्यायादेरिकण्" [ ११८ ] इतीकण् ॥

पदान्त । आनुपदिकः ॥ कल्पान्त । मातृकल्पिकः ॥ लक्षणान्तः(न्त) । आनुलक्षणिकः[5] ॥ क्रतु[6] । आग्निष्टोमिक ॥ आख्यान । यावक्रीतिक ॥ आख्यायिका । वासवदत्तिकैः । अत्र "पदकल्प०" [ ११९ ] इत्यादिना-इकण् ॥

स वार्त्तिसूत्रिकान्काल्पसूत्रानागमविद्यिकान् ।
सांसर्गविद्यांस्त्रैविद्यानाङ्गविद्यांश्च कोविदान् ॥ १२० ॥

क्षात्रविद्यान्धार्मविद्याल्लौ(ल्लौ)कायि(य)तिकविद्विषः[1] ।
याज्ञिकानौक्थिकांश्चात्र चक्रे प्रीणयितुं मठान् ॥ १२१ ॥

१२०, १२१. स राजा कोविदान्प्रीणयितुमाश्रयदानेनाह्लादयितु-

१ बी °यितक°.

१ बी सी °ह । अग्नि°. २ ए सी °न्देनेव. ३ बी सी °णा इ°. ४ ए °णिकः । अ°. ५ बी सी °नुलाक्ष°. बी सी °तु अग्नि°.

मत्र सरस्तटे मठांश्छात्रादिनिलयांश्चक्रेकारयत् । किंभूतान्कोविदान् । वार्त्तिसूत्रिकान्वृत्तिं सूत्रं च विदतोधीयानान्वा तथा काल्पसूत्रान् ।

सिद्धरूपः प्रयोगो यैः कर्मणामवगम्यते ।
ते कल्पा लक्षणार्थानि सूत्राणीति प्रचक्षते ॥

कल्पान्सूत्राणि च विदतोधीयानान्वा । तथागमविद्यां तथा संसर्गविद्यां संसर्गेणौपधसंपर्केण विद्यां सुवर्णसिद्ध्यादिविद्यां तथा त्र्यवयवां विद्यां त्रिविद्यां वार्तात्रयीदण्डनीतीस्तथाङ्गविद्यामङ्गानां षण्णां शिक्षादीनां विद्यां यद्वाङ्गस्य शरीरस्य विद्यां शरीरलक्षणज्ञानं तथा क्षत्रविद्यां दण्डनीतिं तथा धर्मविद्यां स्मृतिं च विदतोधीयानान्वा तथा लो(लौ)कायतिकविद्विषो लोकायि(य)तं चार्वाकशास्त्रं विदन्त्यधीयते वा लौकायतिकास्तेषां विद्विषो निराकर्तॄन् । तथा याज्ञिकान्यज्ञं यज्ञप्रतिपादकं शास्त्रं याज्ञिक्यं वा याज्ञिकानामाम्नायं विदतोधीयानान्वा तथौक्थिकांश्चोक्थानि कानिचित्सामान्यौक्थिक्यं वौक्थिकानामाम्नायं विदतोधीयानान्वा ॥

वार्त्तिसूत्रिकान् । इत्यत्र "अकल्पात्सूत्रात्" [ १२० ] इतीकण् ॥ अकल्पादिति किम् । काल्पसूत्रान् ॥

आगमविद्यिकान् । इत्यत्र "अधर्मक्षे(क्ष)त्र०" [ १२१ ] इत्यादिना-इकण् ॥ अधर्मादेरिति किम् । धार्मविद्यान् । क्षात्रविद्यान् । त्रैविद्यान् । सांसर्गविद्यान् । आङ्गविद्यान् ॥

याज्ञिकान् । औक्थिकान् । लौकायि(य)तिक । इत्येते "याज्ञिक०" [१२२] इत्यादिना निपात्याः ॥

---

१ ए °ल्पसौत्रा°. २ बी सी °चक्ष्यते. ३ सी °द्यां यद्वा°. ४ ए °थात्राव°. ५ ए द्यां वातात्र°. ६ ए °कायिति°. बी °कायितक°. ७ ए बी °ते लोका°. ८ ए सी °कायिति°. ९ ए °न् । यज्ञि°. १० सी याचकान् । लोका°. ११ ए °न् । लोका°. १२ बी °यितक°.

अनुब्राह्मण्याढ्यैः सशतपथिकैः षष्टिपथिकैः
कृताध्यायान्याशूत्तरपदिकयुक्पूर्वपदिकैः ।
द्विपद्भूवाके(क्ये)भ्यः पदिक इव निर्धार्य स पदा-
न्युरून्कीर्तिस्तम्भानिव सुरगृहाणि व्यरचयत् ॥ १२२ ॥

१२२. स राजा सुरगृहाणि प्रासादान् महाकीर्तिहेतुत्वेनोरून्महतः कीर्तिस्तम्भानिवाशु व्यरचयदकारयत् । किं कृत्वा । यथा पदिको वैयाकरणो वाक्येभ्यः सकाशात्पदानि विभक्त्यन्तादीनि निर्धारयति तथा द्विपद्भूवाक्येभ्यो द्विपद्भुवः शत्रुभूमय एव पदसमूहात्मकत्वाद्वाक्यानि तेभ्यः सकाशात्पदानि देवगृहस्थानानि निर्धार्येषु स्थानेषु देवगृहाणि विधास्यन्त इति पृथक्कृत्य शत्रुदेशेष्वपि देवगृहाण्यकारयदित्यर्थः । किंभूतानि । कृताध्यायानि विहितपाठानि । कैः । षष्टिपथिकैः षष्टिः पन्थानो यस्य स षष्टिपथो वेदाध्यायविशेषस्तं विदन्त्यधीयते वा तैर्द्विजैस्तथोत्तरपदिकयुक्पूर्वपदिकैः समासोत्तरपदविद्युक्तैः समासपूर्वपदविद्भिश्च लाक्षणिकैश्च । किंभूतैः । अनुब्राह्मण्याढ्यैर्ब्रह्मणा प्रोक्तो ग्रन्थो ब्राह्मणं तत्सदृशो ग्रन्थोनुब्राह्मणं सदृगर्थेव्ययीभावः । तद्विदन्त्यधीयते वानुब्राह्मणिनस्तैराढ्यैर्युक्तैस्तथा सशतपथिकैः शतपथवेदाध्यायविशेषविद्युक्तैः ॥ शिखरिणी छन्दः ॥

लसत्पदोत्तरपदिकैः ससामकैः सहाश्रमैस्तव तदपत्यमत्यये ।
कुमारपाल उ अविता महीमितीशवाक्स्मृतेरयतत स स्वसिद्धये
॥ १२३ ॥

---

१ ए सी °कैः कृ°. २ बी कृतध्या°.

---

१ ए बी °णि प्रसा°. सी °णि विधास्यन्त इति पृथक्कृत्य श प्रा°. २ बी °तुत्वानारू°. ३ ए °नोन्म°. ४ सी वाकेभ्यः. ५ सी °नि दे°. ६ ए °वाकेभ्यो. ७ ए °युत्पूर्व°. ८ बी सी °ढ्यैर्ब्राह्म°. ९ ए बी शिखिरणी.

१२३. स जयसिंहः[1] स्वसिद्धयेयतत परलोकसाधनायानशनाद्य-[3]न्त्यक्रियां चकारेत्यर्थः । कुत इतीशवाक्स्मृतेरेवंविधसोमनाथवचः-स्मरणमवलम्ब्य । का वागित्याह । उ हे जयसिंह तवात्यये तदपत्यं तस्य त्रिभुवनपालस्यापत्यं कुमारपालो महीमविता पालयिष्यति । कैः । सहाश्रमैर्ब्रह्मचारिमुख्यैः । किंभूतैः । लसन्तः सम्यग्ज्ञानेन देदीप्यमानाः पदोत्तरपदिकाः पदं चोत्तरपदं च विदन्तोधीयाना वा वैयाकरणा येषु तैस्तथा ससामकैः सामवेदज्ञयुक्तैः ॥ रुचिरा छन्दः ॥

**उपनिषदकशिक्षकेषु मीमांसकपदकक्रमकेष्वथापरेद्युः ।**
**जनितशुगवनीपतिर्मघोनः पुरमगमत्परमेष्ठिनः स्मरन्सः ॥१२४॥**

१२४. अथापरेद्युः सोवनीपतिर्जयसिंहो मघोनः पुरमगमद्दिवं गत इत्यर्थः । कीदृक्सन् । जनितशुग्विहितशोकः । केषु विषये । उपनिषदकशिक्षकेषूपनिषदं योगशास्त्रं शिक्षां वर्णोत्पत्तिस्थानप्रतिपादकं ग्रन्थं विदत्स्वधीयानेषु वा । तथा मीमांसकपदकक्रमकेषु मीमांसां विचारणाशास्त्रं पदक्रमौ च वेदपाठभेदौ विदत्स्वधीयानेषु वा द्विजेषु तथा परमेष्ठिनोर्हत्सिद्धाचार्योपाध्यायसुसाधून्हरिहरब्रह्मणश्च स्मरन् ।

अनुब्राह्मणि । इत्यत्र "अनु०" [ १२३ ] इत्यादिनेन् ॥

शतपथिकैः । षष्टिपथिकैः । अत्र "शत०" [ १२४ ] इत्यादिना-इकट् ॥

---

१ बी °दशि°. २ ए बी °दक्र°.

---

१ बी °सिंह स्व°. २ बी °लोके सा°. ३ बी सी °धन्तक्रि°. ४ बी °विधं सो°. ५ सी °दकग्र°. ६ बी सी वाथ त°. ७ बी सी °दक्र°. ८ सी °क्रमेषु. ९ ए विधत्स्व°. १० सी °यस्वसा°.

पूर्वपदिकैः । उत्तरपदिक[1] । पदिकः । पदोत्तरपदिकैः । अत्र "पदोत्तर०" [ १२५ ] इत्यादिनेकः ॥

पदक[2] । क्रमक । शिक्षकेषु । मीमांसक । सामकैः । इत्यत्र "पदक्रम०" [ १२६ ] इत्यादिनाकः ॥ उपनिपच्छब्दादपीच्छति कश्चित् । उपनिपदक ॥ औपच्छन्दसकं छन्दः ॥

इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तौ पञ्चदशः सर्गः ॥

---

१ बी °दिकः । प°. २ प °दकः । क्र°. बी °द क्र°.

# द्व्याश्रयमहाकाव्ये

## षोडशः सर्गः ।



सवार्त्तिकैरष्टकसर्वतन्त्रैः सगौतमैरेत्य कुमारपालः ।
अथाभिषिक्तः कठताण्डिमुख्यैः पैतामहं राज्यमलंचकार ॥ १ ॥

१. अथ कुमारपालः पैतामहं कुमारपालपिता हि त्रिभुवनपालो जयसिंहस्य भ्रातृजत्वात्पुत्रतुल्य इति जयसिंहः कुमारपालस्य पितामहस्तत्संबन्धि राज्यमलंचकार । कीदृक्सन् । कठताण्डिमुख्यैः कठेन प्रोक्तं वेदं ताण्ड्येन प्रोक्तं ब्राह्मणं च विदन्त्यधीयते वा ये तत्प्रभृतिभिः पुरोहितामात्याद्यैरेत्याभिषिक्तः कृतराज्याभिषेकः । किंभूतैः । सवार्त्तिकैर्वृत्तिरेव विनयादित्वादिकणि [ ७. २. १६९ ] वार्त्तिकं तेन सह सवार्तिकं सूत्रं विदन्त्यधीयते वा तैस्तथाष्टकसर्वतन्त्रैरष्टकाँ अष्टकमष्टाध्यायमानं पाणिनीयं सूत्रं विदन्तोधीयाना वा ये सर्वतन्त्राः सर्वतन्त्राणि सर्वदर्शनसिद्धान्तान्विदन्तोधीयाना वा तैस्तथा सगौतमैर्गौतमर्षिप्रोक्तवेदवित्सहितैः ॥

सवार्त्तिकैः । सर्वतन्त्रैः । अत्र "ससर्व०" [ १२७ ] इत्यादिनाणो लुप् ॥

अष्टक । अत्र "संख्या०" [ १२८ ] इत्यादिनाणो लुप् ॥

गौतमैः । अत्र "प्रोक्तात्" [ १२९ ] इत्यणो लुप् ॥

वेद । कठ ॥ इन्ब्राह्मण । ताण्डि । इत्येतौ "वेदेन्०" [ १३० ] इत्यादिना वेत्त्यधीत एतद्विषय एव प्रयुज्येते ॥ सर्गेस्मिन्नुपजातिश्छन्दः ॥

१ बी °पालं पि°. २ सी °बन्धरा°. ३ सी ताण्डेन. ४ बी °काष्ट°. ५ ए °तन्त्रा°. ६ बी °भगौत°. ७ बी सी °युज्यते. ८ ए °पजाति°. ९ बी सी °तिच्छन्दः°.

**स्थानेभ्य आगत्य च वास्त्रपाण्डुकम्बल्युपारोहिण आशु विप्राः ।**
**[1]क्रौञ्चौपगप्राग्वकवामदे[2]व्यौशनो[3]द्गिरो मङ्गलमस्य चक्रुः ॥ २ ॥**

२. द्विजा अस्य कुमारपालस्य मङ्गलं मन्त्रपूतचन्दनाक्षतादीनां मूर्ध[1]न्यारोपेण माङ्गलिक्यं चक्रुः । किंभूताः सन्तः । क्रौञ्चो(ञ्चौ)प-गप्राग्वकवामदेव्यौशनोद्गिरः क्रौञ्चेनर्पिणौपगवेनर्पिणा वामदेवेनर्पि-णोशनसा[2] च शुक्रेण दृष्टानि सामानि क्रौ[3]ञ्चौपगवकवा[4]मदे[5]व्यौशनानि तदुद्गिरस्तान्युच्चारयन्तः । किं कृत्वा । स्थानेभ्यो द्विजसंबन्धिपुरग्रा-मादिभ्य आश्रेत्यागत्य । यतो वस्त्रेणच्छन्ना रथा वास्त्राः पाण्डुकम्ब-[6]लेनच्छन्ना र[7]थाः पाण्डुकम्बलिनो द्वन्द्वे तेषूपारोहिणो महर्द्धिकत्वेनारो-हणशीलाः ॥

**औशेष्वधीतौशनसो नु शातभिषो नु ना शातभिषज्य आसीत् ।**
**प्रगल्भधीर्नीतिपथे गुणैश्च दुर्धर्पताद्यैरतिशातभः सः ॥ ३ ॥**

३. स रा[8]जा नीतिपथे राजनीतिमार्गविषये प्रगल्भधीरासीत् । यथौशेषूशनसा दृष्टेषु सामसु विषयेधीतमौशनसं साम येन सोधीतौ-शनसो ना नरः प्रगल्भधीः स्याद्यथा वा शातभिषः शतभिषजि नक्षत्रे जातो नरः शातभिषज्ये शतभिषग्जातकर्मणि रौद्रक्रियादौ विषये प्रगल्भधीः स्यात् । तथा स दुर्धर्पताद्यैर्दुरभिभव[9]नीयतादिभिर्गुणैः कृत्वातिशातभश्च शतभिषग्जातनरमतिक्रान्तश्चासीत् । शतभिषजि

१ ए क्रौञ्चोप°. २ बी °देव्योश°. ३ बी °द्गिग म°. ४ बी °नसा नु. सी °नशो नु.

१ बी सी °रोपण. २ ए °सा नु°. ३ ए बी क्रौञ्चोप°. ४ सी °मदो-व्योश°. ५ ए °देव्योश°. ६ ए °लेच्छ°. ७ ए सी रथा पा°. ८ सी राजनी°. ९ बी °नीयादि°.

जातो हि नरो दुर्धर्पतादिगुणोपेतः स्यात् । नीतिज्ञो विक्रान्तश्चायं राजाभूदित्यर्थः ॥

वास्त्र । इत्यत्र "तेन०" [ १३१ ] इत्यादिनाण् ॥

पाण्डुकम्बलि । इत्यत्र "पाण्डु०" [ १३२ ] इत्यादिनेन् ॥

क्रौञ्च । इत्यत्र "दृष्टे साम्नि नाम्नि" [ १३३ ] इत्यण् ॥

औपगवक । इत्यत्र "गोत्रादङ्कवत्" [ १३४ ] इत्यतिदेशादङ्केर्थे "गोत्राद-दण्ड०" [ ६. ३. १६९ ] इत्यादिना योकञ् विहितः स स्यात् ॥

वामदेव(व्य) । इत्यत्र "वाम०" [ १३५ ] इत्यादिना यः ॥

औशन । इत्यत्र योण् विहितः स "डिद्वाण्" [ १३६ ] इति वा डित् ॥ पक्षे । औशनसः ॥

शातभिषः । शातभिषज्ये[2] । अत्र "वा जाते द्विः" [ १३७ ] इति जातेर्थे पुनर्विहितोण्[1] वा[3] डित् ॥ केचित्तु द्विर्डित्वमिच्छन्ति । तन्मते[4] द्विर्डित्वाद्विर-न्त्यस्वरादिलोपे शातभः । एवं पूर्वसूत्रेपि । औशेपु । एवं च योगद्वयेपि त्रैरूप्यं सिद्धम् ॥

**लोकात्सदा न्याय्यकराभितुष्ट इयेष नैषोपनयेन वित्तम् ।**
**किं स्थाण्डिलः कार्परमाल्लकौख्यभ्राष्ट्रान्नभुकाङ्क्षति शूल्यभिक्षाम् ४**

४. एष राजा लोकात्सकाशादपनयेनान्यायेन[5] सदा वित्तं द्रव्यं नेयेष यतो न्याय्यो न्यायादनपेतो यः करो राजग्राह्यो भागस्तेनाभि-तुष्टः । अर्थान्तरन्यासमाह । स्थाण्डिलः स्थण्डिल एव शयनव्रतो भिक्षुः शूल्यभिक्षां शूल्यस्य शूले संस्कृतस्य मांसस्य भिक्षां किं काङ्क्षति निन्द्यत्वान्नैवेत्यर्थः । यतः कर्परे[6] उद्धृतं[7] कार्परं मल्लके[8] शराव उद्धृतं

१ सी °त्र योण्. २ बी °षजे । अ°. ३ ए वा दितः । के°. ४ ए °तेर्डि°. सी °ते द्विडित्वा°. ५ ए °ना स°. ६ सी कर उ°. ७ सी तं मा°. ८ बी °के सरा°.

माल्लकमुखायां स्थाल्यां संस्कृतमुख्यं भ्राष्ट्रे संस्कृतं भ्राष्ट्रं च यदन्नं तस्य[1] भुग्भोक्ता ॥

माल्लक[2] । कार्पर । इत्यत्र "तत्र०" [ १३८ ] इत्यादिनाण् ॥

स्थाण्डिलः । अत्र "स्थण्डिलाच्छेते व्रती" [ १३९ ] इत्यण् ॥

भ्राष्ट्र । इत्यत्र "संस्कृते भक्ष्ये" [ १४० ] इत्यण् ॥

शूल्य । उख्य । इत्यत्र "शूलोखाद्यः[3]" [ १४१ ] इति यः ॥

**असाधुरौदश्वितरुच्यनीतेश्चित्तेस्य नो साधुतया न्यवात्सीत् ।**
**क्षैरेयतां दाधिकतां च नौदश्वित्कं भजेद्रासनवेदिनो हि ॥५॥**

५. अस्य[4] राज्ञश्चित्तेसाधुः साधुतया[5] न न्यवात्सीत् । यत उदश्विति तक्रे संस्कृतं "संस्कृते[6] भक्ष्ये" [ ६. २. १४० ] इत्यणि औदश्वितं प्रलेहस्तदिव रुच्याभिप्रेता नीतिर्न्यायो यस्य तस्य । युक्तं चैतत् । हि यस्माद्रासनवेदिनो[7] रोगादिनाप्रतिहतरसनेन्द्रियत्वाद्रसनाग्राह्यमाधुर्यादिरससंवेदिनः पुंस औदश्वित्कमुदश्विति संस्कृतमोदनादि[8] क्षी(क्षै)रेयतां क्षीरे संस्कृतत्वं परमान्नतां दाधिकतां च दध्नि संस्कृतत्वं दधिसंस्कृतौदनतां वा न भजेत् ॥

क्षैरेय । इत्यत्र "क्षीरादेयण्" [ १४२ ] इत्येयण् ॥

दाधिकताम् । अत्र "दध्नः" [ १४३ ] इति(त्यादिना)-इकण् ॥

औदश्वित्कम्[9] औदश्वित । इत्यत्र "वोदश्वितः" [ १४४ ] इतीकण्वा ॥

रासन । इत्यत्र "क्वचित्" [ १४५ ] इत्यण् ॥

द्वाविंशः पादः ॥

---

१ **बी** °स्य भोक्ता. २ **प** °ल्लका°. ३ **बी** शूल्योखा°. ४ **सी** °स्य । अथोत्त°. षष्ठश्लोकसमाप्तिपर्यन्तं न वर्तते. ५ **प** °या न्य°. ६ **प** °स्कृतं भ°. ७ **बी** °नो रागा°. ८ **बी** °तमौद°. ९ **प** °श्वित°.

नादेयपूराभबलः स कृत्यशेषेपि नाशेत यतस्ततोमुम् ।
माहेयराड्ढ्राष्ट्रियराजमुख्या भूपा अदूरेत्यभुवोभजन्त ॥ ६ ॥

६. यतो यस्माद्धेतोः स राजा कृत्यशेषेपि स्तोकेपि कार्ये नाशेत नालस्यभूत् । कीदृक्सन् । नादेयपूराभबलो नदीभवप्रवाहतुल्यबलः । तस्मान्महोत्साहरूपाद्धेतोर्मह्यां भवा माहेया महियडा इति प्रसिद्धाः क्षत्रियभेदास्तेषां राड्ढ्रोद्रहदेशाधिपस्तथा राष्ट्रे भवा राष्ट्रियाः क्षत्रियभेदास्तेषां राजा राष्ट्रियराजो द्वन्द्वे तदादयो भूपा अमुमभजन्त । किंभूताः सन्तः । अदूरेत्याः समीपभवा भुवो येषां ते तथा निकटस्था इत्यर्थः ॥

शेषे । इत्यनेन "शेषे" [ १ ] इति सूत्रं सूचितम् ॥

नादेय । माहेय । इत्यत्र "नद्यादेरेयण्" [ २ ] इत्येयण् ॥

राष्ट्रिय । इत्यत्र "राष्ट्रादियः" [ ३ ] इतीयः ॥

दूरेत्य । इत्यत्र "दूरादेत्यः" [ ४ ] इत्येत्यः ॥

अथो(थौ)त्तराहाखिलशैवहारावारीणपारीणनृपैः सहैव[1] ।
आन्नो नृपोस्मिन्मदतोतिपारावारीणनागः सहसा व्यरुद्ध॥७॥

७. अथान्नो नृपः सपादलक्षदेशाधिपोस्मिन्कुमारपालविषये सहसातर्कितमेव व्यरुद्ध । जयसिंहे स्वर्गते नवराजत्वेन कुमारपालमसमर्थं मन्यमानो विरोधकारणाभावेप्यतर्कितं तेन सह विरोधं चकारेत्यर्थः । कीदृक्सन् । सहैव सहित एव । कैरित्याह । औत्तराहा उत्तरस्यां दिश्युत्तरस्मिन्देशे वा भवास्तथाखिला ये शैवहाराः शिव-

१ बी °व । अन्नो.

१ ए राड्ढ्रोद्र°. २ सी °रवि°. ३ बी °सिंहस्व°. ४ ए विधं. ५ ए °त्याहोत्त°. ६ सी °था पागीणाः.

हारानदीसंबन्धिनस्ते तथावारीणा अवारे प्रस्तावाच्छिवहारानद्या अर्वाक्तटे भवास्तथा पारीणाः पारे शिवहारायाः परतटे भवा विशेषणद्वन्द्वे एते ये नृपास्तैः । यतो मदतो बलाद्यवले[1]पादतिपारावारीणनागः पारावारेऽब्धौ भवं जातं वा नागमैरावणमतिक्रान्तः ॥

**प्राच्यं च व(ब?)ल्लालमयुङ्क्त पारातोवारपारीणनृपैरपाच्यैः ।**
**प्रतीच्यराट्पार्ष्णिनिपीडनार्थमुदीच्यरा[1]ण्णीत्यतिदिव्यमन्त्री ॥ ८॥**

८. उदीच्यराडुदीच्यानामुत्तरदिग्भवानां सपाद[2]लक्षादिदेशनृणां राजात्रः प्रतीच्यानां गूर्जर[3]त्रादिपश्चिमदेश[4]भवानां [5]नृणां [6]राट्[7] कुमारपालस्तस्य यः पार्ष्णिः प[8]श्चाद्भागदेशस्तस्य निपीडनार्थमुपद्रवणार्थं प्राच्यमवन्तिदेशाधिपं बल्ला[9]लं बल्लालदेवाख्यं नृपं पारातोवन्तिदेशस्थपारानद्याः सकाशादयुङ्क्त च । कैः सह । अपाच्यैर्दाक्षिणात्यैरवारपारीणनृपैरवारपारेऽब्धौ भवै[10]र्नृपैः । यदा कुमारपालो मया सह युध्यते तदा युष्माभिरेतस्य पश्चाद्देशो भञ्जनीय इत्येवं मैत्रीदानसन्मानादिकरणेन प्रेरितवानित्यर्थः । यतो नीत्यति[11]दिव्यमन्त्री नीतौ राजनीतिविषये दिव्यमन्त्रिणं बृहस्पतिमप्यतिक्रान्तः । गूर्जरत्रापेक्षया सपादलक्षदेश उत्तरः । सपादलक्षापेक्षया[12] च गूर्जरत्रा[13] पश्चिमा । गूर्जरत्रासपादलक्षापेक्षया चावन्तयः पूर्वा इत्यन्योन्यापेक्षयावन्त्यादिदेशानां प्राग्देशत्वादिव्यवहारः । यद्वेशानतो नैऋ(र्ऋ)तिं गच्छन्त्याः शरावतीनद्या अपेक्षयावन्त्यादिदेशानां प्राग्देशत्वादिव्यवहारः । तथा च वैयाकरणाः । कः पुनः प्राग्देशो

१ **बी** °राणील°.

१ **सी** °लेपतोति°. २ **सी** °ददे°. ३ **ए** °रवादि°. ४ **सी** °देशानां भ°. ५ **ए** °भवां नृ°. ६ **बी** नृपाणां. ७ **सी** राजा कु°. ८ **ए** °श्चारादे°. ९ **ए** °लालादे°. १० **बी सी** °वैर्भूपैः. ११ **सी** °तिविदि°. १२ **सी** °या चा°. १३ **बी** °त्रा स°.

यः शरावत्याः सरितः पूर्वोत्तरेण वहन्त्याः पूर्वतो दक्षिणतो वा भवति[1] यस्तु पश्चिमेत[2] उत्तरतो वा स उदगिति । ततश्च तत्तद्[3]देशाधिपानां बल्लालादीनां प्राच्यत्वाद्युक्तिरुपपन्नेति ॥

औत्तराह । इत्यत्र "उत्तरादाहञ्" [ ५ ] इत्याहञ् ॥

पारावारीण । इत्यत्र "पार०" [ ६ ] इत्यादिनेनः ॥

पारीण । अवारीर्ण । अवारपारीण । इत्यत्र "व्यस्त०" [ ७ ] इत्यादिनेनः ॥

दिव्य[5] । प्राच्यम् । अपाच्यैः । उदीच्य । प्रतीच्य । इत्यत्र "द्युप्राग०" [ ८ ] इत्यादिना यः ॥

**ग्रामेयकाग्राम्यवचःप्रवीणैः कात्रेयकैराह्वत राजचक्रम् ।**
**ग्रामीण[1]कौलेयकवत्सकौण्डेयकं सकौणेयकमेष दूतः ॥ ९ ॥**

९. ग्रामीणो ग्रामे भवो यः कुले[6] शुद्धान्वये भवो[7] जातो वा कौलयको जात्यश्वा प्रचण्डबलशौर्यादिगुणैस्तत्तुल्य एष आन्ध्रो दूतैर्नृपचक्रमाह्वताकारयत् । किंभूतम् । सकौण्डेयकं[8] सकौणेयकं च कुण्ड्यौ[9] कुण्या च नगर्यौ ग्रामौ वा । कुण्ड्यान्ध्रदेशे नदीत्येके । तत्र भवैर्जातैर्वा नृपैः सहितम् । किंभूतै[10]र्दूतैः । कात्रेयकैः कुत्सितास्त्रयो धर्मादयो यत्र तत्र[11] कत्रौ देशे भवैर्जातैर्वा । तथा ग्रामेयकमसभ्य[12]मग्राम्यं च सभ्यं[13][14] च यद्वचो यद्वा ग्रामेयकाणां मूर्खाणामग्राम्याणां च विदुषां[15] च यद्वचस्तत्र प्रवीणैः सर्वभाषानिपुणैरित्यर्थः ॥

---

१ **बी** °कौलीय°.

---

१ **सी** °ति प°. २ **ए** °मतो उ°. ३ **सी** तद्दे°. ४ **सी** °ण । इ°. ५ **ए** दिव्यः । प्रा°. ६ **सी** °ले सिद्धा°. ७ **ए** भवे जाते वा. **बी** भवे जातौ वा. ८ **बी** °कं सकौण्डेयकं स°. ९ **ए** °ण्ड्या च. १० **सी** °भूतैः का°. ११ **सी** °त्र कात्रे दे°. १२ **ए** °सत्यम°. १३ **ए** सत्यं च. १४ **बी सी** °भ्यं य°. १५ **बी सी** °षां य°.

**ग्रैवेयकी प्रास्थित दीप्रकौक्षेयकः स गर्वादतिदाक्षिणात्यः ।**
**पौरस्त्यपाश्चात्यचमूनियुक्तवाह्लायनौदायनसैन्यपालः ॥१०॥**

१०. स आन्नः प्रास्थित प्रस्थानं चक्रे । कीदृक्सन् । ग्रैवेयकी मङ्गल्याय ग्रीवालङ्कारवानुपलक्षणत्वात्परिहितसर्वालंकारस्तथा दीप्र उत्तेजितः कौक्षेयकः कङ्ककुक्षिनिर्जीर्णनायसा कृतोसिर्यस्य स गृहीतासिरित्यर्थः । तथा गर्वादतिदाक्षिणात्यो दाक्षिणात्यं दक्षिणस्यां दिशि भवं रावणमतिक्रान्तस्तथा पौरस्त्याग्रेतनी पाश्चात्या च पश्चाद्भागभवा ये चम्वौ तयोश्छलकप्रतिद्विपदादिकृतोपद्रवाभावाय नियुक्तौ वाह्लायनो वह्लिपु देशे भवो राजौदायनश्चोदों क्रीडायां कुशल उ(ऊ?)र्दिदेशे भवो वा राजा सैन्यपालौ येन स तथा ॥

**स कापिशायन्यरुणेक्षणः सपार्दायनः पश्चिमभूमिमिच्छन् ।**
**गर्जन्ययौ गौरिव राङ्कवो राङ्कवायणीं गां दुरमात्यवर्गः ॥११॥**

११ स आन्नो ययौ पश्चिमभूमिं प्रत्यचालीत् । कीदृक्सन् । सपार्दायनः । पर्दिदेशभवेन राज्ञा सहितस्तथा कुमन्त्रकृत्त्वाद्दुष्टोमात्यवर्गो यस्य स तथात एव पश्चिमभूमिं गूर्जरत्रामिच्छन्नत एव च कापिश्यां नगर्यां नद्यां वा भवा कापिशायनी द्राक्षा तद्वद्गूर्जरत्राधिपोपरि कोपाटोपेनारुणे ईक्षणे यस्य स तथा गर्जन् सिंहनादं मुञ्चन् । यथा राङ्कवो रङ्कुदेशे भवो गौर्वृषभो गर्जन् वादकुर्वन्सन्राङ्कवायणीं गां धेनुं कामातुरतया याति ॥

---

१ बी °नौदाय°. २ बी राद्गकवा°.

---

१ सी °निर्जीर्णना°. २ बी °वादति°. ३ बी सी °त्यो द°. ४ बी °रस्त्योग्र°. ५ बी °त्या चा प°. ६ सी °लकः प्र°. ७ बी °नश्चार्दो. ८ ए °श्चोदो क्री°. ९ ए सी °पालो ये°. १० बी स अन्नो. ११ बी °देशे भ°. १२ ए बी °शायिनी. १३ सी भवा गौ°. १४ सी °जन्सन्राकवा°. १५ बी °न् त्रादकुर्न्स°.

कत्यस्ततस्त्यो न्वसि नास्मि तत्रत्यः किं त्वहं नित्यमिहत्य एवम् ।
तदीयनिष्ठ्यानभिवञ्च्य कश्चिदाविष्ट्य आगात्प्रणिधिश्शुलुक्यम्॥१२॥

१२. कश्चित्प्रणिधिश्चर आविः[1] प्राकाश्ये भव आविष्ट्यः प्रकटः सञ्श्रुलुक्यमागात् । किं कृत्वा । तदीयनिष्ठ्यानात्रसंबन्धिनश्चण्डालानभिवञ्च्यच्छलयित्वा । कथमित्याह । अहो नरासि त्वं कत्यः कस्मिन्देशे पुरे वा भवो नु । शङ्कामहे । ततस्त्योसि तस्मात्पश्चिमदेशादागतस्त्वं कुमारपालचरस्त्वमित्यर्थः । इत्युक्ते प्रत्युक्तिर्यथा । नास्मि तत्रत्यो नाहं तस्मिन्पश्चिमदेशे भवः किं त्वहं नित्यमिहत्योस्मिन्सपादलक्षदेशे भव एवंप्रकारेण ॥

ग्रामीण । ग्राम्य । इत्यत्र "ग्रामादीनञ्च" [ ९ ] इतीनञ् यश्च ॥

काञ्चेयकैः । ग्रामेयक । इत्यत्र "कत्र्रि० [ १० ] इत्यादिनैयकञ् ॥

कौण्डेयकम् । कौणेयकम् । अत्र "कुण्ड्या०" [ ११ ] इत्यादिना-एयकञ् यलुक ॥

कौलेयक । कौक्षेयकः । ग्रैवेयकी । इत्यत्र "कुल०" [ १२ ] इत्यादिना-एयकञ् ॥

दाक्षिणात्यः । पाश्चात्य । पौरस्त(स्त्य) । इत्यत्र "दक्षिणा०" [१३] इत्यादिना त्यण् ॥

वाह्लायनौदायन । पादायनः । कापिशायनी । इत्यत्र "वह्लि०" [ १४ ] इत्यादिना टायनण् ॥

१ बी °त्प्रणधि°.

१ बी °विः प्रका°. २ बी °नश्चाण्डा°. ३ ए सी °हो निरा°. ४ ए सी °नन् य°. ५ ए सी °क । कौ°. ६ पुस्तकत्रयेपि 'कुण्डेत्यादिना' इति वर्तते. ७ बी सी °यकः । कौ°. ८ सी °न । राङ्क°. ९ बी °यनैदा°. १० बी °यनः । का°. ११ ए °थ । का°. १२ ए °शायनी.

राङ्कवायणीं गाम् राङ्कवो गौः । अत्र "रङ्कोः प्राणिनि वा" [ १५ ] इति वा टायनण् ॥

कल्यः । इहत्यः । अमात्य । तत्रत्यः । ततस्त्यः । अत्र "क्वेह०" [१६] इत्यादिना त्यच् ॥ आविःशब्दादपि कश्चित् । आविष्ट्यः ॥

नित्यम् । अत्र "नेर्ध्रुवे" [ १७ ] इति त्यच् ॥

निष्ट्यान् । इत्यत्र "निसो गते" [ १८ ] इति त्यच् ॥

**ऊचे स नत्वेति तवैषमस्त्योप्यनैषमस्तन्य इवारिरान्नः ।**

**दिनेचलद् ह्यस्तन एष्यति श्वस्तने च नूनं तव देशसीमाम् ॥१३॥**

१३. स प्रणिधिर्नत्वेत्यूचे । यथा हे राजन्नान्नो ह्यस्तनेतीते कल्यदिनेचलत्तवाभिषेणनायाचालीत् । तथा नूनं श्वस्तने दिने भाविकल्यदिवसे तव देशसीमामेष्यति । यत एप(ऐ)षमस्त्योप्यस्मिन्संवत्सरे भवोपि नास्त्यैषमस्तन्यमिदंसंवत्सरभवतास्य सोनैषमस्तन्य इवातिप्ररूढवैरेण चिरकालीन इव तवारिः ॥

**ह्यस्ते(स्त्ये) दिने कान्थिककान्थकारण्यशैवरूप्येद्र् च सपौर्वशालः ।**

**भिन्नस्तव श्वस्त्यदिनेभिगन्ता तं चाहडो हस्त्यधिरोहणेन्द्रः ॥१४॥**

१४. हे राजंस्तव संबन्धी कान्थिककान्थकारण्यशैवरूप्येद्र् च कान्थिकाः कन्थायां ग्रामविशेषे भवा नराः कान्थका वर्णाख्यह्रदसमीपस्थकन्थाग्रामभवा नरा आरण्या अरण्ये भवाः पशुवृक्षादयः शैवरूप्याः शिवरूप्ये देशभेदे भवा नरा द्वन्द्वे तेषामीद्र् च राजा ह्यस्त्ये दिनेतीते

१ सी °मात्यः । त°. २ बी °त्रत्य । त°. ३ सी के इ°. ४ ए बी प्रणधि°. ५ सी °दिने त°. ६ बी यतो एप°. ७ ए नास्त्येप°. ८ ए °त्सरे भ°. ९ बी सी °ता यस्य सौनै°. १० ए °रिः । ह्यस्ते दि°. ११ बी °रूपदे°. सी °रूपे दे°. १२ ए °जा ह्यस्त्ये. १३ सी ह्यस्ते दि°.

कल्ये भिन्नस्त्वत्तो भेदं गत आन्नं श्रित इत्यर्थः । कीदृक् । सपौर्वशालस्तव पूर्वस्यां शालायां भवैः सुभटाश्वादिभिर्युतः । तथा तव संबन्धी हस्त्यधिरोहणेन्द्रो हका(का?)मात्रेण ह[1]स्तिनां वित्रासकत्वाद्धस्त्यधिरोहणेषु सादिषु(?) स्वामी चाहडः श्वस्त्यदिने तमान्नमभिगन्ता श्रयिष्यति ॥

तं[1] पौर्वमद्रेड[2]परेपुकामशमोभजद्गौमततैकगो(गौ)ष्ठाः ।
वाहीकराड्रौमकराट् च याक्रुल्लोमोथ पाटच्चर[3]शौरसेनौ ॥ १५ ॥

१५. पू(पौ)र्वमद्रेट् पूर्वेषु मद्रेषु देशेषु भवानां नृणां राजा तमान्नमभजत्तथापरेपुकामशमश्चापरेपुकामशमीग्रामस्य राजाचाभजत्तथा गौ[2]मततैकगो(गौ)ष्ठा गोमत्या नद्या राजा तैक्या गोष्ठ्याश्च वाहीकेषु ग्रामयोर्नृपौ द्वन्द्वे ते चाभजंस्तथा वाहीकरा[3]ड्रौमकराट् च वाहीके देशे[4] रोमके प्राग्दे[5]शग्रामे च भवानां नृणां[6] नृपौ[7] याक्रुल्लोमश्च यक्रुल्लो[8]ऽप्युदग्ग्रामे भवो राजा चाथ तथा[9] पाटच्चर[10]शौरसेनौ पटच्चरे प्राग्ग्रामे[11] शूरसेनेषु देशेषु च भवौ नृपौ चाभजन ॥

नैकेतयुक्शाकलकाण्वदाक्षचैङ्कीयकाशीयमुखैः स वेत्ति ।
भावत्कवृत्तिं भवदीयपुर्यां चर्यैर्वसद्भिर्जनकीयवृत्त्या ॥ १६ ॥

१६. एष[12] आन्नो[13] नैकेती[14] वाहीकग्रामस्तत्र भवा नैकेतास्तैर्युजो युक्ता ये शाकलकादयः शकलस्य कण्वस्य दक्षस्य चर्पेश्चिङ्कस्य प्राच्य-

---

१ ए बी नं पूर्व°. २ ए सी °परेषु°. ३ बी °रसौर°. ४ सी °र्या चौर°.

---

१ ए विवास°. २ सी गौतमनै°. ३ बी गाडोम°. ४ ए देशो रो°. ५ सी °ग्देशे ग्रा°. ६ ए नृपौ. ७ बी सी नृपो या°. ८ बी लोप्यु°. ९ सी °था पट°. १० बी °रसौर°. ११ बी °मे सूर°. १२ बी °प अन्नो. १३ ए आन्नौ नै°. १४ ए °ती याहैक°.

गोत्रस्य काशस्य भरतगोत्रस्य क्षत्रियस्यापत्यानि वृद्धानि शाकल्यकाण्व्यदाक्षिचैङ्किकाशयस्तेषामिमे चरास्तत्प्रमुखैश्चरैः कृत्वा भावत्कवृत्तिं त्वदीयवृत्तान्तं वेत्ति । यतः किंभूतैः । जनकीया लोकसंबन्धिनी या वृत्तिर्वाणिज्यादिव्यापारस्तया कृत्वा भवदीयपुर्यां वसद्भिः । एतेनास्य विजयः सुलभ इत्युक्तम् ॥

**अराजकीयोजनि सोपि गोनर्दीयोस्य बुद्ध्या परकीयवृत्तिः ।**
**तदुष्णकालीय इवातपस्ते तं गच्छतो धक्ष्यति पार्ष्णिभागम् १७**

१७. हे राजन्स त्वत्सेवकत्वेन प्रसिद्धो गोनर्दीयोपि गोनर्दे गोर्णदेत्याख्यया लोके प्रसिद्धेवन्तिदेशमध्यस्थे पत्तने भवो बल्लालोपि राज्ञः कुमारपालस्यायं राजकीयो न तथाराजकीयोजनि । यतोस्यान्नस्य बुद्ध्या परकीया त्वच्छत्रोरान्नस्य संबन्धिनी वृत्तिर्जीविका यस्य सः । तत्तस्माद्धेतोस्ते तव तमान्नं गच्छतोभिषेणयतः सतस्ते पार्ष्णिभागं पाश्चात्यदेशमसौ धक्ष्यत्यग्निदानेन भस्मसात्करिष्यति यथोष्णकालीयो ग्रीष्मसंबन्ध्यातपो गच्छतो नरस्य पार्ष्णिभागं पादपश्चाद्भागं दहति ॥

ऐषमस्त्यः अनैषमस्त्न्यः । ह्यस्ते(स्त्ये) ह्यस्तने । श्वस्त्य श्वस्तने । अत्र "ऐषमः०" [ १९ ] इत्यादिना त्यच् वा ॥

कान्थिक । इत्यत्र "कन्थाया इकण्" [ २० ] इतीकण् ॥

कान्थक । इत्यत्र "वर्णावकञ्" [ २१ ] इत्यकञ् ॥

---

१ ए °नदीयो°. २ सी °लीन इ°. ३ बी धक्षति.

---

१ सी °स्य भ°. २ सी °कलकाण्वदा°. ३ बी °काण्वादा°. ४ बी °त्कतृत्°. ५ ए °कीयलो°. ६ सी °णदत्ताख्य°. ७ सी तवान्नं. ८ बी धक्षत्य°. ९ ए सी °स्त्न्य । ह्य°. १० सी °स्तन्ये । श्व°. ११ बी श्वस्त्यः श्व°.

शैवरूप्य । आरण्य । इत्यत्र "रूप्य०"[1] [ २२ ] इत्यादिना णः ॥

पौर्वशालः । अत्र "दिक्पूर्वादनाम्नः" [ २३ ] इति णः । अनाम्न इति किम् । अ[2]परेषुकामशमः ॥

पौर्वमद्र । इत्[3]यत्र "मद्रादञ्" [ २४ ] इत्यञ् ॥

याकृल्लोमः । अत्र "उदग्०" [ २५ ] इत्यादिनाञ् ॥

गौष्ठाः । तैक । नैकेत । गौमत । शौरसेनौ । वाहीक । रौमक । पाटच्चर । इत्यत्र "गोष्ठी०" [ २६ ] इत्यादिनाञ् ॥

शाकल । काण्व । इत्यत्र "शकलादेर्यञः" [ २७ ] इत्यञ् ॥

दाक्ष । इत्यत्र "वृद्धे[4]ञः" [ २८ ] इत्यञ् ॥

प्राचः । चैङ्कीय । भरतात् । काशीय । इत्यत्र "न द्वि०" [ २९ ] इत्यादिना नाञ् ॥

भावत्क । भवदीय । इत्यत्र "भवतोर्०" [ ३० ] इत्यादिना-इकणीयसौ ॥

परकीय । जनकीय । राजकीयः[5] । अत्र "परजन०" [ ३१ ] इत्यादिना कीयः ॥

गो[6]र्नदीयः । अत्र "दोरीयः" [ ३२ ] इतीयः ॥

उष्णकालीय । इत्यत्र "उष्णादिभ्यः कालात्" [ ३३ ] इतीयः ॥

**वैकालिकीमप्यथ तामवैकालिकां नु तद्वृत्तिमवेत्य भूपः ।**
**बुद्ध्ये[1]ति तात्कालिकयालुलोचे तात्कालिकीं कुद्विकृतिं विजित्य ॥ १८ ॥**

१ बी °ति तत्का°.

१ प सी रूप्येत्या°. २ प °परेषु°. ३ बी °त्यम°. ४ सी °द्धेञ्यः इ°. ५ सी °कीय । अ°. ६ सी °नदीयः.

१८. अथैवं चरोक्त्यनन्तरं भूपस्तात्कालिकया तत्कालोद्भवया बुद्ध्येति वक्ष्यमाणमालुलोचेचिन्तयत् । किं कृत्वा । तां विरोधरूपां तद्वार्त्तिं तस्यान्नस्य व्यापारं वैकालिकीमपि कुमारपालस्य तदैव राज्ये-भिषिक्तत्वेनासमयोत्पन्नामपि महाविक्रान्तत्वेनावैकालिकां नु समयोत्पन्नामिवावेत्य ज्ञात्वा तथा तात्कालिकीं तत्कालोद्भवां क्रुद्धिकृतिं कोपविकारं विजित्य ॥

वैकालिकाम् । वैकालिकीम् । तात्कालिकया । तात्कालिकीम् । अत्र "व्यादिभ्यः०" [ ३४ ] इत्यादिना णिकेकणौ ॥

स काशिकीं तर्हि कलां विदन्न-
ण्या वञ्चितः काशिकया निकृत्या ।
तां चैदिकीं दर्शयताशु भक्ति-
मचैदिकामद्य च तेन तातः ॥ १९ ॥

१९. स सर्वत्र प्रसिद्धस्तातो जयसिंह आः खेदे । तेनान्नेन वञ्चितः । किंभूतेन सता । तर्हि तस्मिन्ननद्यतने जयसिंहकालेसमर्थत्वात्काशिकया निकृत्या । काशिदेशे हि माया बहु विजृम्भतेत एव महादाम्भिकं प्रति वाराणसिकोयं बक इति लोकैरुच्यते । इति वाराणसीसंबन्धिन्या मायया कृत्वा तां सर्वलोकप्रसिद्धां चैदिकीं भक्तिं चेदिदेशलोको हि प्रायो विनीतः सरलस्वभावश्च स्यादिति चेदिदेशसंबन्धिनीं विनयप्रतिपत्तिं सरलस्वभावतां च दर्शयताद्य चाधुना मम समये त्वाशु शीघ्रमचैदिकां भक्तिं दुर्विनीतत्वं दर्शयता ।

१ ए °शयिता°. २ सी °भक्तम°. ३ ए °काद्य.

१ ए तथान्न°. २ ए ° नावै°. ३ बी °न्नद्य°. ४ बी °यं ठक. ५ बी वाणारसी°. ६ बी °लोके प्र°. ७ सी °मचैदि°. ८ ए °नीतित्वं.

कीदृक्तातः । काशिकीं कलां मायां विदन्नप्ययं नरो मायावीत्याकृत्यादिना जानन्नपि । यद्यसौ तदा तातं तथा नाच्छलयिष्यत्तदामुं तातस्तदैवोदच्छेदयिष्यदित्यर्थः ॥

काशिकया । काशिकीम् । चैदिकाम् । चैदिकीम् । अ[त्र] "काश्यादेः" [३५] इति णिकेकणौ ॥

**सिद्धेशि कारन्तपिकाह्वजालिकीवत्स भूत्वात्तनवौर्णवासाः ।**
**उन्मृष्टकारन्तपिकीरदाच्छं किं तद्यशोमय्यपि हर्तुमिच्छेत् ॥२०॥**

२०. स आन्नस्तद्यशो नवौर्णवासःपरिधानोत्थां सिद्धेशकीर्तिं मय्यपि मयि सत्यपि मामप्यनादृत्य चैवं विरोधकरणेन किं हर्तुमिच्छेत् । किंभूतम् । उन्मृष्टा दन्तपवनेन निर्मलीकृता ये कारन्तपिक्याः कारन्तपे वाहीकग्रामे भवाया नार्या रदा दन्तास्तद्वदच्छं निर्मलम् । किं कृत्वा । सिद्धेशि जयसिंहसमीप आत्तनवौर्णवासाः स्वस्य किंकरत्वंव्याख्यापनाय परिहितनव्यकम्बलवस्त्रो भूत्वा । यथा कारन्तपिकाह्वजालिकी च कारन्तपे वाहीकग्राम आह्वजाल उशीनरग्रामे भवे स्त्रियौ नवौर्णवाससौ भवतः । कारन्तपादिषु हि ऊर्णवासांसि परिधीयन्ते ॥

**तस्यास्म्यपत्यं कथमाह्वजालिकाभं पुनश्चेत्प्रकरोमि नैनम् ।**
**सहैव भूपैर्वृजिकाह्वजालीयमद्रकैर्नापितवास्तुकैश्च ॥ २१ ॥**

---

१ सी °द्धेशका°. २ बी °काह्वं पु°.

---

१ बी विन्दन्न°. २ बी °त्या जा°. ३ बी सी °वोच्छे°. ४ ए °ति किं । णि°. ५ सी °कीर्तिः म°. ६ सी °भूताम्. ७ बी °वायो नार्यो र°. ८ ए °मैलं कृ°. ९ सी °द्धेश ज°. १० ए किंकिरत्व्या°. ११ सी °त्वख्या°. १२ बी °ह्वजले शी°. १३ ए °पाविच्छु हि. १४ सी हि और्ण°.

२१. यथैकवेलं मत्पितैनं विजित्याह्वजालिकाभमात्तौर्णवा[स]सं चक्रे तथा चेदहं पुनः प्रकर्षेण न करोमि तदाहं तस्य जयसिंहस्य कथमपत्यमित्यर्थः । कथम् । सहैव सहितमेव । कैः । भूपैः । किंभूतैः । वृजिकाह्वजालीयमद्रकैर्वृजिषु देश आह्वजाले ग्रामे मद्रेषु च देशेषु भवैस्तथा नापितवास्तुकैश्च नापितवास्तौ वाहीकग्रामे प्राग्ग्रामे च भवैश्च ॥

**काकन्दकैः पाटलिपुत्रकैर्माल्लवास्तवैर्जम्बुकवन्मिलित्वा ।**
**बल्लाल आरब्ध स जागरं यत्क्षमोस्मि तत्राप्युचितं विधातुम् ॥२२॥**

२२. तत्रापि विषय उचितं योग्यं विधातुं क्षमोस्मि । यत्स बल्लालो नृपैः सह जम्बुकवदल्पसारत्वाच्छृगाल इव मिलित्वा जागरं मत्पाश्चात्यदेशभञ्जनायोद्यममारब्ध । कैः कैर्नृपैरित्याह । काकन्दकैः पाटलिपुत्रकैश्च काकन्द्यां पाटलिपुत्रे च प्राक्पुर्योर्भवैः । तथा माल्लवास्तवैर्मल्लवास्तौ प्राग्ग्रामे भवैश्च ॥

कारन्तपिका । कारन्तपिकी । इत्यत्र "वाहीकेषु ग्रामात्" [ ३६ ] इति णिकेकणौ ॥

आह्वजालिका । आह्वजालिकी । इत्यत्र "वोशीनरेषु" [ ३७ ] इति णिकेकणौ वा ॥ पक्षे । आह्वजालीय ॥

वृजिक । मद्रकैः । अत्र "वृजि०" [ ३८ ] इत्यादिना कः ॥

नापितवास्तुकैः । अत्र "उवर्णादिकण्" [ ३९ ] इतीकण् ॥ यदा तु नापितवास्तुः प्राग्ग्रामस्तदा "दोरेव प्राचः" [ ४० ] इतीकण् । पूर्वेण सिद्धे नियमार्थं वचनम् । तेनेह न स्यात् । माल्लवास्तवैः ॥

---

१ **सी** °लं मिलित्वैनं. २ **सी** °भूतैः. ३ **सी** देशेषु आ°. ४ **प** योगं वि°. ५ **सी** °जालकी. ६ **प** मद्रिकैः

काकन्दकैः । अत्र "इतोकञ्" [ ४१ ] इत्यकञ् ॥

पाटलिपुत्रकैः । अत्र "रोपान्त्यात्"[1] [ ४२ ] इत्यकञ् ॥

**सहैव सांकाश्यकफाल्गुनीवहकैश्च नान्दीपुरकैश्च भृत्यैः ।**
**भूपोपि[1] बह्लालमथो सवातानुप्रस्थकं दण्डपतिं न्यदिक्षत्[2] ॥ २३ ॥**

२३. स्पष्टः । किं तु सांकाश्य[क]फाल्गुनीवहकैः[2] सांकाश्ये पुरे फाल्गुनीवहे देशे भवैर्नान्दीपुरकैश्च नान्दीपुरे भवैश्च भृत्यैः सेवकनृपैरित्यर्थः । सवातानुप्रस्थकं वातानुप्रस्थे पुरे भवेन नृपेण सहितं[3] दण्डपतिं काकाख्यं द्विजं सेनापतिम् ॥

**स्वयं स ऐरावतकाभिसारकदार्वकैः स्थालकधौमकैर्युङ् ।**
**त्रैगर्तकै राजभिराभिसाराद्यगर्तकैश्चारिमभि[3] प्रतस्थे ॥ २४ ॥**

२४. स कुमारपालोरिमान्नमभिलक्ष्यीकृत्य[4] स्वयं प्रतस्थे । कीदृशः[6] । ऐरावत आभिसारे दर्वेषु स्थल्यां धूमे त्रिगर्तेष्वाभिसारगर्ते च देशेषु भवैर्जातैर्वा राजभिर्युङ् युक्तः ॥

प्रस्थान्त । वातानुप्रस्थकम् ॥ पुरान्त । नान्दीपुरकैः ॥ वहान्त । फाल्गुनीवहकैः ॥ योपान्त्य । सांकाश्यके(क) ॥ धन्ववाचि । ऐरावतक । इत्यत्र "प्रस्थपुर०" [ ४३ ] इत्यादिनाकञ् ॥

आभिसारक । इत्यत्र "राष्ट्रेभ्यः" [ ४४ ] इत्यकञ् ॥ बहुवचनमकञः प्रकृतिबहुत्वं द्योतयदपवादविषयेपि प्रापणार्थम् । तेनेहापि भवति । आभिसारगर्तकैः । अत्र गर्तोत्तरपदलक्षणईयो न स्यात् ॥

---

१ ए °पोवि ब°. सी °पोषि व°. २ ए °दिक्षित्. ३ ए °राद्याग°.

---

१ ए रोपादित्य°. सी रोपल्यादित्य°. २ बी °श्यसफा°. सी °श्यमफा°. ३ सी सहतं. ४ सी °रिमनुल°. ५ बी °न्नभि°. ६ बी सी °दृक् । ऐ°.

दार्वकैः । अत्र "बहु०" [ ४५ ] इत्यादिनाकञ् ॥ बहुवचनमपवादविषयेपि प्रापणार्थम् । त्रैगर्तकैः । अत्र गर्तोत्तरपदलक्षण ईयो बाध्यते ॥

धौमकैः । स्थालक । इत्यत्र "धूमादेः" [ ४६ ] इत्यकञ् ॥

**चौलुक्यमन्वीयुरथेरयन्तस्तुरङ्गमान्कौलकसादिवर्याः ।**
**सामुद्रिका नाव इवाशु सामुद्रकाः कशादण्डभृतः समन्तात् ॥२५॥**

२५. अथ कौलकसादिवर्याः कूलं नाम सौवीरग्रामस्तत्र भवा अश्ववारश्रेष्ठाः समन्ताच्चौलुक्यमन्वीयुरनुजग्मुः । किंभूताः सन्तः । कशादण्डभृतः कशायष्टिधारिणोत एवाशु तुरङ्गमानीरयन्तः कशाघातेन प्रेरयन्तः । यथा कशादण्डभृतः कशाकारारित्रदण्डधारिणः सामुद्रकाः समुद्रे भवा जाताः समुद्रकर्मणि कुशला वा नराः सामुद्रिकाः समुद्रे भवा नावस्तरीः समन्तादाश्वरित्रैः प्रेरयन्ति ॥

कौलक । इत्यत्र "सौवीरेषु कूलात्" [ ४७ ] इत्यकञ् ॥

सामुद्रका नराः । सामुद्रिका नावः । अत्र "समुद्रान्नृनावोः" [ ४८ ] इत्यकञ् ॥

**न तस्य धीनागरकस्य मायितया चरैर्नागरकैः परेषाम् ।**
**काण्डाग्रकैः पैप्पलकच्छकैश्चे(श्चै)न्दुवक्रकैर्वा(र्ना)ह्यत यानहेतुः ॥ २६ ॥**

२६. काण्डाग्रौ पिप्पलकच्छ इन्दुवक्रे च देशेषु भवैस्तेभ्य आगतैर्वा परेषां चरैर्द्विषां हेरिकैस्तस्य राज्ञो यानहेतुर्यात्रायाः कारणं नौह्यत न ज्ञात इत्यर्थः । किंभूतैः । मायितया नागरकैर्नगरभव-

१ सी °युरिवेर°. २ ए सी °कैर्वोह्य°.

१ बी सी °रल°. २ ए सी °स्तरी स°. ३ ए °मुद्रका. ४ सी °षां हेरकै°. ५ सी °णं नोह्य°.

नरतुल्यैरपि । नागरि(र?)का हि प्रायो मायिनः स्युरिति यानहेतुज्ञानकारणमायाप्रयोगचतुरैरपीत्यर्थः । तर्हि कथं नौह्यत इत्याह । यतो धीनागरकस्य बुद्ध्या कृत्वा नगरभवनरतुल्यस्य । नागरको हि प्रायोतिबुद्धिमान्स्यात् । यतोतिधीमत्त्वेनातिगूढमन्त्रस्येति भावार्थः ॥

सचाक्रवर्तक्यधृतातपत्र आरण्यके सोध्वनि सेव्यते स्म ।
आरण्यकन्यायविहारदक्षैरारण्यकैः प्राज्यबलैर्गजैर्नु ॥ २७ ॥

२७. स राजारण्यके वन्येध्वन्यारण्यकैररण्ये भवैर्नरैः शबरैः सेव्यते स्म । कीदृक्सन् । चक्रवर्ते देशे भवो राजा चाक्रवर्तकस्तस्य भावश्चाक्रवर्तक्यं सह तेन यः स सचाक्रवर्तक्यश्चाक्रवर्तको राजैव तेन धृतमातपत्रं यस्य सः । किंभूतैः । आरण्यकन्यायविहारदक्षैररण्ये भवयोर्नीतिविचरणयोर्विषये प्रवीणैस्तथारण्यकैर्गजैर्नु वन्यहस्तिभिरिव प्राज्यबलैर्महाप्राणैः ॥

आरण्य आरण्यकविद्भिरध्वन्यसौ द्विडारण्यकगोमयाग्निः ।
गच्छन्नघारण्यकरीषदावैरानन्द्यताशीर्वचनैर्मुनीन्द्रैः ॥ २८ ॥

२८. आरण्येध्वनि गच्छन्सन्नसौ राजा मुनीन्द्रैः कर्तृभिराशीर्वादैः कृत्वानन्द्यत । किंभूतैः । आरण्यकविद्भिरात्मनोखिलेन्द्रियविषयग्रामाद्या निवृत्तिः सा वनं वारण्यमिति श्रुतिस्तत्स्वरूपस्य वर्णकत्वात्तस्यायं तत्र विषये भवो वारण्यकोध्यायभेदो वेदान्तस्तं जानद्भिः ।

---

१ बी सी °न्द्रैः ॥ अर°.

---

१ सी °नकर°. २ ए °थं नोह्य°. सी °थं मोह्य°. ३ ए सी °ह्यतेत्या°. ४ बी °रैः से°. ५ सी °वर्त्तिक°. ६ सी °वर्त्तिक्यं. ७ सी °वर्त्तिक्य°. ८ सी °वर्त्तिको. ९ बी °च्छन्न°. १० सी °नन्दितः किं°. ११ ए °ययामा°. १२ बी °नि स्तुतिरत्वत्स्व°.

एतेन ज्ञानितोक्तिः । तथाघारण्यकरीषपदावैः पापेष्वेव वन्यच्छगणे-चूर्णेषु वनवह्नितुल्यैर्महातपस्वितया दग्धपापैरित्यर्थः । अनेन क्रिया-परतोक्तिः । नन्वेवंविधैरप्यसौ किमित्याशीर्भिरानन्द्यत इत्याह । यतो द्विषो धर्मान्तरायाः आन्तराः कामादयो बाह्याश्च दैत्यादयोरयस्त एवासारत्वादारण्यकगोमयानि तेष्वग्निर्विजिगीषुर्नृप इत्यर्थः । अथ च य आरण्यकगोमयानामग्निः स्यात्स देवतात्वान्मुनीन्द्रैराशिषानन्द्यत इत्युक्तिलेशः ॥

**बालाभिरारण्यवशाभिरारण्यिका करेणुर्नु भृशं प्रगल्भा ।**
**यौगंधरैः कौरवकैश्च सैन्यैः सेना मिलद्भिः पथि तस्य रेजे ॥२९॥**

२९. तस्य राज्ञः प्रगल्भा प्रौढा सेना पथि मिलद्भिर्यौगंधरैः कौरवकैश्च युगंधरेषु कुरुषु च देशेषु भवैः सैन्यैः कृत्वा भृशमत्यर्थं रेजे । यथारण्यिका वन्या प्रगल्भा करेणुर्हस्तिनी बालाभिः शिशुभिरारण्यवशाभिर्वन्यहस्तिनीभिः कृत्वा भृशं राजते ॥

**साल्वाः सयौगंधरकाः पदाताः सकौरवाश्वा अभवन्मुदेस्य ।**
**द्राक्साल्वकैः साल्वकगोयवागूवृत्त्या मनुष्यैः परिवार्यमाणाः ३०**

३०. सकौरवाश्वाः कुरुदेशजैरश्वैर्युक्ताः सयौगंधरकाः युगंधरदेशसंबन्धिपदातियुक्ताः साल्वाः पदाताः साल्वदेशस्य पत्तयोस्य राज्ञो मुदेभवन् । यतः साल्वकैः साल्वदेशे भवैर्मनुष्यैर्गोपालैः पाचकैश्च नरैर्द्राक्परिवार्यमाणाः । किंभूतैः । उपलक्षितैः । कया । साल्व-

---

१ सी °रण्यका. २ ए °ल्भा । योगं°. ३ सी सयोगं°.

---

१ ए °पदवौ पा°. २ ए °णतृणे°. ३ ए °या विश्वपा°. सी °या वन्यपा°. ४ ए °रत्वोक्तिः. ५ ए °या अन्त°. ६ ए बी °पुनृप. ७ ए °द्भिर्योगं°. ८ सी °पु दे°. ९ ए सी °रण्यका. १० ए °स्तिभिः. ११ सी °का यौगं°.

कगोयवागूवृत्त्या साल्वे[1] देशे भवा या गावो धेनवो या च यवागूरुपलक्षणत्वाद्रसवती तासां या वृत्तिर्व्यापारस्तया साल्विकगोवृत्त्या रक्षणचारणादिकया साल्विकयवागूवृत्त्या च पाकादिकया । यौगंधरकाः साल्वाश्च पदातयः स्वभावेनैवात्मोपयोगि[2]सकलपरिवारपरिकलिता एव देशान्तरेषु यान्तीति तान्दासधेन्वादिसकलपरिवारेण सश्रीकान्गच्छतो दृष्ट्वा राजा जहर्षेत्यर्थः ॥

मायितया नागरकैः । धीनागरकस्य । इत्यत्र "नगरात्०" [ ४९ ] इत्यादिनाकञ् ॥

पैप्पलकच्छकैः ॥ अग्नि । काण्डाग्नकैः ॥ वक्र । ऐन्दुवक्रकैः ॥ वर्त । चाक्रवर्तक[3][4] । इत्यत्र "कच्छाग्नि०" [ ५० ] इत्यादिनाकञ् ॥

आरण्यकेध्वनि[5] । आरण्यकन्याय । आरण्यकविद्भिः । आरण्यकैर्गजैः । आरण्यकैः । आरण्यकविहार । इत्यत्र "अरण्यात्०" [ ५१ ] इत्यादिनाकञ् ॥

आरण्यकगोमय आरण्यकरीष । इत्यत्र "गोमये वा" [ ५२ ] इति वाकञ् ॥ केचित्तु हस्तिन्यामपि विकल्पमिच्छन्ति । आरण्यिका[6] करेणुः आरण्यवशाभिः ॥ केचित्तु नरवर्जं पूर्वसूत्रेपि विकल्पमाहुः । आरण्यके आरण्येध्वनि ॥

कौरवकैः कौरवं[7] । यौगन्धरकाः[8] यौगंधरैः[9] । इत्यत्र "कुरु०" [ ५३ ] इत्यादिना[10] वाकञ् ॥

साल्वकगोयवागूः(गू) । साल्वकैर्मनुष्यैः । अत्र "साल्वाद्०" [ ५४ ] इत्यादिनाकञ् ॥ गोयवाग्वपत्ताविति[11] किम् । साल्वाः पदाताः ॥

---

१ सी साल्वदे°. २ बी °गिकस°. ३ बी °वर्तिकय । इ°. ४ ए °र्ते । इ°. ५ सी °ण्यकन्या°. ६ ए सी °रण्यका. ७ बी °व । योग°. ८ ए °रकः यौ°. ९ बी °काः योगं°. १० ए °नाक°. ११ बी सी °वागूप°.

न काच्छके सैन्धवका विमर्दे न काच्छकाः सैन्धवकेप्यकुप्यन् ।
तैः सैन्धवैर्वाजिभिरुक्षभिश्च काच्छैस्तदाज्ञायमिता व्रजन्तः ॥३१॥

३१. सैन्धवकाः सिन्धुनराः काच्छके कच्छदेशवासिनरसंबन्धिनि विमर्दे बाहुल्यात्संघर्षे सति नाकुप्यन् । किंभूताः सन्तः । व्रजन्तः । कैः कृत्वा । तैः सुजात्यत्वादिना प्रसिद्धैः सैन्धवैः सिन्धुदेशे जातैर्वाजिभिः । एतेन सिन्धौ सुजात्याः प्रभूताश्चाश्वाः स्युरित्युक्तम् । तथा काच्छकाः कच्छदेशनराः सैन्धवकेपि सिन्धुदेशनरसंबन्धिन्यपि विमर्दे सति नाकुप्यन् । किंभूताः सन्तः । व्रजन्तः । कैः कृत्वा । तैः सुजात्यत्वादिना प्रसिद्धैः काच्छैः कच्छदेशभवैरुक्षभिर्वृषभैः । एतेन कच्छेषु सुजात्याः प्रभूताश्चोक्षाणः स्युरित्युक्तम् । यतस्तदाज्ञायमिताः कुमारपालाज्ञानियन्त्रिताः ॥

अपूर्यतैक्ष्वाकशृगालगर्तीयाश्वत्थिकीयैः कटवर्तकीयैः ।
दाक्षिह्रदीयैः सहदाक्षिकन्थीयायामुखीयैर्नृपतेरनीकम् ॥ ३२ ॥

३२. नृपतेः कुमारपालस्यानीकमपूर्यत । कैः कैरित्याह । इक्ष्वाकुषु शृगालगर्ते आश्वत्थिके कटवर्तके च देशेषु दाक्षिह्रदे च वाहीकग्रामे भवैस्तथा सहदाक्षिकन्थीया दाक्षिकन्थायां वाहीकग्रामे भवैर्भटैः सहिता ये आयामुखीया आयामुखे वाहीकग्रामे भवास्तैश्च महाभटैः ॥

१ ए °के सेन्ध°. २ ए °काः सेन्ध°. ३ ए °न् । से°. ४ सी °क्षकेश्च केच्छै°. ५ ए °र्यतेक्ष्वा°.

१ ए °वाजिसि°. २ सी °नि वा°. ३ ए °हुबल्या°. ४ बी °देशजा°. ५ सी °श्चाश्वोक्षाणः स्यु°. ६ बी °देशे न°. ७ सी °केषु सि°. ८ सी आयोमु°. ९ सी आयोमु°.

दाक्षेः परस्तान्नगरीयभूपैर्ग्रामीयभृत्यैः पलदीययोधैः ।
सपर्वतीयैश्च सपर्वतीयवेषैर्युतोथार्बुदमाससाद ॥ ३३ ॥

३३. अथ स राजार्बुदं गिरिमाससाद । कीदृग् । युतः । कैः कैरित्याह । दाक्षेः परस्तान्नगरीयभूपैर्दाक्षिनगरे प्राग्देशे भवैर्नृपैस्तथा दाक्षेः परस्ताद्ग्रामीयभृत्यैर्दाक्षिग्रामे वाहीकग्रामे भवैर्दासैस्तथा दाक्षेः परस्तात्पलदीययोधैर्दाक्षिपलदे वाहीकग्रामे भवैर्भटैस्तथा सह पर्वतीयेन पर्वतसंबन्धिना वेषेण मृगाजिनोर्णादिकेन वर्तन्ते ये तैः सपर्वतीयवेषैः पर्वतीयैश्च पर्वते भवैः शबरादिभिश्च ॥

तां पार्वतीं क्ष्मां कृकणीयपर्णीयशोभमानामवितेत्यथोचे ।
पत्तिः स्वकीयो नृपतेर्गहीयपदातियुग्विक्रमसिंहनामा ॥३४॥

३४. अथ विक्रमसिंहनामा राजेति वक्ष्यमाणमूचे । कीदृक् । कृकणीयपर्णीयशोभमानां कृकणे पर्णे च भारद्वाजदेशयोर्भवैर्लोकैः शोभमानां वास्तव्यानेकदेशान्तरीयलोकामित्यर्थः । तां सर्वर्तुमण्डितवनादिलक्ष्म्यातिरम्यत्वात्प्रसिद्धां पार्वतीमर्बुदे भवां क्ष्मामविता रक्षिता । तथा नृपतेः कुमारपालस्य स्वकीयः पत्तिः सेवकस्तथा गहीयपदातियुग्गहे जालंधरदेशसमीपस्थे देशविशेषे भवा ये पदातयस्तैर्युक्तः ॥

काच्छकाः । काच्छके विमर्दे । सैन्धवकाः । सैन्धवके विमर्दे । अत्र "कच्छादेर्०" [ ५५ ] इत्यादिनाकञ् ॥ नृनृस्थ इति किम् । काच्छैरुक्षभिः । सैन्धवैर्वाजिभिः ॥

---

१ ए सी °र्वतीक्ष्मां. २ ए पत्तेः स्व°.

---

१ ए °र्बुदगि°. २ सी °तः । कैरि°. ३ ए °क्षेः पुर°. ४ बी °षे मृ°. ५ सी °जिनौर्णादिना वर्तते ये. ६ ए °र्तते ये. ७ बी वक्ष्मा°. ८ बी °यशो°. ९ ए °तल°. १० ए सी °पत्ते कु°.

कोपान्त्य । ऐक्ष्वाक । कच्छादि । काच्छैः । सैन्धवैः । अत्र "कोपान्त्याच्चाण्" [ ५६ ] इत्यण् ॥

शृगालगर्तीय । इत्यत्र "गर्त०" [ ५७ ] इत्यादिना-ईयः ॥

कटवर्तकीयैः । अत्र "कट०" [ ५८ ] इत्यादिना-ईयः ॥

आश्वत्थिकीय(यैः) । आयामुखीयैः । दाक्षिकन्थीयः(य) । दाक्षिपलदीय । दाक्षिनगरीय । दाक्षिग्रामीय । दाक्षिह्रदीयैः । इत्यत्र "कखोपान्त्य०" [ ५९ ] इत्यादिना-ईयः ॥

पर्वतीयैः । अत्र "पर्वतात्" [ ६० ] इतीयः ॥

पर्वतीयवेपैः । पार्वतीं क्ष्माम् । अत्र "अनरे वा" [ ६१ ] इति वेयः ॥

पर्णीय कृकणीय ।.इत्यत्र "पर्ण०" [ ६२ ] इत्यादिनेयः ॥

गहीय । स्वकीयः । अत्र "गहादिभ्यः" [ ६३ ] इतीयः ॥

**अध्यासितो माध्यममध्यमीयैः सवैणुकीयैर्गिरिरौत्तरीयैः ।**
**आस्माकवंशप्रभवोपि यौष्माकीणप्रसादादयमस्मदीयः ॥ ३५ ॥**

३५. अयं गिरिरर्बुदं आस्माकवंशप्रभवोपि नन्द(न्दि)नीहेतुके विश्वामित्रेण सह विरोधे तच्छिक्षार्थं वसिष्ठेन परमारादिपुरुषो ह्यर्बुद उत्पादित इति यद्यप्यस्माकं वंशस्य परमारान्वयस्योत्पत्तिस्थानं तथापि यौष्माकीणप्रसादादस्मदीयोयं युष्मत्किंकरत्वादस्माकम् । कीदृशोयम् । औत्तरीय उत्तरे प्रशंस्यदेशे भवोत एव सवैणुकीयैर्वेणुके

१ ए सवेणु°. २ बी °यः । असा°.

१ सी °य । आ°. २ बी °टपर्वतर्की°. ३ बी °न्थीयं । दा°. ४ बी °रीयः । दा°. ५ ए सी °र्वती क्ष्मा°. ६ बी °त्र गिरे. सी °त्रनगरे. ७ सी °कण । इ°. ८ सी °हीयः । स्व°. ९ बी °द असा°. १० सी वशिष्ठे°. ११ सी °ति अद्याप्य°. १२ सी °शस्ये दे°. १३ ए बी सत्रीणु°. १४ ए °यैविणु°.

देशे भवा ये मुनिनरादयस्तद्युक्तैर्माध्यममध्यमीयैः पृथिवीमध्यं निवास एषां माध्यमाश्चरणाः पृथिवीमध्ये जाता भवा वा मध्यमीया नरा द्वन्द्वे तैरध्यासितः ॥

**यौष्माकवंशे नु शरण्य आस्माकीनादिमानामिह किंपुरुष्यः ।**
**अयुष्मदीया अपि तावकीना इवाभिगायन्ति यशस्त्वदीयम्**
**॥ ३६ ॥**

३६. इहार्बुदे वर्तमानाः किंपुरुष्यः किंनर्यो युष्मदीया अप्यन्यदीया अपि तावकीना इव त्वदीयं यशोभिगायन्ति । कीदृशीह । आस्माकीनादिमानामस्माकमादिमानामादौ भवानां पूर्वजानां शरण्ये महादुर्गत्वाद्रक्षाहेतौ यौष्माकवंशे नु यथा युष्माकं वंशश्चौलुक्यान्वयोस्मत्पूर्वजानां सदा स्वामित्वेन शरण्यः ॥

**न मामकीना न च तावका ये द्वैप्याः किलामामकवादिनस्ते ।**
**आख्यन्नमुं सोदरमीश्वरस्याध्यायीया मदीयोचितभक्तितुष्टाः ॥३७॥**

३७. ये द्वैप्या द्वीपे समुद्रसमीपस्थदेशे भवा मुनयो न मामकीना न च तावका(काः) सन्ति । यतः । किलेति सत्ये । अमामकवादिनो ममेदं मामकं न तथामामकं तद्वदनशीला निर्ममत्वा इत्यर्थः । ते मुनयोमुमर्बुदाद्रिमीश्वरस्य शंभोरर्ध्यायीया अर्धे शरीरार्धभागे भवायाया गौर्याः सोदरं भ्रातरमाख्यन्नर्थान्ममाग्रे । अर्बुदो हि हिमाद्रेः पुत्र

१ बी °रुपाः । अ°. २ बी °रस्यर्ध्यां°. ३ ए °ष्टाः ॥ द्वी°.

१ सी °वा म°. २ ए °रुपाः किंनार्यायु°. ३ बी किंनार्यो°. ४ बी °दृशाह । अस्मा°. ५ सी °शी । आ°. ६ ए °नामादौ. ७ बी °नादौ. ८ ए °तौ युष्मा°. ९ बी सी °वकीनाः स°. १० बी गौर्यायाः सो°.

इति रूढिः । ननु ते यदि निर्ममत्वेन न तावकास्तत्कथं तवाग्र इदमाख्यन्नित्याह । यतो मदीयोचितभक्तितुष्टाः ॥

मध्यमीयैः । अत्र "पृथिवी०" [ ६४ ] इत्यादिना-ईयो मध्यमादेशश्च ॥

माध्यम । इत्यत्र "निवासाचरणेण्" [ ६५ ] इत्यण् ॥

वैणुकीयैः । औत्तरीयः । अत्र "वेणुक०" [ ६६ ] इत्यादिना-ईयण् ॥

यौष्माक । यौष्माकीणे । आस्माक । आस्माकीन । इत्यत्र "वा युष्मद्०" [ ६७ ] इत्यादिना वाञीनञौ युष्माकास्माकादेशौ च । पक्षे त्यदादित्वेन दुसंज्ञकत्वादीयः । युष्मदीयाः । अस्मदीयः । एकत्वे तु तवकममकौ । तावकाः । तावकीनाः । मामक । मामकीनाः ॥ पक्षे । त्वदीयम् । मदीय ॥

द्वैप्याः । अत्र "द्वीपाद्०" [ ६८ ] इत्यादिना ण्यः ॥

अर्ध्याये । इत्यत्र "अर्धाद्यः" [ ६९ ] इति यः ॥

**पूर्वार्ध्यसानावतिपौष्कराधिकाद्रौ स पौर्वाधिक आश्रमोस्ति ।**
**अस्मिन्वसिष्ठस्य मदीयराष्ट्रपाश्चार्धपौर्वाधिकलोकवन्द्यः ॥ ३८ ॥**

३८. अस्मिन्नर्बुदे स महाप्रभावत्वादिना प्रसिद्धो वसिष्ठस्यर्षेराश्रमोस्ति । एतेनास्य महातीर्थत्वोक्तिः । कीदृक् । मदीयराष्ट्रस्याष्टादशशतेत्याख्यया प्रसिद्धस्यार्बुदेति मौलाभिधानस्य मदीयदेशस्य पश्चार्धे पूर्वार्धे च भवो यो लोकस्तेन वन्द्यस्तथा पौर्वाधिकोद्रिपूर्वार्धे भवः । किंभूतेस्मिन् । पूर्वार्ध्यसानावद्रेः पूर्वार्धे भवाः सानवः प्रस्था

१ ए स पूर्वाद्धिक. २ सी °न्वशिष्ठ°. ३ ए °पौवाधि°.

१ ए सी °ष्माकी°. २ बी °ण । अस्मा°. ३ ए °नामी°. ४ ए °नाः । प°. ५ बी सी °याः । अत्र. ६ सी वशिष्ठ°. ७ ए °शते°. ८ बी °र्वार्द्धभ°. ९ बी °र्वाद्रिभ°.

यत्र तस्मिंस्तथा पुष्कराधे पुष्करद्वीपार्धे भवः पौष्कराधिको योद्रिर्मानुषोत्तरस्तमुच्चैस्त्वेनातिक्रान्ते ॥

पौष्करार्धिक[1]। अत्र "सपूर्वादिकण्" [ ७० ] इतीकण् ॥

पूर्वार्ध्य । पौर्वार्धिकः[2]। अत्र "दिक्पूर्वात्तौ" [ ७१ ] इति येकणौ ॥

राष्ट्रपाश्चार्धे । पौर्वार्धिक । इत्यत्र "ग्राम०" [ ७२ ] इत्यादिनाणिकणौ ॥

परार्ध्यरत्नांशुभिरुत्तमार्ध्यावरार्ध्यवस्त्रे इव धत्त एषः ।
लक्ष्म्याधमार्ध्यीकृतशैलजातोन्तमस्तनूजोनवमो हिमाद्रेः ३९

३९. एषोर्बुदः परार्ध्यरत्नांशुभिः[3] परे प्रकृष्टेर्धे[4] भवानि परार्ध्यानि जात्यानि यानि रत्नानि तेषामंशुभिः कृत्वोत्तमार्ध्या[5]वरार्ध्यवस्त्रे इवोत्तरीयाधोवसने इव धत्ते । यतो लक्ष्म्या लक्ष्मीदेवतया कृत्वाधमार्ध्यीकृतमधमार्धे भवं कृतमधः कृतं शैलजातं गिरिवृन्दं येन सः । तथा हिमाद्रेर्हिमवतो[6]वोधरस्मिन्देशे[7] भवोवमो न तथानवमः प्रकृष्टो[8]न्तमश्चरमस्तनूजः । यो हि लक्ष्म्या श्रिया कृत्वा सर्वोत्कृष्टो महतः प्रकृष्टपुत्र[9]श्च स्यात्स[10] परार्ध्यरत्नांशुभिरुपलक्षिते[11] उत्तमार्ध्यावरार्ध्य[12]वस्त्रे धत्त इत्युक्तिलेशः ॥

परार्ध्य । अवरार्ध्य । अधमार्ध्यीकृत । उत्तमार्ध्य । इत्यत्र "परावर०" [ ७३ ] इत्यादिना यः ॥

अन्तमः[13]। अनवमः[14]। अधम । इत्यत्र "अमोन्त०" [ ७४ ] इत्यादिनामः ॥

---

१ ए °धिकः । अत्र पू°. २ ए °धिक । अ°. ३ ए °रत्नंनुभिः. ४ बी °ष्टेर्द्धभ°. ५ बी °त्तमर्ध्या°. ६ ए °मार्ध्य°. ७ बी °वत्तोबोध°. ८ ए °न्तश्च°. ९ ए °ष्टश्च. १० सी °त्र स्या°. ११ सी °लक्ष्यते. १२ बी °रार्ध्ये व°. १३ सी अतमः. १४ सी °वम । अ°.

अनन्तिमा तीर्थतयाग्रिमाणामपश्चिमं वारिनिधेः कलत्रम् ।
पुनाति पुण्या सरिदादिमा सा मन्दाकिनी मध्यमभागमस्य ॥४०॥

४०. सा प्रसिद्धा मन्दाकिनी गङ्गास्यार्बुदस्य मध्यमभागं पुनाति । कीदृक् । पुण्या पावित्र्यहेतुरत एव तीर्थतयाग्रिमाणामपि । अपिरत्राध्याहार्यः । मुख्यानामप्यनन्तिमा मुख्या महातीर्थमित्यर्थः । तथा सरिदादिमा नदीषु मुख्यात एव वारिनिधेरपश्चिममाद्यं कलत्रम् ॥

अपश्चिमम् । आदिमा । अनन्तिमा । अग्रिमाणाम् । अत्र "पश्चाद्०" [ ७५ ] इत्यादिना-इमः ॥

मध्यम । इत्यत्र "मध्यान्मः" [ ७६ ] इति मः ॥

मध्योपि चाध्यात्मिकपारलौकिकार्थाविदप्यत्र समागमेन ।
स्याज्जन्तुराकस्मिक एव सामानदेशिको वार्षिकमेघकर्तुः ॥ ४१ ॥

४१. अत्रार्बुदे समागमेनात्मसाधनार्थमागमनेन कृत्वा जन्तुः स्यात् । किंभूत इत्याह । आकस्मिक एवाकस्माद्भवस्तथाविधधर्मानुष्ठानाभावेनासंभावितैतथाविधपदत्वादतर्कितोपनतो वार्षिकमेघकर्तुरिन्द्रस्य सामानदेशिकः समानर्द्धिकत्वेनेन्द्रसमाने देशे प्रदेशे भव इन्द्रसामानिको देव इत्यर्थः । किंभूतोपि । मध्योपि नात्युत्कृष्टो नाप्यपकृष्टो मध्यपरिणामोपि विशिष्टशुभपरिणामरहितोपीत्यर्थः । तथाध्यात्ममात्मनि भव आध्यात्मिकः परलोकस्यायं हितत्वेन यद्वा परलोके

१ **ए** °रिधेः. २ **सी** °नी वारिनिधेः कलत्रम् । सा. ३ **सी** °देशको.

१ **ए** °र्थया°. २ **बी** °रिधे°. ३ **ए** °म् । प°. ४ **बी सी** पश्चिमाद्. ५ **ए** °नात्ससा°. ६ **सी** °त्मपावना°. ७ **ए** °ह । क°. ८ **सी** °तस्तथा°. ९ **ए बी** °स्य समा°. १० **सी** °मान्यदेशकः. ११ **बी** नात्कृ°. १२ **ए** °णामर°. १३ **बी सी** °लोकसु°.

परलोकसुखक्रियायां कुशलः पारलौकिक[1] आध्यात्मिको यः पारलौकिकः स योर्थो धर्मलक्षणस्तस्याविद्[2]प्यज्ञातापि निर्धर्मोपि चेत्यर्थः । एतेनास्य महातीर्थत्वोक्तिः ॥

**दत्त्वा द्विजैर्व्रैहिपलालिकर्णमनैशिकीभूय विधीयते द्राक् ।**
**ऐन्द्रो महो मासिक आर्धमासिको वात्र धौतेपरवार्षिकाभ्रैः ४२**

४२. अपरवार्षिकाभ्रैरपरस्यां वर्षायां शरदि भवानि यान्यभ्राणि मेघास्तै[3]र्धौते प्रक्षालिते शरदीत्यर्थः । अत्रार्बुदे द्विजै[4]रैन्द्रो महो विधीयते । कीदृग् । मासिक आर्धमासिको वा मासेर्धमासे वा भवः । किं कृत्वा[5] । व्रैहिपलालिकर्ण[6] व्रीहिपलालसहचरितः[7] कालो व्रीहिपलालं[8] शरत् तत्र देयमृणं द्राग् दत्त्वा । तथा निशासहचरितमध्ययनं निशा तत्र जयी साभ्यासो नैशिको[9] न तथानैशिकश्चावनै(श्चानै?)शिकीभूय निशाध्ययनाभ्यासं मुक्त्वेत्यर्थः । सुखीभूयैकाग्रीभूय[10] च मासमर्धमासं वा यावद्द्विजैराश्विनमासे[11]त्रेन्द्रमहः क्रियेत[12] इत्यर्थः । एतेनात्र गिरावन्यदेशेभ्यो विशिष्ट इन्द्रमहो भवतीत्युक्तम् । यतोन्यदेशेष्वष्टावेव दिनानीन्द्रमहः स्यात् । एवं चात्र धान्यसंपत्त्यु[13]त्कर्षो लोकानामतिप्रक्रीडितत्वप्रमुदितत्वे च सूचितानि । द्विजैरि[14]त्युपलक्षणत्वात्क्षत्रियादीनामपि ग्रहणं तेपि हीन्द्रमहं कुर्वन्ति ॥

---

१ ए दर्थाद्विजौ व्रीहिपलोलि°. २ बी °क अर्ध°.

---

१ ए °किकः स. २ सी °स्तथावि°. ३ ए बी °सैधौते. ४ ए बी °जै. रेन्द्रो. ५ बी °त्वा । व्रीहि°. ६ ए °कर्ण व्री°. ७ बी °च का°. ८ ए °पलोलं. ९ ए °को त°. १० ए °य मा°. ११ ए °मासोत्रे°. १२ ए °यतेत्य°. १३ ए °पत्सु कत्युत्क°. १४ ए द्विजेत्यु°. सी द्विजेत्यु°.

मध्यः। अत्र "मध्ये०" [ ७७ ] इत्यादिना-अः ॥

आध्यात्मिक[1]। आकस्मिकः। अत्र "अध्यात्मादिभ्य इकण्" [ ७८ ] इ[2]नीकण्[3] ॥

सामानदेशिकः[4]। पारलौकिक[5]। इत्यत्र "समान०" [ ७९ ] इत्यादिना-इकण् ॥

वार्षिक। ऋतोर्ञिर्णप्रत्ययस्तदवयवादेक्र(र्के)त्वन्तादपि भवत्यभिधानात्[6] ॥

अपरवार्षिक[7] ॥ कालवाचि। मासिकः[8]। आर्धमासिकः[9][10]। अत्र "वर्षा०" [८०] इत्यादिनेकण् ॥ बहुवचनं यथाकथंचित्कालवृत्तिभ्यः प्रत्ययप्रापणार्थम्। अनैशिकीभूय[11]। व्रैहिपलालिकर्णम् ॥

**श्राद्धक्रिया शारदिकीह मन्दाकिन्यामविघ्नं क्रियते जनेन।**
**यच्छारदौ शारदिकेतरौ वा रोगातपौ नौषधिवृक्षयोगात् ॥ ४३ ॥**

४३. इहार्बुदे मन्दाकिन्यां[12] जनेन शारदिकी श्राद्धपक्षे भवा श्राद्धक्रिया पिण्डप्रदानादिकाविघ्नं निरुपद्रवं क्रियते। यद्[13]यस्मादिहौ[14]षधिवृक्षयोगाच्छारदौ शरत्काले भवौ शारदिकेतरौ वान्यर्तुषु भवौ वा रोगातपौ न स्त ओषधियोगाद्रोगो नास्ति वृक्षयोगाच्चातपो नास्ति ॥

शारदिकी श्राद्धक्रिया। इत्यत्र "शरदः०" [ ८१ ] इत्यादिनेकण् ॥

शारदिकं[15] शारदौ। इत्यत्र "न वा रोगातपे" [ ८२ ] इति वेकण् ॥

---

१ 'वा' इत आरभ्य 'केतरौ' इत्यन्तं **बी** पुस्तके छिन्नम्।

---

१ **ए** °त्मिकः। अध्या°. २ **सी** इनी°. ३ **सी** °ण्। समा°. ४ **ए बी** °शिक। पा°. ५ **बी** °लौक. ६ **बी** °न्तावद°. ७ **ए** °र्षिक। का°. ८ **बी** °सिक। आ°. ९ **ए सी** °कः। अर्ध°. १० **बी सी** °सिक। अ°. ११ **सी** °य। व्रीहि°. १२ **सी** °न्यां मन्त्रिज°. १३ **ए बी** यस्मा°. १४ **बी** °षधेवृ°. १५ **ए सी** °कम् शा°.

प्रादोषिकेऽत्रानुदितेपि चन्द्रे
नैश्यस्त्विषो नैशिकमौ(मो?)षधीनाम् ।
प्रादोषदीपन्ति तमो हरन्त्यः
शौवस्तिकाश्वस्त्यविदाश्रमेषु ॥ ४४ ॥

४४. अत्रार्बुदे[1] प्रादोषिके रजनीमुखभवे चन्द्रेनुदितेपि नैश्यो रात्रौ भवा[2] ओषधीनां त्विषः[3] प्रादोषदीपन्ति प्रदोषभवदीपवदाचरन्ति । केषु । शौवस्तिकं श्वोभवं भविष्यदश्वस्त्यं च वर्तमानमतीतं च विदन्ति ये तेषां ज्ञानवन्मुनीनामाश्रमेषु । किंभूताः सत्यः । नैशिकं तमो हरन्त्यः[4] । एतेनास्य महाप्रभावौषधित्रिकालविन्मुनिनिलयता[5] तोक्ता ॥

नैशिकम् नैश्यः । प्रादोषिके । प्रादोष । इत्यत्र "निशा०" [ ८३ ] इत्यादिनेकण्वा ॥

शौवस्तिक । इत्यत्र "श्वसस्तादिः"[6] [ ८४ ] इतीकण्वा स च तादिः ॥ पक्षे[7] । "ऐषमोह्यःश्वसो वा" [ ६. ३. १९ ] इति त्यच् । श्वस्त्य ॥[8]

भान्तश्चिरत्नेषु चिरंतनन्तस्तथा परुत्नेषु परुत्तनन्तः ।
सिद्धाः परात्नन्त इतः परारितनेषु खेलन्ति विचित्ररूपाः ॥ ४५ ॥

४५. इतोस्मिन्नर्बुदे सिद्धा विद्यासिद्धाः । खेलन्ति बालिकाद्युचितक्रीडाभिः[9] क्रीडन्ति । किंभूताः सन्तः । चिरत्नेषु चिरकालभवेषु वृद्धेषु मध्ये चिरंतनन्तो विद्याबलेन वृद्धवदाचरन्तस्तथा[10] परु-

---

१ बी नैशारित्व°. २ ए °न्त्यः शाव°.

---

१ ए °दे प्रदो°. २ बी सी °वा औष°. ३ ए °षः प्रदो°. ४ ए हहर°. ५ ए बी °लवन्मु°. ६ बी °स्तादेरिति क°. ७ बी °क्षे । एष°. ८ ए सी श्वस्त्यः । भा°. ९ सी बालका°. १० ए °द्धयदाचरंस्त°.

त्नेषु पूर्वस्मिन्संवत्सरे[1] भवेषु बालेषु परुत्तनन्तस्तथा परारितनेषु परतरे संवत्सरे भवेषु तरुणेषु परारित्नन्तोत एव विचित्ररूपा अत एव च[3] भान्तः ॥

**हालाः परारिंतनचूतमध्ये पिबन्परारित्नपरुन्त्तनीस्ताः ।**
**वंश्यान्पुराणांस्तव[1] चारणौघो गायत्यमुष्मिन्नपुरातनान्नु ॥ ४६ ॥**

४६. अमुष्मिन्नर्बुदे चारणौघस्तव पुराणांश्चिरकालीनान्वंश्यान्पूर्वजा[4]नपुरातनानिवधुनातनानिव[5] गायति[6] । तथा गायति यथेदानींतना इव ते भवन्तीत्यर्थः । कीदृक्सन् । हालाः सुराः पिबन् । एतेन शब्दपाटवोक्तिः ।' क । परारिंतनचूतमध्ये तरुणाम्रतरुवनमध्ये । एतेन हालानामाम्रमञ्जरीपातेनातिसौरभोक्तिः शैत्योक्तिश्च । कीदृशीः । परारित्नपरुन्त्तनीः पुराणाः पुराणतराश्च । एतेन परिपूर्णत्वोक्तिः । अत एव ताः सुस्वादुत्वादिगुणैः प्रसिद्धाः ॥

चिरत्नेषु चिरंतनन्तः । परुत्नेषु परुत्तनन्तः । परारित्न परारितनेषु । अत्र "चिर०" [ ८५ ] इत्यादिना वा त्नः ॥ परारेस्त्ने रिलोप इत्येके । परारित्नन्तः ॥ केचित्तु परुत्परार्योस्त्नेऽन्त्यस्वरात्परं त्वागममिच्छन्ति । परुन्त्तनीः । परारिंतन ॥

पुराणान् पुरातनान् । इत्यत्र "पुरो नः" [ ८६ ] इति वा नः ॥

**अर्यम्णि पौर्वाह्णिक आपराह्णिके चोच्चवृक्षैः स्थगिते मुनीन्द्राः ।**
**विदन्ति पूर्वाह्णतनीमथापराह्णेतनीं नाडिकयेह संध्याम् ॥ ४७ ॥**

---

१ बी सी °राणास्त°. २ बी सी °तनीं तथा°. ३ प सी °तनी ना°.

---

१ प °रेषु भ°. २ प °त्तनंस्त°. ३ प च च भा°. ४ बी सी °जान्पुरा° ५ बी °नि गा°. ६ बी °ति च गायति । त°. ७ सी °त्व°. ८ बी सी °नत्यन्त्य°. ९ प बी परन्त°. १० बी नः । आर्ये°.

४७. स्पष्टः । किं तु मुनीन्द्रा योगीशाः । पूर्वाह्णे(ह्ण?)तनीं प्राभातिकीम् । अपराह्णेतनीं प्रादोषिकीम् । नाडिकयोच्छ्वासेन निश्वासेन च कृत्वा विदन्ति । इडापिङ्गलाद्या नाड्यो नासिकोच्छ्वासनिश्वासरूपास्तासां हि सम्यग्ज्ञाने कालज्ञानं स्यात् ॥

पूर्वाह्णतनीम् । अपराह्णेतनीम् । अत्र "पूर्वाह्ण०" [ ८७ ] इत्यादिना वा तनट् ॥ पक्षे । पौर्वाह्णिके । अ(आ)पराह्णिके । अत्र "वर्षाकालेभ्यः" [६.३.८०] इनीकण् ।

**प्राह्णेतनैरेव चिरंतनस्य पूजा प्रगेतन्यचलेश्वरस्य ।**
**दोषातनी च क्रियतेत्र सायंतनैर्विनिद्रैर्विविधप्रसूनैः ॥ ४८ ॥**

४८. अत्रार्बुदे चिरंतनस्य चिरकालीनस्याचलेश्वराख्यशम्भोः प्रगेतनी प्राभातिकी पूजा विविधप्रसूनैः कृत्वा क्रियते । किंभूतैः । प्राह्णेतनैरेव प्राभातिकैरेव प्रभात एवोच्चितैरित्यर्थः । अत एव विनिद्रैर्विकस्वरैः । तथा दोषातनी च सांध्या च पूजा सायंतनैरेव विनिद्रैः कुसुमैः क्रियते ॥

सायंतनैः । चिरंतनस्य । प्राह्णेतनैः । प्रगेतनी ॥ अव्यय । दोषातनी । अत्र "सायं०" [ ८८ ] इत्यादिना तनट् ॥

**पदं नृणां शाश्वतमिच्छतां तत्सांध्यप्रभाभं विदतां शरीरम् ।**
**ग्रैष्माहवद्वृद्धतरोपि पापो नूपक्रमः सिध्यति शीघ्रमत्र ॥ ४९ ॥**

४९. ग्रैष्माहवद् ग्रीष्मे भवं ग्रैष्मं यदहर्दिनं तदिव वृद्धतरोपि बहुकाले फलदत्वेन महत्तरोप्युपक्रमः परमपदप्राप्तिविषयस्तीव्रतपश्चर-

१ बी °दृशतां. २ बी पौपा नू°. सी पौपस्तपःक्र°. ३ ए °त्र । ग्रीष्मा°.

१ बी °यो उच्छ्वा°. २ सी °न च. ३ बी °न निश्वासेन च कृ°. ४ बी इलापि°. ५ बी °लायोना°. ६ सी नासि°. ७ बी नाशिको°. ८ सी निःश्वास°. ९ बी °व्हेन°. १० बी °राह्ण°. ११ सी °श्वरस्य श°. १२ ए °व प्राभा°. १३ ए सांध्यी च. १४ सी °व्रस्तप°.

णादिधर्मानुष्ठानोद्यमोत्रार्बुदे नृणां शीघ्रं सिध्यति फलति । उत्प्रेक्ष्यते[1]। पौषो[2] नु पुष्येण चन्द्रयुक्तेन युक्ते काले भव इव । पौषो[3] हि कार्यारम्भो वृद्धतरोपि[4] शीघ्रं सिध्यति । पुष्यस्य कार्यसिद्धौ पटिष्ठत्वात्[5] । कीदृशां सतां नृणाम् । शरीरं सांध्यप्रभाभं संध्यारागवदस्थिरं विदंतां[6] जानतांम् । एतेन भववैराग्योक्तिः[7] । अत एव तच्छाश्वतं पदं मोक्षमिच्छताम्[8] । योन्यत्र बहुकालेन फलति स मुक्त्युपायोत्र सिद्धक्षेत्रे[9] मुमुक्षुभिरारब्धः क्षिप्रं फलतीत्यर्थः ॥

पौषः ॥ ऋतु । ग्रैष्म ॥ संध्यादि । सांध्य । शाश्वतम् । अत्र "भर्तु०" [ ८९ ] इत्यादिनाण् ॥

**सांवत्सरार्चाफलवाञ्छयेह सांवत्सरे पर्वणि नाभिसूनोः ।**
**हैमन्तिकोषागुरुभक्तयः के नायान्ति हैमन्तदिनाल्पिताघाः ॥ ५० ॥**

५०. इहार्बुदे नाभिसूनोः श्री(श्रि?)ऋषभनाथस्य सांवत्सरे[10] संवत्सरे भवे पर्वणि चैत्रकृष्णाष्टम्यां जन्मोत्सवे के लोका नायान्ति । कया । सांवत्सरार्चाफलवाञ्छया सांवत्सरं संवत्सरे भवं सकलसंवत्सरेणोपार्ज्यमतिगुर्वित्यर्थः[11] । यदर्चायाः[12] फलं स्वर्गादिप्राप्तिस्तस्येच्छया । किंभूताः सन्तः । हैमन्तिकी हेमन्ते भवा योषा रात्रिस्तद्वद्गुर्वी महती भक्तिर्येषां ते तथात एव हैमन्तदिनवदल्पितं लघूकृतमघं पापं यैस्ते[13] । एतेनात्र श्रीनाभेयभवनं महातीर्थमस्तीत्युक्तम् ॥

---

१ ए °त्प्रेक्षते. २ बी पौषा नु. सी पौषः पु°. ३ ए बी पौषा हि. ४ ए वृद्धोत°. ५ बी पदिष्ठ°. ६ सी °दन्तां जा°. ७ बी °ता । ए°. ८ सी °च्छन्ताम्. ९ बी सिद्धि क्षे°. १० ए सी °रे भ°. ११ सी °कलं सं°. १२ ए यदाचार्याः फ°. १३ ए सी यैस्ते । ए°.

वान्प्रावृषेण्यो[1] न्वथ हैमनो नु वातोत्र सिंहाजिनरोमकम्पी ।
सैंहाजिनं प्रावरणं वसानैः सेव्यो रतान्ते शबराङ्गनौघैः[2] ॥५१॥

५१. अत्रार्बुदे सैंहाजिनं सिंहचर्मण इदं प्रावरणं वस्त्रं वसानैः परिदधानैः शबराङ्गनौघै रतान्ते वातो वान् सेव्यते यतः प्रावृषेण्यो न्वथ हैमनो नु गिरेरस्य जलबहुलत्वेन[1] तरुच्छायाबहुलत्वेन च वायोः सदा शीतत्वाज्ज्ञायते[2] प्रावृषि भव इव[3] हेमन्ते भव इव वा । तथा सिंहाजिनरोमकम्पी सिंहाजिने भवानि रोमाणि कम्पयति[4] । एतेन मार्दवोक्तिः ॥

न माथुरौत्सं धनपुण्यमश्वत्थामा इहादुष्करदुर्लभार्थे ।
सुसंभवादुष्क्रयपुण्यकेश्वत्थाम्नोपरे वा ऋषयः स्मरन्ति ॥ ५२ ॥

५२. इहार्बुदे वर्तमाना अश्वत्थामा[5] अश्वत्थाम्नो[6] द्रोणाचार्यपुत्रस्य[7] महर्षेः संबन्धिन ऋषयोश्वत्थाम्नोश्वत्थामसंबन्धिन ऋषिसमूहादपरे वा ऋषयो द्विजा न स्मरन्ति । किमित्याह । मथुरायां यागकरणादिना[8] कृतं प्रतिग्रहादिना[9] लब्धं वा माथुरं तथोत्सदेशे तीर्थस्नानपिण्डप्रदानादिरूपमूल्येन क्रीतं रोगाद्युपद्रवाभावेन संभूतं वौत्सं द्वन्द्वे माथुरौत्सं धनपुण्यं धनं मुनिप्रायोग्यं धान्यगवादि[10] पुण्यं तीर्थस्नानपिण्डप्रदानाद्युद्भवो धर्मो द्वन्द्वे तन्माथुरं[11] धनमौत्सं पुण्यं चेत्यर्थः । यतः । कीदृशीह । दुष्करश्चासौ दुर्लभश्च दुष्करदुर्लभो न तथादुष्करदुर्लभोर्थो द्रव्यं यत्र[12] तस्मिन्ननेकवस्तूनामाकरत्वाद[13]दुष्करद्रव्ये वास्तव्येश्व-

१ ए °षेणो न्व°. २ ए °ङ्गनोघैः.

१ सी °न वा°. २ ए सी °त्वाज्जाय°. ३ ए सी °व वा. ४ ए °म्पयिता । ए°. ५ सी °यता । ए°. ६ सी °त्थाम्नो अ°. ७ सी °स्यर्षेः. ८ बी °गकार°. ९ सी °ना वा ल°. १० सी धान्यं ग°. ११ ए °थुरध°. १२ बी यत् त°. १३ बी °माकारत्वाद्°.

रोदारलोकत्वाच्चादुर्लभद्रव्ये चेत्यर्थः । तथा सुसंभवं रोगाद्युपद्रवाभावेन धर्मोपष्टम्भकदानसद्भावेन च सुघटमदुष्क्रयं चानेकपुण्यक्षेत्राद्याधारत्वेन सुखक्रेतव्यं पुण्यं धर्मो यत्र तस्मिन् । इदमुक्तं स्यात् । किलान्यदेशेभ्यो मथुरायां स्वभावेन लोकस्य धार्मिकत्वादीश्वरोदारत्वाच्च प्रभूतैयागादिप्रवृत्तिदानप्रवृत्तिभ्यां द्विजा बहु धनमुपार्जयन्ति लभन्ते च । उत्सदेशे चान्यदेशेभ्योतिपुण्यक्षेत्रात्मके द्विजानां प्रभूतस्य पुण्यस्य तीर्थवन्दनादिना क्रयः संभवश्च स्यात् । ताभ्यामपि सकाशादत्र गिरौ बहुतमयागप्रवृत्तिदानप्रवृत्त्यादिनानेकपुण्यक्षेत्रदर्शनादिना चातिप्रभूतधनोपार्जनालाभाभ्यां प्रभूतपुण्यक्रयसंभवाभ्यां च मथुरायामुपार्जितं लब्धं च धनमुत्से च क्रीतं संभूतं च पुण्यं न स्मरन्ति ॥

**शंसन्ति नादेयमिवाशु नादेया राष्ट्रियं राष्ट्रियवच्च सम्यक् ।**
**ता रत्नखानीः पथकाः किराता इहाश्मकाकर्षकशिल्पिकानाम् ॥ ५३ ॥**

५३. इहार्बुदे पथकाः पथि कुशलाः किराता अश्मकाकर्षकशिल्पिकानामश्मनि पाषाणकर्मण्याकर्षे रमणे शिल्पे कलाविज्ञाने च कुशलानां सूत्रधारद्यूतकारचित्रकारादीनां पुरतस्ताः प्रसिद्धा रत्नखानीर्जातौ जातौ यान्युत्कृष्टानि तानि रत्नानि तेषां खानीराकरान्सम्यगवितथमाशु प्रशंसन्ति । अश्मकानां पुर उत्कृष्टा अश्मखानीर्यू(र्यू)तव्यसने-

१ सी °चा × × × प्रभूतया°. २ प °धर्मोप°. ३ प °न लोकस्य. ४ बी °तयोगा°. ५ सी °हुधा ध°. ६ सी °त्रास्तिके. ७ बी °तमाया°. ८ प °तं पु°. ९ सी च न. १० बी °त्रकरा°. ११ सी °रः स्थाप्र°. १२ प °सिद्धरत्नाखानीपथकाः किराता इहासकाकर्षकशिल्पिकानोर्जा°. १३ प °रासम्य°. १४ बी सी °ष्टाश्म° १५ प °नीर्जाद्यु°.

नात्यन्तमृणार्तत्वाद्रत्ना[1]द्यर्थं परिभ्राम्य[2]तामाकर्षकाणां च पुर उत्कृष्टरत्न-खानी[3]: शिल्पिकानां च पुर उत्कृष्ट[4]धातुखानीरत्नत्या वर्णय[5]न्तीत्यर्थः। यथा नादेया [6]नद्यां[7] नदीतरणे कुशला नाविका नादेयं लोकस्य निस्तारणादिना नद्यां[8] कृतं लब्धं क्रीतं संभूतं वा धनं प्रशंसन्ति। यथा वा राष्ट्रिया राष्ट्ररक्षणादौ कु[9]शला भूपादयो [10]राष्ट्रियं राष्ट्रे लोकपा[11]लनादिना कृतं लब्धं क्रीतं संभूतं वा द्रव्यं प्रशंसन्ति ॥

सांवत्सरार्चाफल। सांवत्सरे पर्वणि। इत्यत्र "संवत्सरात्०" [ ९० ] इत्यादिनाण् ॥

हैमनः। हैमन्तः[12](न्त)। हैमन्तिक। अत्र "हैमन्ताद्वा तलुक् च" [ ९१ ] इति वाण् तत्संनियो[13]गे तलुक् च वा ॥

प्रावृषेण्यः। अत्र "प्रावृष एण्यः" [ ९२ ] इत्येण्यः ॥

अश्वत्थाम्नः। अत्र "अः स्थाम्नः" [ ६.१.२२ ] इत्यप्रत्ययस्य सिंहा[14]जिन। इत्यत्राणश्च "स्थाम०" [ ९३ ] इत्यादिना लु[15]ब्वा। पक्षे। अश्वत्था[16]मा: ॥ सैंहाजिनम् ॥

माथुरोत्सम्। नादेयम्। राष्ट्रियम्। अत्र "तत्र कृत०" [ ९४ ] इत्यादिना यथायोगम[17]णादय एयणादयश्च ॥

नादेयाः। राष्ट्रियवत्। इत्यत्र "कुशले" [९५] इति यथाविहितं प्रत्ययाः ॥

पथकाः। अत्र "पथोकः" [ ९६ ] इत्यकः ॥

अश्मकाकर्षक। इत्यत्र "कोश्मादेः" [ ९७ ] इति कः ॥

---

१ **प** °द्ररत्ना°. २ **बी** °म्यतमा°. ३ **बी** °खानी शि°. ४ **प** °त्क्रष्टं धा°. ५ **प** °यतीत्य°. ६ **प** नद्या न°. ७ **सी** °द्यां त°. ८ **बी** °द्यां क्रीतं. ९ **प** °शलभू°. १० **प** राष्ट्रेयं. ११ **प** °पालादि°. १२ **प** °न्तः। हेमन्तिकः। अ°. १३ **बी** °योगो त°. १४ **प** °हाजन. १५ **प** लुक् च वा। प°. १६ **बी** °त्थामा। सैं°. १७ **प** °मण्याद°.

कालेयवत्स्रौघ्नवधूषु शारदकेष्विव प्राावृषिकाब्दवृष्टिः ।
ससिन्धुकापत्करिकापकर्या च सैन्धवीहाप्सरसो विभान्ति ॥५४॥

५४. इहार्बुदेप्सरसो विभान्ति स्वर्गेपि दुर्लभैस्तैस्तैः शाद्वलवनखण्डादिरम्यैः क्रीडास्थानविशेषैर्विशेषितत्वाच्छोभन्ते । काः कास्तत्राह । ससिन्धुका सिन्धौ जाता सिन्धुका नाम देवी तया युक्तापत्करिकापकरे कचवरे जातापकरिकाख्या देवी तथापकर्यैवंनाम्न्या देव्या सह सैन्धवी चैवं नाम्नी देवी चेति । यथा स्रौघ्नवधूषु स्रुघ्नदेशजातासु स्त्रीषु कलौ जातं कालेयं कुङ्कुमं वधूरूपादिविशेषेण विशेषितत्वाद्भाति यथा वा शारदकेषु शरदि जातेषु मुद्गविशेषेषु दर्भेषु वा प्रावृषिकाब्दवृष्टिर्वर्षाकालजातमेघवृष्टिः फलाद्युपचयविशेषेण विशेषितत्वाद्भाति । एतेनैवं नामायं शैलो रम्यो येनात्र देव्योपि क्रीडन्तीत्युक्तम् । सिन्धुकादीनां देवीनां मिलितानां बहुत्वादप्सरस इत्यत्र बहुवचनम् । यद्वैकस्मिन्नप्यर्थे वाच्येप्सरश्शब्दः स्वभावेन बहुवचनान्त इति बहुवचनम् ॥

स्रौघ्न । कालेय । इत्यत्र "जाते" [ ९८ ] इति यथाविहितं प्रत्ययाः ॥

प्रावृषिक । इत्यत्र "प्रावृष इकः" [ ९९ ] इतीकः ॥

शारदकेषु । इत्यत्र "नाम्नि०" [ १०० ] इत्यादिनाकञ् ॥

सिन्धुका । सैन्धवी । अपकरिका । अपकर्या । इत्यत्र "सिन्धु०" [ १०१ ] इत्यादिना कोण्च ॥

१ ए °ब्दधृष्टिः. २ ए °पवार्या.

१ बी सी °भैः शाड्वल°. २ ए बी °न्ते । का का तत्रा°. ३ ए तत्रायु°. ४ बी °पकारि°. ५ सी °देशेषु मुद्र°. ६ सी °षु या प्रा°. ७ ए °न व°. ८ सी इती°. ९ सी °रदिके°. १० बी सी °पकार्या.

**पूर्वाह्णकोस्मिन्नपराह्णकेन प्रदोषकोवस्करकार्द्रकाभ्याम् ।**
**यक्षैरमावास्यकपन्थकामावास्यैः सुरः खेलति मूलकश्च ॥ ५५ ॥**

५५. स्पष्टः[1] । किं तु पूर्वाह्णकादीनि[2] नामानि । पूर्वाह्णे जात इत्या-[3]दिर्निरुक्तिः कार्या ॥

पूर्वाह्णकः । अपराह्णकेन । आर्द्रकाभ्याम् । मूलकः । प्रदोषकः । अवस्करक । इत्यत्र "पूर्वाह्ण०" [ १०२ ] इत्यादिनाकः ॥

पन्थक । इत्यत्र "पथः पन्थ[4] च" [ १०३ ] इत्यकः[5] पन्थादेशश्च[6] ॥

अमावास्यैः । अमावास्यक । इत्यत्र "अश्च०" [ १०४ ] इत्यादिना-अ-अकौ वा । पक्षे । अ(आ)मावास्यैः ॥

**आषाढ्यषाढं बहुलं श्रविष्ठाषाढीयमन्तस्तरु फल्गुनी च ।**
**श्राविष्ठ्य[1]नूराधमिहामरी श्राविष्ठीय ऋच्छत्यथ फाल्गुनं च ॥५६॥**

५६. इहार्बुदेषाढाभिश्चन्द्रयुक्ताभिर्युक्तः[7] कालोषाढा[8]स्तासु जाताषाढी नामामरी देव्यषाढम[9]षाढासु जातं देवमन्तस्तरु वृक्षखण्ड[10]मध्य ऋच्छति क्रीडायै गच्छति । तथा श्रविष्ठा[11] धनिष्ठासु जातामरी बहुलं कृत्तिकासु जातं देवमृच्छति । तथा फल्गुनी च फल्गुन्योर्जाता चामर्याषाढीयं देवमृच्छति । श्राविष्ठी चानूराधमृच्छति । अथ तथा श्राविष्ठीया फाल्गुनं चर्च्छति ॥

---

१ ए °विर्ष्ठी°.

---

१ बी स्पष्टम् । किं. २ ए °दीनां ना°. ३ सी °दिनिरु°. ४ सी पन्था°. ५ ए °कः पन्थः प°. ६ बी पथादे°. ७ बी °र्युक्तका°. ८ सी °लोष्यषा°. ९ बी देव्याषाढमाषाढा°. १० बी °क्षषण्ड°. ११ सी °ष्ठासु.

पुष्योत्र स स्वातिविशा[1]खह[2]स्ताः स[3]रैवतौ तिष्यपुनर्वसू च ।
स[4]रौहि[5]णौ रेव[6]तरोहिणौ च चित्रः सचैत्रः खचरा रमन्ते ५७

५७. स्पष्टम् । किं तु स प्रसिद्धः पु[1]ष्यः । पु[2]ष्यादीनि नामानि ॥

चित्रा च रेवत्यथ रोहिणी च माघाश्विनौ क्[7]त्तिककार्तिकौ च ।
गोस्थानगोशालकवत्सशाला नृपा असिध्यन्खरशालयुक्ताः ॥५८॥

५८. स्पष्टम् । किं तु गवां शाला गोशालं "सेनाशाला०" इत्यादिना क्लीबत्[3]वम् । तत्र गोशालायां वा देशे जातो गोशालोज्ञातो गोशालो गोशालकः ॥

स वात्सशालोमुमुमासमानोदर्यं ससोदर्य इयाय[8] गूढः[9] ।
कलापकाश्वत्थकमासिकं नु श्रीमातुरर्चां क्षितिपः प्रदातुम् ॥५९॥

५९. स[4]सोदर्यः सहोदरेण युक्तः स प्रसिद्धो वत्सशाले वत्सशालायां[5] वा देशे[6] जातो वात्सशालो नाम क्षितिपो गूढः पर[7]राष्ट्रप्रवेशेन शत्रुभयात्प्रच्छन्नः सन्नुमासमानोदर्यं गौर्याः सहोदरममुमर्बुदमियाययौ । इण् धातुराङ् विनाप्यागमनेर्थे दृश्यते । किं कर्तुम् । श्रीमातुर्लक्ष्मीदेव्या अर्चां प्रदातुम् । उत्[9]प्रेक्ष्यते । कलापकाश्वत्[10]थकमासिकं नु । यस्मिन्काले मयूराः केदारा इक्षवश्च कलापि[11]नः स्युः स कालस्तत्साहचर्यात्कलापी तत्र देयमृणं कलापकं तथा यस्मिन्कालेश्वत्थाः फलन्ति

१ बी °शाषह°. २ प सी °हस्ता स°. ३ बी सरेव°. ४ सी सरोहिणो रे°. ५ बी °हिणै रे°. ६ प °तरौहि°. ७ प सी कृत्तिक°. ८ बी °पान्ससि°. ९ बी °य गाढः.

१ प सी पुष्य । पु°. २ बी पुष्फादी°. ३ सी °ता । त्यत्र. ४ बी ससौंद°. ५ सी °यां दे°. ६ प °शे तो. सी °शे वा जा°. ७ बी °र उपरा°. ८ प °त्रः मा°. ९ सी °त्प्रेक्षते. १० बी °त्थकामा°. ११ सी °नः स्युस्त°.

स कालोश्वत्थफलसहचरितोश्वत्थस्तत्र देयमृणमश्वत्थकं तथा मा[1]से देय-[2]मृणं मासिकं समाहारद्वन्द्वे तदिव ॥

**न ग्रैष्मकं यावबुसक्यवन्नोमा[1]व्यासकं नैपमकं न चापि ।**
**नाप्यावराद्यं समकं जनानामस्योपकण्ठेखिलधातुखा[2]नेः ॥६०॥**

६०. अस्यार्बुदस्योपकण्ठे समीपे वर्तमानानां जनानां[3] ग्रैष्मकं ग्रीष्मे देयमृणं नास्ति । तथा यस्मिन्काले यवानां बुसं स्यात्स कालो [4]यवबुसस्तत्र देयमृणं यवबुसकं तस्य भावो यावबुसक्यं तदस्यास्ति यावबुसक्य[5]यवद्यवबुसकमृणमित्यर्थः । नास्ति । तथोमाव्यासकमुमा व्यस्यन्ते यस्मि[6]न्स काल उमाव्यासस्तत्र देयमृणं च नास्ति । न चा-[7]प्यैपमर्कम[8]स्मिन्संवत्सरे देयमृणमस्ति । तथावराद्यं समकमवरा समा संवत्सरोवरसमा समाया अवरत्वमित्यवरसमं वा तत्र देयमृणं ना-[9]प्यस्ति। यतः । किंभूतस्य । अखिला धातवः स्वर्णा[10]द्या यासु ताः खानय आकरा यत्र तस्य ॥

**अस्तापरप्राक्समकाँ[3]ग्रहायणकाः श्रियो मातुरुपेत्य लोकाः ।**
**फला[4]नि सांवत्सरिकाणि दात्र्याः पर्वेह सांवत्सरिकं दिशन्ति ६१**

६१. लोका उपेत्य दूरादागत्ये[11]हार्बुदे श्रियो मातुः सांवत्सरिकं संवत्सरे देयमृणं पर्व यात्रोत्सवं दिशन्ति ददे[12]ति कुर्व[13]न्तीत्यर्थः । यतः । किंभूताः । अस्ते श्रीदेव्यैव क्षिप्त आपरप्राक्समकमपरसमायामपरसमे

१ प °मान्यास°. २ प °खानो । अ°. सी °खाने । अ°. ३ बी °काग्राहय°. ४ बी °लाणि सां°.

१ बी मारो दे°. सी मासि दे°. २ बी °णं यवबुसकं तस्य. ३ प °नां ग्रिष्म°. ४ प °यबु°. ५ प बी क्यतद्य°. ६ प बी °स्मिन्काल. ७ सी °प्यैक°. ८ प °कस्मि°. ९ प °प्यसि । य°. १० प °द्यायाःसु. ११ प °त्ये श्रि°. १२ सी °दन्ति कु°. १३ प सी °वंतीत्य°.

वा देयमाग्रहायणकमाग्रहायण्यां मार्गशीर्ष्यां देयं च ऋणे येषां ते तथा। यतः। कीदृश्याः श्रियः। फलानि धनधान्यलाभादीनि दात्र्याः। किंभूतानि । सांवत्सरिकाणि लोकैः सांवत्सरिकपर्वणाराधितत्वेन लोकानामवश्यं देयत्वेन संवत्सरे लक्ष्म्या [1]ऋणभूतानि देयानि ॥

फलं च सां[1]वत्सरकं प्रदायी पर्वेव मेमुं नि[2]कषैष देशः ।
[3]द्राक्छारदेनोद्दलिताग्रहायणिको भृशं शालियवेन भाति ॥६२॥

६२. हे राजन्नमुमर्बुदं नि[2]कर्षोस्य समीप एष प्रत्यक्षो देशश्च शालियवेन शालिभिर्यवैश्च कृत्वा भृशमत्यर्थं भाति । कीदृशा । शारदेन शरदि पच्यन्ते ते शारदाः शालयस्तथा शरद्युप्ताः शारदा यवाः समाहारद्वन्द्वे "स्यादावसंख्येयः" [ ३. १. ११९. ] इत्येकशेषे शारदं तेन । कीदृक्सन् । सांवत्सरकं संवत्सरे देयमृणं पर्वेव श्रीदेव्युत्सवमिव फलं लक्षसंख्यराजग्राह्यभागद्रव्यादि मे मम विक्रमसिंहस्य प्रदायी । एतद्देशप्रदत्तेन द्रव्येण हि सां[3]वत्सरकं पर्व श्रीदेव्या मया प्रतिवर्षं क्रियतेतश्च तत्पर्वणोनेन प्रतिवर्षं करणीयत्वादृणभूतं तद्यथासौ ददाति तथा फलमप्यनेकधनधान्यादि ददित्यर्थः । अत [4]एव [5]द्रागुद्दलितं विना[6]शितमाग्रहा[7]यणिक[8]माग्रहायण्यां देयमृणं येनार्थान्मम स तथा ॥

ग्राम्या अमी हैमनवाससस्त्वेक्षन्तेनुवासन्ति महर्द्धयोन्नैः ।
आश्वात्परस्मिन्युजकैश्च वासन्तकैश्च वासन्तविलक्षणैश्च ॥६३॥

६३. प्रस्तावादत्रार्बुदेनुवासन्ति वसन्ते पुष्प(ष्य?)न्ति

१ बी °त्सरिकं. २ ए बी °षैक दे°. ३ ए सी द्राक् शार°.

१ ए ऋमण°. २ सी °पाद्य स°. ३ बी °त्सरिकं. ४ ए ए द्रा°. ५ बी द्राग्दलि°. ६ बी °तमग्रेहा°. ७ सी °यण्यां. ८ बी °माग्राहा°.

वासन्त्यः कुन्दलतास्तासां समीपे वर्तमाना अमी प्रत्यक्षा[1] ग्राम्यास्त्वा त्वामीक्षन्ते[2] कौतुकात्पश्यन्ति । किंभूताः । हैमनानि स्थौल्यनिबिडत्वादिना हेमन्ते साधूनि वासांसि येषां ते तथाग्नैर्धान्यैर्महर्द्धयः[3] । किंभूतैः । आश्वात्परस्मिन्युजकैश्चाश्वयुजकैश्चा[4]श्विनीपर्यायोश्वयुगाभिश्चन्द्रयुक्ताभिर्युक्ता पौर्णमास्या[5]श्वयुजी । यद्यप्यत्र पौर्णमासीत्यस्य साक्षादप्रयुक्तत्वादण्लोपः[6] प्राप्नोति तथापि चैत्रीत्यादि[7]ज्ञापकाद् "आश्वयुज्या अकञ्" [ ६. ३. ११९ ] इति ज्ञापकाच्च[8] पौर्णमास्यां वाच्यायां लोपो न स्यात् । तस्यामुप्तैश्च तथा वासन्ति(न्त?)कैश्च[9] वसन्त उप्तैश्च । तथा वासन्त[10]विलक्षणैश्च वसन्त उप्तेभ्य इतरैश्च ॥

**योग्रैष्मसग्रैष्मकसस्यभूम्योर्विग्रैणयोर्नैशिकयोश्च यो वा ।**
**अस्यान्यशैलस्य[1] च तं विशेषं प्रचक्षते राष्ट्रियदिश्यमुख्याः ॥६४॥**

६४. राष्ट्रियदिश्यमुख्या राष्ट्रियेषु राष्ट्रे देशे भवेषु दिश्येषु च सर्वदिग्भवेषु लोकेषु मध्ये मुख आदौ भवा मुख्याः श्रेष्ठा अस्यार्बुदस्यान्यशैलस्य[10] च तं विशेषं भेदं प्रचक्षते यः शाद्वलत्वादिकृतो विशेषोग्रैष्मसग्रैष्मकसस्य[11]भूम्योग्री[12](र्ग्री)ष्म उप्तानि ग्रैष्माणि[13] सस्यानि न विद्यन्ते[14] ग्रैष्माण्यत्राग्रैष्मो विरोधेत्र नञ् । तेन[15] ग्रीष्मर्तुविरोधी यो वर्षर्तुस्तत्रत्य[16]सस्यान्वितो देशस्तथा ग्रैष्मकैः सहास्ति यः स सग्रैष्मको देशोग्रैष्मश्च[17]

१ ए °स्य तं.

१ ए बी °त्यक्ष्या ग्रा°. २ बी °मीक्ष्यन्ते. ३ ए °धान्यैर्धा°. ४ बी °कैश्चाश्वि°. ५ बी पौर्णिमा°. ६ बी °दलोपः. ७ ए °त्रीत्यदि°. ८ ए °च पूर्ण°. ९ ए सी °सन्तिवि°. १० ए °लस्यो च. ११ सी °कशस्य°. १२ ए °भूम्यो ग्रै°. १३ सी °णि शस्या°. १४ बी °द्यते ग्रै°. १५ ए °न ग्रैष्म°. १६ सी °त्यदेशान्वि°. १७ सी °ष्मकश्च.

सं[1]ग्रैष्मकश्चेति सामान्ये[2]न द्वन्द्वं कृत्वा ततो विशेषविवक्षया स्त्रीत्वे-ग्रैष्मसग्रैष्मके ये[3] सस्यभूमी तयोर्वर्षाकाल[4]ग्रीष्मकालसस्यभू[5]म्योरस्ति[6] यो माधुर्यव्यक्ततादिकृतो विशेषो विप्रैणयोर्द्विजहरिणविशेषयोश्च स्यात् । कीदृशोः स[7]तोः । नैशिकयोर्निशासहचरितमध्ययनं निशा तत्र [8]जयी साभ्यासो नैशिको द्विजस्तथा निशायां व्याहरति नैशिक एणो द्व[9]न्द्वे "स्यादावसंख्येयः" [ ३. १. ११९ ] इत्येकशेषे नै[10]शिकौ । तयोः ॥

**गोविन्दपद्येव पुरोस्ति व[1]र्णासैषा[2]नुदक्येव सरिन्निपेव्या ।**
**माध्यंदिना सानुमतोस्य मध्यंदिनाम्बुजा माध्यमकैरवा च ॥६५॥**

६५. अस्य सानुमतोर्बुदस्य माध्यंदिना मध्ये भवैषा प्रत्यक्षा वर्णासा[11] वर्नासे[12]ति नाम्ना प्रसिद्धा सरित्पुरोस्ति गोविन्दपद्येव पादे भवा पद्या गोविन्दस्य पद्या गोविन्दपद्या गङ्गा सा[13] यथा पुरोस्ति । किंभूता[14] । म[15]ध्यंदिनानि मध्ये भवान्यम्बुजानि यस्यां सा तथा माध्यमानि मध्ये भवानि कैरवाणि यस्यां सात एवा[16]नुदक्येवारजस्वला स्त्रीव निपेव्या लोकैः सेव्या ॥

**द्राग्मध्यमीयाश्मचये स्खलन्त्योङ्गुलीयवत्क्वापि विभान्ति वीच्यः ।**
**क्वचिट्टवर्गीयवदत्र जिह्वामूलीयवत्क्वापि च वारिवर्ग्याः ॥ ६६ ॥**

६६. अ[17]त्र वर्णासानद्यां वारिवर्ग्या वारिवर्गे जलौघे भवा वीच्यः कल्लोलाः क्वापि प्रदेशेङ्गुलीयवन्मुद्रिकाकारा भान्ति क्वचिच्च टवर्गीयवट्ट-

---

१ **प** °णास्तेषा°.  २ **बी** °षावदुक्ये°.

---

१ **बी** समग्रै°.  २ **प** °न्ये द्व°.  ३ **सी** ये शस्य°.  ४ **प** °लग्रैष्म°.  ५ **बी** भूमौरास्ति.  ६ **प सी** °स्ति तथा यो.  ७ **बी** °सतोनै°. **सी** °सतोनिशि°.  ८ **प** न सा°.  ९ **बी** द्वन्द्वं स्याद्याव°.  १० **बी** °शिके । त°.  ११ **सी** °सा बना°.  १२ **प** °नाशेति°.  १३ **प** सा पु°.  १४ **बी** °ता । माध्यं°.  १५ **प** मध्यदि°.  १६ **बी** °वामुदक्योवा°.  १७ **बी** अव°.

वर्गे भवाष्टवर्गीया[1]ष्टठडढणास्तदाकारा भान्ति । क्वापि च जिह्वामूलीयवद्व्रश्चाकारवर्णा[2]कारा भान्ति । यतो मध्यमीयाश्मच[3]ये नदीमध्यभवे शिलौघे द्राक्स्खलन्त्यः ॥

सुरेभवर्गीयगजाः सुराश्ववर्गीणवाहाः पृतना[1]स्तटेस्याः ।
अर्हन्त्यवास्तेयसकालशेयदार्तेयघोषे तव विश्रमं तत् ॥ ६७ ॥

६७. तत्तस्माद्धेतोर्हे राजंस्तव पृतनाः सेना अस्या वर्णासानद्यास्तटे विश्रममर्हन्ति । कीदृश्यः । सुरेभवर्गीया ऐरावणपक्षे भवा ऐ[4]रावणतुल्या इत्यर्थः । गजा यासु ता[5]ः । तथा सुराश्ववर्गीणा उच्चैःश्रवस्तुल्या वाहा अश्वा यासु ताः । यतः । किंभूते तटे । अविद्यमानं वास्तेयं[6] वस्तौ पुरीषनिर्गमरन्ध्रे भवं पुरीषं यत्र तदवास्तेयम् । एतेन[7] पावित्र्योक्तिः । अत एव कलश्यां घटे भवः कालशेयस्तथा दृतौ खल्ले भवो दार्तेयो द्वन्द्वे कालशेयदार्तेयौ[8] यौ घोषौ जलभरणोत्थौ शब्दौ ताभ्यां सहास्ति यं[9]त्तत्तथा । एतेन नदीजल[10]स्य पेयत्वोक्तिः । विशेषणकर्मधारयेवास्तेयसकालशेयदार्तेयघोषं तस्मिन् ॥

आहेयभोगोपमहस्तहस्तिग्रैवेयदामप्रतिबन्धपात्रम् ।
सन्त्वद्रिकौक्षेयमहीरुहः कुम्भास्तेयपङ्कारुणिताग्रशाखाः ॥६८॥

६८. कुक्षौ मध्ये[11] भवाः कौक्षेया[12] अद्रेरर्बुदस्य कौक्षेया ये महीरुहो वृक्षास्ते सन्तु । कथंभूताः । अहौ भव आहेयो यो भोगः कायस्तेनोपमा दीर्घत्ववक्रत्वादिना सादृश्यं येषां ते तथा हस्ताः शुण्डा येषां ते तथा ये हस्तिनस्तेषां ग्रैवेयाणि ग्रीवासु भवानि यानि दामानि

---

१ प °नातटे°.

---

१ प ष्टटगणा°. २ प °र्णा भा°. ३ प °च न°. ४ प ऐण°. ५ प सी °ताः । सु°. ६ प सी °यं वास्तौ. ७ प °न पवि°. ८ बी °र्तेययौ. ९ बी यत्र तत्तथा. १० सी °लस्यापे°. ११ बी मध्यभ°. १२ प °या आद्रे°.

बन्धनशृङ्खलास्तैर्यः प्रतिबन्धस्तस्य पात्रं स्थानम् । किंभूताः सन्तः । अस्ति विद्यमाने मदेङ्कुशप्रहारोत्थेसृजि वा भव आस्तेयो यः पङ्कः स आस्तेयपङ्को रजःपातादिना संजातो मदस्य रक्तस्य वा कर्दमः कुम्भेषु य था(आ)स्तेयपङ्कस्तेनारुणिताः कुम्भकण्डूयनेन रक्तीकृता अग्रशाखाः शाखाग्राणि येषां ते तथा ॥

श्रीग्रैवहाराहरदोस्तु चातुर्मासी नु गाम्भीर्यमनस्क पर्व[1] ।
अदैव्यबाह्ये[2] त्वयि देव चातुर्मास्यप्रियाणां क्षितिपाश्वजन्येद्र ६९

६९. हे श्रीग्रैवहार[2] श्रियः साम्राज्यलक्ष्म्या अलंकारकत्वाद्ग्रीवाभवहारतुल्य तथा गम्भीरेषु दुरवगाहेषु वस्तुषु भवं गाम्भीर्यं मनो यस्य हे गाम्भीर्यमनस्क दुरवगाहत्वेन निश्चेतुमशक्येष्वपि कार्येषु निश्चायिकाबुद्धे तथा चतुर्षु मासेषु भवानि चातुर्मास्यानि यज्ञकर्माणि प्रियाणि येषां[3] ते तेषां चतुर्णामाश्रमाणां देव[4] रक्षक[5]त्वात्स्वामिंस्तथा हे क्षितिपाश्वजन्येद्र[6] पृथिव्यां[7] पालकत्वाद्विष्णुतुल्य त्वयि सत्यदोद्यतनमहर्दिनं पर्वास्तु त्वदावासनिकया[8] महानन्द[9]हेतुत्वान्महोत्सवरूपं भवतु । यतः । किंभूते त्वयि[10] । अदैव्यबाह्ये[11] देवेषु भवा दैव्या देवा एवं[12] तेभ्यो बाह्यो बहिर्भूतो न तथा तस्मिन्[13] रूपादिना देवतुल्य इत्यर्थः । चातुर्मासी नु यथा चतुर्षु मासेषु भवा चातुर्मास्याषाढी[14] कार्तिकी फाल्गुनी वा पूर्णिमा पर्वदिनं भवति ॥

---

१ ए °र्व । आदैयबाह्ये. २ सी °दैवबा°.

---

१ सी °षु था°. २ बी °ग्रैवेयहा°. ३ बी सी °षां तेषां. ४ ए देवा र°. ५ बी रक°. ६ बी °श्वयज्ञेद्र. ७ बी सी पृथ्व्यां पा°. ८ बी °समिक°. ९ ए °न्दत्वा°. १० ए °भूतेः । त्वद्यदै°. ११ ए °ह्येषु दे°. १२ ए सी एते°. १३ बी °न् कृपा°. १४ ए °स्याखाढी.

श्राविष्ठीया[1]। श्रविष्ठा। आषाढीयम्[2]। अषाढम्। अत्र "श्रविष्ठा०" [१०५] इत्यादिना नाम्नीयण् अश्च ॥ अणमपीच्छन्त्येके। श्राविष्ठी आषाढी ॥

फा(फ)ल्गुनी। इत्यत्र "फल्गुन्याष्टः" [ १०६ ] इति टः ॥ अणमपीच्छन्त्येके। फाल्गुनम् ॥

बहुलम्। अनूराधम्। पुष्यार्थ[3]। पुष्यः तिष्य। पुनर्वसू[4]। हस्ताः। विशाख[5]। स्वाति। इत्यत्र "बहुल०" [ १०७ ] इत्यादिना नाम्नि भाणो लुप् ॥

चित्रा। रेवती। रोहिणी। इत्यत्र "चित्रा०" [ १०८ ] इत्यादिना लुप् ॥ स्त्रियामिति किम्। चैत्रः। रैवतौ। रौहिणौ ॥ पुंस्येषां विकल्प इत्येके। चित्रः। रेवत। रोहिणौ ॥

कृत्तिक कार्तिकौ। अत्र विकल्पेन ॥ अश्विनौ। अत्र नित्यम्। "बहुलमन्येभ्यः" [ १०९ ] इति भाणो बहुलं लुप् ॥ क्वचिन्न स्यात्। माघ ॥

गोस्थान। गोशाल। खरशाल। इत्यत्र "स्थानान्त०" [ ११० ] इत्यादिना प्रत्ययस्य[6] लुप् ॥

वत्सशालाः वात्सशालः। अत्र[7] "वत्सशालाद्वा" [ १११ ] इति प्रत्ययस्य लुब्वा[8] ॥

सोदर्यः[9]। समानोदर्यम्। एतौ[10] "सोदर्य०" [११२] इत्यादिना निपात्यौ ॥

मासिकम्। अत्र "कालाद्०" [ ११३ ] इत्यादिना यथाविहितं कालेकण् ॥

कलापकाश्वत्थक। यावबुसक्य। उमाव्यासकम्। ऐषमकम्। अत्र "कलापि०" [ ११४ ] इत्यादिना अकः ॥

ग्रैष्मकम्। आवरसमकम्। अत्र "ग्रीष्म०" [ ११५ ] इत्यादिनाकञ् ॥ अपरसमादपीच्छन्त्येके। आपरसमकः[11] ॥

सांवत्सरिकाणि फलानि। सांवत्सरिकं पर्व। सांवत्सरकं फलं पर्वैव ॥ आग्र-[12]

१ प °या। श्रावि°. २ प सी °म्। आषा°. ३ बी °ष्यार्थः। पु°. ४ बी °र्वसूः। ह°. ५ बी सी °शाष। स्वा°. ६ बी °यलु°. ७ बी सी °त्र वात्स°. ८ प बी °ब्वा। सौद°. ९ प सी °दर्य। स°. १० प बी °तौ सौद°. ११ प सी °मकः। सां°. १२ प आग्राद्य°.

हायणिकः । आग्रहायणकाः । अत्र "संवत्सर०" [ ११६ ] इत्यादिना-इकण् अकञ्च ॥

हैमन । वासन्ति । शारदेन शालिना । इत्यत्र "साधु०" [ ११७ ] इत्यादिना यथाविहितमृत्वण् ॥

शारदेन यवेन । इत्यत्र "उप्ते" [ ११८ ] इति यथाविहितमृत्वण् ॥

आश्वयुजकैः । अत्र "आश्वयुज्या अकञ्" [ ११९ ] इत्यकञ्[1] ॥

ग्रैष्मक[2] । अग्रैष्म । वासन्तकैः । वासन्त । इत्यत्र[3] "ग्रीष्म०" [ १२० ] इत्यादिना वाकञ्[4] ॥

नैशिकयोर्विप्रेणयोः । अत्र "व्याहरति मृगे" [ १२१ ] इति "जयिनि च" [ १२२ ] इति च यथाविहितं कालेकण् ॥

राष्ट्रिय । ग्राम्याः । इत्यत्र "भवे" [ १२३ ] इति यथाविहितं प्रत्ययाः ॥

दिश्य । मुख्याः[5] ॥ देहांश । पद्या । इत्यत्र "दिगादि०" [ १२४ ] इत्यादिना यः ॥

उदक्या[6] । इत्यत्र "नाम्नि०" [ १२५ ] इत्यादिना यः ॥

माध्यंदिना । माध्यमा[7](म) । मध्यमीय । इत्यत्र "मध्याद्०" [ १२६ ] इत्यादिना[8] दिनण्-ण-ईयास्तत्संनियोगे मागमश्च ॥ अन्ये तु दिनं णितं नेच्छन्ति । मध्यंदिन ॥

जिह्वामूलीय[9] । अङ्गुलीय । इत्यत्र "जिह्वामूल[10]०" [ १२७ ] इत्यादिना-ईयः ॥ चानुकष्टस्य मध्यस्येयेे मध्यीय[11] इत्युदाहरणं स्वयं ज्ञेयम् ॥

टवर्गीय । इत्यत्र "वर्गान्तात्" [ १२८ ] इतीयः ॥

सुराश्ववर्गीण । वारिवर्ग्याः । सुरेभ[12]वर्गीय । इत्यत्र "ईन०" [१२९] इत्यादिना-ईन-य-ईयाः ॥ अशब्द इति किम् । टवर्गीय ॥

---

१ प °ञ् । अ°. २ सी °ष्मकः । अ°. ३ सी °त्र ग्रैष्म°. ४ बी °ञ् । नैशि°. ५ प मुख्या । दे°. ६ प °दकेत्य°. ७ बी °ध्य । म°. ८ बी °नाण. ९ प °ली । अ°. १० प °मूलीत्यादिना-इयः. ११ प मध्ययेत्यु°. १२ प °रेभिव°.

दार्तेय । कौक्षेय । कालशेय । वास्तेय । आहेय । इत्यत्र "दृति०" [ १३० ] इत्यादिना–एयण् ॥

आस्तेय । इति "आस्तेयम्" [ १३१ ] इत्यनेन निपात्यम् ॥

ग्रैवं । ग्रैवेय । इत्यत्र "ग्रीवातोण्च" [ १३२ ] इति–अणेयणौ ॥

चातुर्मासी । इत्यत्र "चतुर्मासान्नाम्नि" [ १३३ ] इत्यण् ॥

चातुर्मास्य । इत्यत्र "यज्ञे ञ्यः" [ १३४ ] इति ञ्यः ॥

गाम्भीर्य । पाञ्चजन्य । बाह्य । दैव्य । इत्यत्र "गम्भीर०" [ १३५ ] इत्यादिना ञ्यः ॥

**अद्यानुपथ्यैर्गिरिपारिमुख्यैर्गृहैरिवान्तःपुरिकैः स्थुलाग्र्यैः ।**
**स्थित्वा प्रयातासि जयाय नः पारिग्रामिकैर्विप्रवरैः कृताशीः ७०**

७०. हे राजंस्त्वं जयाय प्रयातासि प्रयास्यसि । कीदृक्सन् । विप्रवरैर्द्विजमुख्यैः कृताशीर्विहितयात्रामङ्गलः । किंभूतैः । पारिग्रामिकैः परिर्वर्जनार्थो ग्रामेभ्यः परि परिग्रामम् "पर्यपाङ्०" [ ३. १. ३२ ] इत्यादिनाव्ययीभावः । परिग्रामे ग्रामवर्जे नगरादौ भवैः । एतेन सर्वविद्यासु कौशलमुक्तम् । किं कृत्वा प्रयातासि । अद्य नोस्माकं स्थुलाग्र्यैः श्रेष्ठगुप्यद्गुरुभिः(?) करणैः स्थिताः(तः ?) स्थुलाग्र्येषु स्थित्वेत्यर्थः । किंभूतैः । आनुपथ्यैः पथः समीपमनुपथं तत्र भवैस्तथा गिरिपारिमुख्यैः परितः सर्वतो मुखं परिमुखं "परिमुखादेरव्ययीभावात्" [ ६. ३. १३६ ] इति वचनादेवाव्ययीभावो वर्जनार्थो वा परिः । "पर्यपाङ्०" । [३. १. ३२] इत्यादिनाव्ययीभावः । परिमुखे भवानि पारिमुख्यानि गिरेरर्बुदस्य पा-

१ बी °पाग्मु°. २ बी °लाग्रैः । स्थि°. ३ ए °त्वा प्रिया°.

१ ए कालेश°. २ ए ग्रैवं । ग्रै°. ३ ए °त्र चातु°. ४ ए °र्मास । इ°. ५ बी °ह्ये । देव्य. ६ बी °त्र गाम्भी°. ७ ए °म् । परि परिग्रामम् । प°. ८ बी °रिमुखे. ९ सी °वर्जन°. १० सी °कं स्थला°. ११ ए °देव्यव्य°.

रिमुख्यानि तैरतिबाहुल्येन गिरेः सर्वमुखेषु भवैर्लोकारोहाद्यर्थं गिरिमुखं पद्यां वर्जयित्वा भवैर्वेत्यर्थः । तथान्तःपुरिकैः पुरस्यान्तर्नगरमध्यभागे भवैर्गृहैरिव विस्तीर्णत्वस्वर्णकलशोल्लोचचित्रपताकाद्युपेतत्वादिना नगरगर्भस्थधवलगृहतुल्यैरित्यर्थः ॥

**अथावसत्तत्र चमूः सधान्यानुग्रामिकक्षेत्रभुवोभिरक्षन् ।**
**दृशौपकर्णिक्य ऋजूल्लसन्त्यौपजानुकोद्दामभुजो नरेन्द्रः॥७१॥**

७१. अथ नरेन्द्रस्तत्र वर्णासातटेवसत् । कीदृक् । औपजानुकौ प्रलम्बत्वाज्जान्वोः समीपे प्रायेण भवावुद्दामौ भुजौ यस्य सः । तथा सधान्या सस्याढ्यानुग्रामिकी ग्रामसमीपे भवा या क्षेत्रभूस्तस्याः सकाशाच्चमूरभिरक्षन्धान्यविनाशाभावाय निवर्तयन्सन् । कया कृत्वा । दृशा दृष्ट्या । कीदृशा । औपकर्णिक्यातिविस्तीर्णत्वेन कर्णसमीपे प्रायेण भवया तथा ऋजूल्लसन्त्या कोपादिविकाराभावेनाकुटिलं यथा स्यादेवं रक्षासंज्ञार्थमूर्ध्वीभवन्त्या ॥

**रिंसुमन्तःपुरिकादिलोकमस्यो(स्यौ)पनीविक्य ऋजुस्त्रजाथ ।**
**ज्ञात्वेव वन्यास्वगकर्णिकासु ललाटिकेवर्तव आविरासन् ॥७२॥**

७२. अथर्तवो वसन्ताद्याः सर्वेप्याविरासन् । कीदृशः । अगस्यार्बुदस्य विभूषकत्वात्कर्णिकासु कर्णाभरणतुल्यासु वन्यासु वनानां समूहेषु ललाटिकेव शोभाहेतुत्वाल्ललाटमण्डनतुल्याः । ललाटिकापि कर्णिकासु मध्ये शोभाविशेषात्स्याविर्भवति । किं कृत्वेवाविरासन् ।

---

१ बी °र्णिक्या ऋ°. २ बी °सन्त्योप°. ३ बी °रंशुम°. ४ सी °सु लाला°. ५ ए बी °केवार्त°.

---

१ बी गिरेमु°. २ बी °चविचि° सी °चप°. ३ बी °ना नाग°. ४ बी यस्या सः. ५ बी °मूभि°. ६ बी दृष्टयाः । कीदृश्यौप°. ७ बी रक्ष्यामं°. ८ ए °दृशोस्या°. ९ सी °तुल्या । ल°.

अस्य कुमारपालस्यान्तःपुरिकादिलोकमन्तःपुर एकपुरुषपरिग्रहे स्त्रीसमूह उपचारात्तन्निवासे वा भवा आ(अ)न्तःपुरिका राज्ञ्यस्तत्प्रभृतिस्त्रीलोकं ज्ञात्वेव । किंभूतम् । औपनीविक्या नीवीसमीपे प्रायेण भवया ऋजुस्रजा[1] सरलपुष्पमालया रिरंसुम्[2] ॥

पारिमुख्यैः । आनुपथ्यैः । इत्यत्र "परि०" [ १३६ ] इत्यादिना ञ्यः ॥

आन्तःपुरिकैः । अत्र "अन्तः०" [ १३७ ] इत्यादिनेकण् ॥

पारिग्रामिकैः । आनुग्रामिक । इत्यत्र "पर्यनोर्ग्रामात्" [ १३८ ] इतीकण् ॥

औपजानुक । औपनीविक्या । औपकर्णिके(क्या)[3] । इत्यत्र "उपाज्जानु०" [ १३९ ] इत्यादिना-इकण् ॥

अन्तःपुरिका । इत्यत्र "रूढौ०" [ १४० ] इत्यादिनेकः ॥

कर्णिकासु । ललाटिका । इत्यत्र "कर्ण०" [ १४१ ] इत्यादिना कल ॥

अथ वसन्तर्तुमारभ्य सर्वर्तूनामाविर्भावं वर्णयति ।

**पिकोथ कार्तार्चिकपाञ्चहोतृकतार्किकाख्यातिकसांहितेषु ।**
**विघ्नो मुनीनां सहवाजपेयिकेषु व्यकूजन्नवचूतमत्तः ॥ ७३ ॥**

७३. अथ पिको व्यकूजदव्यक्तं शब्दमकरोत् । कीदृक्सन् । मुनीनां विघ्नः स्मरोद्दीपकत्वेनोन्मनीकारकत्वादन्तरायभूतः । केषु विषये[4][पु] । कार्तार्चिकपाञ्चहोतृकतार्किकाख्यातिकसांहितेषु कृतां तथा ऋचां मन्त्रविशेषाणां तथा पञ्चसु होतृषु भव इत्यणो लुपि पञ्चहोता ग्रन्थभेदस्तस्य तथा तर्काख्यातसंहितानां व्याख्यानानि यद्वा कृतादिषु[5] भवानि व्याख्यानानि तेषु । किंभूतेषु । सह वाजपेयिकेषु वाजपेयस्य[6] यज्ञस्य व्याख्यानं तत्र भवं वाजपेयिकं[7][8] तेन युक्तेषु । यतः कीदृक् । नवचूतमत्तः प्रत्यग्राम्रफलास्वादनेन[9] मत्तः ॥

१ बी °जुश्रजा. २ बी °रंशुम्. ३ बी °नोग्रामा°. ४ बी °ये कर्ता°. ५ बी कृदादिषु व्या°. ६ बी सी °स्य व्या°. ७ सी °पेयकं. ८ ए °यिकां ते°. ९ सी °फलस्वा°.

कार्ते । इत्यत्र "तस्य०" [ १४२ ] इत्यादिना यथाविहितमण् ॥

आख्यातिक । इत्यत्र "प्रायः०" [ १४३ ] इत्यादिनेकण् ॥ प्रायोग्रहणात्क्वचिन्न स्यात् । सांहितेषु ॥

आर्चिक । ऋकारान्त । पाञ्चहोतृक । द्विस्वर । तार्किक । याग । वाजपेयिकेषु । अत्र "ऋैगृद्०" [ १४४ ] इत्यादिनेकण् ॥

**वासिष्ट(ष्ठि)काध्यायकृते पुरोडाशिके पुरोडाशिकि तिष्ठ टीके ।**
**क्षणो मुनिष्वप्ययमात्मयोनेर्वसन्त इत्यूच इवालिनादैः ॥ ७४ ॥**

७४. इतीवेदमिव वसन्तोलिनादैरूचे । तदेवाह । वासिष्ठिकाध्यायकृत उपचाराद्वसिष्ठेनोक्तो मन्त्रग्रन्थोपि वसिष्ठस्तस्य व्याख्यानस्तत्र भवो वा योध्यायस्तत्र मध्ये कृते हे पुरोडाशिके पुरोडाशाः पिष्टपिण्डास्तैः सहचरितो मन्त्रः पुरोडाशस्तस्य व्याख्यानानि तत्र भवे वा टीके निरन्तरव्याख्ये त्वं तिष्ठ । तथा हे पुरोडाशिकि त्वमपि तिष्ठ या वासिष्ठिकव्याख्याध्यायमध्ये कृता पुरोडाशिका टीकास्ति या चान्या केवलैव पुरोडाशिकी टीकास्ति साप्यधुना मुन्यादिलोकानां धर्मकर्मणि व्यापारेणरूपात्स्वव्यापारान्निवर्ततामित्यर्थः । यतो मुनिष्वपि विषय आत्मयोनेः कामस्यायं क्षणः समयोस्ति यतो युष्मदुत्पाद्यधर्मपरिणामोच्छेदकः कामोधुना मुनिष्वपि व्यजृम्भतेत्यर्थः ॥

---

१ सी वाशिष्ट°. २ बी °शिकि. ३ ए °नादौ । इतीवेदमिव वसन्तोलिनादैः । इ°.

---

१ ए बी कार्तिकेत्य°. २ बी °पु । अचिक. सी °पु । अर्चि°. ३ सी ऋग् इ°. ४ सी वाशिष्ठका°. ५ ए °राद्विसि°. ६ सी °द्वशिष्टेनो°. ७ ए °ख्यानेस्त°. ८ ए °रोशि°. ९ ए °ख्यानि. १० ए °रोशि°. ११ बी °की टिका°. १२ सी °रू°. १३ सी °पात्स्वस्या नु कसि°. ७७ श्लोकपर्यन्तं ग्रन्थो नास्ति. १४ बी °द्यप°. १५ बी °म्भत इत्य°.

छन्दस्यशैक्षार्गयनान्नो[1] नो[2] पौरोडाशिकं[3] वा जगुरौत्सशिष्याः ।
पैतृव्यकाचार्यकभीमुचस्तु स्वैरं विजह्रुर्बकुलावलोकात् ॥ ७५ ॥

७५. औत्सशिष्या औत्साः पाठार्थमुत्सदेशादर्बुद आगता[1]श्छात्रा न जगू रागविशेषपूर्वं न पेठुः । कान् । छन्दस्यशैक्षार्गयनान् छन्दसो वेदस्य शिक्षाया वर्णप्रतिपादकग्रन्थस्य ऋगयनस्य वैदिकग्रन्थभेदस्य च व्याख्यानांस्तत्र भवान्वा ग्रन्थान् । पौरोडाशिकं[2] वा पुरोडाशानां पिष्ट-[3]पिण्डानामयं तत्र भवो वा पौरोडाश[4]स्तत्संस्कारको मन्त्रस्तस्य व्याख्यानस्तत्र भवो वा यो ग्रन्थस्तं वा नो जगुः । यतः । किंभूताः । बकुलावलोकात्के[5]सरपुष्पेक्षणात्कामपरवशत्वेन पि(पै)तृव्यकाचार्यकभीमु[6]चः पितृव्यादाचार्याच्चागतां भियं मुञ्चन्ति ये ते तथा । तर्हि[7] किं चक्रुरित्याह[8] । तु किं तु स्वैरं विजह्रुर्वनादिषु ललनाभिः सह चिक्रीडुः ॥

वासिष्ठिकाध्याय । इत्यत्र "ऋषेरध्याये" [ १४५ ] इतीकण् ॥

पुरोडाशिके । पुरोडाशिकि । पौरोडाशिकम् । अत्र "पुरोडाश०" [ १४६ ] इत्यादिनेकेकटौ[9] ॥

छन्दस्य । इत्यत्र "छन्दसो यः" [ १४७ ] इति यः ॥

शैक्षार्गयनान् । इत्यत्र "शिक्षादेश्चाण्" [ १४८ ] इत्यण् ॥

औत्स । इत्यत्र "तत आगते" [ १४९ ] इति यथाविहितोञ् ॥

विद्यासंबन्ध । आचार्यक ॥ योनिसंबन्ध । पैतृव्यक । इत्यत्र "विद्या०" [ १५० ] इत्यादिनाकञ् ॥

---

१ बी °यमत्ते नो. २ ए °न्न पौ°. ३ बी पैराडा°.

---

१ बी °ताछात्रा. २ बी पौराडा°. ३ ए पिष्टापि°. ४ बी पौराडा° ५ बी °त्केशर°. ६ ए °मुचा पि°. ७ बी किं चिकु°. ८ बी °ह । कि ९ बी °दिना कक°.

वणिग्नु पित्र्यापणिकैर्हिरण्यैर्मन्त्रैर्द्विजः पैतृकहौतृकैर्नु ।
अभादशोकः कुसुमैरनृत्यत्तैर्थानिलैः शौण्डिकवच्च सद्यः ॥७६॥

७६. कुसुमैः कृत्वाशोकोभात् । यथा वणिग् हिरण्यैर्धनैर्भाति । किंभूतैः । पित्र्यापणिकैः[1] पितुरागतैः पित्र्यैः कुलक्रमागतैरापणादागतैरापणिकैः स्वयमुपार्जितैश्च । यथा वा मन्त्रैर्द्विजो भाति । किंभूतैः । पैतृकहौतृकैः[3] पितुर्होतुश्च यायजूकादागतैः । तथा सद्योशोकस्तैर्थानिलैस्तीर्थान्नद्यवतारादागतैर्वातैः कृत्वानृत्यच्च नर्नर्तेव[4] च[5] । शुण्डिकः सुरापणः सुराविक्रयी वा तस्मान्मद्यपानं कृत्वागतः शौण्डिको मद्यपो यथा नृत्यति[6] ॥

पित्र्य । पैतृक । इत्यत्र "पितुर्यो वा" [ १५१ ] इति वा यः ॥

हौतृकैः । पैतृक । अत्र "ऋत इकण्" [ १५२ ] इतीकण् ॥

आपणिकैः । अत्र "आयस्थानात्" [ १५३ ] इतीकण् ॥

शौण्डिक । तैर्थ[7] । इत्यत्र "शुण्डिकादेरण्"[8] [ १५४ ] इत्यण् ॥

द्वैजं च वै(बै ?)दं च नयं विमोच्य द्विजान्नयन्त्यद्विजरूप्यकर्म[2] ।
क नु क्रिया वो द्विजमय्यनिद्रैरितीव[3] माधव्यहसीत्प्रसूनैः ॥ ७७ ॥

७७. माधवी[9] कुन्दलतानिद्रैर्विकसितैः प्रसूनैः कृत्वा द्विजानहसीदिव । कथमित्याह । हे द्विजा वो युष्माकं द्विजमयी द्विजेभ्य आगता क्रिया ब्रह्मचर्यादिका क नु कस्मिंस्थानेस्तीति । यतः । कीदृशी । माधवी । द्विजान् द्विजेभ्य आगतं द्विजरूप्यं न तथा यत्कर्म तद् ब्राह्मणानुचितां कामचेष्टां नयन्ती । किं कृत्वा । द्वैजं च द्विजेभ्य आगतं च

१ बी °कहोतृकै°. २ ए °कर्म । क. ३ ए °व मध्ये व्य°.

१ ए °णिकैपि°. २ बी °पणकैः. ३ बी °कहोतृ°. ४ बी °नवर्ते°. ५ बी च । शोण्डिकवत् शु°. ६ ए °ति । पैत्र्य. ७ बी तैर्थ्य । इ°. ८ बी °देरित्य°. ९ बी मादवी.

वैदं च विदस्यर्षेरपत्यानि वृद्धानि विदास्तेभ्य आगतं च नयं ब्रह्मचर्यादि-धर्मानुष्ठानरूपं न्यायं विमोच्य त्याजयित्वा । माधवी वसन्ते पुष्प-(ष्य?)ति निकामं मुनीनामपि कामोद्दीपिका च स्यादित्येवमुत्प्रेक्षा ॥

पापीयवत्पापमयान्यपापरूप्याण्यजानन्नु फलान्यनङ्गः ।
बिभेद यूनां हृदयान्यशङ्कः शक्रद्विपो हैमवतीतटीर्वा ॥७८॥

७८. अनङ्गो यूनां हृदयानि बिभेद शरैरताडयत् । कीदृक्सन् । पापमयानि पापाद्धेतोरागतान्यपापरूप्याणि च धर्मादागतानि च फला-न्यशुभशुभरूपाणि कार्याण्यजानन्नवमन्यमान इव । पापीयवत्पापाद्धेतु-भूतादागतः पापीयः पापिष्ठो नास्तिकादिर्यथा पापमयान्यपापरूप्याणि च फलानि न मन्यते । अत एवाशङ्कः पापभयरहितः । यथा शक्रद्विपो-शङ्कः सन्हिमवतः प्रभवति हैमवती गङ्गा तस्यास्तटीस्तटानि भिनत्ति । वाशब्द उपमायाम् ॥

वैदम् । अत्र "गोत्रादङ्कवत्" [ १५५ ] इत्यण् ॥

अद्विजरूप्य । द्विजमयी । द्वैजम् ॥ हेतु । अपापरूप्याणि । पापमयानि । पापीयवत् । इत्यत्र "नृहेतुभ्यः०" [ १५६ ] इत्यादिना वा रूप्यमयटौ ॥

हैमवती । इत्यत्र "प्रभवति" [ १५७ ] इत्यण् ॥

अथ निदाघः ॥

वैडूर्यनीलं कदलीगृहं त्वन्मयोनिलस्तन्मयमासनं च ।
नादेयमम्भो नवमालिकातिसौगन्ध्यी(न्धी)रदा सेव्यमभून्निदाघे ७९

१ ए °तिसौगन्धी°.

१ ए °दस्यार्षे°. २ सी °र्माधर्मानु°. ३ सी का च. ४ बी °त्प्रेक्ष्या । पा°. ५ बी °तानि आपा°. ६ बी °ङ्गास्तस्या°. ७ बी °रूपाणि. ८ सी पापी°. ९ ए °पीव°. १० सी °ण् । वै°.

७९. निदाघेतिशीतलत्वात्सेव्यमभूत्। किं किमित्याह। वैडूर्येनीलं विडूरात्पर्वतात्प्रभवति वैडूर्यो मणिस्तद्वन्नीलं हरितवर्णं कदलीगृहं तथा त्यन्मयः कदल्याः[1] प्रभवन्ननिलो वायुस्तथा तन्मयं कदल्याः[2] प्रभवदासनं च तथा नादेयं नद्याः सैक्त(त्क?)मम्भस्तथा[3] नवमालिका च सप्तला च। किंभूता। अतिस्रौग्घ्नी(घ्नी)रदा स्रुघ्नस्येयं[4][5] स्रौघ्नी[6] स्त्री तस्या रदान्दन्तांञ्[7] शौक्ल्येनातिक्रान्ता॥

वैडूर्य। इति "वैडूर्यः" [१५८] इत्यनेन निपात्यम्॥

त्यन्मयः। तन्मयम्। अत्र "त्यदादेर्मयट्" [१५९] इति मयट्[8]॥

स्रौग्घ्नी(घ्नी)। नादेयम्। अत्र "तस्येदम्" [१६०] इति यथाविहितं प्रत्ययाः॥

**द्राग्घालिकाः सैरिकपर्षदासीनाः साम(मि)धेनीविदुषो हसन्तः।**
**कथा अकुर्वन्कुरुवृष्णिकाश्वावराहिकाणामिह मल्लिकाघ्राः॥८०॥**

८०. इह निदाघे हलस्येमे हालिका हलधराः कुरूणां वृष्णीनां[10] च विवाहाः कुरुवृष्णिकास्तथा शुनां वराहाणां च युद्धानि[11] श्वावराहिका द्वन्द्वे तासां कथा द्राग्मूर्खत्वेन वचनपल्लवनाशक्तेरविलम्बितं तदा कृपि-कर्माभावेन निष्प्रयोजनत्वादकुर्वन्[12]। किंभूताः। सीराणामिमे सैरिका हलधरास्तेषां परिषत्सभा तत्रासीनास्तथा समिधामाधानी ऋक्[13] साम-(मि)धेनी तत्र विदुषो ज्ञान्द्विजान्हसन्तः। केलिप्रियत्वात्स्वरविशेषेणा-ङ्गुलीरचनाविशेषेण च साम(मि)धेनीः पठतो द्विजांस्तदनुकरणेनोपह-

---

१ **बी** °दल्या प्र°. २ **ए सी** °दल्या प्र°. ३ **ए** सक्तम°. ४ **ए** स्रुग्घ्नस्ये°. ५ **ए** °यं सौग्घ्नी स्त्री. ६ **सी** सौग्घ्नी स्त्री. ७ **सी** °ञ् शैत्येना°. ८ **बी** °यः। त्यन्म°. ९ **ए** °ट्। सोग्घ्नी. १० **बी** °नां वि°. ११ **सी** °नि साव°. १२ **ए** निष्प्रयो°. **बी** निःप्रयो°. १३ **बी** °क् समाधे°.

सन्त इत्यर्थः । तथा मल्लिकाघ्रास्तदातिसुलभत्वादतिसुरभित्वाच्च विचकिल[1]पुष्प[2]ाणि जिघ्रन्तः ॥

**वैरं नु दैवासुरमप्रशान्तो[1] राक्षोसुरं वाजनि[2] मन्मथोत्र[3] ।**
**झगित्यनाम्यानपि नाम्यमध्यापयन्दधत्पाटलचापयष्टिम् ॥ ८१ ॥**

८१. अत्र ग्रीष्मे[3] झगिति[4] ग्रीष्मर्तुप्रादुर्भावकाल एव मन्मथोप्रशान्तः सदोद्दीप्तोजनि । दैवासुरं राक्षोसुरं वा वैरं नु यथा देवानामसुराणां च[5] रक्षसामसुराणां च संबन्धि वैरं शाश्वतिकवैर[6]त्वात्कदापि न प्रशान्तं स्यात् । कीदृ[7]शः सन् । पाटला[8]याः पुष्पं[9] पाटलं ग्रीष्मे हि पाटला पुष्प(ष्य?)ति । तदेव चापयष्टिस्तां दधत[10] एव नास्ति नाम्यं नटानां[11] धर्म आम्नायः संघो वा येषांताननाम्यानपि नाम्यरहितान्मुन्यादीनपि नाम्यं नटानां नृत्तं स्मरोद्रेकोत्थं सविलासभ्रूत्क्षेपादिकमध्यापयन् । योपि नाम्योपाध्यायः स्यात्सोपि शिक्षायष्टिं दध[12]दनाम्यान्नाम्यानभिज्ञान्नाम्यमध्यापयन् शिक्षाग्राहणायानुपशान्तः स्यादित्युक्तिः ॥

**छान्दोग्ययाज्ञिक्यमपास्य बाहृच्यौक्थिक्यमाथर्वणकाठकं च ।**
**अस्मिन् शिरीषैर्ददृभुः स्रजो दण्डमाणवा अन्तसदश्च काण्वाः ॥ ८२ ॥**

८२. अस्मिन्ग्रीष्मे काण्वाः काण्व्यस्यर्षे[13]रिमे दण्डमाणवा आश्रमिणां रक्षापरिचरणा[14]र्था दण्डप्रधाना माणवा अन्तसदश्चाध्ययनार्था[15]: शिष्या[16]श्च सुरभित्वादतिशीतत्वाच्च कण्ठादौ न्यासाय शिरीषैः शिरीषवृक्षपुष्पैः स्रजो ददृभुर्ग्रथ्नन्ति स्म । ग्रीष्मे हि शिरीषाः पुष्प(ष्य?)न्ति । किं

१ बी °न्तो रक्षो°. २ ए वाक्षनि. ३ ए °थो नु । झ°.

१ ए सी विचिकि°. २ बी °पुष्पाणि. ३ सी ग्रीष्म°. ४ ए °ष्मे रिगि°. बी °ष्मे झिगि°. ५ सी च सं°. ६ सी °श्वतवै°. ७ सी °दृक् पा°. ८ ए सी °लाया पु°. ९ बी पुष्पं पा°. १० बी सी °धत. ११ सी °नां नृस्मरो°. १२ ए °धना°. १३ सी काण्वस्य°. १४ सी °णार्थद°. १५ ए °र्था शि°. १६ बी सी शिक्षाश्च.

कृत्वा । छान्दोग्ययाज्ञिक्यं [1]बाह्वृच्यौ[2]क्थिथक्यमाथर्वणकाठकं च छन्दोगानां याज्ञिका[3]नां बह्वृचानाम[4]ौक्थिथकानामाथर्वणिकानां कठानां च धर्ममाम्नायं [5]संघं वापास्य ॥

**किं [1]दाक्षकं रैवत(ति?)कीयगौरग्रीवीयकौपिञ्जलमातिथेयम् ।**
**उपस्थितं तच्चुलुकेश्वराय यदस्फुटन्काञ्चनकेतकानि ॥ ८३ ॥**

८३. काञ्चनकेतकानि ग्रीष्मर्तुभवानि स्वर्णवर्णकेतकीपुष्पाणि यदस्फुटन्विकसितानि तत्किं मन्ये चुलुकेश्वराय कुमारपालनिमित्तमातिथेयमातिथ्यमुपस्थितमुपागतम् । किंभूतम् । [5]दाक्षकं रैवत(ति?)कीयगौरग्रीवीयकौपिञ्जलं दाक्षीणां रैवतिकानां गौरग्री[6]वाणां [7]कौपिञ्जलानां चर्षीणां [8]संबन्धि वनेवासिभिर्दाक्ष्याद्यृषिभिर्वनेषु [9]विकसितानि काञ्चनकेतकानि नृपार्थमातिथ्यमिव प्रगुणीकृतमित्यर्थः । राज्ञो हि का[10]ञ्चनादिभिर्विशिष्टवस्तुभिरातिथ्यं क्रियते ॥

**संघेषु घोषेषु [2]च वै(बै?)दगा[3]र्गदाक्षेष्वलं हास्तिपदद्विजेषु ।**
**अस्मिन्नदृश्यन्त न वै(बै)दगा[4]र्गदाक्षाङ्कलक्ष्माण्यतिवातपरागैः॥८४॥**

८४. अस्मिन्ग्रीष्मेतिवान्तो [11]गाढवात्यावानेनात्यन्तं परिभ्राम्यन्तो ये परागाः कुसुमरजांसि तैः कृत्वा वैदगार्गदा[12]क्षाङ्क[13]लक्ष्माणि विदा[14]नां गार्गाणां दा[15]क्षीणामृषीणां स[16]त्कान्यङ्काः स्वस्वामिसंबन्धविशेषज्ञापकाः स्वस्तिकादयो [17]लक्ष्माणि च स्वस्यैव ज्ञापका[18]नि शिखादीनि नादृश्यन्त ।

१ सी दाक्षिकं. २ ए च खेद°. ३ सी °गार्ग्यदाक्ष्येष्व°. ४ सी °गार्ग्यदाक्ष्याङ्क°.

१ बी बाह्न्यौक्थि°. २ सी °विथकगा°. ३ बी °नां वाह्वृ°. ४ ए मथं वा°. ५ सी दाक्षिकं. ६ ए °ग्रीवीणां. ७ बी °णां कोपि°. ८ सी °णां च सं°. ९ सी विकासि°. १० बी °ञ्जनकेतकादि°. ११ ए बी °न्तो ग्राढ°. १२ सी °दाक्ष्याङ्क°. १३ बी लक्ष्म्याणि. १४ बी °नां गार्गा°. १५ ए बी °क्षीणां स°. १६ ए °त्कापि अङ्काः. १७ बी लक्ष्म्याणि. १८ सी °नि शेखा°.

केषु । संघेष्वोघेषु[1] घोषेषु[2] च गोकुलेषु । किंभूतेषु । वैदगार्गदाक्षेषु[3] विदानां गर्गाणां दाक्षीणामृषीणां संबन्धिषु । तथालं रक्षादौ समर्था हास्तिपदस्यर्षेरिमे[4] द्विजा येषु तेषु । ग्रीष्मे[5] हि बहुवात्यावानेन सर्वासु दिक्षु परागा उच्छलन्ति तैश्च लोकदृशामाच्छादितत्वाद्विदाद्यृषिसमूहेषु[6] विदैत्वादिसूचीनि[7] शिखादीनि लक्ष्माणि विदादीनां गोकुलेषु विदादिसत्कत्वसूचिनः स्वस्तिकाद्या अङ्काश्च लोकैर्नादृश्यन्तेत्यर्थः[8] ॥

हालिकाः । सैरिक । इत्यत्र "हल०" [ १६१ ] इत्यादिनेकण् ॥

सामिधेनी[9] । इत्यत्र "समिधः०" [ १६२ ] इत्यादिना टेन्यण् ॥

कुरुवृष्णिका । इत्यत्र "विवाहे०"[10] [ १६३ ] इत्यादिनाकल् ॥

श्वावराहिकाणाम् । अत्र "अदेव०" [ १६४ ] इत्यादिनाकल् ॥ अदेवासुरादिभ्य इति किम् । दैवासुरं राक्षोसुरं वैरम् ॥

नाट्यम् । अत्र "नटान्नृत्ते ञ्यः" [ १६५ ] इति ञ्यः ॥

छान्दोग्य[11] । औक्थिक्यम् । याज्ञिक्यम् । बाहृच्य । अनाट्यान् । इत्यत्र "छन्दोग०" [ १६६ ] इत्यादिना ञ्यः ॥

आथर्वण[12] । इत्यत्र "आथर्वणिकाद्०" [ १६७ ] इत्यादिनाण्[13] इकलोपश्च[14] ॥

काठकम् । अत्र "चरणादकञ्" [ १६८ ] इत्यकञ्[15] ॥

दाक्षकम् । अत्र "गोत्राद्०"[16] [ १६९ ] इत्यादिनाकञ् ॥ अदण्डमाणवशिष्य इति किम् । काण्वा दण्डमाणवा अन्तसदश्च । "शकलादेर्यञः" [ ६.३.२७ ] इत्यञ् ॥

---

१ **बी** °घेष्वाधे°. २ **सी** °पु गोकुलेपु च । किं°. ३ **बी** °गार्गेदा°. **सी** °गार्ग्यदाक्ष्येपु° ४ **बी** °पदाहार्षिपद°. ५ **बी सी** °ष्मे ब°. ६ **बी** °त्वाविदा°. ७ **बी** विदित्वादिशूची°. ८ **बी** °कैनादृ°. ९ **प** सामधे°. १० **सी** °हेत्या°. ११ **प** °न्दोग्यः । औ°. **सी** °न्दोग्यं । औ°. १२ **प** °र्वणिक । इ°. १३ **प** इना°. १४ **बी** इकूलो°. **सी** इलो°. १५ **प** °ञ् । अ°. १६ **बी** गोत्रेत्या°.

रैवत(ति?)कीय । गौरग्रीवीय । इत्यत्र "रैवत(ति?)कादेरीयः" [ १७० ] इतीयः ॥

कौपिञ्जलम् । हास्तिपद । इत्यत्र "कौपिञ्जल०" [ १७१ ] इत्यादिनाण् ॥

वैदगार्गदाक्षेपु संघेषु घोषेषु । वैदगार्गदाक्षाङ्कलक्षमाणि । इत्यत्र "संघघोष०" [ १७२ ] इत्यादिनाण् ॥

अथ वर्षाः ॥

द्राक् शाकलैः शाकलकान्नु संघघोषानजानन्किल लक्षणाङ्कैः ।
अशाकलाञ्शाकलकेतरैर्नु नीपैरथाग्नीध्रसदोपि वर्षाः ॥ ८५ ॥

८५. अथ ग्रीष्मानन्तरमाग्नीध्रसदोप्यग्निमिन्धतेग्नीध आहिताग्नयस्तेषामिमानि गृहाण्याग्नीध्राणि तद्वासिनोपि नीपैर्नीपतरुपुष्पैः कृत्वा वर्षाः प्रावृट्कालमजानन । किलान्ये लोकास्तथाविधनिबिडगृहाभावाद्गृहश्च्योतनाद्युपद्रवेण वर्षाकालं ज्ञातवन्त एव परं ये सदाग्निज्वालनव्रता अग्निविध्याना(?)भावाय गृहाणामत्यन्ताच्छादितनिबिडत्वेन वर्षाकृतोपद्रवाभावाद्वर्षा न ज्ञातवन्तस्तेग्नीध्रस्था अपि धाराकदम्बपुष्पाणि दृष्ट्वा प्रावृडागतेत्यजानन्नित्यर्थः । किलेति सत्ये । यथा किल शाकलैः शाकल्येनर्षिणा प्रोक्तं वेदं विदन्त्यधीयते वा "शकलादेर्यञः" [६.३.२७] इत्यञि शाकलास्तत्संबन्धिभिर्लक्षणाङ्कैर्लक्षणैः शिखादिभिरङ्कैश्च स्वस्तिकादिभिः कृत्वा शाकलान्संघघोषाँल्लोका जानन्ति यथा वा शाकल-

१ बी वर्षा । अ॰.

१ ए °यः । कौपिजल°. २ ए सी °न कौपि°. ३ सी °गार्ग्यदाक्षेपु. ४ सी °गार्ग्यदा°. ५ ए °नो नी°. ६ बी वर्षा प्रा°. ७ ए प्राट्का°. ८ बी °हश्चोत°. ९ बी °त ए°. १० सी °विधाना°. ११ बी °कृत्योप°. १२ ए °ग्नीधस्था°. १३ बी स्थापि. १४ ए गत्यत्य°. १५ बी °नर्षि°. १६ सी °पाञ्शाकलैः शाकलेत्यत्र शाकलादिकञ् केभ्योन्यै°.

केतरैः शा[1]कलकेभ्यो लक्ष्मणाङ्केभ्योन्यैरन्यमुनिसत्कैर्लक्ष्मणाङ्कैः कृतत्वा-शाकलान् शाकलेभ्यः संघघोषेभ्योन्यान्संघघोषाञ्जना जानन्ति ॥

अशाकलान् । शाकलका[2]न्संघघोषान् । शाकलैः । शाकल[3]क । इत्यत्र "शाक-[4]लादकञ्च" [ १७३ ] इत्यण् अकञ्च ॥

आग्नीध्र । इत्यत्र "गृहे[5]०" [ १७४ ] इत्यादिना रण् अन्तस्य च तृतीयबा-धनार्थं[6] धादेशः ॥

**तत्केतकं र[1]थ्ययुगं नु नव्यं धूर्नवग्र्यरथ्या नवकन्दली च ।**
**रथ्यो द्विरथ्यस्त्रिरथो नु वा[2]श्वः पौरस्त्यवातश्च मनोभुवोभूत् ॥८६॥**

८६. तत्सौरभश्वैत्यादिगुणैः प्रसिद्धं केतकं केतकीपुष्पं मनोभुवः कामस्य नव्यं र[7]थ्ययुगं रथसत्कयूपमिवाभूत् । तथा नवकन्दली च नूत[8]नाङ्कु(ङ्क?)रजातिर्वनस्पतिभेदो वा मनोभुवोग्र्यर[9]थ्याग्र्यः प्रधा[10]नं यो रथस्तदीया धूरिवाभूत् । यथा पौरस्त्यवातश्च पूर्ववायुश्च मनो-भुवोश्वो न्वभूत् । कीदृशोश्वः । रथ्यो द्विरथ्यस्त्रिरथो वा महाबलत्वेन रथस्य द्वयो रथयोस्त्रयाणां रथानां वा वोढा । वर्षासु हि श्वेतकेतकं नवकन्दली पूर्ववातश्च स्युस्तत्र केतकस्य रथ्ययुगाकारत्वान्नवकन्दल्याश्च धुराकारत्वात्पौरस्त्यवायोश्चातिवेगत्वेनाश्वतुल्यत्वात्[11]सर्वेषां चैषामुद्दीपन-वि[12]भावत्वान्मनोभुवाध्यासितस्य जगज्जनचित्तर[13]थस्य संक्षोभहेतुत्वाच्चैव-माशङ्का । मनसि प्राणिनां चित्ते भवति तिष्ठति मनोभूस्तस्य म[14]नोभुव

---

१ ए रम्ययु°. २ ए वाश्व पौ°.

---

१ बी °कलांके°. २ बी °कान् । शाकलकान्सं°. ३ सी °ल । इ°. ४ सी °लादिक°. ५ ए °हेला°. ६ बी °स्य तृ°. ७ बी रथयु°. ८ सी °तनांति°. ९ बी °रथोग्र्यः. १० ए °धानयो. ११ ए °त्सवैषां मु°. १२ ए °भा सि प्रा°. १३ सी °रथ्यस्य. १४ सी महसा°.

इति साभिप्रायस्मरनामन्यसनेनात्र जगज्जनमन एव स्मररथत्वेन सूचितमिति स्मररथस्याङ्गिनोत्रानाशङ्कितत्वात्तदङ्गानां युगादीनामाशङ्का न घटत इति न वाच्यम् ॥

रथ्योश्वः । रथ्ययुगम् । सादि । त्रिरथोश्वः । अग्र्यरथ्या धूः । अत्र "रथात्०" [ १७५ ] इत्यादिनेदमर्थे यः प्रत्ययः स रथस्य वोढरि रथाङ्ग एव च स्यादित्यर्थनियमः । "यः" [ १७६ ] इत्यनेन तु यः ॥ त्रिरथः । इत्यत्र तु "द्विगोरु०" [ ६. १. २४ ] इत्यादिना यलुप् ॥ अन्ये तु स्वरादेरेव प्रत्ययस्य लुपमिच्छन्ति । तन्मते द्विरथ्यः ॥

आश्वेप(थ) पथ्याश्वरथाग्रचक्रोत्थितैर्नु रेजे नवकेतकोत्थैः ।
आश्वं रथं पल्ययनं च सांवहित्रं रजोभिः स्थगयद्भिरङ्गम् ॥८७॥

८७. अथ तथा नवकेतकोत्थैः प्रावृषेण्यकेतकीपुष्पोद्भवै रजोभिः परागै रेजे विस्फुरितम् । किंभूतैः सद्भिः । स्थगयद्भिरतिबाहुल्याद्व्याप्नुवद्भिः । किं किमित्याह । आश्वमश्वसत्कं रथं तथाश्वं पल्ययनं च पर्याणं च तथा सांवहित्रं संवोढुः सारथेः सत्कमङ्गं च यथाश्वेश्वसत्के पथ्यश्ववाह्या रथा आश्वरथास्तेषामिमान्याश्वरथानि यान्यग्रचक्राणि चक्राग्राणि तेभ्य उत्थितैरुच्छलितै रजोभिराश्वरथादिस्थगयद्भिः सद्भी रेजे प्रस्तावात्कुमारपालयात्रायाम् ॥

आश्वरथाग्रचक्र । इत्यत्र "पत्र०" [ १७७ ] इत्यादिनाञ् ॥

आश्वं रथम् । अत्र "वाहनात्" [ १७८ ] इत्यञ् ॥

---

१ ए °ग्रवक्रोत्थि°. २ बी °तैनु रे°. ३ ए °भिः स्थग°.

---

१ सी °रथ्या°. २ ए °थ्या धुः । अ°. ३ बी °नेवम°. ४ ए °त्यथनि°. सी °त्यर्थः नि°. ५ बी °वकैत°. ६ बी सी °द्भिः । कि°. ७ सी °था प°. ८ ए °त्कर्मगं च. ९ बी °थास्तथानिमा°. १० ए °न्यग्रच°. ११ ए °या । आ°. १२ सी °रथ्याग्र°.

आश्वं रथम् । आश्वे पथि । आश्वं पल्ययनम् । अत्र "वाह्य०" [ १७९ ] इत्यादिना वाहनाद्यः प्रत्यय उक्तः स बाह्या[1]दावेवेद[2]मर्थे स्यान्नान्यत्रेत्यर्थनियमः ॥

सां[3]वहित्रम् । अत्र "वहेः०" [ १८० ] इत्यादिनाञ् तृशब्दस्य चादिरिकारः ॥

द्राक्पाणिनीयार्थविदो नु[1] मौदा नु जाजला वा कठकर्करा नु ।
स[2]तैत्तिरीया अथ वारतन्तवीया[3] नु चक्रुः शिखिनः स्वरास्तान् ८८

८८. शिखिनो मयूरा द्राग् वर्षाप्रादुर्भावसमकालमेव तानुदात्तादिभेदै रागविशेषैश्च पाणिनीयार्थविन्मौ[4]दादिषु प्रसिद्धान्स्वरांश्चक्रुः । अतश्चो[5]त्प्रे[6]क्ष्यन्ते पाणिनीयार्थविदो नु पाणिनिना प्रोक्तोयोर्थ उदा[7]त्तस्वरादिस्तज्ज्ञा इव । किं वा मोदेन जाजलिना कठेन कर्करे[8]ण तित्तिरिणा वरतन्तुना वर्षिणा प्रोक्तान्वेदान्विदन्त्यधीयते वा ये[9] ते मौदादय इ[10]व ॥

अथ शरत् ॥

शरत्प्रकाशाजनि खा[4]ण्डकीयौखी[5]यैन्वैथो वाजसनेयिभिर्नु[6] ।
प्रणादिभिः शौनकिभिर्नु वा छागलेयिभिर्नु स्वरचारुहंसैः ॥८९॥

८९. स्वरेण चारवो मधुरा ये हंसास्तैः कृत्वा शरत्प्रकाशा प्रकटाजनि । किंभूतैः[11] । प्रणादिभिर्माधुर्यादिना प्रकृष्टं शब्दायमानैरतश्चो[12]त्प्रेक्ष्यते । ख[13]ण्डिकेनोखेन वाजसनेयेन शौनकेनच्छगलिनौ[14] वर्षिभिः

१ बी नु मोदा. २ ए °न्तथार्त्वा°. ३ बी °या न न°. ४ सी खाण्डकी°. ५ ए °यैनृंथो. ६ बी सी °नु । प्राणा°.

१ बी वाह इ°. २ बी °दावात्रेद°. ३ ए सांवाहि°. ४ बी °विन्मोदा°. ५ बी °त्प्रेक्षन्ते. ६ सी °क्ष्यन्ते पा°. ७ बी °दायत्त°. ८ बी सी जल्पिना. ९ बी ते मोददाय. १० सी इति । अ°. ११ बी सी °नैः । प्राणा°. १२ ए सी °त्प्रेक्षते. १३ ए °ण्डिकेनो°. १४ ए °ना चर्पि°.

प्रोक्तान्वेदान्विदन्त्यधीयते वा ये तैः खाण्डिकीयादिभिरिव। खाण्डिकीयादयो हि तत्तद्वेदपाठकाले प्रणदन्ति ॥

पाणिनीय। इत्यत्र "तेन प्रोक्ते" [ १८१ ] इति यथाविहितं दोरीयः ॥

मौदाः। जाजलाः। अत्र "मौदादिभ्यः" [ १८२ ] इत्यण् ॥

कठकर्कराः। अत्र "कठादिभ्यो वेदे लुप्" [ १८३ ] इत्यणो लुप् ॥

तैत्तिरीयाः। वारतन्तवीयाः। खाण्डिकीयौखीयैः। अत्र "तित्तिरि०" [ १८४ ] इत्यादिना-ईयण् ॥

छागलेयिभिः। इत्यत्र "छगलिनो णेयिन्" [ १८५ ] इति णेयिन् ॥

शौनकिभिः। वाजसनेयिभिः। इत्यत्र "शौनकादिभ्यो णिन्" [ १८६ ] इति णिन् ॥

शैलालिनः काश्यपिनश्च कौशिकिनश्च पाराशरिणश्च भिक्षोः।
सत्पैङ्गिकल्पार्थविदश्च वाग्नु सद्योवदाता कुमुदालिराभात् ॥९०॥

९०. सद्यः शरत्कालप्रादुर्भावक्षण एव कुमुदालिराभाद्यकसदित्यर्थः। कीदृशी। अवदाता निर्मला वाग्नु यथा वाग्वाण्यवदातापशब्दादिदोषमलरहितत्वेन शुद्धा स्यात्। कस्य कस्येत्याह। शिलालिना प्रोक्तं नटसूत्रं काश्यपेन प्रोक्तं पुराणं कल्पं कौशिकेन प्रोक्तं पुराणं कल्पं पारास(श)र्येण प्रोक्तं भिक्षुसूत्रं वेत्त्यधीते वा यस्तस्य शैलालिनः काश्यपिनश्च कौशिकिनश्च पाराशरिणश्च भिक्षोस्तथा पिङ्गेन प्रोक्तः पुराणः कल्पः पैङ्गिकल्पः सन् शोभनो यः पैङ्गिकल्पस्तस्यार्थं वेत्ति यस्तस्य च ॥

१ ए बी सत्पैङ्गि°.

१ बी °त्तथेद.° २ बी °यः। मौदाः. ३ बी सी °त्र मौदा°. ४ ए अथ क°. ५ ए खाडिकी°. ६ बी योखी°. ७ सी °ण्। कर्करा। छा°. ८ ए णेयन्. ९ सी °ति णेयन्. १० ए °सः मर°. ११ ए °शिकेन°. १२ बी °णः पुराणः क°. १३ बी यः पि ङ्गि°. १४ बी °स्य स। पै°.

पैङ्गिकल्प । इत्यत्र "पुराणे कल्पे" [ १८७ ] इति णिन् ॥

काश्यपिनः । कौशिकिनः । अत्र[1] "काश्यप०" [ १८८ ] इत्यादिना णिन् ॥

शैलालिनः । पाराशरिणो भिक्षोः[2] । अत्र "शिलालि०" [ १८९ ] इत्यादिना णिन्[3] ॥

**कार्शाश्वकं वाधिकृशाश्वि कर्मन्दिनीव कार्मन्दकमर्चनीयम् ।**
**सुकापिलेयिष्विव कापिलेयिकाम्नाय[1] आभाच्छरदीह जाती[2]॥९१॥**

९१. इह जगति[4] शरदि जाती मालतीपुष्पमाभात्सौरभाद्युत्कर्षेण[5] रेजे । वोपमायाम् । यथाधिकृशाश्वि कृशाश्वेन प्रोक्तं नटसूत्रं[6] विदत्स्वधीयानेपु वा नटेपु कार्शाश्वकं कृशाश्विनां धर्म आम्नायः संघो वार्चनीयं सद्भाति । यथा वा कर्मन्दिनि कर्मन्देन[7] प्रोक्तं भिक्षुसूत्रं[8] विदत्स्वधीयाने वा भिक्षौ कार्मन्दकं कर्मन्दिनां धर्म आम्नायः संघोवार्चनीयं सद्भाति यथा वा सुकापिलेयिपु शोभनेपु कापिलेयेन प्रोक्तं नटसूत्रं[9] विदत्स्वधीयानेपु वा नटेपु कापिलेयिकाम्नायः[10] कापिलेयिनामाम्नायो गुरुपारंपर्येणोपदेशो भाति ॥

कृशाश्वि । कर्मन्दिनि । इत्यत्र "कृशाश्व०" [ १९० ] इत्यादिनेन् ॥ वेदवच्चेत्यतिदेशाद्वेदेण्[11] । ब्राह्मणमात्रे वेतिनियमाद्वेदित्रध्येतृविषयता ॥ "चरणादकञ्" [ ६. ३. १६८. ] इत्यकञ्[12] स्यात् । कार्शाश्वकम् । कार्मन्दकम् । नटसूत्रे कापिलेयशब्दादपीच्छन्त्येके । सुकापिलेयिपु । कापिलेयिकाम्नायः[13] ॥

---

१ **ए बी** °लेयका°. २ **बी** जातीः । इ°.

---

१ **सी** °त्र कस्याप°. २ **ए** भिक्षो । अ°. ३ **ए** °न् । कर्शा°. ४ **ए** °ति सर°. ५ **बी** °ष्पमभात् शौर°. ६ **ए** °त्रं वद°. ७ **ए** °मेंदेन. ८ **ए** °सूत्रवि°. ९ **ए** °त्रं वद°. १० **ए** °म्नायका°. ११ **ए सी** °देन् । ब्रा°. १२ **ए** °त्यत्र. १३ **बी** °लेयका°.

अभूष्यताब्जैर्जलमत्र वाररुचैः सुवाक्यैरिव पाणिनीयम् ।
सन्माक्षिकं नु प्रियसारघाणां पेयं नृणां मानसवारितुल्यम् ॥९२॥

९२. अत्र[1] शरदि जलमब्जैरभूष्यत । कीदृक् । मनसा कृतं मानसं सरस्तस्य यद्वारि तत्तुल्यमगस्त्युदयेनातिनिर्मलमित्यर्थः । अत एव नृणां कर्तरि षष्ठी । नरैः पेयं यथा प्रियं सरघाभिर्मधुमक्षिकाभिः कृतं[2] सारघं मधु येषां तेषां सच्छोभनं माक्षिकं मक्षिकाभिः कृतं मधु पेयं स्यात् । यथा मानसवारितुल्यमपशब्दमलरहितत्वेन विशुद्धमत एव नृणां पेयं[3] श्रोतव्यं पाणिनीयं[4] पाणिनेन पाणिनिनावोपज्ञातं व्याकरणं वाररुचैर्वररुचिना कृतैः सुवाक्यैः कर्तृभिरभूष्यत ॥

पाणिनीयम् । अत्र "उपज्ञाते" [ १९१ ] इति यथाविहितं दोरीयः[5] ॥

वाररुचैः । मानस । इत्यत्र "कृते" [१९२] इत्यण् ॥ कृते ग्रन्थ एवेच्छन्त्यन्ये । तन्मते[6] तु कृतेर्थे मानसेति न स्यात् ॥

माक्षिकम् । सारघाणाम्[7] । अत्र "नाम्नि०" [ १९३ ] इत्यादिनाण् ॥

असार्वचर्माणमिवान्यदुज्झन्ती[1] सर्वचर्माण इवाब्जकोशे ।
चिक्षेप लक्ष्मीं[2] शरदम्बु कौलालके[3] क्षिपेद्दारुटके न कश्चित् ॥९३॥

९३. शरदन्यदब्जकोशादितरत्पुष्पमुज्झन्ती सती लक्ष्मीं सौरभवि[8]काशादिशोभामब्जकोशे पद्मकुड्मले[9] चिक्षेप । अन्योपि हि लक्ष्मीं कोशे भाण्डागारे क्षिपति । शरदि ह्यब्जकोशेन्यपुष्पेभ्यः सर्वेभ्योप्यतिशयिता[10] श्रीः स्यात् । यथा का[11]चिन्नायिकासार्वचर्माणं सर्वश्चर्मणा

१ ए °दुह्यन्ती. २ ए °क्ष्मीं सर°. ३ ए °के पे°.

१ ए °त्र सर°. २ ए °तं सरघं ये°. ३ ए पेयश्रो°. ४ ए °णिने°. ५ सी °यः । नेर°. ६ बी सी °ते कृ°. ७ ए °घाणम्. ८ ए °भवका°. ९ बी °द्ममुकुले. १० सी °यि श्रीः. ११ सी कापि नायि°.

कृतः सार्वचर्मीणो न तथासार्वचर्मीणस्तं वस्त्रादिकृतं कोत्थलिकादिमसारत्वेन पाटनभयादुज्झन्ती सती सर्वचर्मीणे दाव(व?)डीति प्रसिद्धायां चर्ममय्यामाभरणकरण्डिकायां लक्ष्मीमलंकारादिऋद्धिं क्षिपति। युक्तं चैतत्। यतः सर्वोपि कश्चिदम्बु कौलालके कुलालेन कृते घटघटीशरावादिभाण्डे क्षिपेन्न तु कश्चिद्वारुटके वरुटेन कृते सूर्पपिटकपटलिकादौ भाण्डे ॥

कौलालके। वारुटके। अत्र "कुलालादेरकञ्" [ १९४ ] इत्यकञ् ॥

सर्वचर्मीणे । असार्वचर्मीणम् । अत्र "सर्व०" [ १९५ ] इत्यादिनेन ईनञ् च ॥

अथ हेमन्तशिशिरौ ॥

येनौरसोरस्यविरिञ्चिपुत्राः सौभद्रविज्ज्योतिषवेदिनश्च ।
तैरप्यतर्क्यप्रभवो हिमर्तुश्छन्दस्यवद्वारि हिमं चकार ॥ ९४ ॥

९४. हिमर्तुः शीतकालो हेमन्तः शिशिरश्च वारि हिमं शीतलं चकार। कीदृक्। अतर्क्यप्रभवोकस्मादाविर्भवनेनाज्ञेयोत्पत्तिकः। कैः। तैरपि य उरसा कृता औरसा न तथानौरसा मानसाः सनकाद्यास्तथोरस्या उरसा कृताः स्वाङ्गोद्भवाः काश्यपाद्या द्वन्द्वेनौरसौ(सो)रस्या ये विरिञ्चिपुत्रा विधिपुत्रा मुनयोभूवंस्तथा ये सौभद्रविज्ज्योतिषवेदिनश्च सुभद्रामर्जुनपत्नीमधिकृत्य कृतं ग्रन्थं ये विदन्ति ये च ज्योतींष्यधिकृत्य कृतं ग्रन्थं विदन्ति ये महाज्ञानपात्राणीत्यर्थः । छन्दस्यवत्।

१ ए बी °विरञ्चि°. २ बी °तुच्छन्द°.

१ सी °तः सर्व°. २ सी °त्थलकादिकम°. ३ बी °णे डाव°. ४ ए °ते स्वर्प°. ५ सी °प्रभावो°. ६ सी °त्तिकालः । कैः. ७ ए बी °वाः काश्य°. ८ ए °पाद्°. ९ ए °भूवस्त°. सी °भूवन्ये तथा. १० सी °न्थं वा ये. ११ सी येम°.

ओश्रावयेति चतुरक्षरम् । अस्तु श्रौषडिति चतुरक्षरम् । ये यजामह इति पञ्चाक्षरम् । यजेति द्व्यक्षरम् । द्व्यक्षरो वषट्कारः । एष वै सप्तदशाक्षरैश्छन्दस्यो यज्ञमनुविहितः । अत्र स्वार्थे यः । यथानुष्टुबादिरक्षरसमूहस्तथैषां सप्तदशानामक्षराणां समूहश्छन्दस्य उच्यते । स यथापौरुषेयत्वान्महाज्ञानिभिरप्यतर्क्यप्रभवः स्यात् । यद्वा यथा छन्दसेच्छया स्वाभिप्रायेण कृतश्छन्दस्यश्छन्दोनुवर्ती दासः शीतोपचारैर्वारि शीतलं करोति तथा हिमर्तुश्चकार ॥

उरस्य । अनौरस । इत्यत्र "उरसो याणौ" [ १९६ ] इति याणौ ॥

छन्दस्य । इति "छन्दस्यः" [ १९७ ] इत्यनेन निपात्यते ॥

सौभद्र । इत्यत्र "अंमोधि०" [ १९८ ] इत्यादिनाण् ॥

ज्योतिष । इति "ज्योतिषम्" [ १९९ ] इत्यनेन निपात्यम् ॥

**शैशुक्रन्दं यद्वदीयुः शिशुक्रन्दीयाभिज्ञाः षट्पदाः कुन्दयष्टिम् ।**
**उद्गायन्तः किं किरातार्जुनीयं किं वा सीतान्वेषणीयं प्रहृष्टाः ९५**

९५. षट्पदाः कुन्दयष्टिं कुन्दपुष्पलतामीयुः श्रिताः । यद्वद्यथा शैशुक्रन्दं शिशुक्रन्दं प्रस्तुत्य कृतं ग्रन्थं बालपुस्तिकाशास्त्रं शिशुक्रन्दीयाभिज्ञा बालपुस्तिकाशास्त्रस्य ज्ञातारः श्रयन्ते । किंभूताः षट्पदाः । प्रहृष्टाः कुन्दसौरभोत्कर्षाघ्राणेन प्रमुदिता अत एवोद्गायन्त उच्चैःस्वरेण

१ बी °द्वदायुः. २ बी °ष्टि । उ°. ३ बी किं करा°. ४ बी सी वा शीता°. ५ ए °षणी प्र°.

१ बी °स्तु सौष°. सी °स्तु सौष°. २ बी °रच्छन्द°. ३ बी सी °हच्छदन्द°. ४ ए °र्क्यभ°. ५ सी °प्रभावः. ६ सी °न्दस्वेच्छ°. ७ ए बी° तच्छन्द°. ८ बी सी °स्यच्छन्दो°. ९ सी °न्दस्येत्य°. १० ए °ति समित्य°. ११ बी °यति । किं°.

शब्दायमानाः । अत एव चोत्प्रेक्ष्यन्ते । किं किरातार्जुनीयं किरातरूपधारी शम्भुः किरातोर्जुनः पार्थो द्वन्द्वे तावधिकृत्य कृतं[1] ग्रन्थं किं वा सीतान्वेषणीयं[2] सीतान्वेषणमधिकृत्य कृतं ग्रन्थमुद्गायन्तः ॥

शिशुक्रन्दीयं[3][4] । सीतान्वेषणीयम् । अत्र "शिशु०" [ २०० ] इत्यादिनेयः ॥ शिशुक्रन्दशब्दाण्णेच्छन्ति केचित् । शैशुक्रन्दम् ॥

किरातार्जुनीयम्[5] । अत्र "द्वन्द्वात्प्रायः" [२०१] इतीयः । शालिनी छन्दः ॥

**स्रौघ्ना दूतासेवकाः स्रौघ्नमार्ग[1]द्वारेषूच्चैर्यद्वदत्रर्तवोस्थुः ।**
**पुष्पैर्माहाराजिका[2]न्प्रीणयन्तः पूपा[3]ल्येवापूपिकाः सौपकारान् ९६**

९६. स्रुघ्नं पुरं गच्छन्ति[6] स्रौघ्ना दूतास्तथा स्रुघ्नं भजन्ति[7] स्रौघ्ना आसेवका द्वन्द्वे "स्यादावसंख्येयः" [३.१.११९] इत्येकशेषे स्रौघ्नास्तथा स्रुघ्नं गच्छन्ति[8] स्रौघ्ना मार्गास्तथा स्रुघ्नमभिलक्ष्यीकृत्य निष्क्रामन्ति कन्यकुब्जद्वाराणि स्रौघ्नानि द्वन्द्वे "एकार्थं चानेकं च" [ ३. १. २२ ] इति क्लीबस्य शेषे स्रौघ्नानि तानि[9] च तानि मार्गद्वाराणि च स्रौघ्नमार्गद्वाराणि तेष्विति विषमपदार्थः। वाक्यार्थस्त्वयम्। अत्रार्बुद ऋतवोस्थुः। यद्वद्यथा स्रौघ्नाः स्रुघ्नं गच्छन्तो दूताः स्रौघ्नेषु स्रुघ्नं गच्छत्सु मार्गेषु तिष्ठन्ति । यथा वा स्रौघ्नाः स्रुघ्नं भजन्त आसेवका वास्तव्यलोकाः स्रौघ्नेषु स्रुघ्नं लक्ष्यीकृत्य[10] निर्गच्छत्सु[11] द्वारेषु कन्यकुब्जप्रतोलीद्वारेषु स्रुघ्ने वास्तव्यत्वेन स्रुघ्ने गन्तुकामत्वात्तिष्ठन्ति[12] । कीदृशा ऋतवः । पुष्पैः सर्व-

१ ए °माराद्वा°. २ ए °काम्प्रणीय°. ३ ए °पालोवा°.

१ बी कृत्यं ग्र°. २ बी °यं शीतोन्वे°. ३ सी °न्दीयः । सी°. ४ बी °य । शाता°. ५ ए °य । अ°. ६ ए °न्ति स्रोघ्ना. ७ बी °न्ति स्रोघ्ना. ८ बी °न्ति स्रोघ्ना. ९ सी °नि तानि च मार्गाणि द्वा°. १० बी लक्ष्मीकृ°. ११ बी °गत्सु. १२ बी °त्तित्तिष्ठ°.

तुकुसुमैः कृत्वा महाराजं भजन्ति माहाराजिकाः कुमारपालसैनिकास्तांन्प्रीणयन्तः । यथा सौपकारान्भोजनाय सूपकारान्भजतो लोकानापूपिका अपूपान्भजन्तः कान्दविकाः पूपाल्या पोलिकाश्रेण्या कृत्वा प्रीणयन्ति ॥

**ऋतुभिः स हैमननिशाविशालधीर्मुमुदेन्तरुत्कवदुपस्थितैर्नृपः ।**
**गुरु दाक्षकार्जुनकवासुदेवकं महिमाथ नाकुलकमद्रकं दधत् ॥९७॥**

९७. अथ स नृपः कुमारपाल उत्कवच्छुगपच्छीघ्रं चोपस्थानादुत्कण्ठितैरिवोपस्थितैर्ऋतुभिः कृत्वान्तश्चित्ते मुमुदे । कीदृक् । हेमन्तं भजति हैमनीया निशा तद्वद्विशालधीरत एव महिम माहात्म्यं दधत् । किंभूतम् । गुरु महत्तथा दाक्षकार्जुनकवासुदेवकं दाक्षिमृषिमर्जुनं वासुदेवं च भजदथ तथा नाकुलकमद्रकं नकुलं चतुर्थपाण्डवं भजत्तथा मद्राणां देशस्य राजा मद्रस्य राज्ञोपत्यं वा माद्रः "पुरुमगध०" [ ६. १. ११६ ] इत्यादिनाण् । माद्रं माद्रौ मद्रान्वा भजद्वा दाक्ष्यादिसंबन्धीत्यर्थः ॥

स्रौघ्नद्वारेषु । इत्यत्र "अभि०" [ २०२ ] इत्यादिनाण् ॥

स्रौघ्नमार्गे । स्रौघ्ना दूताः ॥ अत्र "गच्छति०" [ २०३ ] इत्यादिनाण् ॥

स्रौघ्ना आसेवकाः । अत्र "भजति" [ २०४ ] इत्यण् ॥

माहाराजिकान् । इत्यत्र "महा०" [ २०५ ] इत्यादिनेकण् ॥

---

१ सी °विलासधी°. २ ए °हिनाथ.

---

१ बी भवन्ति. २ ए °स्ताप्रणीय°. ३ ए सी °था नृप°. ४ ए °तै रुतु°. बी °तै ऋतु°. ५ ए °देवं दा°. सी °देवकं°. ६ सी °कं च न°. ७ सी °तुर्थ पा°. ८ बी °रुपम°. ९ ए °जन्वा दा°. १० बी दाक्षादि°. ११ बी सी °मार्गः । स्रौ°.

आपूपिकान्(काः) । इत्यत्र "अचित्ताद्०" [ २०६ ] इत्यादिनेकण् ॥ अचित्तादिति किम् । सौपकारान्[1] ॥ अदेशकालादिति किम् । स्रौघ्ना आसेवकाः । हैमननिशा ॥

वासुदेवकम्[3] । अर्जुनक[2] । इत्यत्र "वासुदेव०" [ २०७ ] इत्यादिनाकः ॥

गोत्र । दाक्षक[4] । क्षत्रिय । नाकुलक । इत्यत्र "गोत्र०" [ २०८ ] इत्यादिनाकञ् ॥

मद्रकम् । अत्र "सपूर्वा(रूपा)द्" [ २०९ ] इत्यादिना प्रकृतिः प्रत्ययश्च राष्ट्रवत् ॥ नन्दिनी छन्दः । स्जौ स्जौ गो नन्दिनी ॥

इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तौ षोडशः[6] सर्गः[5] ॥

---

१ ए °कान्° २ बी सी °न् । आदे°. ३ ए °म् । आर्जु°. ४ ए दाक्षः । क्ष°. बी दाक्षिक°. ५ बी °रशि°. ६ सी °डशस°.

## सप्तदशः सर्गः ।



सैन्यात्सौदामनीलोला वर्णासातो वनेष्वयुः ।
नार्योथ पुष्पाण्युच्चेतुमुरस्तःकृत्य वल्लभान् ॥ १ ॥

१. अथ सर्वर्तुप्रादुर्भवनानन्तरं नार्यः पुष्पाण्युच्चेतुं सैन्याद्वनेष्वयुः । कीदृक्षु । वर्णासातो वर्णासया नद्यैकदिक्षु यस्यां दिशि वर्णासा तस्यां सत्स्वित्यर्थः । किं कृत्वा । वल्लभानुरस्तःकृत्योरसा तुल्यदिशः कृत्वातिवाल्लभ्याद्धृदयाग्रे कृत्वेत्यर्थः । किंभूताः सत्यः । सुदामाद्रिस्तेनैकदिक् सौदामनी विद्युत्सुदामा नामाद्रिर्यस्यां दिशि तस्यां विद्युत्तेन सा सुदाम्ना सहैकदिगुच्यते । तद्वल्लोला वनाभिमुखचलनेन चञ्चलाङ्ग्यः ॥

तत्रोरस्यीकृता वृक्षाः स्रौघ्नीभिः कौचवार्यया ।
शाण्डिक्यासैन्धवीवार्णवीभिर्वल्लीयुता न्वभान् ॥ २ ॥

२. तत्र वनेषु वृक्षा वल्लीयुता नु वल्लीवेष्टिता इवाभान् । यत उरस्यीकृता उरसैकदिक्काः कृता हृदयसंमुखीकृताः पुष्पोच्चयनार्थमारो-

१ **बी** °दामिनी°. २ **बी** वर्णसोतो. ३ **ए** °र्योव पु°. ४ **ए** °ण्युत्वेतु°. **बी** °ण्युच्चैतु°. ५ **बी** वन्नभा°. ६ **ए** °भातः । अ°. ७ **सी** °त्रोत्तर°. ८ **ए सी** °रसीकृ°. ९ **बी** °क्षाः । स्रोघ्नी°.

१ **बी** अत्र स°. २ **ए** °ण्युच्छेतुं. ३ **बी** °र्णासया नाद्यैकादि°. ४ **ए** °नुहस्वःकृ°. ५ **सी** °कृत्वा°. ६ **बी** तुल्यादि°. ७ **बी सी** °दामिनी. ८ **ए** °मा वामा°. ९ **ए सी** °द्यत्वेन. १० **ए** °नेच्च च°. ११ **बी** °सैकादिकाः कृ°. १२ **सी** °दिशि कृ°.

हविषयीकृता इत्यर्थः[1] । काभिः[2] । स्रौघ्नीभिः स्रुघ्नो देशो निवास आभिजनो निवासो वा यासां ताभिस्तथा कौचवार्यया कूचवार आभिजनो निवासो यस्यास्तया[3] च तथा शाण्डिक्यासैन्धवीवार्णवीभिः[4] शण्डिकः सिन्धुर्वर्णु[5]श्चाभिजनो निवासो यासां ताभिश्च स्त्रीभिः ॥

सौदामनी[6] । इत्यत्र[7] "टस्तुल्यदिशि" [ २१० ] इत्यण् ॥

वर्णासातः । अत्र "तसिः" [ २११ ] इति तसिः ॥

उरस्तःकृत्य[8] । उरस्यीकृताः[9] । अत्र "यश्चोरसः" [ २१२ ] इति यस्तसिश्च[10] ॥

स्रौघ्नीभिः । अत्र "सेर्०" [ २१३ ] इत्यादिना "आभिजनात्" [२१४] इति चाण् ॥

शाण्डिक्या । कौचवार्यया । इत्यत्र "शण्डिकादेर्ण्यः"[11] [ २१५ ] इति ण्यः ॥

सैन्धवीवार्णवीभिः[12] । अत्र "सिन्ध्वादेरञ्" [ २१६ ] इत्यञ्[13] ॥

सालातुरीयास्तौदेय्यो[1] वार्मतेय्यश्च[2] शस्त्रिभिः ।
हृद्गोलीयैः कृतारक्षाः कुसुमान्यवचिच्यिरे[3] ॥ ३ ॥[4]

३. सालातुरस्तूदी[14] वर्मती च देशा आभिजना निवासा आसां ताः सालातुरीयास्तौदेय्यो[15] वार्मतेय्यश्च[16] नायिकाः कुसुमान्यवचिच्यि[17][18]-

१ ए °देय्यौ वा°. सी °देय्यो वा°. २ ए °तेयश्च°. बी °तेर्य्यश्च. ३ ए °न्यविचि°. ४ ए °रे । शालातुलस्तू°.

१ ए °त्यर्थका°. २ बी °भिः । स्रोघ्नी°. ३ बी °या त°. ४ बी °भिः शाण्डि°. ५ बी °न्धुवर्णु°. ६ बी सी °दामिनी. ७ बी °त्र रतु°. ८ ए °कृत्यः । उ°. ९ बी सी °रसीकृ°. १० बी °श्च । स्रोघ्नी°. ११ बी °देर्णः इ°. १२ बी सी °वीवर्ण°. १३ ए °ञ् । शाला°. १४ बी °लास्तुलस्तू°. १५ ए °देय्यौ वा°. सी देय्यो वा°. १६ ए बी °तेर्य्यश्च. १७ ए °न्यविचि°. १८ बी °चिरे.

रेचुण्टयन् । किंभूताः सत्यः । हृद्गोलो गिरिराभिजनो निवासो येषां तैर्हृद्गोलीयैः शस्त्रिभिः शस्त्राजीवैः कृतारक्षाः ॥

सालातुरीयाः । अत्र "सला०" [ २१७ ] इत्यादिनेयण् ॥

तौदेय्यः[1] । वार्मतेय्यः । अत्र "तूदी०" [ २१८ ] इत्यादिनेयण् ॥

हृद्गोलीयैः । अत्र "गिरेर्०" [ २१९ ] इत्यादिनेयः ॥

त्रयोविंशः पादः ॥

आक्षिकी चाक्षिकादाक्षिकं लिप्सुः पुष्पमुच्चतः ।
काप्युत्क्षिपन्ती दोर्मूलं कौतुकादीक्षिताभ्रिकैः[1] ॥ ४ ॥

४. कापि कामिन्याभ्रिकैरभ्र्या तीक्ष्णाग्रया काष्ठमय्या कुद्दालिकया खनद्भिरश्रान्तखननेनातिश्रान्तैरपीत्यर्थः[2] । कौतुकात्साभिलाषमीक्षिता । यतो दोर्मूलं कक्षाप्रदेशमुत्क्षिपन्त्यूर्ध्वं[3] नयन्ती । एतदपि कुत इत्याह । यत उच्चतो वृक्षस्योच्चादुपरिभागात्पुष्पं पुष्पजातिं लिप्सुर्लब्धुमिच्छुः । यथाक्षिक्यक्षैः पाशकैर्जयन्ती[4][5] रुयाक्षिकादक्षैर्दीव्यतो द्यूतकारादाक्षिकमक्षैर्जितं[6] पणं लिप्सुः स्यात् ॥

आक्षिकम्[7] । आक्षिकी । आक्षिकात् । आभ्रिकैः । अत्र "तेन०" [ २ ] इत्यादिना जितादिष्वर्थेषु "इकण्" [ १ ] इतीकण् ॥

मौद्गदाधिककौलत्थैस्तैन्तिडीकेष्विवोज्झती[2][3] ।
कौलत्थमनवं[4] पुष्पं पुष्पेष्वन्यान्यदाददे[5] ॥ ५ ॥

---

१ बी °ताभ्रकैः. २ बी मौद्गादा°. ३ ए °त्थतैन्ति°. ४ ए सी °लत्थम°. ५ सी °न्यपाद°.

---

१ ए सी °देव्यः । वा°. २ सी °नेति°. ३ ए °पन्तीमूर्ध्व. ४ सी पाशै-दीव्य°. ५ ए °कैर्दी°. ६ सी °जितपाणि लि°. ७ सी °क्षिकी । अक्ष°.

५. अन्या ह्यन्यत्पुराण[1]पुष्पेभ्य इतरन्नवं पुष्पमाददे। कीदृक्सती। पुष्पेषु मध्येनवं पुराणं पुष्पमुज्झती मौद्गदाधिककौलत्थ[2]तैन्तिडीकेष्विव यथा मुद्गैर्दध्ना कुलत्थैस्तिन्तिडीकया चाम्लिकया संस्कृतेषु मुद्गयूषर-सालाकुलत्थयूषाम्लिकापानकादिषु वस्तुषु मध्ये कोपि कौलत्थं(स्थं) कुलत्थ(स्थ)संस्कृतं वस्तूज्झति[3] मौद्गाद्यपेक्षया कौलत्थ(स्थ)स्य विर-सत्वेन परिहेयत्वात् ॥

दाधिक। इत्यत्र "संस्कृते" [ ३ ] इतीकण् ॥

कौलत्थ। कोपान्त्ये[5]। तैन्तिडीकेषु। इत्यत्र "कुलत्थ०"[6] [ ४ ] इत्यादिनाण्॥ अन्ये तु कुलत्थ(स्थ)शब्दात्सकाराक्रान्तथकारादणं मन्यन्ते। कौलिस्थम्। अन्ये तु कवर्गोपान्त्यादपीच्छन्ति। मौद्ग ॥

न तथा[1] दाधिकैर्मौद्गैर्लवणैश्चूर्णिघार्तिकैः[2]।
यथा[3]प्रीणादलित्रस्ता काचिदालिङ्गनैः प्रियम् ॥ ६ ॥

६. स्पष्टः। किं तु दाधिकैर्दध्ना संसृष्टैः शालिकरम्बादिभिर्मौद्गैर्मुद्गैः[10] संसृष्टैर्मुद्गयुक्तैः शाल्यादिभिरित्यर्थः। लवणैर्[11]लवणेन संसृष्टैः शाकादि-भिश्चूर्णिघार्तिकै[12]श्चूर्णेन[13] कर्पूरादिक्षोदेन संसृष्टाश्चूर्णिनो मोदकादयस्तथा घृतेनोपसिक्ता घार्तिका घृतपूरा द्वन्द्वे तैश्च सर्वगुणसंपूर्णसरसरसवती-करणेनेत्यर्थः[14] ॥

दाधिकैः। अत्र "संसृष्टे" [ ५ ] इतीकण् ॥

---

१ **बी** °था दधि°. २ **ए बी** °घार्तिकैः. ३ **बी सी** °थाप्राणा°.

---

१ **ए** °राणापु°. २ **ए** °त्थनिडी°. ३ **ए** °नि मुद्गा°. ४ **सी** °याकुल°. ५ **ए** °न्त्य। तिन्ति°. ६ **ए** °कुलित्थ°. ७ **ए** °त्सरका°. ८ **ए सी** °लत्थम्. ९ **सी** शाका°. १० **ए** °भिमौद्गैमुद्गैः. ११ **ए** °वणे°. १२ **ए बी** °घार्तिकै°. १३ **सी** °न शर्करा°. १४ **बी सी** °णेनापील्य°.

लवणैः । अत्र "लवणादः" [ ६ ] इत्यः ॥

चूर्णि । मौद्गैः । अत्र "चूर्ण०" [ ७ ] इत्यादिना-इन्-अणौ ॥

घार्तिकैः । अत्र "व्यञ्जनेभ्यः०" [ ८ ] इत्यादिना-इकण् ॥

**कस्यांचित्प्रेयसो जातपुष्पोच्चयश्रमाम्भसि ।**
**अनाविकानौडुवि(पि?)क्यघटिकेव ममज्ज दृक् ॥ ७ ॥**

७. प्रेयसो दृक्कस्यांचित्स्वप्रेयस्यां ममज्जाब्रुडच्चिरमवस्थितेत्यर्थः । यतो जातं संपन्नं पुष्पोच्चयेन श्रमाम्भः खेदजः स्वेदो यस्यां तत्र स्थूलमुक्ताफलकल्पैः स्वेदबिन्दुभिरदृष्टपूर्वां श्रियं प्राप्तायामित्यर्थः । अनाविकानौडुविकयघटिकेव । इवः प्रत्येकं संबध्यते । यथा नावा तर्योडुवेन प्लवेन घटेन चातरंती(न्ती) स्त्र्यम्भसि मज्जति ॥

अनौडुविकी । इत्यत्र "तरति" [ ९ ] इतीकण् ॥

अनाविका । अघटिका । इत्यत्र "नौद्वि०" [ १० ] इत्यादिनेकः ॥

**दाधिकेत्याक्षिपन्त्यन्या ययाचे पदिकं पतिम् ।**
**उच्चस्थपुष्पं दुष्प्रापं पर्पिकाश्विकहास्तिकैः ॥ ८ ॥**

८. अन्या काचित्पर्पिकाश्विकहास्तिकैः पर्पेणोडुपेनाश्वेन हस्तिना च चरद्भिरपि नरैरुच्चतरैदुस्तटीस्थतरुस्थत्वेनात्युन्नततमत्वाद्दुष्प्रापमुच्चस्थपुष्पमुच्चवृक्षशिखरस्थानि पुष्पाणि पतिं ययाचे। यतः पदिकं पादचारिणम् । पदिको हि पादबलेन वैषम्यौन्नत्योपेतमपि वृक्षमारुह्य

१ ए सी °विकाघ°. २ ए पपिकाश्वि°. बी पथिका°.

१ ए °र्णि । मुद्गैः. २ बी °र्णौ । घार्ति°. ३ बी °यस्यो दृ°. ४ सी चित्प्रेय°. ५ ए °त्र मु°. ६ बी °ल्पैःश्वेद°. ७ बी °र्वां तश्रि°. ८ बी °नौडवि°. ९ बी °था नवा°. १० ए °तर स्त्र्य°. ११ ए बी °नौडवि°. १२ बी °तरुद्°. १३ ए °तनत्वा°. १४ ए °मुच्चवृ°. १५ बी °म् । पादि°. १६ ए बी °पम्योन्न°.

पुष्पाद्यानेतुं समर्थः । कीदृक्सती । दध्ना चरति भक्षयति यस्तत्संबोधनं हे[1] दाधिकेत्येवंप्रकारेणाक्षिपन्ती पत्युरनभिमतपुष्पप्रदायित्वेन रुषितत्वाद्धे दध्नाघ्राण किमितीदं पुष्पमर्पयसीति तं दाधिकत्वेन निन्दन्तीत्यर्थः ॥

गत्यर्थ । हास्तिकैः । भक्षार्थ[2] । दाधिक । इत्यत्र "चरति" [११] इतीकण् ॥

पर्पिकाश्विक । इत्यत्र "पर्पादेरिकट्" [ १२ ] इतीकट् ॥

पदिकम् । "पदिकः" [ १३ ] इति निपात्यते[3] ॥

श्वागणिकज इत्युक्त्वार्पयन्पुष्पं प्रियोन्यया ।
ऊचे घ्नत्या श्वगणिकजावैतनिक इत्यलम् ॥ ९ ॥

९. अन्यया घ्नत्या नर्मकेल्या ताडयन्त्या[4] सत्यालमत्यर्थं प्रिय ऊचे । कथमित्याह[5] । श्वगणिकजावैतनिक इति[6] श्वगणेन चरति[7] श्वगणिक आखेटिकस्तस्माज्जाता श्वगणिकजा तस्या वेतनेन जीवति वैतनिको भृत्यस्त्वमसीति मम दासस्त्वं तस्मात्स्वाभिमतं त्वया कारयिष्याम्येवेति[8] तात्पर्यार्थ इति । यतः कीदृक् । पुष्पमर्पयन्[9] । किं कृत्वा । उक्त्वा । किमित्याह[10] । हे श्वागणिकजे हे आखेटिकपुत्रि मया सुकुमालेना(रेणा?)स्य पुष्पोच्चयन[11]रूपस्य कष्टकर्मणो विधापनेनात्यन्तं निर्दय इत्यर्थ इति ॥

अवैशिक्यो विलासिन्यो लीलानां पुष्पवल्लिषु ।
क्रयिका विक्रयिकाः किं क्रयविक्रयिकाः किमु ॥ १० ॥

---

१ ए हे धिकोत्ये°. २ ए सी भक्ष्यार्थं°. ३ बी °ते । स्वाग°. ४ ए °यत्या म°. ५ सी °ह । स्वग°. ६ सी °ति स्वग°. ७ सी °ति स्वग°. ८ ए °ष्यामोत्ते°. बी ष्यामेत्ते°. ९ ए बी °यत् । किं. १० ए °मित्याह. ११ बी °चयेन°.

१०. अवैशिक्यो वेशेन[1] वेश्यागृहेणाजीवन्त्यः कुलाङ्गनाः पुष्पवल्लिषु पुष्पोच्चयार्थं पुष्पाढ्यलतानां समीपे लीलानां विलासानां क्रयिका[2] विक्रयिकाः किं क्रयविक्रयिकाः किमु क्रयेण विक्रयेण क्रयसहितो विक्रयः[3] क्रयविक्रयस्तेन वा जीवन्त्य इवासन् । मूल्येन[4] ग्राहिका इव दायिका इव वा । ग्रहणदाने द्वे[5] अपि कुर्वाणा[6] इव वासन्नित्यर्थः । यतश्चलनादिवैशिष्ट्यं विलासः सोस्त्यासां विलासिन्यः । स्त्रीषु लतासु च[9] चलनादिवैशिष्ट्यरूपाणां विलासानां सद्भावादेवमाशङ्का ॥

श्वगणिकः[10,11] श्वागणिकः । इत्यत्र "श्वगणाद्वा" [ १४ ] इति वेकट् ॥

वैतनिकः । वैशिक्यः । अत्र "वेतनादेर्जीवति" [ १५ ] इतीकण् ॥

क्रयविक्रयिकाः । क्रयिकाः । विक्रयिकाः । अत्र "व्यस्ताच्च०" [ १६ ] इत्यादिनेकः ॥

**वस्निकायुधिकानायुधीयत्रातीनदारवत्[1] ।**
**किं द्रून्भ्राम्यसि पत्येति श्रान्तोचे कापि संभ्रमात् ॥ ११॥**

११. कापि स्त्री श्रान्ता पुष्पोच्चयनार्थमनेकतरुषु[12] भ्रमणात्खिन्ना सती पत्या[13] संभ्रमात्प्रेमातिरेकोत्थादादरादूचे । कथमित्याह । वस्नं मूल्यं तेन जीवन्ति वस्निकाः[14] कर्मकरास्तथायुधेनोपचारादायुधकर्मणा[15] त्सरुकरणादिना जीवन्त्यायुधिका लोहकाराद्या[16] अनायुधीया आयुधकर्मानुपजीवि-

---

१ बी °त् । कं द्र°.

---

१ ए वेश्येन. २ सी °यिकाः किं. ३ ए °यः वि°. ४ ए मूल्येन. ५ सी द्वे कु°. ६ सी °णा अपि वा°. ७ सी °ललना°. ८ ए °शिष्यं वि°. ९ ए च वल°. सी च लल°. १० ए °णिकः श्वा°. ११ सी °क । इ°. १२ सी °नेकेषु त°. १३ बी पत्याः सं°. १४ ए °स्निका क°. १५ सी °मैकारा°. १६ ए बी लोहारा°.

न[1]श्चर्मकाराद्यास्तथा नानाजातीया अनियतवृत्तयः शरीरायासजीविनः संघा व्रातास्तत्साहचर्या[2]त्तत्कर्मापि व्रातं तेन जीवन्ति[3] व्रातीना [4]भाम्महिकादयो द्वन्द्वे तेषां [5]दारा यथा काष्ठतृणादिग्रहणाय द्रन्भ्राम्यन्ति तथा त्वं किमिति [6]द्रंस्तरून्भ्राम्यसीति ॥

वस्निक । इत्यत्र "वस्नात्" [ १७ ] इनीकः ॥

अनायुधीय । आयुधिक । इत्यत्र "आयुधादीयश्च" [ १८ ] इनी[7]ये[8]कौ ॥

व्रातीन । इत्यत्र "[9]व्रातादीनञ्" [ १९ ] इनीनञ् ॥

स्मर्त्री[1] वैरं किमाक्षद्यू[2]तिकत्यागिंमगातिकम् ।

आपमित्यकवत्पत्येत्यू[3]चेन्या कुसुमैर्घ्नती ॥ १२ ॥

१२. अन्या कामिनी [10]केलिवशात्केनापि भर्तृव्यलीकेन रुष्टत्वाद्वा कुसुमैर्घ्नती सती पत्योचे । कथमित्याह । त्वं किमाक्षद्यूतिकत्यागिमगातिकमक्षद्यूतेन त्यागेन गतेन च निर्वृत्तं वैरं स्मर्त्री [11]यत्त्वं पुष्पैर्मां ताडयसि तत्किं यत्त्वं मया पुराक्षद्यूतेन दानेन[12] गत्या च पराजिता तेन [13]निर्वृत्तं वैरं स्मरसीत्यर्थः । आपमित्यकवदपमित्य प्रतिदानेन बुद्धिस्थेन [14]निर्वृत्तमापमित्यकमुद्धारेण गृहीतं वस्तु कदैतदहं प्रतिदास्यामीति यथा काचित्स्मरतीति ॥

काप्ययाचितकप्रेम्णि ताम्यत्यौत्सङ्गिके प्रिये ।

तिरोभवन्नर्मणाशु पुष्पपैटाकिकी द्रुषु ॥ १३ ॥

१ बी °मायृ°. २ बी °गिनम°. ३ ए °त्पनेत्यू°.

१ बी °मैकरा° २ बी °तत्तत्क°. ३ बी °न्ति व्रती°. ४ बी सी भाम्महि°. ५ ए दार य°. ६ बी °ति द्रन्भ्रानरून् न्यमी°. ७ बी °तीयकौ. ८ ए °येकौ। व्रा.° ९ बी °त्र व्रतादीनञ्. १० सी केना°. ११ बी यत्तं पु°. १२ ए °न मत्या. १३ सी निवृत्तं. १४ ए °ववद°. १५ सी निवृत्त°.

१३. कापि कामिनी नर्मणा हास्यादाशु झटिति द्रुपु तिरोभवत् । क सति । प्रिये ताम्यति "षष्ठी[1] वानादरे" [ २. २. १०८ ] इति सप्तमी । प्रियाया अदर्शनात्खिद्यमानं प्रियेम[2]नार्दे[3]त्येत्यर्थः । किंभूते । अयाचितकं[4] न याच्ञया निर्वृत्तं[5] स्वाभाविकं प्रेम यस्य तस्मिन्नत एवौत्सङ्गिक उत्सङ्गेन हरति प्रियां[6] नयति[7] निमेषमात्रमपि प्रियाविरहस्यासहिष्णावित्यर्थः । कीदृकसती । पुष्पाणां[8] पैटाकिकी पिटाकेन[9] पिटउ[10] इति प्रसिद्धेन[11] वंशभाजनेन हरन्ती पुष्पो[12]हरणार्थं पिटकं वहन्तीत्यर्थः[13] ॥

आक्षद्यूतिक । गातिकम् । अत्र "निर्वृत्तेक्ष[14]०" [ २० ] इत्यादिना[15]-इकण् ॥

त्यागिम । इत्यत्र "भावादिमः" [ २१ ] इतीमः ॥

अयाचितकं[16] । आपमित्यक । इत्यत्र "याचित०" [ २२ ] इत्यादिना[17] कण् ॥

औत्सङ्गिके । पैटाकिकी । इत्यत्र "हरति०" [ २३ ] इत्यादिनेकण् ॥

**काचिदौक्षीद्गृहीत्वाम्भुं[1] भस्त्रिकादंशभारिकात् ।**
**सखीं श्रान्तां[2] निकुञ्जान्तर्भूत्वा विवधिकी[3] स्वयम् ॥ १४ ॥**

१४. काचिन्निकुञ्जान्तर्वनगहनमध्ये श्रान्तां पुष्पोच्चयेन[18] खिन्नां सखीमौक्षीत्सिषेच । किं कृत्वा । विवधेन[19] मार्गेण[20] हरति विवधिकी

१ ए °म्भु भुस्त्रि°. २ वी श्रान्ता नि°. ३ ए °वधकी.

१ सी षष्ठि प्रि°. २ वी °यमानादृनेत्य°. ३ ए °दृनेत्य°. ४ वी °चितं न. ५ वी °निवृत्त. ६ ए प्रियं न°. ७ वी नयाति. ८ ए °णां पेटा°. ९ वी पिटके°. १० वी सी पिटउ. ११ वी °न वांश°. १२ सी °ष्पाभर°. १३ ए °र्थः । अक्ष°. १४ सी निवृत्त°. १५ सी °ना-अक°. १६ सी °नकः । आ°. १७ वी °ना-इक°. १८ ए °न सर्वा खिन्ना गौ°. १९ ए वी विविधे°. २० ए °ण वा ह°.

श्रान्तसख्य्[1] वाहिकादानान्मार्गदायिनी[2][3] स्वयं भूत्वा । तथा भस्त्रिकाद्व-स्त्रया दृतिना जलं हरतो[4] भृत्यादेरम्बु गृहीत्वा । किंभूतान् । अंशो भागभूतो भारो जलभारांशभारस्तेन हरत्यंशभारिकस्तस्माद्वितीयेन सहाम्बुभारं वहत इत्यर्थः ॥

> काप्यवीवधिके कुञ्जे नीत्वा वैवधिकच्छलात् ।
> कांचित्[1]कौटिलिकीभूय[2] प्रियो भ्रमयति प्रियाम् ॥ १५ ॥

१५. कांचित्प्रियां प्रियो भ्रमयति नर्मणेतस्ततो नयति तत्कालापेक्षया वर्तमाना। किंकृत्वा । वैवधिकच्छलान्मार्गेण नेतुं[5]श्छलादहमत्र मार्गेण[6] नेतास्मीति व्याजादित्यर्थः । कापि कुञ्जे[7] वनगहने नीत्वा। किंभूते । अत्यन्तं वृक्षादिभिर्गुपिलत्वा[8]न्नास्ति वीवधिको मार्गेण नेता यत्र तस्मिन्[9] खिल इत्यर्थः । तथा कौ[10]टिलिकी[11]भूय कुटिलिका[12]शब्देनाग्रे वक्रो[13][14] लोहादिमग्न्यङ्गाराकर्षणी यष्टिर्वा कुटिला गतिर्वा पलालोत्क्षेपणोग्रे वक्रो दण्डो वा परिव्राजकोपकरणभेदो वा चौराणां नौगृहाद्यारोहणार्थं दामाग्रप्रतिबद्ध आयसोर्धाङ्कुशो वोच्यते । यथा कर्मारकर्षकपरिव्राजकचौरा अङ्गारपलालपुष्पनावः कुटिलिकया हरन्त्येवं वैवधिकच्छलेन प्रियाया आकर्षकी[15]भूयेत्यर्थः[16] । यद्वा कुटिलिकया कुटिलगत्या[17] हारकीभूय[18] ॥

---

१ ए °चित्कोटिकी°. २ बी सी °त्कौटलि°.

---

१ सी °ख्या बाहि°. २ ए वाहनादा°. ३ बी सी °गेनायि°. ४ बी तो तृत्त्वादे°. सी °तो दे°. ५ ए बी °तुच्छला°. ६ ए °ण नोता°. बी °ण नैता°. ७ बी °ञ्जे ग°. ८ बी सी °गुंपिल°. ९ ए °स्मिन्नखि°. सी स्मिनखि°. १० सी कौटलि°. ११ ए °टिकी°. १२ सी °टिलका°. १३ बी °वका लो°. १४ ए °क्रा लेहा°. १५ बी °कर्पिकी°. १६ ए °त्यर्थे । य°. १७ बी °टिलाग°. १८ ए सी हारिकी°.

भस्त्रिकान् । अंशभारिकान् । इत्यत्र "भस्त्रादेरिकट्" [ २४ ] इतीकट् ॥

विवधिकी । वीवधिके । अत्र "विवध०" [२५] इत्यादिनेकट् ॥ पक्षे । इकण् । वैवधिकं ॥

कौटिलिकीभूय । इत्यत्र "कुटिलिकाया अण्" [ २६ ] इत्यण् ॥

आम्भसिकानौजसिको मरुदप्रातिलोमिकः ।
अमूः साहसिको भूत्वा समस्प्राक्षीच्छ्रमश्लथाः ॥ १६ ॥

१६. मरुद्वातः श्रमश्लथाः पुष्पोच्चयोत्थखेदेन निःसहा अमूः कामिनीः समस्प्राक्षीन् । कीदृक् । अम्भसा वर्तत आम्भसिकः सजलकणः स चासौ न ओजसा बलेन वर्ततेनौजसिकश्च मृदुः स तथा । तथा न प्रतिलोमं वर्ततेप्रातिलोमिकः पृष्ठवाहित्वेनानुकूलः । किं कृत्वास्प्राक्षीत् । सहसा वर्तते साहसिकः परदारस्पर्शोत्थस्यायतौ विनिपातस्यानालोचकत्वादविमृश्यकारी पारदारिक इव भूत्वा । साहसिक एव हि स्मरोद्रेकोत्थस्वेदेनाम्भसिकोनौजसिकोप्रातिलोमिकश्च सन् परनारीः स्पृशति ॥

गोत्रं पुष्पार्पणे प्रातिकूलिक्या गृह्णतापरा ।
प्रातीपिक्यानुकूलिक्याज्ञायि प्रौढा प्रियेण न ॥ १७ ॥

१७. प्रियेणापरा कामिनी प्रतीपं वर्तते प्रातीपिकी प्रतिकूलानुकूलं वर्तत आनुकूलिक्यनुकूला वा नाज्ञायि । कीदृशा । पुष्पार्पणे प्रातिकूलिक्याः प्रतिकूलं वर्तमानायाः सपत्न्या गोत्रं नाम गृह्णतोच्चारयता

१ ए बी °कूलक्या.

१ बी °विविधि°. २ बी विविध°. ३ सी °ण् । कौटलि°. ४ ए °क । कैटि°. ५ बी स वाष्णो न°. ६ सी °था न. ७ ए °सिकानां°. ८ ए °पं पर्वते.

गोत्रस्खलितापराधं कुर्वतापीत्यर्थः । यतः कीदृक् । प्रौढा । प्रौढा हि[1] गम्भीराशयत्वेन गूढाकारेङ्गिता स्यात् । यदुक्तम् ।

> [2]लब्धाय[3]तिः प्रगल्भा रतिकर्मणि पण्डिता विभुर्दक्षा
> आक्रान्तनायकर्मना[4] निर्व्यूढविलासविस्तारा ॥
> सुरते[5] निराकुलासौ द्रवतामिव याति [6]नायकस्या[7]ङ्के
> न च तत्र विवेक्तुमलं कोयं काहं किमेतदिति ॥

तत्र

> कुपितापरा[8]धिनि संवृत्याकारमधिकमाद्रियते ।
> कोपमपह्नुत्यास्ते धीरा[9] हि रहस्युदासीना ॥ इति ॥

**अपारिमुखिकी पारिपार्श्विकेन्यानुलोमिके ।**
**पत्यौ हासादनान्वीपिक्यक्षिपत्पौष्पिकी स्रजम् ॥ १८ ॥**

१८. अन्या पत्यौ हासान्नर्मणा स्रजमक्षिपत्[10] कण्ठे चिक्षेप । कीदृक्सती । अनान्वीपिकी न प्रतिकूलं वर्तमानानुरक्तेत्यर्थः । अत [11]ए[12]वापारिमुखिकी । परि[13]वर्जने[14]त्र । न मुखं वर्जयित्वा वर्तमाना संमुखी-नेत्यर्थः । तथा पुष्पाण्युञ्छति पौष्पिकी पुष्पाण्युच्चिन्वती । पत्यौ च किंभूते । आनुलोमिकेनुकूलं वर्तमानेनुरक्त इत्यर्थः । अत एव पारिपा-र्श्विके । परिः सर्वतोभावेत्र । यतो यतः प्रियासमीपं ततस्ततो वर्तमाने सदा पार्श्वस्थे ॥

---

१ **सी** °ढा हि गभीराश्रय°. २ **ए** लब्धय°. ३ **बी** °यतिप्र°. ४ **ए** °ममा नि°. ५ **सी** °नेन नि°. ६ **ए** नायिक°. ७ **सी** °स्यान्ते । न. ८ **सी** °राधनि. ९ **सी** °राधि र°. १० **ए** °त् कं चि°. ११ **ए** **सी** एव पा°. १२ **बी** °वापरि°. १३ **बी** **सी** °रिवर्ज°. १४ **बी** °ने च न.

पत्या नागरिकेणान्यान्वीयते स्म वने ह्यसौ ।
मा भैषीद्वीपणेस्मिन्पाक्षिकमात्सिकमार्गिकैः ॥ १९ ॥

१९. अन्या नागरिकेण नगरं रक्षता तलारेण पत्या भर्त्रा वनेन्वीयते स्मानुगम्यते स्म । हेतुमाह । अस्मिन्वनेसौ मत्प्रिया मा भैषीत् । यतः पाक्षिकमात्सिकमार्गिकैः पक्षिणो मत्स्यान्मृगांश्च घ्नद्भिर्लुब्धकधीवरैः कृत्वा भीषण इति ॥

मैनिकः खागिकोसौ सौकरिकः पारिपन्थिकः ।
इत्युक्त्वा भेपयन्कान्तोपस्रजा सस्वजेन्यया ॥ २० ॥

२०. अन्ययापस्रजा पुष्पोच्चयाकरणात्पुष्पमालारहितयैव सत्या कान्तः सस्वजे । यतो भेपयन् भेपृग् भये णिगन्तः । प्रियामेव भाययन् । किं कृत्वा । उक्त्वा । किमित्याह । हे प्रियेसौ प्रत्यक्षो मीनान्खगान्सूकरांश्च घ्नह्रु(ह्रुँ)ब्धकः परिपन्थं पन्थानं वर्जयित्वा तिष्ठति पन्थानमभिव्याप्य हन्ति वा पारिपन्थिकश्चोरोस्तीति ॥

अनौजसिकः । साहसिकः । आम्भसिकः । अत्र "ओजः०" [ २७ ] इत्यादिना इकण् ॥

प्रातिलोमिकः । आनुलोमिके । प्रातीपिकी । अनान्वीपिकी । प्रातिकूलिक्याः । आनुकूलिकी । इत्यत्र "तं प्रति०" [ २८ ] इत्यादिनेकण् ॥

पारिमुखिकी । पारिपार्श्विके । अत्र "परेर्०" [ २९ ] इत्यादिनेकण् ॥

नागरिकेण । पौष्पिकी । इत्यत्र "रक्षदुञ्छतोः" [ ३० ] इनीकण् ॥

---

१ बी °न्यानीय°. २ बी °स्मिन्माक्षि°. ३ बी खानिकोसो सौक°.

---

१ बी °पस्रजा. २ बी सी भापयन्. ३ ए °ह । प्रि°. ४ बी सी °न्थं परिप°. ५ ए °मस्तिव्या°. ६ ए वा परि°. ७ ए °कः । आ°. ८ ए °नान्वपि°. ९ ए °पार्श्विके. १० सी °श्विकी । अ°. ११ बी पौपिकी.

पाक्षिक । मात्सिक । मार्गिकः । अत्र "पक्षि०" [ ३१ ] इत्यादिना-इकण् ॥

अर्थग्रहणात्तत्पर्यायेभ्यो विशेषेभ्यश्च स्यात् । खागिकः । मैनिकः । सौकरिकः ॥

पारिपन्थिकः । अत्र "परि०" [ ३२ ] इत्यादिनेकण् ॥

पत्या द्वैगुणिकेनेवान्या पारिपथिकी स्रजम् ।
दत्त्वाल्पां प्रार्थ्यतानल्पां वृद्धिं गृह्णाति लोभ्यहो ॥ २१ ॥

२१. पारिपथिकी पन्थानं वर्जयित्वा व्याप्य वा तिष्ठन्त्यन्या पत्यानल्पां महतीं स्रजं प्रार्थ्यत । किं कृत्वा । अल्पां लघ्वीं स्रजं दत्त्वा द्विगुणं गृह्णाति द्वैगुणिकस्तेन यथाल्पं दत्त्वाधमर्णो बहु याच्यते । युक्तं चैतत् । यस्माल्लोभी वृद्धिं कलान्तरं गृह्णाति । अहो इत्यामन्त्रणे ॥

पारिपथिकी । इत्यत्र "परिपथात्" [ ३३ ] इतीकण् ॥

द्वैगुणिकेन । इत्यत्र "अवृद्धेर्०" [ ३४ ] इत्यादिनेकण् ॥ अवृद्धेरिति किम् । वृद्धिं गृह्णातीति वाक्यमेव ॥

दशैकादशिकी नास्मि दशैकादशिका तु सा ।
कुसीदिकेति जल्पन्ती पत्ये पुष्पाणि काप्यदात् ॥ २२ ॥

२२. कापि पत्ये पुष्पाण्यदात् । कीदृक्सती । जल्पन्ती क्षणमियमीर्ष्यां करोत्विति प्राक्पुष्पाण्यनाददानं शठं पतिं वदन्तीत्यर्थः । कथमित्याह । कुसीदं वृद्धिस्तदर्थं द्रव्यमपि कुसीदं तद्गृह्णाति यस्तत्संबोधनं हे कुसीदिक त्वं हि स्वयं कलान्तराजीवी ततो मामप्यात्मसदृशीमाशङ्क्य त्वं मत्तः पुष्पाणि नादत्से तत्त्वयुक्तमेवेत्यर्थः । यतोस्म्यहं न दशैकादशि-

१ बी प्रार्थिता°.

१ सी °णात्प°. २ बी मैरि°. ३ बी लघ्वीश्रजं. ४ बी सी °मर्णे ब°. ५ ए वृद्धिक°. ६ ए वृद्धिर°. ७ ए अत्रवृ°. ८ सी °ति वाक्यु°. ९ ए °न गृह्णा°. १० ए °शङ्का त्व.

की दशभिरेकादश दशैकादशास्तान्न गृह्णामि सा तु त्वद्वल्लभा दशैकादशिका सैव त्वत्तोलंकारादि ग्रहीतुं तव पुष्पदानाद्युपचारं करोत्यहं त्वकृत्रिमप्रेम्णैव ते पुष्पाणि ददामीत्यभिप्राय इति ॥

कुसीदिक । इत्यत्र "कुसीदादिकट्" [ ३५ ] इतीकट् ॥

दशैकादशिका । दशैकादशिकी । इत्यत्र "दश०" [३६] इत्यादिनेक इकट् च ॥

**आर्थिकी पादिकी चार्धपदिक्यपि च नावदत् ।**
**काचिल्लालामिकप्रातिकण्ठिकाद्वित्रसन्त्यलेः ॥ २३ ॥**

२३. काचिन्नावदत । किंभूता । आर्थिक्यप्यर्थं गृह्णत्यपि प्रयोजनवत्यप्यत एव पादिक्यपि चार्धपदिक्यपि च पदमर्धपदं वा मनसा गृह्णत्यपि विवक्षुरपीत्यर्थः । तर्हि कुतो नावददित्याह । यतोलेर्वित्रसन्ती भणने मुखसौरभाकृष्टोयमोष्ठादि मा दशदिति बिभ्यती यतो ललामं तिलकं गृह्णाति लालामिकः स चासौ प्रातिकण्ठिकश्च प्रतिकण्ठं कण्ठं लक्ष्यीकृत्य पुष्पमालादि गृह्णंस्तस्मात्तिलककण्ठमालादिगन्धलोभेन मुखान्तिके भ्राम्यत इत्यर्थः ॥

आर्थिकी । पादिकी । आर्धपदिकी । लालामिक । प्रातिकण्ठिकात् । इत्यत्र "अर्थ०" [ ३७ ] इत्यादिनेकण् ॥

**पारदारिक साभर्तृकिकालं ते स्रजानया ।**
**भूपर्यं प्रतिपथिकां तामितीद्व चिक्षिपेन्यया ॥ २४ ॥**

१ बी आर्थिकी°. २ बी च न व°. ३ बी र्यति प्र°.

१ सी °र्भाति सा. २ ए सी °नादत्युप°. ३ ए °कता. ४ बी °गृह्णत्य°. ५ ए °धपादि°. ६ ए मा दिश°. सी मा देश°. ७ ए °ति ललाम°. ८ ए बी लक्षीकृ°. ९ ए °स्तस्मा°. १० सी °दिलो°. ११ ए °की । अर्ध°. १२ बी °धपादि°.

२४. अन्ययेड् भर्ता चिक्षिपे स्रजं ददन्निरस्तः । कथमित्याह । हे पारदारिकं[1] परस्त्रियं गच्छंस्तथा हे साभर्तृकिक सपत्नीं गच्छन्ननया ते[2] तव स्रजा ममालं सृतं किं त्वनया स्रजा कृत्वा[3] प्रतिपथिकीं(कां) कुलटात्वेन प्रतिपथं[4] पन्थानं[5][6] पन्थानं प्रति गच्छन्तीं[7] तां[8] स्वप्रियां स्वमनोभीष्टां[9] परदारादिकां[10] भूपयेति ॥

**मुधास्याक्रन्दिकी दाण्डमाथिकी त्वां लताधिया ।**
**यत्प्रातिपथिको[1] नालिस्त्यक्तेत्यन्या[2] सखीमशात् ॥ २५ ॥**

२५. अन्या सखीमशादवदत्[11] । कथमित्याह । हे सख्यसि त्वमलि[12]भयेन मुधा निरर्थकमाक्रन्दिक्या[13]क्रन्दन्ति यत्र स देश आक्रन्द[14] आक्रन्द्यत[15] इति वाक्रन्द आर्तायनं शरणमुच्यते । तं धावसि । तथा दाण्डमाथिकी माथशब्दः पथिपर्यायो दण्ड[16] इव माथो दण्डमाथ ऋजुमार्ग[17]स्तं च मुधा[18] धावसि । यद्यस्मादलिस्त्वां लता[19]धियानेकपुष्पमालापरिधानेन पुष्पगन्धोद्धुरत्वाल्लतेयमिति बुद्ध्या न त्यक्ता न त्यक्ष्यतीति[20] ॥

**पादविक्या लतामध्ये खिन्नाङ्ग्या नर्मकर्मठः ।**
**कस्याश्चिदानुपदिकः पतिः सौस्नातिकोभवत्[3] ॥ २६ ॥**

---

१ बी °थिके ना°. २ ए °लिस्त्यक्तेत्य°. ३ सी °त् । यतः.

---

१ ए °कं स्त्रि°. २ बी ते नव. ३ ए °त्वा पति°. ४ बी सी °तिपंथ°. ५ सी °न्थानां ग°. ६ ए °नं ग°. ७ ए सी °च्छन्तीं ता. ८ बी नां प्रि°. ९ ए °ष्टां पार°. १० ए °दिका भू°. ११ ए °वत्. १२ बी °ममिलये°. १३ सी °न्दिनी आक्र°. १४ ए क्रन्द्य°. १५ सी आर्ता°. १६ ए °ण्डमाथ°. १७ ए °जुमार्गे°. १८ बी °धाव°. १९ बी °ताधेया°. २० ए बी त्यक्षति.

२६. कस्याश्चिन्नार्याः पतिः सौस्नातिकः सुस्नातं पृच्छन्नभवत् । यतः स्विन्नाङ्गयाः । कुत एतदित्याह । लतामध्ये पुष्पोच्चयनार्थं पादविक्याः पदवीं मार्गं धावन्त्याः । कीदृक्सन् । नर्मकर्मठो हास्यक्रियायां साधुस्तथानुपदिकोनुपदं पदस्य पश्चाद्धावन्प्रत्यासत्त्या धावन्नित्यर्थः । स्विन्नाङ्गीं प्रियां दृष्ट्वा पतिर्हास्येन सुस्नातं पप्रच्छेत्यर्थः ॥

सौखशय्यिक्यभूत्पत्युः शय्यां निर्माय पल्लवैः ।
प्राभूतिकवैचित्रिकसौवस्तिकस्य काचन ॥ २७ ॥

२७. काचन पल्लवैः शय्यां निर्माय पत्युः सौखशय्यिक्यभूत् । हे भर्तः सुखकारिणी शय्येति प्रपच्छेत्यर्थः । यतः प्राभूतिकवैचित्रिकसौवस्तिकस्य प्रेमातिरेकेणातिवैदग्ध्येन चानेकचाटुकारवक्रोक्त्यादिभाषित्वात्प्रभूतं विचित्रं स्वस्ति च शुभं च ब्रुवाणस्य ॥

पारदारिक । साभर्तृकिक । इत्यत्र "पर०" [ ३८ ] इत्यादिनेकण् ॥

प्रतिपथिकाम् । प्रातिपथिकः । अत्र "प्रति०" [ ३९ ] इत्यादिनेकेकणौ ॥

दाण्डमाथिकी । पादविक्याः । आक्रन्दिकी । इत्यत्र "माथ०" [ ४० ] इत्यादिनेकण् ॥

आनुपदिकः । अत्र "पश्चाति०" [ ४१ ] इत्यादिनेकण् ॥

सौस्नातिकः । सौखशय्यिकी । अत्र "सुस्नात०" [ ४२ ] इत्यादिनेकण् ॥

प्राभूतिक । वैचित्रिक । इत्यत्र "प्रभूत०" [ ४३ ] इत्यादिनेकण् ॥ क्रियाविशेषणादयमिष्यते । क्वचिदक्रियाविशेषणादपि । सौवस्तिकस्य ॥

---

१ ए सौख्यशय्य°. २ बी °य्यिकभू°. ३ सी °त्युः सौख°. ४ ए °वैः । क्यभू°.

---

१ ए °न्नव°. २ बी °शय्यक्य°. ३ बी सुखिका°. ४ ए °रिय यानि प°. ५ बी °र्तृक. ६ ए सी °थिक । अ°. ७ सी °क्रन्दकी. ८ सी °ण । प्रा°. ९ ए °दवि°.

काचिन्माशब्दिकी शाब्दिक्यामप्याल्यां[1] लतान्तरे ।
नैत्यशब्दिकवाचालसपत्न्या अशृणोद्वचः[2] ॥ २८ ॥

२८. काचिल्लतान्तरे लतामध्ये नित्यशब्द इति ब्रूते नैत्यशब्दिको मीमांसकस्तद्वद्वाचाला[1] या सपत्नी तस्या वचोऽशृणोत्[2] । किमेषा पत्युरग्रे वक्तीत्याकर्णयत् । कीदृक्सती । शाब्दिक्यामपि वैयाकरणीत्वेनाविनष्टं शब्दमुच्चारयन्त्यामप्याल्यां सख्यां विषये माशब्दिकी माशब्द इति ब्रुवाणा मा शब्दः क्रियतामिति ब्रुवाणेत्यर्थः[3] ॥

लालाटिकं कौकुटिकं[3] दार्दरिक्या[4] सह स्थितम् ।
प्रियं दृष्ट्वा लतान्तः काप्यबध्नाल्लतयैव हे ॥ २९ ॥

२९. कापि कोपातिरेकेण बन्धनान्तरग्रहणे कालक्षेपासहिष्णुत्वाल्लतयैव प्रियमबध्नात् । किं कृत्वा । लतान्तर्दार्दरिक्या[4] दर्दरो[5] घटो वादित्रं[6] च । तत्र वादित्रं कुर्वत्येवमुच्यते । तया सह स्थितं दृष्ट्वा । यतः कौकुटिकं दाम्भिकचेष्टा[7] कुकुटी तामाचरन्तं मायिनं तथा ललाटं पश्यति ललाटदर्शनेन दूरावस्थानं[8] लक्ष्यते तेन[9] च कार्येष्वनुपस्थानं[10] यः प्रियो द्रष्टुं प्रियाललाटमिति[11] दूरतो याति न तु तदभिप्रेतकार्ये उपतिष्ठते स एवमुच्यते । ललाटमेव वा कोपप्रसादज्ञानार्थं[12] यः[13] पश्यति स ल(ला)लाटिकस्तम् ॥

माशब्दिकी । नैत्यशब्दिक । इत्यत्र "माशब्द०" [ ४४ ] इत्यादिनेकण् ॥

---

१ बी °मप्यल्यां. २ बी सी असृणो°. ३ ए °कं दर्दारि°. ४ बी दादरि°.

---

१ ए °स्तद्वा°. २ बी °चोसृणो°. ३ ए °र्थः । ललाटि°. ४ सी °दरो°. ५ बी °दरा घटो वा°. ६ सी °त्रं कुर्वित्ये°. ७ ए °चेष्टां कु°. ८ सी °नं यः. ९ सी °न का°. १० ए °नं प्रि°. ११ सी °याद्रष्टं प्रियाल°. १२ सी °दनामा यः. १३ ए °य यत्पश्य°.

शाब्दिक्याम्[1] । दार्दरिक्या । लालाटिकम् । कौक्कुटिकम् । इत्येते "शाब्दिक०" [ ४५ ] इत्यादिना निपात्याः ॥

काचित्सामाजिकान्सैन्यान्पारिषद्याश्च सैनिकीः ।
पार्षद्या रञ्जयामास स्रजं गीतिं च गुम्फती ॥ ३० ॥

३०. काचित्सामाजिकान्समाजं समवेतान्सभास्थान्सैन्यान्सेनां समवेतान्सेनानरांस्तथा पारिषद्याः[2] परिषदं समवेताः सैनिकीश्च[3] सेनां समवेताः[4] स्त्रीश्च रञ्जयामास । कीदृक्सती । पर्षदं समवैति[5] पार्षद्या[6] सभायां निषण्णा[7] तथा स्रजं गीतिं च गुम्फती रचयन्ती ॥

सामाजिकान् । इत्यत्र "समूह०" [ ४६ ] इत्यादिनेकण्[8] ॥

पार्षद्या । इत्यत्र "पर्षदो ण्यः" [ ४७ ] इति ण्यः ॥ परिषच्छब्दादपीच्छ[9]न्त्येके । पारिषद्याः ॥

सैन्यान् । इत्यत्र "सेनाया वा" [ ४८ ] इति वा ण्यः ॥ पक्षे । सैनिकीः[10] ॥

आधर्मिक्या आपणिक्यास्तस्या धार्मिक देहि[11] स्रजः ।
ऊचे स्रजोर्पयन्दष्टकक्षानख इनोन्यया ॥ ३१ ॥

३१. अन्ययेनो भर्तादः एतत्कर्मोचे । तदेवाह[11] । हे धार्मिक धर्मं[12] न्याय्यं चरन्नुपहासवचनमिदम् । तस्याः स्वप्रियायाः[13] स्रजो देहि । कीदृश्याः । आपणिक्या आपणस्य हट्टस्य धर्म्यायाः पण्याङ्गनाया अत एवाधार्मिक्या[14] अधर्मं पापमाचरन्त्या इति । कुतोयमूचेद[15] इत्याह । यतो

१ सी °क्या । ललाटि°. २ ए °पद्याः प°. ३ सी °निकैश्च. ४ बी °वेता स्त्री°. सी °वेतांश्च र°. ५ ए °मवैति. ६ सी °षद्याः स°. ७ बी °षन्ना त°. सी °षण्णाः त°. ८ ए °दिनाक°. ९ ए °रिच्छ°. १० बी सी °निकी । आ°. ११ ए °ह । धा°. १२ सी धर्म्यं न्या°. १३ ए °याया स°. १४ बी °वा-धार्मि°. १५ सी °नो हेतोय°.

दृष्टाः कक्षायां नखास्तन्नखक्षतानि यस्य सः। एवंविधोपि कुत इत्याह। यतः स्रजोर्पयन् ॥

धार्मिक। आधर्मिक्याः। अत्र "धर्म०" [ ४९ ] इत्यादिनेकण् ॥

आपणिक्याः। अत्र "पथ्या धर्म्ये" [ ५० ] इनीकण् ॥

**स्रजाघ्रानां पतन्तीं च प्रियोन्यामहसीदिति।**
**नावैशस्त्रेपि नारे स्त्री पटुः शास्त्रे नु माहिषः ॥ ३२ ॥**

३२. प्रियोन्यामहसीन्। कीदृशीं सतीम्। गोत्रस्खलिताद्यपराधिनं प्रियं स्रजाघ्रानां पतन्तीं च कोपाटोपेन पत्युर्घाताय प्रयत्नात्स्वयमभिसरणेन पत्यौ च घातभयेन पश्चादपसरति घातेन सह स्खलितत्वादन्तर्गले पतन्तीं च। कथमहसीदित्याह। स्त्र्यवैशस्त्रेपि विशसितुः क्रूरस्य धर्म्ये वैशस्त्रं न तथावैशस्त्रं तस्मिन्नपि कोमलेपि नारे नरस्य धर्म्ये नरोचिते प्रहारादौ विषये न पटुः। यथा महिष्या धर्म्यो माहिषः पिण्डारोवैशस्त्रेपि प्रसन्नत्वेन कोमलेपि शास्त्रे शास्त्रुध(धे)र्म्ये ग्रन्थे विषये मूर्खत्वान्न पटुः स्यात्तस्मादमुमन्यायं कुर्वती त्वं युक्तेतिथेत्यर्थ इति ॥

**वैभाजित्री मालिकीव सखीनां काप्यदात्स्रजः।**
**गौल्मिकेच्छोर्विक्रयं नु वनस्य ददती श्रियम् ॥ ३३ ॥**

१ बी सी °तन्ती च. २ ए सी पटु शा°. ३ सी °लिनीव म°. ४ ए गौलिके°.

१ बी सी दृष्टा क°. २ ए °न्। कार्मिकः। आधार्मिक्या। अ°. ३ सी °मिका। अ°. ४ बी धर्मे इ°. ५ बी गोत्रे स्ख°. ६ सी °ताप°. ७ बी °राधेनं. ८ बी °नां ती च. ९ बी धाते भ°. १० ए °रालो प°. ११ बी °र्म्ये नारो°. १२ सी धर्मो मा°. १३ ए °र्म्यो महि°. १४ बी शास्त्रध°. सी शास्त्रवर्ण्ये ग्र°. १५ ए ग्रन्थं वि°. १६ ए °मुन्या°. १७ ए °क्तं पतिष्वेत्य°.

**३३.** कापि मा[1]लिकीव मालापण्येव मालिनीव वैभाजित्री विभाजयिता विभागकारी तद्धर्मादनपेता विभागकारिणी सती सखीनां स्रजोदात् । किंभूता । वनस्य वक्रयं नु भाट[2]कमिव श्रियं लीलाविहारादिना शोभां ददती । कीदृशस्य । गौल्मिके[3]च्छोर्गुल्मानां लतादिस्तम्बानां गुल्माया वा वनस्य पुष्पाद्युच्चयेनोप[4]भुक्तानामवक्रयो भाटकं गौल्मिकस्तस्येच्छोः ॥

शास्त्रे । नरादि । नारे । माहिपः । इत्यत्र "ऋन्नरादेरण्" [ ५१ ] इत्यण् ॥

वैभाजित्री । वैशस्त्रे । अत्र "विभाजयितृ०" [ ५२ ] इत्यादिनाण् । विभाजयितुर्णिलुक् । विशतुश्चेड्लुक् ॥

गौल्मिक । इत्यत्र "अवक्रये" [ ५३ ] इतीकण् ॥

मालिकी । इत्यत्र "तदस्य पण्यम्" [ ५४ ] इतीकण् ॥

शालालुक्यां[1] किशरिकी[2] तगरिक्या[3] शलालुकी ।
विलक्षमूचे हन्तैताः कुसुमैरेव वासिताः ॥ ३४ ॥

**३४.** शालालुक्या शलालुगन्धद्रव्यपण्यया स्त्रिया किशरिकी[5][6] किशरगन्धद्रव्यप[7]ण्या स्त्री[8] शलाल्वादिगन्धद्रव्या[9]णामिं[10]वक्रयसंभावनया विलक्षमूचे । एवं तगरिक्या शलालुकी चोचे । किमित्याह । हन्तेति खेदे[11] । एता विलासिन्यः कुसुमैरेव वासिता इति । इतिरत्र ज्ञेयः ॥

कि[12]शरिकी । तग[13]रिक्या । इत्यत्र "किशरादेरिकट्" [ ५५ ] इतीकट् ॥

१ **सी** °क्या तगरकी त°. २ **बी** °शरकी. ३ **ए बी** °गरक्या.

१ **सी** °लिर्नीव मा°. २ **बी** °टमि°. ३ **बी** °च्छोगुल्मा°. ४ **सी** °पभोक्ता°. ५ **बी** किशारि°. ६ **सी** °शरकी. ७ **ए** °पणा स्त्री. ८ **बी** स्त्री शाला°. ९ **ए** °व्यामविक्र°. १० **बी** °मविक्र°. ११ **ए** °दे । वि°. १२ **ए सी** °शरकी. १३ **ए** °रिका । इ°.

शलालुकी[1] । शालालुक्या । इत्यत्र "शलालुनो[3] वा" [ ५६ ] इतीकड्वा ॥

माड्डुकिक्यो झार्झरिक्य[1]ः काञ्चीनादैः[2] स्त्रियः श्रमात्[3] ।

माड्डुकीं झार्झरीं[4] नूर्मिनादैः स्नातुं नदीमयुः ॥ ३५ ॥

३५. स्त्रियः पुष्पोच्चयोत्थाच्छ्रमाद्धेतोर्नदीं[5] वर्णासां स्नातुमयुः । कीदृश्यः सत्यः । गमनवशात्काञ्चीनादैः कृत्वा मड्डुकझर्झरौ वाद्यभेदौ तद्वादनं[6] शिल्पं यासां ता माड्डुकिक्य इवैं[7] झार्झरिक्य इव वा । किंभूताम् । ऊर्मिनादैः कृत्वा माड्डुकीं नु झार्झरीं नु ॥

माड्डुकिक्यः । झार्झरिक्यः । अत्र "शिल्पम्" [ ५७ ] इतीकण् ॥

माड्डुकीम्[8] । झार्झरीम्[9][10] । अत्र[11] "मड्डुक०" [ ५८ ] इत्यादिना वाण् ॥ पक्षे । माड्डुकिक्यः[12] । झार्झरिक्यः ॥

ताम्बूलिक्योधरैः[5] सिन्धुसांस्थपद्मदलश्रियाम् ।

नार्यश्छात्र्यो नु चौर्यो नु तूष्णीकैस्तर्किताः प्रियैः ॥ ३६ ॥

३६. प्रियैस्तूष्णीकैस्तूष्णींशीलैः[13] सावधानैः सद्भिरित्यर्थः । नार्यस्तर्किताः । कथमित्याह । अधरैः कृत्वा छात्र्यो नु शिष्या इव चौर्यो नु चुराशीला इव वा[14] । कासाम्[15] । सिन्धौ वर्णासायां संस्था संस्थानं शीलमेषां सांस्थानि स्थास्नूनि[16] यानि पद्मदलानि प्रस्तावाद्रक्तोत्पलपर्णानि तेषां

१ बी झाझरि°. २ बी कान्चीना°. ३ ए श्रनात् । नाड्डु°. ४ बी झाझरीं. ५ ए तामूलि°.

१ बी °की । शलालुका । इ°. २ सी °लुका । इ°. ३ बी °लुमो वा. ४ ए °च्छ्रनाद्धे°. ५ ए °नदीव°. ६ बी °नं शल्पं. ७ सी °व वा । किं. बी °व वा झाझरि°. ८ सी °म् । झझरी°. ९ बी झाझरी°. १० ए °री । अ°. ११ बी °त्र माड्डुक्य इ°. १२ ए °किक्याः । झा°. १३ ए °ष्णीशैलैः. १४ सी वा । कस्या सि°. १५ बी कासीं सि°. १६ सी °नि प°.

श्रियां रक्तत्वादिलक्ष्मीणाम् । यतः कीदृश्यः । ताम्बूलिक्यस्ताम्बूल-भक्षणशीलास्ताम्बूलिकीत्वात्तासामधरा रक्तोत्पलदललीला इत्येवं वितर्कः ॥

ताम्बूलिक्यः । अत्र "शीलम्" [ ५९ ] इतीकण् ॥

सांस्थ । छात्र्यः । चौर्यः । अत्र "अङ्गस्था०" [ ६० ] इत्यादिनाञ् ॥

तूष्णीकैः । इति "तूष्णीकः" [ ६१ ] इत्यनेन निपात्यते ॥

ताः पारश्वधयाष्टीकास्तरोधःकण्टकां नदीम् ।
पारश्वधिकशाक्तीककृतरक्षास्ततोविशन् ॥ ३७ ॥

३७. ततस्ता नार्यो नदीमविशन् । किंभूताः । पारश्वधिकैः पर्शु-प्रहरणैः शाक्तीकैश्च शक्तिप्रहरणैः कृता रक्षा यासां ताः । कीदृशीम् । पारश्वधयाष्टीकास्तरोधःकण्टकां पर्शुप्रहरणैर्यष्टिप्रहरणैश्चोत्क्षिप्ततटकण्टकाम् ॥

पारश्वधिक । इत्यत्र "प्रहरणम्" [ ६२ ] इतीकण् ॥

पारश्वध । इत्यत्र "परश्वधाद्वाण्" [६३] इति वाण् ॥ पक्षे । पारश्वधिक ॥

शाक्तीक । याष्टीक । इत्यत्र "शक्ति०" [ ६४ ] इत्यादिना टीकण् ॥

ता ऐष्टिकैरिवैष्टीका नास्तिकैरिव चास्तिकाः ।
आम्भसीकैः समं कान्तैराम्भसिक्यः प्रजह्रिरे ॥ ३८ ॥

३८. आम्भसिक्यो जलप्रहरणास्ता नार्य आम्भसीकैर्जलप्रहरणैः कान्तैः सह प्रजह्रिरे । यथैष्टीका इष्टिरभिचारार्थो याग एव प्रहरणं येषां ते कुत्सितर्त्विज ऐष्टिकैरभिचारार्थयागप्रहरणैः सहेष्टिरूपप्रह-

१ बी °रस्वधि°.

१ ए °त्येव वितर्क्यां । ता°. २ बी यासां: । र्की°. ३ ए सी क । या°. ४ ए °र्थो योग. ५ ए °ज एष्टि°.

रणैरेव कृत्वा प्रहरन्ति । यथा[1] चास्ति परलोकः[2] पुण्यं पापमिति वा[3] मतिरेषामास्तिका नास्तिकैः सह प्रहरन्ति विरुद्धमतत्वाद्विवादेन युध्यन्ते ॥

दैष्टिकैकान्यिककैकादशान्यिकानैकरूपिकम् ।
शिष्यं गुरुर्न्वहन्नब्जैर्नाम्न्येका स्खलितं पतिम् ॥ ३९ ॥

३९. एका नाम्नि स्खलितं सन्तं पतिमब्जैः कृत्वाहन् । यथा गुरुरुपाध्यायः शिष्यं कम्बया हन्ति । किंभूतं सन्तम् । दिष्टं दैवं पुण्यं तत्प्रमाणं न तु व्यवसाय इति मतिरस्य दैष्टिकस्तथैकमन्यदपपाठोनु-[4]योगे[5] परीक्षायां वृत्तमस्यैकान्यिकस्तथैकादशान्या[6]न्यपपाठरूपाण्यनुयो[7]-गेस्य वृत्तान्येकादशान्यिकस्तथैकं रूपं वारोध्ययने वृत्तमस्यैकरूपिको न तथानेकरूपिकोतिमन्द[8]प्रज्ञत्वेनासकृद्धोपको विशेषणकर्मधारये तं तथा ॥

हृष्टास्तरङ्गैः कान्ताभ्रूलास्यद्वादशरूपिकैः ।
राजाग्रभोजनिक्येन सैन्यो मौदकिका इव ॥ ४० ॥

४०. सैन्यास्तरङ्गैर्नदीकल्लोलैः[9] कृत्वा हृष्टाः । यतो द्वादशरूपाणि वारा अध्ययने वृत्तान्येषां द्वादशरूपिकाः कान्ताभ्रूलास्यानां द्वादश-रूपिकास्तैः कुटिलत्वेन[10] स्वप्रेयसीविलासभ्रूतुल्यैरित्यर्थः । यथा मो-दका भक्ष्यं[11] हितमेभ्यो मौदकिका राजाग्र[12]भोजनिक्येनाग्रभोजनमस्यै

१ प °न्या मोद°.

१ प बी °था वास्ति. २ प सी °लोक पु°. ३ प वा मिति°. ४ सी °ष्टिकैस्त°. ५ प °योगो प°. ६ बी °दश्यांन्या°. ७ प बी °पान्यनु°. ८ सी °पितोति°. ९ बी °कास्तिकैः कु°. १० सी °न सप्रे°. ११ बी भक्षं हि°. १२ प राग्र°.

नियुक्तं दीयते[1] आग्रभोजनिको राज्ञ आग्रभोजनिको राजाग्रभोजनिकस्तस्य भावेन राज्ञोग्रभोजनेन[2] मोदकादिना कृत्वा हृष्यन्ति ॥

ऐष्टीकाः । ऐष्टिकैः[3] । आम्भसीकैः । आम्भसिक्यः[4] । अत्र "वेष्टयादिभ्यः" [ ६४ ] इति वा टीकण् ॥

नास्तिकैः । आस्तिकाः[5] । दैष्टिक । इत्येते "नास्तिक०" [ ६६ ] इत्यादिना निपात्याः ॥

ऐकान्यिक । इत्यत्र "वृत्त०"[6] [ ६७ ] इत्यादिनेकण् ॥ अन्ये त्वपपाठादन्यत्राप्यध्ययनमात्रे[7] प्रत्ययमिच्छन्ति । अनेकरूपिकम् ॥

एकादशान्यिक । इत्यत्र "बहु०" [ ६८ ] इत्यादिना-इकः । अत्राप्यन्ये[8] पूर्ववदन्यत्रापीच्छन्ति । द्वादशरूपिकैः ॥

मौदकिकाः । अत्र[9] "भक्ष्यं०" [ ६९ ] इत्यादिनेकण् ॥

राजाग्रभोजनिक्येन । इत्यत्र "नियुक्तं दीयते" [ ७० ] इतीकण् ॥

मांसौदनिकया श्राणिकेव मांसौदनिक्यपि ।
श्राणिक्येवामिलन्नार्यः सपत्नीभिर्न वार्ष्वपि[1] ॥ ४१ ॥

४१. नार्यः सपत्नीभिः सह वार्ष्वपि जलेष्वपि मध्ये नामिलन् । जलेषु ह्येकेन भर्त्रा सह जलकेलेः[10] क्रियमाणत्वेनात्यासन्नत्वान्मिथोमेलकः सुघटः परं तत्राप्यतीर्ष्यालुत्वेन वचनालापसंमुखेक्षणाङ्गस्पर्शादिरक्षयां[11] न मिलिता इत्यर्थः । यथा श्राणा यवागूर्नियुक्तमस्यै[12] दीयते

१ बी °भिनर्वार्ष्वं°.

१ बी °त अग्रेभो°. २ प °ने मो°. ३ बी °ष्टिकाः । आ°. ४ प °सिकः । अ°. ५ बी °स्तिका । दै°. ६ प सी वृत्येत्या°. ७ सी °मात्रप्र°. ८ प °प्यने पू°. ९ बी °त्र भिक्षं इ°. १० प °ले: श्रिय°. ११ सी °या मि°. १२ बी °गूर्नियु°.

श्राणिका पथ्याशिनी मांसौदनो[1] मांसमिश्र ओदनो नियुक्तमस्यै दीयते मांसौदनिका तया प्रबलाम्ग्या स्त्रिया सह[2] विरुद्धधर्मतया न मिलति । यथा च मांसौदनिक्यपि[3] श्राणिक्या सह न मिलति[4] ॥

श्राणिका श्राणिक्या । मांसौदनिकया[5] मांसौदनिकी । इत्यत्र "श्राणा०" [ ७१ ] इत्यादिनेको वा ॥

भाक्तास्यभाक्तिको न्वोदनिक्यनौदनिकी च किम् ।
अनोजस्काम्बुघातेष्वित्यूचे दम्पतिभिर्मिथः ॥ ४२ ॥

४२. दम्पतिभिर्मिथो नर्मणोचे । किमित्याह । भक्तमस्मै नियुक्तं दीयते हे[6] भाक्त प्रिय यथासि त्वमभाक्तिको भक्तभोजनरहितः सन्ननोजस्को भवसि । तथाम्बुघातेषु सत्सु किमित्यनोजस्को जलप्रहारविधुरत्वेन[7] निस्तेजस्कोसीति । तथौदनो नियुक्तमस्यै[8] दीयते हे ओदनिकि प्रिये यथा त्वमनौदनिक्योदन[9]भोजनरहितानो[10]जस्का[11] भवसि तथाम्बुघातेषु[12] सत्सु किमित्यनोजस्कासीति[13] । अनोजस्काम्बुघातेष्वित्यत्रानोजा अम्बुघातेष्विति पाठो युक्तः प्रतिभाति । स्त्रीलिङ्गे[14] पुल्लिङ्गे चास्य समानरूपत्वात् । परमनो[15]जस्का[16]म्बुघातेष्विति पाठः प्रायो दृश्यते । तस्मादनोजस्केत्ययं पुंसि स्त्रीलिङ्गव्यत्ययेन योज्यः[17] ॥

भाक्त । ओदनिकी(कि)[18] । अत्र "भक्त०" [ ७२ ] इत्यादिनाणिकटौ । पक्षे । अभाक्तिकः । अनौदनिकी ॥

---

१ **प** °दनौ मां°. २ **सी** °ह ध°. ३ **सी** °निकापि. ४ **प** °ति । प्राणि°. ५ **सी** °निकी. ६ **बी** हे भक्त. ७ **सी** °न रहि°. ८ **बी** °क्तस्य दी°. ९ **बी** °दनक्या भो°. १० **प बी** °तानौज°. ११ **बी** °जस्को भ°. १२ **प सी** °पु कि°. १३ **प** °जसस्का°. १४ **सी** °ङ्गे चास्यमा°. १५ **बी** ममोज°. १६ **प** °जस्कां घा°. १७ **बी** °ज्यः । भांक्त. १८ **प** °निकिः । अ°.

क्ष्मां नावयज्ञिकीं पाकयज्ञिकीं च द्विजा यथा ।
अहतेच्छा आतरिकैर्नार्योगाहन्त निम्नगाम् ॥ ४३ ॥

४३. नार्यो निम्नगामगाहन्त व्यलोडयन् । कीदृश्यः सत्यः । आतरिकैरातरे नद्यादितीर्थे नियुक्तैर्नरैरहतेच्छा अयं नदीप्रवेशोवगाह्य इत्यस्खलिताभिलाषाः । यथा द्विजा ऋत्विजोहतेच्छाः सन्तो याग-क्रियाभिः क्ष्मामवगाहन्ते । किंभूताम् । नवयज्ञा नवैरन्नैः साध्या यागा अस्यां वर्तन्ते तां नावयज्ञिकीं तथा पाकयज्ञः पाकेन हविर्विशे-षेण साध्यो यज्ञोस्यां तां पाकयज्ञिकीम् ॥

नावयज्ञिकीम् । पाकयज्ञिकीम् । अत्र "नवयज्ञ०" [ ७३ ] इत्यादिनेकण् ॥

आतरिकैः । अत्र "तत्र०" [ ७४ ] इत्यादिनेकण् ॥

स्मरायुधागारिकाणां वारिघातैः स्मरायुधैः ।
युवानो मुमुहुस्तासां सांध्यिकाशुचिका इव ॥ ४४ ॥

४४. सांध्यिकाशुचिका इव यथा संध्यायामध्यायिनोशुचौ देशे-ध्यायिनश्चाकालादेशाध्ययनोत्थेन विघ्नेन मुह्यन्ति तथा तासां स्त्रीणां वारिघातैः कृत्वा युवानो मुमुहुर्मूर्छिताः । यतः स्मरायुधैर्विशेष्यार्था-नुकूल्येनात्र स्मरायुधशब्देनोपचारात्स्मरायुधघाता उच्यन्ते । तेन कामशरप्रहारतुल्यैः । कीदृशीनाम् । स्मरायुधागारिकाणां स्मरस्या-युधानि जलक्रीडास्तेषामगारं गृहं नदी तत्र नियुक्तानाम् । जलकेलि-

१ बी °च्छा या आ°. २ बी सी °सांधिक्याशु°. ३ ए सी °व । य°.

१ ए °तीर्थनि°. २ बी सी °शोनाव°. ३ ए यागो अ°. ४ ए °शोस्यां तां. ५ बी देशोध्या°. ६ ए °शेध्ययि°. ७ ए बी सरायु°.

रूपमायुधं हि स्मरस्यैतद्दत्तमेव स्यात्। अन्योपि भटः शस्त्रागारनियुक्ताच्छस्त्रं गृहीत्वा शत्रून्प्रहरति ततश्च ते मूर्छन्ति ॥

स्मरायुधागारिकाणाम्। अत्र "अगारान्तादिकः" [ ७५ ] इतीकः ॥

अदेश। आशुचिकाः ॥ अकाल। सांध्यिक। इत्यत्र "अदेश०" [ ७६ ] इत्यादिनेकण् ॥

किं नु नैकटिकीवासीत्युदित्वा वार्क्षमूलिकी।
सांस्थानिकी सतीर्थ्याम्भस्येकयाकृष्य चिक्षिपे ॥ ४५ ॥

४५. समानतीर्थे गुरौ वसति सतीर्थ्या सख्येकयाकृष्याम्भसि चिक्षिपे जलक्रीडार्थं क्षिप्ता। कीदृक्सती। वृक्षमूले वसति वार्क्षमूलिकी तथा संस्थानेवयवरचनायां व्यवहरत्याचरति सांस्थानिकी मयाम्भसि न प्रवेष्टव्यमित्यवस्थानविशेषेण तिष्ठन्तीत्यर्थः। किं कृत्वा चिक्षिपे। उदित्वा। किमित्याह। किं नु नैकटिकीवासि निकटे वसति नैकटिक्यारण्यक्या भिक्षुण्या ग्रामोत्क्रोशे वस्तव्यमिति यस्याः शास्त्रितो वासः सैवमुच्यते। यथा सा भिक्षुणी कामविकाररहितत्वाज्जलकेलिं न करोति तथा त्वं किमिति न करोषीत्यर्थ इति ॥

लौहप्रस्तारिको गौसंस्थानिको वासि किं त्वि(न्वि)ति।
प्र(प्रा)स्तारिक्या कयाप्यूचे दशोर्वारि क्षिपन्पतिः ॥ ४६ ॥

---

१ बी सी किं तु नै°. २ ए °कटकी°. ३ बी °टिकावा°. ४ ए °निकीं स°. ५ सी °को वा°. ६ बी °रि क्षप°.

---

१ सी °रसैन्याद्द°. २ सी °युक्तच्छ°. ३ सी तेन मू°. ४ बी °कः। आदे°. ५ ए बी °देशः। आ°. ६ बी °ध्यिक्ये तत्र. ७ ए इतत्र°. ८ ए चिक्षेप ज°. ९ ए °हति आरति सां°. १० ए °व वस्तव्य°. ११ बी सी किंतु नै°. १२ सी °माव°. १३ ए °मकेलिर°. १४ ए °ति। रिक्या विशाला°.

४६. प्रस्तारो नयनादीनां विस्तारस्तस्मिन्व्यवहरति तया प्रास्तारिक्या विशालाक्ष्येत्यर्थः। कयापि पतिरूचे। कीदृक्सन्। दृशोर्विस्तीर्णत्वेन वारि क्षिपन्। कथमूच इत्याह। त्वं किं नु लोहप्रस्तारे लोहहट्टे व्यवहरति लौहप्रस्तारिकोसि। लोहवणिग् हि स्थूलक्रयार्णत्वाल्लोहं यत्र तत्र क्षिपन्स्थूलहस्त एव स्यात्। किं वा गोसंस्थाने व्यवहरति गौसंस्थानिको गवयोसि। स ह्यकिंचिज्ज्ञ एव स्यादिति॥

**कापि वांशकठिनिकी वारिहत्याधिका प्रियात्।**
**द्वैचन्द्रायणिकी चान्द्रायणिक्या इव वाभवत्॥ ४७॥**

४७. वाशब्दः पूर्ववाक्यार्थापेक्षया समुच्चये कापीत्यत्र योज्यः। कापि च वंशकठिने वंशस्य कठिने तापसभाजने पीठे वा व्यवहरति वांशकठिनिकी वरुटी वारिहत्या जलाघातेन कृत्वा प्रियात्सकाशादधिकाभवत्। यथा चान्द्रायणिक्याश्चान्द्रायणं तपोभेदं चरन्त्याः सकाशाद्द्वैचन्द्रायणिकी द्वे चन्द्रायणे चरन्ती ह्यधिका स्यात्। चन्द्रायणं हि तपो द्वेधा। तत्रैकं शुक्लपक्ष आरभ्यते द्वितीयं तु कृष्णपक्षे। द्वयमप्येतन्मासप्रमाणम्। तत्राद्ये शुक्लप्रतिपद आरभ्य पूर्णिमां यावदेकैकैककवलवृद्धिर्यावत्पूर्णिमायां पञ्चदश कवलास्तत एकैकैककवलहानिर्यावदमावास्यायामेकः कवलः। द्वितीये तु चन्द्रायणे कृष्णप्रतिपद

---

१ बी वारिह॰. २ सी ॰ग्मिल्या॰. ३ ए ॰त्। द्वैच॰.

---

१ सी ॰या प्रस्ता॰. २ बी ॰लाक्षेत्य॰. ३ ए ॰मूचेत्या॰. ४ बी ॰णकत्वा॰. ५ सी ॰स्थानो ग॰. ६ ए ॰ठिनता॰. ७ बी पीठो व्य॰. ८ बी सी ॰यामका॰. ९ बी ॰की द्वै च॰. १० बी ॰णे भोजने पीठो वा च॰. ११ सी ॰त्। चान्द्रा॰. १२ ए ॰कव॰. १३ बी ॰माया प॰. १४ बी ॰कला तत ए॰. १५ ए ॰कव॰. १६ सी ॰लवृद्धी.

आरभ्यामावास्यां यावदेकैककवलहानिर्यावदमावास्यायामेककवलस्ततः[1] प्रतिपद्यप्येकः कवलस्तत एकैकैककवलवृद्धौ[2] पूर्णिमायां पञ्चदश कवला इति श्रीजैनाः स्मार्ताश्च ॥

हारं द्विशौर्पिकं न्यस्यन्ब्रुडन्तीं कोप्यधात्प्रियाम् ।
गौदानिकं गौदानिको न्वादित्यव्रतिकिप्रभः ॥ ४८ ॥

४८. कोपि भर्ता ब्रुडन्तीं प्रियामधाद्धारेणाधारयत । कीदृक्सन् । द्विशौर्पिकं नु द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम् । अत्र "शूर्पाद्वाञ्" [ ६. ४. १३७ ] इत्यञ् । "अनाम्न्यद्विः लुप्" [ ६. ४. १४१ ] इति लुप् । द्विशूर्पेण क्रीतं द्विशौर्पिकं नु रज्ज्वादिकमिव प्रेमातिरेकाद्रज्ज्वाद्यवगणनयेत्यर्थः । हारं न्यस्यन्प्रियाया आधारार्थं जले क्षिपन् । जले हि ब्रुडल्लघुत्वात्तन्तुनापि संधार्यते । यथा गौदानिको वेदपाठविषयायां यथोक्तायां ब्रह्मचर्यसंधायां संपूर्णायामपि यावद्विजेभ्यो गोदानं न करोति तावद्ब्रह्मचर्यं चर्यमिति यच्छ्रुत्युक्तं ब्रह्मचर्यं तद्गोदानमुच्यते । तच्चरन्नरो गौदानिकं यावद्गवां दानं द्विजेभ्यो न करोमि तावद्ब्रह्मचर्यमितिप्रकारं गोदानस्य ब्रह्मचर्यं दधाति । कीदृक्सन् । आदित्यव्रतानामृचां ब्रह्मचर्यमादित्यव्रतिकम् । आदित्यव्रतसंज्ञा हि ऋचो ब्रह्मचर्येणाधीयन्ते तदस्यास्तीत्यादित्यव्रतिकी तेन प्रभा साम्यं यस्य स तथा ॥

नैकटिकी । वार्क्षमूलिकी । इत्यत्र "निकट०" [ ७७ ] इत्यादिनेकण् ॥

१ ए बी °डन्ती को°. २ ए °तिकिं पुनः । को°. ३ बी °प्रभाः । को°.

१ बी °मेकः क°. २ ए °कव°. ३ ए °यामेधा°. ४ ए °नाम्नाद्विः°. ५ ए सी °व प्रेमातिरेकाद्रज्ज्वादिकमिव प्रे°. ६ बी हि ब्रुड°. ७ बी सी यां पू°. ८ बी °द्ववीदा°. ९ ए °र्तीने आदि°.

सतीर्थ्या । इति ''सतीर्थ्यः'' [ ७८ ] इति निपात्यम् ॥

प्रास्तारिक्या[1] । सांस्थानिकी । तदन्ते[2] । लौहप्रस्तारिकः[3] । गौसंस्थानिकः[4] । वांशकठिनिकी । इत्यत्र ''प्रस्तार०'' [ ७९ ] इत्यादिनेकण् ॥

द्वैचन्द्रायणिकी[5] । इत्यत्र ''संख्यादेः०'' [ ८० ] इत्यादिना संख्यापूर्वाया अपि वक्ष्यमाणः प्रत्ययः ॥ अलुच[6] इति किम् । द्विशौर्पिकम्[7] । पुनरपि ''शूर्पाद्वाञ्'' [ ६. ४. १३७ ] इत्यञ् न स्यात् ॥

गौदानिकम्[8] । आदित्यव्रतिकि । इत्यत्र ''गोदान०'' [ ८१ ] इत्यादिनेकण् ॥

चान्द्रायणिक्याः । गौदानिकः । इत्यत्र ''चन्द्रा०'' [८२] इत्यादिनेकण् ॥

**देवव्रती महाव्रत्यष्टाचत्वारिंशको नु किम् ।**
**चातुर्मासी नु वेत्युक्त्वा तटस्थोह्रिहृतोन्यया ॥ ४९ ॥**

४९. तटस्थो नदीतीरस्थः प्रियोन्ययाह्रिहृतः । किं कृत्वा । उक्त्वा । किमित्याह । हे प्रिय किं देवव्रतमाजन्म ब्रह्मचर्यं[9] तथा ''यमा एव देशकालसमयानवच्छिन्ना महाव्रतम्'' इति[10] पतञ्जलिसूत्रम् । तथा प्रतिवेदं द्वादश वर्षाणि ब्रह्मचर्यक्रियाविधिरित्यष्टाचत्वारिंशद्वर्षसहितं व्रतमष्टाचत्वारिंशत्तच्च[11] तथा चतुर्षु मासेषु भवानि ''यज्ञे ञ्यः'' [ ६. ३. १३४ ] इति[12] ञ्ये चातुर्मास्यानि[13] नाम यज्ञास्तत्सहचरितानि चातुर्मास्यानि । तानि च[14] चरन्निव किं न्वसि । देवव्रत्यादयो हि

---

१ **ए** °स्त्रिक्याः । संस्थानिकां । त°. **सी** °स्त्रिक्याः । सांस्थानिक्यां । त°. २ **बी सी** °न्त । लोह°. ३ **बी** °हप्रास्तारिक्या सांस्थानिकी । तदन्त । लौहप्रस्तारिकः । गौ°. ४ **ए** °कः । वांश°. ५ **बी** द्वैचान्द्रा°. ६ **ए** °लुच इ°. ७ **बी** °पि सूर्पा°. ८ **सी** °निकी । आ°. ९ **बी** °मा य ए°. १० **बी** °ति पात°. ११ **सी** °शच्च. १२ **बी** °ति ञे चतु°. १३ **ए** °स्यादि ना°. १४ **ए** च वदन्निव किमन्व°.

महाव्रतस्थत्वेन कामविकारहेतुं जलकेलिं न कुर्वन्ति । त्वमप्यकुर्वन्किमेवं व्रतीत्यर्थ इति ॥

किं* नु चातुर्मासिकैषाष्टाचत्वारिंश्येष किं नु वा ।
मिथःप्राप्त्यै पयःकेल्यां तर्क्येते स्मेति कावपि ॥ ५० ॥

५०. कावपि दम्पती पयःकेल्यां जलक्रीडायामपि लोकैस्तर्क्येते स्म । कथमित्याह । एषा प्रत्यक्षा तरुणी किं नु चातुर्मासिका चातुर्मास्यव्रतचारिणी । वा तथैष युवा किं न्वष्टाचत्वारिंश्येष्टाचत्वारिंशद्व्रतचारी किमर्थं मिथःप्राप्त्यै भवान्तरेप्यन्योन्यं संबन्धायेति । चातुर्मासिकाष्टाचत्वारिंशिनौ व्रतिनौ यथा स्नानार्थं नदीजले निम्नगौ जलप्रहाररहितौ च स्यातां तथा कावपि जले निम्नगौ प्रेमकलहादिनाम्बुप्रहाररहितौ चाभूतामित्येवं वितर्कः ॥

देवव्रती । महाव्रती । अत्र "देव०" [ ८३ ] इत्यादिना डिन् ॥

अष्टाचत्वारिंशकः । अष्टाचत्वारिंशी । इत्यत्र "डकश्च०" [ ८४ ] इत्यादिना डको डिन् च ॥

चातुर्मासिका । चातुर्मासी । इत्यत्र "चातुर्मास्यं०" [ ८५ ] इत्यादिना डकडिनौ यलोपश्च ॥

---

* एषा चातुर्मासिकाष्टाचत्वारिश्येष किं नु वा । इति छन्दोभङ्गाभावाय पठितुं युक्तमिति भाति ।

---

१ ए °सिकैः पा°. २ सी किं युवा. ३ सी °प्राप्तौ प°. ४ बी तर्केत स्मे°.

---

१ सी वा व्रत्येष. २ सी °श्यष्टच°. ३ सी °प्राप्तौ भ°. ४ ए °रिंशनो व्र°. ५ ए °हारसहितौ स्या°. ६ सी अष्टच°. ७ ए °सिकः । चा°.

नदी यौजनिकी[1] क्रौशाद्यौजनाच्च[2] शतिक्यसौ ।
आत्मतुल्यतयेवोत्का[3] सैन्यान्सस्वञ्ज ऊर्मिभिः ॥ ५१ ॥

५१. यौजनिकी तीर्थत्वादनेकपद्माद्यद्भुतवस्तुनिधित्वाच्च योजनादभिमुखगमनमर्हन्ती तथा क्रौशाद्यौजनाच्च[1] शतिकी क्रोशशताद्योजनशताच्चाभिगमनमर्हन्ती नदी सैन्यानूर्मिभिः सस्वञ्जे । उत्प्रेक्ष्यते[2] । आत्मतुल्यतया स्वसादृश्येनोत्केवोत्[3]कण्ठितेव । नद्या सह तुल्यता च सैन्यानां[4] यौजनिकीत्यादिनदीविशेषणानां लिङ्गव्यत्यये[5] सैन्यानामपि विशेषणत्वेन शब्दसाम्यात् । तथा[6] हि योजनं क्रोशशतं योजनशतं च दिग्विजयाद्यर्थं यान्ति ये तान्यौजनिकान्[7] क्रौशशतिकान्यौजनशतिकान्[8][9] । या हि रूपादिगुणोत्कर्षेण यौजनिक्यादिः[10] स्यात्सानुरूपं पतिं[11] भुजाभिराश्लिष्यति ॥

क्रौशशतिकी[12] । यौजनशतिकी । यौजनिकी । इत्यत्र "क्रोश०" [८६] इत्यादिना–इकण् ॥

आत्मतुल्यतयेतिज्ञापितेषु । क्रौशशतिकान् । यौजनशतिकान् । यौजनिकान् । इत्येतेषु "तद्यात्येभ्यः" [ ८७ ] इतीकण् ॥

श्रान्ताञ्जहसुरश्रान्तास्ते पान्थाः पथिकानिव ।
युवानो[5] वारिपथिका जाङ्गलपथिकानिव ॥ ५२ ॥

५२. अश्रान्ता जलकेल्याखिन्नास्ते जले क्रीडन्तो युवानस्तरुणा-

---

१ ए सी °की क्रोशा°. २ सी °शाद्योज°. ३ ए °तयोयोत्का. ४ ए °भिः । योज°. ५ ए °वानो वा°.

---

१ ए °शाद्योज°. २ ए °त्प्रेक्षते. ३ ए °त्कते°. ४ ए °नां योज°. ५ बी °त्ययमै°. ६ सी °था यो°. ७ ए °कान्योज°. ८ ए °न् क्रोश°. ९ ए °कान्योज°. १० ए °निकादिः. ११ बी °नि भुजा°. १२ बी °की । योज°.

स्तरुण्यश्च श्रान्तान् यूनो जहसुः । यथा पान्था नित्यं पन्थानं यान्तो नरा नित्यगमनेन गमनाभ्यासादश्रान्ताः सन्तः पथिकान्पन्थानं यातो[1] नरान्कादाचित्कगमनेनाभ्यासाभावाच्छ्रान्तान्सतो[2] हसन्ति । यथा वा वारिपथिका वारिपथः सजलमार्गस्तेनानीता यान्तो[3] वा नराः शीतलजलपानादिनाश्रान्ताः सन्तो जाङ्गलपथिकान्मरुमार्गेणानीतान्[4]यातो वा नरांस्तृष्णादिनातिश्रान्तान्सतो हसन्ति ॥

**प्रावृषीव तदोद्रोधोऽभूत्स्थालपथिकं पयः ।**

**तदाजपथिकं शाङ्कुपथिकं च विगाहनात् ॥ ५३ ॥**

५३. तदा जलकेलिकाले तत्पयो नदीजलं विगाहनाद्दम्पतिभिर्विलोडनादुद्रोधो रोधसस्तटादुत्क्रान्तमभूत् । कीदृक्सन्[5] । स्थालपथिकं स्थलपथं यात्तथा[6]जपथिकं यत्राजाः[7] संचरन्ति तेजपथा दण्डकास्तैर्या[8]त्तथा शङ्कुपथैः कीलकगर्ताभिर्यात् । यथा प्रावृषि स्थालपथिकमाजपथिकं शाङ्कुपथिकं च स्थलपथेना[9]जपथेन शङ्कुपथेन चानीतं नदीजलम[10]तिबाहुल्यादुद्रोधः स्यात् ॥

**पुरेवौत्तरपथिकी[1] कान्तारपथिकी च सा ।**

**मज्जज्जम्पतिभिस्तै[2]स्तैर्नदी रेजे प्रतीपगा ॥ ५४ ॥**

५४. सा नदी रेजे । कीदृक्सती । तैस्तैरनेकै[11]र्मज्जज्जम्पतिभिः[12] स्नाद्भिर्दम्पतिभिः कृत्वा [13]प्रतीपगा जम्पतीनामतिबाहुल्येन सेतुबन्धेन

---

१ **ए** °की च. २ **ए बी** °स्तैर्न°.

---

१ **ए** यान्तो न°. २ **ए** °न्सन्तो ह°. ३ **सी** यातो वा. ४ **ए** °कान्मरु°. ५ **सी** °दृक् स्था° ६ **ए** °जजप°. ७ **ए बी** °कं यात्रा°. ८ **सी** °कास्थैर्या°. ९ **ए** °जलप°. १० **बी** °लबा°. ११ **ए** °कैमज्ज°. १२ **बी** °भिः स्नद्भि°. १३ **बी** प्रदीप°.

वा नु[1] श्रो(स्रो?)तोमार्गस्य रुद्धत्वात्पश्चान्मुखं वहन्त्यत एव पुरेवं[2] यथा जलकेलेः पूर्वमौत्तरपथिकी कान्तारपथिकी चोत्तरपथेनोत्तरं[3]-दिग्मार्गेण कान्तारपथेन चारण्यमध्यवाहित्वादरण्यस्थमार्गेण वा नीता । तथा जलकेलिकालेप्युत्तरपथेन कान्तारपथेन च[4] यात्यौत्तरपथिकी कान्तारपथिकी च ॥

पथिकान् । इत्यत्र "पथ इकट्" [ ८८ ] इतीकट् ॥

पान्थाः । अत्र[5] "नित्यं०" [ ८९ ] इत्यादिना णः पन्थादेशश्च[6] ॥

शाङ्कुपथिकम्[7] । औत्तरपथिकी । कान्तारपथिकी । आजपथिकम् । वारिपथिकाः । स्थालपथिकम् । जाङ्गलपथिकान् । इत्यत्र[8] "शङ्कूत्तर०" [ ९० ] इत्यादिनेकण् ॥

कान्तेनोत्खातपद्मेषु काप्याच्छिद्याब्जमाददे ।
मधुके मरिचे स्थालपथे शुल्कं नु शौल्किकः ॥ ५५ ॥

५५. कापि कान्तेनोत्खातपद्मेषु मध्यादब्जमाच्छिद्य नर्मणोहाल्याददे । यथा स्थालपथे स्थलपथेनाहृते[9][10] मधुके मधुयष्टिजातौ मरिचे मरिचजातौ च मध्याच्छुल्कं शुल्कशालादेयं भागं शौल्किकः शुल्के नियुक्तो गृह्णाति ॥

स्थालपथे मधुके मरिचे । अत्र "स्थलादेर्०" [ ९१ ] इत्यादिनाण् ॥

तौरायणिकपारायणिकानां तद्भुवामपि ।
आसन्सांशयिकान्यब्जवने[1] वक्त्राणि[2] सुभ्रुवाम् ॥ ५६ ॥

१ बी °ब्जवने. २ ए °णि सुभ्रु°.

१ सी नु श्रुतो°. २ ए °व जथा. ३ ए °रमार्गे°. ४ सी च उत्त°. ५ ए °त्र मित्या°. ६ ए °देश्च. ७ सी °म् । उत्त°. ८ सी °णोमाल्या°. ९ बी °लपथे°. १० बी सी °नाहते.

५६. अब्जवने[1] पद्मखण्डमध्ये सुभ्रुवां वक्त्राणि सांशयिकानि किमेतानि वक्त्राण्यब्जानि[2] वेति संशयं प्राप्तान्यासन्। केषाम्। तुरायणं नाम यज्ञस्तं यजन्ते तौरायणिकाः[3] पारायणं वेदग्रन्थमधीयते[4] पारायणिका[5] द्वन्द्वे[6] तेषां मुनीनाम्[7]। कीदृशाम्। सा नदी भूः स्थानं येषां तेषामपि नदीतटवासित्वेन परिचिताब्जानामपीत्यर्थः। एतेन सुभ्रूवक्त्राणामब्जवनस्य च मिथोतिसादृश्यमुक्तम्॥

तौरायणिक। पारायणिकानाम्। अत्र "तुरायण॰" [९२] इत्यादिनेकण्॥

सांशयिकानि। इत्यत्र "संशयं॰" [९३] इत्यादिना-इकण्[8]॥

**यौगिकी पद्ममालां काप्यक्षिपद्दयितोरसि[9]।**
**सांग्रामिकं कार्मुकं नु योग्यं कुसुमधन्वनः॥ ५७॥**

५७. यो(यौ)गिकी[10] प्रौढात्वेन योगायालिङ्गनाय[11] शक्ता कापि दयितोरसि प्रियकण्ठे पद्ममालामक्षिपत्[12]। किंभूताम्। आरोपिताकृष्ट[13]चापाकारत्वाद्धृदयसंक्षोभकारित्वाच्च कुसुमधन्वनः पुष्पचापस्य कार्मुकं[14] नु। किंभूतम्। सांग्रामिकं[15] संग्रामाय शक्तमत एव योगाय शक्तं योग्यं ग्रहीतुमुचितमित्यर्थः[16]॥

यौगिकी। सांग्रामिकम्। अत्र "तस्मै[17] योग॰" [९४] इत्यादिनेकण्॥

योग्यम्। कार्मुकम्। अत्र "योग॰" [९५] इत्यादिना योकञौ॥

---

१ बी सी °मि। संग्रा°.

---

१ सी °ने वनपण्ड°. २ बी °क्त्राण्यब्जा°. ३ बी °णिका पा°. ४ सी °मते. ५ बी °णिके द्व°. ६ सी द्वन्द्वं ते°. ७ सी °म्। सा. ८ ए °यण्य इ°. ९ सी °ण। योगि°. १० ए °की प्रोढा°. ११ सी °य सक्ता. १२ बी °लानक्षि°. १३ ए °कृष्णचा°. १४ ए कार्मेकं. १५ सी °कं अत्र. १६ बी °चितमि°. १७. ए बी तस्मै यो°.

*यथाग्निष्टोमिकीमाग्निष्टोमिकैर्दक्षिणां धनैः ।
नैशाश्लेषैस्तथा नक्तत्रस्तान्यादान्मुदं प्रिये ॥ ५८ ॥

५८. अन्या नक्तत्रस्ता सती नैशाश्लेषैर्निशायां देयैः कार्यैर्वालिङ्गनैः कृत्वा प्रिये मुदमदात् । यथा यजमान आग्निष्टोमिकैरग्निष्टोमे देयैर्धनैः कृत्वाग्निष्टोमिकीमग्निष्टोमसंबन्धिनीं दक्षिणां ददाति ॥

आग्निष्टोमिकीम् । अत्र "यज्ञानां०" [ ९६ ] इत्यादिनेकण् ॥

आग्निष्टोमिकैः । अत्र "तेषु देये" [ ९७ ] इतीकण् ॥

नैश । इत्यत्र "काले०" [ ९८ ] इत्यादिना भवेर्थे इवाण् ॥

प्रियहस्त्याम्बुजोत्तंसैर्नैत्यवैयुष्टवद्बभौ ।
याथाकथाचैरप्यन्याकार्णवेष्टकिकानना ॥ ५९ ॥

५९. अन्या स्त्री प्रियहस्त्याः प्रियस्य हस्तेन देयाः कार्या वा येम्बुजोत्तंसाः पद्मशिरःशेखरास्तैः कृत्वा बभौ । कीदृशी । कर्णवेष्टकाभ्यां न शोभतेकार्णवेष्टकिकमाननं यस्याः सापि । अपिरत्रापि योज्यः । कुण्डलरहितापि । किंभूतैः । याथाकथाचैरपि यथाकथाचशब्दोव्ययसमुदायोनादरेणेत्यर्थे वर्तते । अस्या एते तुच्छमित्य-

* सी पुस्तके श्लोकोयं टीका च नास्ति.

१ ए °कैदक्षि°. २ बी °नैः । नेशा°. ३ ए °श्लेषितथा. ४ बी °मैनैत्य°. ५ बी °वेष्टिकि°.

१ ए अध्या न°. २ ए °र्यैवालङ्ग°. ३ बी °दमुदा°. ४ ए यज्ञमा°. ५ बी °मिदे°. ६ ए °बन्धेन द°. ७ बी °ति । अग्नि°. ८ बी °की । अ°. ९ ए °ण् । निश. १० ए °ना भावे° ११ ए °यसा ह°. १२ बी °स्य हारते°. १३ ए °दृशी । क°. १४ ए सी °तेकर्ण°. १५ बी °किकामा°. १६ सी °थाच°.

भिप्रायेणानादरेण[1] शिरसि देयैरपि[2] कार्यैरपि वा विशिष्टरचनारहितैरपीत्यर्थः । परं नैत्यवैयुष्टवन्नित्यं सदा व्युष्टे प्रभाते च देयैरिव[3] कार्यैरिव वा नैत्यवैयुष्टा[4] ह्यवतंसाः प्रायो विक्रयार्थत्वेनादरेण दीयन्ते[5] क्रियन्ते चेत्यादरेण देयैरिव कार्यैरिव वा विशिष्टरचनैरिवेत्यर्थः । प्रियहस्त्यत्वेन सर्व[6]सपत्नीषु[7] मध्ये सौभाग्यातिशयस्य ख्यापकत्वात्तेषाम् । यद्वान्या स्त्री कार्णवेष्टकिकाननापि[8] कुण्डलशोभमानवक्त्रापि सती प्रियहस्त्याम्बुजोत्तंसैरेव[9] बभौ । किंभूतैः[10] । याथाकथाचैरपि कार्णवेष्टकिकाननश्रीविशेषालोकनाक्षिप्तचित्तत्वात्[11]प्रियस्य विसंस्थुलै[12]रचनैरपि नैत्यवैयुष्टवद्विशिष्टरचनैरिव कुण्डलयोः सतोरपि प्रियहस्त्य[13]त्वादम्बुजोत्तंसैरेवाभादित्यर्थः ॥

वैयुष्ट । नैत्य । इत्यत्र "व्युष्टादिष्वण्" [ ९९ ] इत्यण् ॥

याथाकथाचैः । अत्र "यथा०" [ १०० ] इत्यादिना णः ॥

हस्त्य[14] । इत्यत्र "तेन०" [ १०१ ] इत्यादिना यः ॥

कार्णवेष्टकिक । इत्यत्र "शोभमाने" [ १०२ ] इतीकण् ॥ असमर्थेनञ्स[15]मासोप्यस्मिन्विषये भवति । अकार्णवेष्टकिक[16] ॥

एका वेष्यं पतिं स्नानस्पष्टवेश्यानखव्रणम् ।
अकर्मण्येति जल्पन्ती कर्मण्या कमलैरहन्[1] ॥ ६० ॥

१ बी °ण्या कामलैर°.

१ बी °येना°. २ ए °पि वा. ३ ए °व वा. ४ ए °त्यवेयु°. ५ सी °न्ते चैत्या°. ६ बी °र्वप°. ७ सी °लीम°. ८ बी °कानाना°. ९ सी °व संब°. १० बी °तैः । यथा°. ११ सी °विषयालो°. १२ सी °लस्यच°. १३ ए सी प्रिहय°. १४ ए सी हस्त । इ°. १५ ए °नञ्शमा°. १६ ए °किकाः । ए°. सी किका । ए°.

६०. कर्मण्या पतिव्रतानुरूपेण कर्मणा शोभमानैका स्त्री पतिं कमलैरहन्। कीदृशम्। वेष्यं वेषेण स्वच्छत्वातिसूक्ष्मत्वादिगुणोपेतेन नेपथ्येन शोभमानम्। यद्वा। मण्डनादीनां जलेनोत्पुंसितत्वाद्वस्त्राणां च क्लिन्नत्वाद्वेषेणाशोभमानम्। कीदृक्सती। रे अकर्मण्य दुराचारेति जल्पन्ती। यतः। किंभूतम्। स्नानेन स्पष्टानि वेश्याया नखव्रणानि नखक्षतानि यस्य तम्॥

कर्मण्या। वेष्यम्। अत्र "कर्म०" [ १०३ ] इत्यादिना यः॥ पूर्ववन्नञ्समासः स्यात्। अकर्मण्य। अवेष्यम्। केचिद्वेषस्थाने वेशं पठन्ति। वेशो वेश्यागृहं तेन शोभते वेश्या॥

मासिक्या सेवया मानो यः प्रसादश्च मासिकः।
तमाह्निक्याजयल्लेभेम्भःकेल्या कोपि सुभ्रुवः॥ ६१॥

६१. सुभ्रुवो यो मानोहंकारोतितीव्रत्वान्मासिक्या मासेन कार्यया मासेन सुकरया वा सेवया कृत्वा मासिको मासेन परिजेतुमुपशमयितुं शक्यस्तथा सुभ्रुवो यः प्रसादश्च प्रसन्नता च मासिक्या सेवया कृत्वा मासिको मासेन लभ्यस्तं मानं कोपि काम्याह्निक्याह्ना निर्वृत्तयाम्भःकेल्या कृत्वाजयदुपाशमयत्। तथा तं प्रसादमाह्निक्याम्भःकेल्या लेभे प्राप॥

मासिकः। मासिक्या। इत्यत्र "कालात्परि०" [ १०४ ] इत्यादिनेकण्॥

बी °ह्निक्यजियल्लेभेभः के°. २ सी °यभे°.

१ बी सी °तात्वरू°. २ सी °मानं यद्वा. ३ ए पतिं क°. ४ बी स्वस्थत्वातिशूक्ष्म°. ५ ए °लेत्पुं°. ६ ए °त्वाद्वेषित्वाद्वे°. ७ ए °स्य ताम्. ८ बी वेष्ट्यम्. सी °वे चि°. ९ ए °नोकारोती°. १० बी °पासम°. सी °पास्म°. ११ सी °ल्या भेदेन प्रा°. १२ सी °सिका। इ°.

आह्निक्या । इत्यत्र "निर्वृत्ते" [ १०५ ] इतीकण् ॥

सख्यो दास्यश्च मासिक्यो मासिकीभूतभाविनीः ।
क्रीडा निनिन्दुः कस्याश्चित्पयसां क्रीडया तया ॥ ६२ ॥

६२. कस्याश्चित्कामिन्याः सख्यो दास्यश्च तयानेककौतुकाद्याधारत्वेन प्रसिद्धया पयसां क्रीडया कृत्वा क्रीडा अन्याः केलीर्निनिन्दुः । कीदृश्यः सख्यः । मासिक्यो मासायाधीष्टा मासं यावन्मत्पार्श्वे स्थातव्यमित्यादिप्रकारैः सत्कृत्य व्यापारिताः । दास्यश्च मासाय भृता मासं यावत्कर्मणे क्रीता इत्यर्थः । किंदृशीः । मासिकीभूतभाविनीर्मासं भूता भविष्यन्तीश्च यकाभिः स्वसत्तया मासो व्याप्तो व्याप्स्यते वा ता अपि क्रीडा अस्याः क्रीडातो हीना एवेत्यनिन्दन्नित्यर्थः। मासिकीरित्यत्रेकण् अन्यस्मिन्नर्थे संभवतीति तद्व्यवच्छेदाय भूतभाविनीरित्युक्तम् ॥

मासिकीः । अत्र "तं भाविभूते" [ १०६ ] इतीकण् ॥

मासिक्यो दास्यः सख्यः । इत्यत्र "तस्मै०" [ १०७ ] इत्यादिनेकण् ॥

षण्मासिकैर्मित्रभृत्यैः सखीदासीभिरप्यथ ।
षाण्मास्याभिर्जम्पतीनां प्रतीपिरे जलच्छटाः ॥ ६३ ॥

६३. जम्पतीनां षण्मासिकैर्मित्रभृत्यैः षड्भिर्मासैर्निर्वृत्तैः षण्मा-

१ ए सख्या दा°. २ बी °सिक्यौर्मासि°. ३ ए सी °विनी । क्री°. ४ बी °थ । षण्मा°. ५ ए °जंपती°. बी °जपन्तीना.

१ बी °मिन्या स°. २ ए °द्ध्याः स°. ३ बी सख्योः मासिक्या मासा°. ४ सी °त्कृत्य व्या°. ५ सी मासं. ६ ए °नी मासं. बी °नी मासं. ७ बी °न्ती अय°. ८ सी °डातो. ९ सी तद्युक्तच्छे°. १० °र्निवृत्तैः.

सान्भाविभिर्भूतैर्वा । यद्वा पण्मासेभ्योधीष्टैर्मित्रैः पण्मासेभ्योभृतैर्भृत्यैश्च । अथ तथा पाण्मास्याभिः सखीदासीभिरपि परस्परं जलच्छटा जलाघाताः प्रतीपिरे वाञ्छिताः । पतिसत्कैर्मित्रैर्जायासत्काभिः सखीभिः सह पतिसत्कैर्भृत्यैर्जायासत्काभिर्दासीभिश्च सहान्योन्यं जलकेलिश्चक्र इत्यर्थः । एतेन परिवारस्यापि जलकेलिरुक्ता ॥

**समीनमीनत्रस्तान्या पण्मास्यमृगलोलदृक् ।**
**द्विसमीना ह्यहीना नु लिल्ये संकुच्य भर्तरि ॥ ६४ ॥**

६४. अन्या पण्मासान्भूतः पण्मास्यः शिशुर्यो मृगस्तद्वल्लोलदृक्सती संकुच्य भर्तरि लिल्ये लीना । द्विसमीना ह्यहीना नु । द्वाभ्यां समाभ्यामहोभ्यां वा निर्वृत्ता द्वे समे अहनी वा भूता भाविनी वा नु बालिकेव । किमित्येवं लिल्य इत्याह । यतः समया वर्षेण निर्वृत्तः समां भूतो भावी वा समीनो यो मीनो मत्स्यस्तस्मात्रस्ता ॥

**द्वैयह्निकं त्रिरात्रीणं च द्विसंवत्सरीणवत् ।**
**व्यस्मरत्कापि पत्यागोद्भिर्द्वैसमिकशीधुवत् ॥ ६५ ॥**

६५. द्विसंवत्सरीणवद्यथा काचिद्द्वाभ्यां संवत्सराभ्यां निर्वृत्तं तौ भूतं वागश्चिरकालीनत्वाद्विस्मरति तथा काचित्पत्यागो भर्त्रपराधमद्भिर्जलकेलिरसातिरेकेणेत्यर्थः । व्यस्मरत् । किंभूतम् । द्वाभ्याम-

१ सी °कसीधु°.

१ बी °विभूतै°. २ ए °भ्योभृत्यैर्भृ°. ३ ए सी °ण्मासाभिः. ४ सी °लाटाः प्र°. ५ बी °शुयो मृ°. ६ ए °योग मृ°. ७ ए °नानु ह्य°. बी °ना नु ह्य°. ८ सी निवृत्ता. ९ सी अहिनी. १० बी °व । लिकि°. ११ बी सी निवृत्तः. १२ ए यो नीनो म°. १३ सी निवृत्तं. १४ ए भर्तप°. १५ ए °केलीर°. १६ बी °लिसा°.

होभ्यां तिसृभी रात्रिभिश्च निर्वृत्तं[1] द्वे अहनी तिस्रो रात्रीर्वा भूतं वा द्वैयह्निकं त्रिरात्रीणं च । चोप्यर्थ उभयत्रापि योज्यः । नूतनमपीत्यर्थः । द्वैसमिकै[2]शीधुवद्यथा द्वाभ्यां समाभ्यां निवृ(र्वृ)त्तैस्ते भूतैर्वा परिपूर्णनिष्पन्नैरित्यर्थः । शीधुभिर्मद्यैः कृत्वा[3]तिमत्तत्वा[4]त्पत्यागो विस्मरति ॥

द्विसांवत्सरिकी कापि भार्या प्रेम द्विवार्षिकम् ।
द्वैरात्रिकमिवात्याक्षीत्पत्यावन्यां जलंघ्नति[1] ॥ ६६ ॥

६६. स्पष्टः । किं तु द्विवार्षिकं चिरप्ररूढमपीत्यर्थः । द्वैरात्रिकमिवाप्ररूढमिव ॥

द्विवर्षीणांस्त्रिवर्षांश्च पद्मकन्दान्ददत्यलम् ।
रेमे हंसैर्द्विवर्षैर्द्विमास्यैर्मास्यैश्च काचन ॥ ६७ ॥

६७. स्पष्टः । किं तु द्वौ वर्षौ द्वौ मासौ मासं च भूतैः ॥

मीनान्मासीनषण्मास्यानभि षाण्मासिके बके ।
छन्नस्थे त्वद्वदेषोस्तीत्येकयोचे शठः पतिः ॥ ६८ ॥

६८. एकया शठः पतिरूचे । क सति । षाण्मासिके बके । किंभूते । मासीनषण्मास्यांश्च मासं षण्मासांश्च भूतान्मीनानभिलक्ष्यीकृत्य छन्नस्थे मीनभक्षणार्थं मायया छन्नं तिष्ठति । यथोचे तथाह । हे शठैष प्रत्यक्षो बकस्त्वद्वदस्ति यथा त्वं शठत्वान्मामीक्षसेन्यां च ध्यायसि तथैषोप्यन्यदीक्षतेन्यच्च ध्यायतीत्यर्थ इति ॥

१ ए °लंघ्नति. २ बी द्विवार्षी°. ३ ए °र्षैद्विमा°. बी °र्षैर्द्विमास्यै°. ४ ए °स्यैश्च. ५ सी °षण्मास्या°. ६ सी °भिषण्मा°.

१ बी सी निवृत्तं द्वे अह्नश्च°. २ सी °कशीधु°. ३ सी °त्वामत्तथात्रियागो. ४ ए °त्वात्या°. ५ सी भूतौ । मी°. ६ सी °ति । षण्मा°. ७ बी °सिब°. ८ सी °सीनान् ष°. ९ ए सी °ण्मास्याश्च. १० ए °ण्मासंश्च. ११ बी °लक्षीकृ°. १२ सी °स्त्वद्वदस्तीति. १३ ए °षोन्य°. १४ बी सी °ते मीनांश्च ध्या°.

मासिकं ब्रह्मचर्यं[1] ते मासिकब्रह्मचारिवत् ।
किं पाण्मास्याभमुग्धेति तटस्थो जहसेन्यया ॥ ६९ ॥

६९. तटस्थः पतिरन्यया जहसे । कथमित्याह । रे पाण्मास्याभमुग्ध जलकेलिरसानभिज्ञतया पण्मासान्भूतो योर्भो बालकस्तद्वन्मूर्ख यस्त्वं जलकेलिं न करोषि तत्किं ते मासिकब्रह्मचारिवन्मासोस्य ब्रह्मचारिणो मासिको यो ब्रह्मचारी तस्येव ब्रह्मचर्यमस्ति । कीदृशम् । मासोस्य ब्रह्मचर्यस्य मासिकमिति ॥

पाण्मास्याभिः सखीदासीभिः । षण्मासिकैर्मित्रभृत्यैः । अत्र "षण्मासाद्०" [ १०८ ] इत्यादिना ण्येकौ ॥ अवयसीति किम् । षण्मास्यमृगं ॥

समीन । इत्यत्र "समाया ईनः" [ १०९ ] इतीनः ॥

त्रिरात्रीणम् । द्व्यहीना । द्विसंवत्सरीण । द्विसमीना । इत्यत्र "रात्रि०" [ ११० ] इत्यादिना वा-ईनः ॥ पक्ष इकण् । द्वैरात्रिकम् । द्वैयह्निकम् । द्विसांवत्सरिकी । द्वैसमिक ॥

त्रिवर्षीन् । द्विवर्षीणान् । अत्र "वर्षादश्च वा" [ १११ ] इति-अ-ईनश्च वा ॥ पक्षे । द्विवार्षिकम् । इकण् ॥

द्विवर्षैर्हंसैः । अत्र "प्राणिनि भूते" [ ११२ ] इति-अः ॥

द्विमास्यैर्हंसैः । अत्र "मासाद्०" [ ११३ ] इत्यादिना यः ॥

मासीन । मास्यैर्हंसैः । अत्र "ईनञ्च" [ ११४ ] इति-ईनञ् यश्च ॥

---

१ बी °र्यं त मा°.

---

१ बी °साभि°. २ ए °लवास्त°. ३ सी °को ब्र°. ४ बी तस्यैव. ५ सी °र्यस्य मासि°. ६ ए °ह्मचारस्य°. ७ बी °ति । पण्मा°. ८ बी °भिः । पाण्मा°. ९ सी °यवादिति. १० बी °ग । मी°. ११ ए °त्रीणां । द्व्य°. १२ सी °हीनाः । द्वि°. १३ सी °मिकः । त्रि°. १४ ए °न् । त्रिव°.

षेण्मास्यान्मीनान्[२]। षाण्मास्याभे। षाण्मासिके बके। अत्र "षण्मासाद्०" [ ११५ ] इत्यादिना ययणिकणः ॥

मासिकम्। मासिक। इत्यत्र "सोस्य०" [ ११६ ] इत्यादिना-इकण् ॥

आभिषेचनिकैस्तोयैः क्रमैकागारिकैर्नदी।
एवमानन्दयद्योषाश्चौडश्राद्धैरिवोत्सवैः ॥ ७० ॥

७०. नदी वर्णामा तोयैः कृत्वैवमुक्तरीत्या[३] योषा आनन्दयत्। यत आभिषेचनिकैरभिषेकप्रयोजनैस्तथा क्रमे[४] ऐकागारिकैश्चौरैः खेदोच्छेदकैः। यथा चौडश्राद्धैश्चूडाप्रयोजनैः श्रद्धाप्रयोजनैश्चोत्सवैर्मुण्डनोत्सवैः श्राद्धोत्सवैश्च[७] कृत्वा काचिद्योषा आनन्दयति ॥

आभिषेचनिकैः। अत्र "प्रयोजनम्" [ ११७ ] इतीकण् ॥

ऐकागारिकैः। अत्र "एक०" [ ११८ ] इत्यादिनेकण ॥

चौडश्राद्धैः। अत्र "चूडादिभ्योण" [ ११९ ] इत्यण् ॥

दोर्वेशाखैर्विगाह्याम्भः क्षुभ्यदाषाढिवीक्षिताः।
कामोपस्थापनीयोत्थापनीयास्तास्तटीमयुः ॥ ७१ ॥

७१. ता नार्यस्तटीं नदीतीरमयुः। किं कृत्वा[११]। दोर्वैशाखैर्बाहुमन्थानकैः कृत्वाम्भो विगाह्य विलोड्य। कीदृश्यः सत्यः। स्नानेन शोभातिशयात्कामस्योपस्थापनं[१२] निकटीकरणमुत्थापनं चोल्लासनं प्रयोजनमासां ताः कामोपस्थापनीयोत्थापनीया[१३] अत एव क्षुभ्यन्तो य आषाढिन आषाढो मुनिदण्डस्तद्वन्तो[१४] मुनयस्तैरपि वीक्षिताः सकामं दृष्टाः ॥

१ बी °षान्मौड°. २ बी सी °शापैवि°. ३ सी °षाढवी°.

१ बी षणमस्या°. २ ए °न्। षण्मा°. ३ बी °त्या येषा. ४ ए बी °म एका°. ५ सी °था मोड°. ६ बी °त्सवैर्मु°. ७ ए °वैः कृ°. ८ बी सी °ण्। एका°. ९ बी °दित्यादिभ्यो°. १० बी °ण्। दोर्वै°. ११ ए °त्वा। दोर्विशा°. बी °त्वा। दोर्वै°. १२ सी °स्थानं°. १३ बी °योत्थाप°. १४ ए °द्वदन्तो.

वैशाखैः । आषाढि । इत्यत्र "विशाखा०" [ १२० ] इत्यादिनाण् ॥

उत्थापनीयाः।[1] उपस्थापनीय।[2] इत्यत्र "उत्थापनादेरीयः"[3] [१२१] इतीयः॥[4]

प्रियेच्छापूरणीयाः संवेशनीयास्ततोगमन् ।
वशाप्रपदनीयाश्वारोहणीयाः[1] स्वधाम[2] ताः ॥ ७२ ॥

७२. ततस्ता नार्यः स्वधाम स्वकीयं गृहमगमन् । कीदृश्यः सत्यः । संवेशनं सुरतं प्रयोजनमासां संवेशनीया अत एव प्रियेच्छापूरणीयाः प्रियाभिलाषपूरणप्रयोजना अत एव[5] च शीघ्रं जिगमिषया वशाभिर्हस्तिनीभिः प्रपदनं गमनमश्वस्यारोहणं[6] च प्रयोजनमासां ताः ॥

अहःसमापनीयोथ प्रतीचीमगमद्रविः ।
स्वर्ग्यैः काम्यैः स्तुतः स्वस्तिवाचनैः शान्तिवाचनैः ॥७३॥

७३. अथ रविः प्रतीचीं पश्चिमामगमत् । कीदृक् । अहःसमापनं दिनसमाप्तिः प्रयोजनं यस्य सोहःसमापनीयस्तथा स्वस्तिवाचनैः स्वस्तिवाचनप्रयोजनैर्द्विजैः[7][8] स्तुतः । कैः कृत्वा । शान्तिवाचनैः शान्तिवाचनप्रयोजनैर्मन्त्रैः । किंभूतैः । उभै(भयै?)रपि । स्वर्ग्यैः स्वर्गप्रयोजनैः परलोकप्रयोजनैरित्यर्थः । तथा काम्यैः कामप्रयोजनैरिहलोकप्रयोजनैश्चेत्यर्थः ॥

संवेशनीयाः। अश्वारोहणीयाः।[9] वशाप्रपदनीया[10] । प्रियेच्छापूरणीयाः। अहःसमापनीयः। अत्र "विशिरुहि०"[11] [ १२२ ] इत्यादिनेयः ॥

१ बी °णीया स्व°. २ ए °म तः । त°.

१ सी °नीया । उ°. २ बी उत्थाप°. ३ सी उपस्थाप°. ४ सी °तीय ॥ ७२ संवेशमापनीतथ प्रतीची°. ५ बी °व शी°. ६ ए °नश्व°. ७ सी °नैरित्यर्थः. ८ बी °द्विजै स्तु°. ९ ए °याः । अश्वारोहणीयाः । व°. १० ए सी °नीयाः । प्रि°. ११ बी विशारु°.

स्वर्गादिः[1]। स्वर्ग्यैः। काम्यैः। स्वस्तिवाचनादि[2]। स्वस्तिवाचनैः। शान्तिवाचनैः। अत्र "स्वर्ग०" [ १२३ ] इत्यादिना स्वर्गादिभ्यो यः स्वस्तिवाचनादिभ्य इकणो लुप्[3]॥

द्यौः सामयिक[1]रागेण लतेवार्तवपल्लवैः।
प्राशित्री तिमिरैः काल्यै[2]रभवत्षट्पदैरिव[3] ॥ ७४ ॥

७४. समयः कालः प्राप्तोऽस्य[4] सामा(म)यिको[5] यो रागः संध्यारागस्तेनोपलक्षिता द्यौर्व्योमाभूत्। कीदृशीव। ऋतुः[6] प्राप्त एषामार्तवा ये पल्लवास्तैरु[7]पलक्षिता लतेव[8]। तथा काल्यैः प्राप्तकालैस्तिमिरैः कृत्वा द्यौः प्राशिता भक्षकः प्राप्तोऽस्याः[9] प्राशित्र्यभूत्। यथा काल्यैः कालप्राप्तैः षट्पदैर्भृङ्गैः[10] कृत्वा लता प्राशित्री भवति। यथा[11] सौगन्ध्याकृष्टैर्भृङ्गैर्लता[12] व्याप्यते तथा तिमिरैः किंचिद्व्याप्ता[13] द्यौरभूदित्यर्थः[14]॥

सामा(म)यिक। इत्यत्र "समयात्प्राप्तः" [ १२४ ] इतीकण्॥

आर्तव। प्राशित्री। इत्यत्र "ऋत्वादिभ्योण्[15]" [ १२५ ] इत्यण्॥

काल्यैः। अत्र "कालाद्यः" [ १२६ ] इति यः॥

बिभ्रतः कालिकं[4] वैरं दैत्यानाकालिका[5]न्घ्नते[6]।
विंशकैस्त्रिंशकैः पात्रैरकार्यार्घमदुर्न के ॥ ७५ ॥

---

१ ए सामायि°. २ ए काल्येर°. ३ ए °व। दाम°. ४ बी कालकं. ५ सी °लिका°. ६ बी न्घ्नतो। विं°.

---

१ बी स्वर्ग्यादिः. २ ए बी °स्तिवच°. ३ बी °प्। द्यौ सा°. सी °प्। द्योः समायक°. ४ सी °स्य समा°. ५ सी °को रा°. ६ ए ऋतु प्रा°. ७ ए °वास्तेरु°. ८ ए °तेवा। त°. ९ ए °प्तोस्या प्रा°. १० ए °भृंगैः कृ°. सी °भृंगै कृ°. ११ सी °था सोग°. १२ सी °र्लेतां व्या°. १३ ए °चिद्याप्ता. १४ सी °र्थः। समा°. १५ ए °भ्योत्य°.

७५. अर्कायार्घं[1] पूजां के नादुर्न[2] ददुः । कैः कृत्वा । पात्रैः पुष्पफलजलादिवस्तुसंपूर्णैस्ताम्रभाजनैः । किंभूतैः । विंशकैस्त्रिंशकैर्विंशत्या त्रिंशता[3] वा रूपकादिभिः क्रीतैर्[4]विंशतिं त्रिंशतं वार्हद्भिर्वा[5] । कीदृशाय । दैत्यान्[6]मन्देहाख्यान्दानवान्घ्नते[7] । किंभूतान् । कालिकं दीर्घकालं वैरं बिभ्रतस्तथा[8]कालं समकालं वा भवन्त्याकालिकास्तान् जन्मानन्तरमेव रविणा विनाश्यमानत्वादाजन्मकालमेव भवतः । उदीयमान एव हि रविरमून्दैत्यान्हन्तीति स्वरूपविशेषण[9]मेवेदं रवेः ॥

कालिकं वैरम्[10] । अत्र "दीर्घः" [ १२७ ] इतीकण् ॥

आकालिकान्[11] । इति "आकालिकम्०" [ १२८ ] इत्यादिना निपात्यम् ॥

त्रिंशकैः । विंशकैः । अत्र "त्रिंशद्०" [ १२९ ] इत्यादिना डकः ॥

त्रिंशत्कं विंशतिकं वा बहुकं कतिकं न्विति ।
मुग्धाभिस्तर्कितं सांध्यभा[1]कौसुम्भं प्रतीच्यधात् ॥ ७६ ॥

७६. सांध्यभैव संध्याराग एव[12] कौसुम्भं कुसुम्भेन रक्तं वस्त्रं प्रतीची पश्चिमाधात्परिदधौ । कीदृशम् । मुग्धाभिस्तर्कितमतिरमणीयतया संभावितम् । कथमित्याह । त्रिंशता विंशत्या बहुभिः[13] कतिभिर्वा रूपकादिभिः क्रीतमेतदिति[14] ॥

पाञ्चाशत्कं साप्ततिकं[2] षाष्टिकं शतिकं क्षणात्[3] ।
शत्याधिकं[4] च नेपथ्यं दधुर्वासकसज्जिकाः ॥ ७७ ॥

---

१ **बी** °कौशुम्भं. २ **ए** °तिकषा°. ३ **बी सी** °त् । सत्या° ४ **ए** °त्याविकं.

---

१ **ए** °याघं पू°. २ **बी** °दुनदुः. ३ **सी** °शकारू°. ४ **बी सी** °तैर्विंश°. ५ **ए** °शंत वार्हद्भि°. ६ **ए**° त्यानादेहा°. ७ **ए** °वाघ्न किं. **बी** °वान्घ्नते. ८ **सी** °था अका°. ९ **बी** °शेषेण°. १० **सी** °र इति दी°. ११ **ए** °कामिति. **सी** °कागिति अका°. १२ **बी** ए कौशुम्भं कुशुम्भेन. १३ **बी** °भिः कतिभिः क°. १४ **सी** °ति । पञ्चा°.

७७. वासकसज्जिकाः सुरतायैष्यति प्रिये हर्षेण स्वं मण्डयन्त्यः स्त्रियः क्षणान्नेपथ्यं वस्त्रालंकारमण्डनादिवेषं दधुः । किंभूतम् । शत्याधिकं शतेन क्रीतादधिकं च । शिष्टं स्पष्टम् ॥

शतकैः स्तूयमानोपि स्तवनैः कान्दिशीकवत् ।
यावत्कं तावतिकं नु रविरत्यजदम्बरम् ॥ ७८ ॥

७८. रविरम्बरं व्योमात्यजत् । कान्दिशीकवदम्बरं नु । यथा कान्दिशीको भयद्रुतोतिभयेनाम्बरं वस्त्रं त्यजति । किंभूतम् । यावत्कं तावतिकं यावता तावता च क्रीतं महार्घमपीत्यर्थः । कीदृक् । शतं श्लोका मानमेषां शतकैः स्तवनैः कृत्वा स्तूयमानोपि । अपिर्विरोधे । निग्रहानुग्रहसमर्थो हि लोकैः स्तूयते स च न कान्दिशीकवदम्बरं त्यजतीति विरोधः । परिहारस्तु स्पष्ट एव । अथ च यः शतकैस्तवनैः स्तूयते स स्तावकेभ्यो महार्घ्य(र्घ?)मप्यम्बरं त्यजति ददातीत्युक्तिलेशः ॥

संख्या । बहुकम् । डति । कतिकम् । त्रिंशत्कम् । विंशतिकम् । अत्र "संख्या०" [ १३० ] इत्यादिना कः ॥ अशत्तिष्टेरिति किम् । पाञ्चाशत्कम् । साप्ततिकम् । षाष्टिकम् ॥

शत्य । शतिकम् । अत्र "शतात्०" [ १३१ ] इत्यादिना येकौ ॥ अतस्मिन्निति किम् । शतकैः स्तवनैः ॥

---

१ बी °तकै स्तू°. २ ए °वनै कादिशी°. ३ ए सी °वत्क ता°. ४ ए °कं त् र°. ५ ए °दन्तर°.

---

१ सी शतेन. २ बी °त्यादिकं. ३ ए सी °हार्घ्यम°. ४ ए शतिकैः. ५ ए सी °पिविरो°. ६ बी °वदंत्य°. ७ सी °थ वा यः. ८ ए °क । षा°. ९ ए शत्या । श°. बी शति°. १० बी °तस्तस्मि°.

तावतिकम् । यावत्कम् । अत्रे "वातोरिकः" [ १३२ ] इतीको वा ॥

रूप्यस्य प्रतिकी कार्षापणिकी काञ्चनस्य किम् ।
किमर्धपलिकी मुक्ता तारा तर्कयेत्युदैद्दिवि ॥ ७९ ॥

७९. तारा नक्षत्रं दिव्युदैत् । कीदृक् । तर्क्या । कथमित्याह । किमियं रूप्यस्य रजतस्य प्रतिकी कार्षापणेन कर्षेण मानभेदेन क्रीता मुक्ता मुक्ताफलं किं वा काञ्चनस्य कार्षापणिकी कार्षापणेन क्रीता मुक्ता किं वा रूप्यस्य काञ्चनस्य वार्धपलिक्यर्धपलेन क्रीता मुक्तेति ॥

अर्धकंसिक्यर्धकार्षिक्यर्धिकीकंसिकीर्भृशम् ।
साहस्रीः शतमानीश्च दीपिकाश्चक्रिरे स्त्रियः ॥ ८० ॥

८०. स्त्रियो दीपिका दीपान्भृशमत्यर्थं चक्रिरे । कीदृशीः । अर्धकंसादिभिः क्रीताः । कंसकर्षौ स्वर्णादिमानभेदौ । अर्धो रूपकार्धः । सहस्रं रूपकादीनाम् । शतमानं भूभागविशेषः ॥

कार्षापणिकी । प्रतिकी । इत्यत्र "कार्षापणाद्०" [ १३३ ] इत्यादिनेकट् । कार्षापणस्य च प्रतीत्यादेशो वा ॥

अर्धपलिकी । अर्धकंसिकी । अर्धकार्षिकी । इत्यत्र "अर्धात्पल०" [ १३४ ] इत्यादिनेकट् ॥

कंसिकीः । अर्धिकी । इत्यत्र "कंसार्धात्०" [ १३५ ] इतीकट् ॥

१ सी रूपस्य. २ ए °रा तार्केत्यु°. ३ बी °सिकार्ध°. ४ ए °कर्षिक्य°. ५ बी °र्पिकार्धि°. ६ बी °हस्री शा°.

१ सी °त्र वतो°. २ सी रूपस्य. ३ बी सी °पणेन°. ४ ए °पाङ्गृश°. ५ बी °कंशादि°. ६ ए प्रणिकी. ७ बी सी °ट् । कर्षा°. ८ बी °स्य प्र°. ९ बी °कंशिकी । अर्धपलि० । अर्धकार्षि°. १० ए °कर्षिकी. ११ बी अधोत्प°. १२ बी अद्धिकी. १३ ए इकीक°.

साहस्रीः । शातमानीः । अत्र "सहस्र०" [ १३६ ] इत्यादिनाण् ॥

शौर्पाधिकं शौर्पिकं वासनं वैंशतिकं तथा ।
द्राग्द्विविंशतिकीनं च सर्वमेक्यकरोत्तमः ॥ ८१ ॥

८१. सर्वं वस्तु कर्म तमः कर्त्रैक्यकरोदभिन्नीचक्रे । कीदृशं वस्तु । शौर्पाधिकं शूर्पेण क्रीतादधिकं शौर्पिकं शूर्पेण क्रीतं वासनं वसनेन वस्त्रेण क्रीतं वैंशतिकं विंशती रूपकादीनि मानमस्य विंशतिकं तेन क्रीतं द्विविंशतिकीनं च द्वाभ्यां विंशतिभ्यां क्रीतं च । यदपि तमोज्ञानं तत्सर्वमपि वस्त्वेकीकरोतीत्युक्तिः ॥

शौर्प । शौर्पिकम् । अत्र "शूर्पाद्वाञ्" [ १३७ ] इति वाञ् ॥

वासनम् । इत्यत्र "वसनात्" [ १३८ ] इत्यञ् ॥

वै(वैं)शतिकम् । अत्र "विंशतिकात्" [ १३९ ] इत्यञ् ॥

द्विविंशतिकीनम् । अत्र "द्विगोरीनः" [ १४० ] इतीनः ॥

द्विशौर्पिकं द्विकंसं द्विषाष्टिकं वांशुकं निशः ।
पाश्चा(श्च)लोहितिकोन्मेयं तमो नीलमतर्क्यत ॥ ८२ ॥

८२. पञ्च लोहिन्यो मानमस्य "मानम्" [ ६.४.१६९ ] इतीकणि "जातिश्च णि०" [३.२.५१] इत्यादिना पुंवद्भावे पाञ्चलोहितिकं परिमाणभेद-

१ ए °नं विंश°. बी °नं वेशंति°. २ बी °था । प्राग्विंश°. ३ सी °कं दिनः । पा°. ४ बी सी °हितको°. ५ ए °क्यंतः । प°.

१ बी कर्तैक्य°. २ सी °दपिर्नाच°. ३ बी °कं शौर्पेणदित्यार्क्रा°. ४ बी सी °तं वैश°. ५ बी °तिकाभ्यां. सी °तिकांभ्यां. ६ बी °तं य°. ७ बी शौर्पः । शौ°. ८ ए °ञ् । वैंश°. ९ सी °शत्यका°. १० ए °ञ । द्विविं°. ११ बी सी °तीन । द्वि°. १२ सी पाञ्चालो°. १३ ए बी °तिकपरिणामभे°.

स्तेनोन्मेयमतिप्रभूतमित्यर्थः[1]। नीलं कृष्णं तमोतर्क्यत। किंभूतम्। निशो रात्रिकामिन्या नीलमंशुकम्। किंभूतम्। द्वाभ्यां[2] शूर्पाभ्यां क्रीतम्। अञो लुपि द्विशूर्पं[3] वस्तु तेन क्रीतं द्विशौर्पिकम्। शिष्टं स्पष्टम्॥

द्विकंसम्। अत्र "अनाम्नि०" [१४१] इत्यादिनेकणः लुप्॥ अद्विरिति किम्। द्विशौर्पिकम्[4]। अनाम्नीति किम्। पाञ्चलोहितिक[5]॥ संख्यातात्द्विगोर्लुपं नेच्छन्त्यन्ये। द्विपाष्टिकम्॥

**द्विसहस्रं त्रिसाहस्रं वाश्वमारुह्य मङ्क्षयुः।**
**द्विसुवर्णत्रिसौवर्णिकांशुका अभिसारिकाः॥ ८३॥**

८३. स्पष्टः। किं तु द्विसहस्रं द्वाभ्यां सहस्राभ्यां द्रम्मादिभिः क्रीतम्। सुवर्णो मानं[6] सुवर्णकर्षः[7]। अभिसारिकाः। परपुरुषैः सह रन्तुं संकेतस्थानमभिसरन्त्यः स्त्रियः॥

**द्विकार्षापणिकान्पञ्चकार्षापणानवर्तयन्।**
**सद्गन्धान्द्वित्रिबह्वाद्यनिष्कबिस्तांश्च योषितः॥ ८४॥**

८४. स्पष्टः। किं तु कार्षापणः कर्षः षोडशपणा वा[8]। अवर्तयन् विलेपनाद्यर्थं श्लक्ष्णीचक्रुः। सद्गन्धान्कर्पूरादीन्। द्वित्रिबह्वाद्यनिष्कबिस्तांश्च द्विनिष्कांस्त्रिनिष्कान्बहुनिष्कांश्च[9] द्विबिस्तांस्त्रिबिस्तान्बहुबिस्तांश्च[10]। निष्को हेम्नोष्टोत्तरं[11] शतं पलं वा। बिस्तः सुवर्णादीनां परिमाणविशेषः॥

---

१ बी °तिभू°. २ बी सी °भ्यां सूर्पा°. ३ बी सी द्विसूर्प. ४ सी द्विसौर्पि°. ५ सी °हितक. ६ ए सी °नं स्वर्ण°. ७ बी °र्षः। आभि°. ८ ए वा। आव°. ९ बी °ष्कांन्ब°. १० सी °स्त्रिवस्तांश्च. ११ सी °ष्कोष्टो°.

नैष्किका बैस्तिका द्वित्रिबह्वाद्या द्विशता अथ ।
त्रिशत्या रत्नदीपा नु गिरावोषधयोद्युतन् ॥ ८५ ॥

८५. गिरावर्बुद ओषधयोद्युतन् । उत्प्रेक्ष्यन्ते । रत्नदीपा नु । कीदृशाः । द्वित्रिबह्वाद्या नैष्किका बैस्तिका द्विनैष्किकास्त्रिनैष्किका बहुनैष्किका द्विबैस्तिकास्त्रिबैस्तिका बहुबैस्तिकाः । शिष्टं स्पष्टम् ॥

द्विसहस्रम् । त्रिसाहस्रम् । अत्र "न वाणः" [ १४२ ] इत्यणो वा लुप् ॥

द्विसुवर्ण । त्रिसौवर्णिक । पञ्चकार्षापणान् । द्विकार्षापणिकान् । अत्र "सुवर्ण०" [ १४३ ] इत्यादिना प्रत्ययस्य वा लुप् ॥

द्विनिष्कं द्विनैष्किकाः । त्रिनिष्क त्रिनैष्किकाः । बहुनिष्क बहुनैष्किकाः । द्विबिस्तान् द्विबैस्तिकाः । त्रिबिस्तान् त्रिबैस्तिकाः । बहुबिस्तान् बहुबैस्तिकाः । अत्र "द्वित्रि०" [ १४४ ] इत्यादिना प्रत्ययस्य लुब्वा ॥

त्रिशत्या(त्याः) । द्विशताः । अत्र "शताद्यः" [ १४५ ] इति वा यः ॥ पक्षे संख्यालक्षणः कस्तस्य लुप् ॥

अध्यर्धशाणा द्वैशाणी त्रैशाणी पञ्चशाण्यिका ।
महाशाणा नु भास्त्राणां दीपनी यामिनी बभौ ॥ ८६ ॥

८६. यामिनी रात्रिर्महाशाणा नु महच्छस्त्रोत्तेजनोपकरणमिव बभौ । यतो भास्त्राणां नक्षत्रायुधानां दीपन्युज्ज्वालिका । कीदृग्महाशाणा ।

१ ए सी °थ । त्रिश°. २ बी °लद्वीपा. ३ बी °णी त्रिशा°. ४ बी सी °शाणिका. ५ सी दीपिनी. ६ ए °नीव ब°. ७ ए भौ ॥ यतो.

१ बी °राकर्बु°. २ ए द्विनेष्किकास्त्रैनेष्कि°. ३ सी °ष्किकाः । शि°. ४ सी वा इ°. ५ ए °ष्क द्वैनिष्किकाः । त्रैनै°. ६ ए °निष्कः ब°. ७ ए °न् त्रैबै°. ८ सी °स्य प्रत्यय ॥ अ°. ९ बी °त्रिमहा° १० सी दीपिन्यु°.

अध्यर्धेन सार्धेन शाणेन मानभेदेन क्रीताध्यर्धशाणा । शिष्टं स्पष्टम् ॥

द्विशाणिनि द्विशाण्यं नु त्रिशाण्यं नु त्रिशाणिनि ।
तमः खेभाद् द्व्यादि पण्यं पाद्यं माष्यं नु तद्वति ॥ ८७ ॥

८७. खे तमोभात् । यथा द्वाभ्यां शाणाभ्यां क्रीतं वस्तु द्विशाणं तदस्यास्ति द्विशाणी पुरुषस्तस्मिन्द्विशाण्यं द्वाभ्यां शाणाभ्यां क्रीतं वस्तु भाति । यथा वा त्रिशाणिनि त्रिशाण्यं भाति । यथा वा तद्वति द्विपण्यादिवस्तुमति नरे द्विपण्यं द्विपाद्यं द्विमाष्यं च वस्तु भाति । पणः कार्षापणः । पादो माषादीनां चतुर्थो भागः । माषः स्वर्णमानभेदः ॥

पञ्चशाण्यिका अध्यर्धशाणा । इत्यत्र "शाणात्" [ १४६ ] इति वा यः ॥ पक्षे । इकणो लुप् ॥

द्विशाण्यम् । द्वैशाणी । त्रिशाण्यम् । त्रैशाणी । इत्यत्र "द्वित्र्यादेर्यण्वा" [१४७] इति वा यणौ ॥ पक्षे । द्विशाणिनि । त्रिशाणिनि । इकणो लुप् ॥

द्विपण्यम् । द्विपाद्यम् । द्विमाष्यम् । अत्र "पण०" [१४८] इत्यादिना यः ॥

द्विकाकणीकषट्खारीकप्रास्थिकवदन्तरम् ।
ताराणामविदल्लोको मौद्गिकक्षेत्रभासि खे ॥ ८८ ॥

८८. खे ताराणामन्तरं गुरुत्वलघुत्वादिकृतं विशेषं लोकोविद-

१ बी °शाणि°. २ °बी भाद्वादि. ३ ए °र । ता°.

१ बी °न शा°. २ बी °स्यास्तीति द्वि°. ३ ए °स्मिन्दिशा°. ४ सी °ण्यं द्विपाद्यं. ५ ए द्विपाण्यं. ६ ए °माद्य च. बी °मानुष्यं. ७ सी °शाणिका. ८ ए इताच शा°. ९ सी °प् । द्विपण्यं । द्विपाद्य°. १० बी °म् । द्विशा°. ११ बी °देयाण्वा. १२ ए वा यणौ. १३ ए °पणाम्. १४ ए तारोणा°. १५ ए लोकाऽविदत् । यतो.

लेभे । ज्ञातवानित्यर्थः । विद्लृन्ती लाभे । यतो मुद्गानां वापो मौद्गिकं[1] यत्क्षेत्रं तद्वद्[2]द्वासि[3] तमसातिकृष्ण[4] इत्यर्थः । द्विकाकणीकषट्खारीकप्रास्थिकवत् । यथा द्विकाकण्यादिभिः क्रीतानां वस्तूनां मध्येल्पमहत्त्वादि[5]कृतं विशेषं[6] लोको वेत्ति । कपर्दकविंशतिः काकणी ॥

षट्खारीक । द्विकाकणीक । इत्यत्र[7] "खारी०" [ १४९ ] इत्यादिना[8] कच् ॥

प्रास्थिक । इत्यत्र "मूल्यैः क्रीते" [ १५० ] इतीकण् ॥

मौद्गिक[9] । इत्यत्र "तस्य वापे" [ १५१ ] इतीकण् ॥

वातिकः पैत्तिकश्चाथ[1] श्लैष्मिकः सांनिपातिकः ।
अवियुक्तवियुक्तानां प्रदोषोभूत्[2]प्रियाप्रियः ॥ ८९ ॥

८९. प्रदोषोवियुक्तानामविरहिणां रतिहेतुतया प्रियोभूत् । कीदृक्सन् । वातिकः पैत्तिकश्चाथ तथा[10] श्लैष्मिकः सांनिपातिको वातपित्तश्लेष्मसंनिपातानां शमनः[11] । प्रदोषो हि स्वभावेन साधारणः कालः[12] । वियुक्तानां[13] त्वप्रियोभूत् । यतो रत्यभावोत्थ[14]दुःखेन सर्वधातूद्रेकहेतुत्वाद्वातपित्तश्लेष्मसंनिपातानां कोपनः ॥

वातिकः । पैत्तिकः[15] । श्लैष्मिकः । सांनिपातिकः । अत्र "वात०" [ १५२ ] इत्यादिनेकण् ॥

---

१ ए बी °थ श्लेष्मि°. २ सी °भूत्सदाप्रि°.

---

१ सी °कं तत्क्षे°. २ ए बी तद्वा°. ३ सी °द्भाति त°. ४ ए सी °कृष्णेत्य°. ५ ए °हत्त्वादि°. ६ ए °शेषलो°. ७ सी °त्र मू°. ८ ए °दिनेक°. ९ ए °द्गिकील्य°. १० ए °था श्लेष्मि°. ११ ए °नः । प्रादो°. १२ बी कालवि°. सी कालयु°. १३ ए °नां त्वेप्रि°. १४ बी °भावात्थदुरकेन. १५ बी °कः । श्लेष्मि°. सी °कः । श्लेष्मकिकः.

**मूत्पातमिव पुत्रीयं शत्यमीड्योगमिच्छवः ।**
**ससज्जुः कुलवध्वोपि पुत्र्यधन्यैषिणो न के ॥ ९० ॥**

९०. कुलवध्वोप्यासतां वेश्याद्यङ्गनाः कुलाङ्गना अपि ससज्जुः संभोगार्हाङ्गभोगादिना प्रगुणीबभूवुः । कीदृश्यः सत्यः । पुत्रीयं पुत्रहेतुं शत्यं सुवर्णादिशतहेतुं चेड्योगं प्रियसंबन्धमिच्छवो यथा पुत्रीयं शत्यं च सूत्पातं शुभसूचकं महाभूतपरिणाममिच्छवः स्युः । युक्तं चैतत् । यस्मात्पुत्र्यधन्यैषिणः पुत्रधनहेत्वीड्योगपुत्रधनहेतुसूत्पाताभिलाषिणः के न स्युः ॥

**आश्विकौर्णिकखारीकपञ्चकानामकाङ्क्षिणीम् ।**
**ईड्योगे ब्रह्मवर्चस्ये ददृशुर्दिव्यरुन्धतीम् ॥ ९१ ॥**

९१. अरुधन्तीं सप्तर्षिसमीपस्थां वसिष्ठभार्यां दिवि व्योम्नि लोका ददृशुः । किंभूताम् । आश्विकौर्णिकखारीकपञ्चकानामश्वानामूर्णायाः खार्याः पञ्चानां रूपकादीनां हेतवः संयोगा उत्पाता वा ये तेषामकाङ्क्षिणीम् । क सति । ब्रह्मणः परमज्ञानस्य वर्चः प्रतापो ब्रह्मवर्चसं तस्य हेतौ ब्रह्मवर्चस्य ईड्योगे पतिसंबन्धे । महासतीत्वात्पतिसंबन्धमेवेच्छन्तीमित्यर्थः ॥

**शत्यमीड्योगं सूत्पातमिव । इत्यत्र "हेतौ०" [ १५३ ] इत्यादिना यथाविहितं यः ॥**

१ बी सी °यं सत्य. २ सी °पि आस°. ३ प °काङ्क्षणी°. सी °काङ्क्षणी । ई°. ४ बी °णी । इड्यो°.

१ प °प्यास्तीत्रे°. २ प °णीरभू°. ३ सी °वर्णश°. ४ प °दित्वात°. ५ सी °यं सत्यं. ६ प शुचम°. ७ बी सी °त्पुत्रध°. ८ बी °हेतुंस°. ९ प °मीस्थां. १० सी वशिष्ठ°. ११ प °कप°. १२ प °काक्षिणी°. १३ सी °रश°. १४ सी °बन्धमे°. १५ बी °र्थः । सत्य°.

पुत्र्य । पुत्रीयम् । अत्र "पुत्राद्येयौ"[1] [ १५४ ] इति येयौ ॥

धन्य । ब्रह्मवर्चस्ये । अत्र "द्विस्वर०" [१५५] इत्यादिना यः ॥ असंख्या-[2] परिमाणाश्वादेरिति किम् । संख्या[3] । पञ्चकानाम् ॥ परिमाण । खारीक[4] । अश्वादि । आश्विकौर्णिक[5] ॥

पार्थिवः[1] सार्वभौमश्च सूत्पातपुण्ययोगवत् ।
अथेन्दुरुदगाद्वन्द्यः सार्वभौमैः[2] सपार्थिवः ॥ ९२ ॥

९२. अथानन्तरं[6] सपार्थिवः पृथिव्या[7] ईशः पार्थिवो राजा प्रस्तावादत्र कुमारपालस्तेन सहित इन्दुश्चन्द्र उदगात् । कीदृक्सन्निन्दुः[8] पार्थिवश्च । पार्थिवः[9] पृथिव्या ज्ञातः । पृथिव्येकदेशे प्रसिद्धोपि पार्थिव इत्युच्यत इत्याह । सार्वभौमः सर्वभूमेर्ज्ञातोत एव सार्वभौमैः[10] सर्वभूमेरीशैर्नृपैर्वन्द्यः प्रणम्यः । सूत्पातपुण्ययोगवत् । यथा पार्थिवः सार्वभौमश्च[11] पृथिव्याः सर्वभूमेश्च हेतुः सूत्पातः पुण्ययोगश्च सार्वभौमैर्वन्द्यः श्लाघ्यः स्यात् ॥

सपार्थिवः । सार्वभौमैः[12] । पार्थिवः । सार्वभौमः । अत्र "पृथिवी०" [१५६] इत्यादिनाञ् ॥

न्यधादिन्दुः करं प्राच्यां लौकिक्यां सार्वलौकिकः ।
आधिकेष्वाधिक इव पञ्चकेष्विव पञ्चकः ॥ ९३ ॥

---

१ ए °र्थिवसा°. २ बी °र्वभूमैः.

---

१ बी °त्रादेयौ. २ बी °संख्यप°. ३ ए संख्याः । प°. ४ बी °रीकः । अ°. ५ बी °र्णिकः । पा°. ६ ए °न्तर स°. ७ सी °व्या ज्ञा°. ८ बी °वसनिन्दुः. ९ बी पाथिवः. १० बी सी °भौमः स°. ११ सी °श्च हे°. १२ ए सी °भौमः । अ°.

९३. सार्व[1]लौकिकः सर्वलोकस्य ज्ञात इन्दु[2]लौकिक्यां लोकस्य ज्ञातायां प्राच्यां दिशि करं किरणं न्यधान्यक्षिपत् । अर्धं रूढ्या रूपकार्धं तथा पञ्च द्रम्मादय एषु[3] शतेषु ग्रामेषु पटेषु व्यवहारेषु शतेषु वृद्धिरायो लाभ उपदा शुल्कं वा देयमर्धिकानि पञ्चकानि[4] पञ्चशतादीनि तेषु । तथार्धं[5] पञ्चं वास्मै वृद्धिरायो लाभ उपदा शुल्कं वा देयमर्धिकः । पञ्चकश्च व्य[6]वहारकादिः । यथार्धिकोर्धिकेषु पञ्चकः पञ्चकेषु च द्रम्मशतादिषु करं ह[7]स्तं रूपकार्धद्रम्मपञ्चकादिग्रहणाय क्षिपति ॥

षष्ठिकान्षष्ठिकस्यैव[1] भाग्यस्येव च भागिकान्[2][3] ।
द्रौणिकीभिः समं[4] द्रौणाः परभागं विधोर्ददुः[5] ॥९४॥

९४. द्रौणिकीभिर्द्रोणं पचन्तीभिः स्त्रीभिः समं सह द्रौणाः[8] द्रोणं [9]पचन्तो नरा वि[10]धोरिन्दोः परभागं गुणोत्कर्षं ददुः पाकेन संतप्तत्वात्सन्तापविद्रावकं चन्द्रोदयं [11]प्रशशंसुरित्यर्थः । यथा षष्ठो भागोस्मै वृद्ध्यादीनामन्यतमो देयः षष्ठिको व्य[12]वहारकादिस्तस्याधमर्णाः षष्ठो भागो वृद्ध्यादीनामन्यत[13]म एषु द्रम्मशतादिषु देयः षष्ठिकास्तान्षष्ठभागदानेन ददति । यद्वा षष्ठिकशब्देनोपचारात्स्वावयवः षष्ठभागोप्युच्यते यथा पटो दग्ध इत्यादौ पटैकदे[14][15]शेपि पटशब्दस्ततः षष्ठिकान्षष्ठभागान्[16]ददति । एवं भाग्य[17]स्येव च भागिकान् भागशब्दो [18]रूपकार्धे रूढः ॥

---

१ सी °व भोग्य°. २ सी भाग्यका°. ३ ए बी °न् । द्रोणि°. ४ बी °मं द्रोणाः. ५ ए बी °दुः । द्रोणि°.

---

१ ए °र्वलोकि°. २ ए °न्दुलोकि°. ३ ए °पु शाते°. ४ ए °नि वश°. ५ बी °र्ध चास्मै. ६ ए °वहरकादि । य°. ७ ए हस्तरू°. ८ बी सी द्रौणा द्रो°. ९ ए पञ्चतो न°. १० ए विधोरि°. ११ बी प्रशंशंसुरि°. १२ ए °वहर°. १३ बी °म पशु द्र°. १४ बी °देशोपि. १५ सी °शे प°. १६ ए °न्दति. १७ बी °ग्यस्यैव. १८ ए रूपार्धे.

लौकिक्याम् । सार्व[1]लौकिकः । अत्र "लोक०" [१५७] इत्यादिना-इकण्[2] ॥

पञ्चकेषु । पञ्चकः । अत्र "तदत्र०" [ १५८ ] इत्यादिना यथाविहितं कः ॥

षष्ठिकान् । षष्ठिकस्य । अर्धि[3]केषु । अर्धिकः ॥ अत्र "पूरण०" [ १५९ ] इत्यादिनेकः[4] ॥

भाग्यस्य । भागिकान् । इत्यत्र "भागाद्येकौ" [ १६० ] इति येकौ[5] ॥

द्रौणाः । द्रौणिकीभिः । अत्र "तं०" [ १६१ ] इत्यादिना वाञ्[6] ॥

ज्योत्स्नाफेनादा[1]ढकीनपात्रिकाचितिकैर्[2]जनैः ।
प्राच्यु[3]खोत्प्रैक्षि पात्रीणाचितीना[4]ढकिकी तदा ॥ ९५ ॥

९५. तदा चन्द्रोदयकाल आढि(ढ)कीनपात्रिकाचितिकैराढकं चतुःप्रस्थीं पात्रं पात्रमितमन्नमाचितं मानभेदमितमन्नं च पचद्भिर्जनैः पाचकै[7]र्लोकैः प्राची पूर्वदि[8]गु[9]खा स्थाल्युत्प्रैक्षि संभाविता । कुतो ज्योत्स्नाफेनाज्ज्योत्स्नैवातिश्वैत्याद्धान्ये राध्यमाने स्थालीमुखोत्थः फेनस्तस्मात् । कीदृ[10]ग्युखा । पात्रीणाचितीनाढकिकी पात्रमाचितमाढकं वा पचन्ती । यद्वा संभवन्ती प्रमाणानतिरेकेण धारयन्तीत्यर्थः । यद्वावहरन्ती[11] प्रमाणातिरेकेण धारयन्तीत्यर्थः । ज्योत्स्नाया राध्यमान ओदने स्थालीत उत्फण[12]त्फेनकल्पत्वादुत्प्रे[13]क्षकाणां च पाचकत्वेन सुपरिचितस्थालीफेनत्वादेवमुत्प्रेक्षा ॥

---

१ ए °दाडिकी°. बी °दाढिकी°. २ सी °कैराढकं. ३ ए प्राच्यखो°. ४ ए °नाडकि°.

---

१ ए °र्वलोकि°. २ ए °ण् । के°. ३ ए अर्धके°. ४ बी °नेकणः । भा°. ५ ए येको । द्रौ°. ६ सी वाकञ्. ७ बी °चकालो°. ८ बी °ग्दिग्मुखा. ९ ए °खात्थाल्यु°. १० बी सी °श्युपा । पा°. ११ ए °न्ती णा°. १२ ए बी °णत्पेन°. १३ बी °त्प्रेक्ष्यका°.

आढकिकी । इत्यत्र "संभवद्०" [ १६२ ] इत्यादिनेकण् ॥

पात्रीणाचितीना । आढकीन । इत्यत्र "पात्र०" [ १६३ ] इत्यादिना वा-ईनः ॥ पक्षे । पात्रिकाचितिकैः । आढकिकी ॥

ऱ्याचितैर्ऱ्याचितीनोखा द्विपात्रीणैर्द्विपात्रिकी ।
ऱ्याढकी ऱ्याढकीनैर्नु ज्योत्स्नाभाजि चकोरकैः ॥ ९६ ॥

९६. स्पष्टः । किं तु यथा ऱ्याचितैर्द्वावाचितौ पचद्भिर्ऱ्याचितीना द्वावाचितौ पचन्ती संभवन्त्यवहरन्ती वोखा भज्यते ॥

ऱ्याचितिकी ऱ्याढकिकी द्विपात्री द्विकुलिज्यथ ।
खेन्वमीयत शीर्णोखा कीर्णैस्तारकतन्दुलैः ॥ ९७ ॥

९७. कीर्णैरितस्ततो विक्षिप्तैस्तारकतन्दुलैस्तारका एव श्वेतत्वात्तन्दुला राद्धशालयस्तैः कृत्वोखा तन्दुलस्थाली खे शीर्णा भग्नान्वमीयत यत्खे तारकतन्दुला दृश्यन्ते तस्मादत्र महती तन्दुलस्थाली भग्नेति लोकैरनुमितमित्यर्थः । किंभूतोखा । अथाथ वा द्विकुलिजी द्वे कुलिजे मानभेदौ पचन्ती संभवन्त्यवहरन्ती वा । एवं प्राग्विशेषणार्थोपि ज्ञेयः । महाप्रमाणेत्यर्थः ॥

नवेन्दोर्द्विकुलिजिकैः सद्वैकुलिजिकीजनैः ।
नभोद्विकुलिजीनोखाचूर्णलेखा न्वलक्षि भाः ॥ ९८ ॥

१ ए °चितिकीर्ऱ्या°. २ ए ऱ्याढिकी. ३ बी ऱ्याढिकि°. ४ ए °कुलीज्य°. ५ बी °लिजाथ. ६ बी °णोंपाकी°. ७ ए सी °वेदोर्द्वि°. ८ ए बी °कुलजि°. ९ बी °कुलजी°. १० बी °क्षिताः ॥ स°. सी °क्षिभा ॥ स°.

१ ए °भवादत्या°. बी °भवाद. २ ए पात्राणा°. ३ बी °ना ईनः. ४ बी पतद्भि°. ५ ए °वत्यथह°. ६ ए °शालाय°. ७ बी °त्वोषा त°. ८ ए बी °यते य°. ९ ए °मितिमि°. १० बी °कुलजी. ११ ए बी कुलजे. १२ ए °वत्यह°.

९८. सद्वैकुलिजिकीजनैर्द्वे[1] कुलिजे[2] पचन्तीनां स्त्रीणां जनेन सहितैर्द्विकुलिजिकैर्द्वे[3] कुलिजे पचद्भिर्नरैर्नवेन्दोर्भा अलक्षि ज्ञाता । किदृशी । नभ एव कृष्णत्वाद्विकुलिजीनोखा द्वे कुलिजे पचन्ती संभवन्त्यवहरन्ती वा स्थाली तस्यां या चूर्णलेखा चूर्णस्य खटिकादिक्षोदस्य रेखा सा नु । स्थाली हि शोभार्थमुपरिभागे[4] खटिकादिश्वेतचूर्णेन मण्ड्यते । बालेन्दुकान्तीनां व्योमपार्श्ववर्तित्वादुत्प्रेक्षकाणां[5][6] पाचकत्वेन सुपरिचितस्थालीव्यापारत्वाच्चैवमुत्प्रेक्षा[7] ॥

द्विपात्रीणैः[8][9] । द्विपात्रिकी । द्व्याचितीना[10] । द्व्याचितिकी । द्व्याढकीनैः । द्व्याढकिकी । अत्र "द्विगोर्०" [ १६४ ] इत्यादिना वेनेकटौ । पक्ष इकण् । तस्य "अनाम्नि०" [ ६. ४. १४१ ] इत्यादिना लुप् । द्विपात्री । द्व्याचितैः । द्व्याढकी ॥

द्विकुलिजीना । द्विकुलिजिकैः । अत्र "कुलिजाद्वा लुक्(लुप् च?)" [ १६५ ] इतीनेकटौ[11] वा । पक्ष इकणो लुब्वा । द्विकुलिजी[12] । द्वैकुलिजिकी ॥

वांशिकैः[1] कौटिकैर्वांशभारिकैः[2] कौटभारिकैः ।
द्रव्यकैर्वस्न(स्नि?)कैः[3] श्रान्तैः[4] सुधांशुर्ददृशे[5] मुदा[6] ॥ ९९ ॥

९९. सुधांशुर्मुदा ददृशे । कैः कैः । वांशिकादिभिरतिस्थूलत्व[13]महत्त्वादिना भारभूतानल्पान्वंशानेवं भारभूतानल्पान्कुटान्घटांस्तथा[14]

१ बी °कैः कौटि°. २ ए °कैः कोट°. ३ ए °वस्नकैः. ४ बी °न्तैः शुधां°. ५ ए सुधाशु°. ६ बी °दा । शुधां°.

१ बी °कुलजि°. २ बी °नैर्द्विकु°. ३ बी °कैर्द्वे कु°. ४ सी °गे खाटि°. ५ बी °पार्श्वव°. ६ बी °त्प्रेक्षयका°. ७ बी °त्प्रेक्ष्या । द्वि°. सी °त्प्रेक्षाः । द्वि°. ८ सी °पात्रि°. ९ ए °त्रीणे । द्विपात्रीकी. १० सी °तीकी°. ११ बी °कवौ वा. १२ सी °लिजि°. १३ ए °लत्वा°. १४ ए °टान्घंटां°.

वंशभारं वेण्वोघमेवं कुटभारं तथा द्रव्यं तथा वस्त्रं मूल्यं हैरद्भिर्देशान्तरं प्रापयद्भिर्वहद्भिर्वोत्क्षिप्य धारयद्भिरावहद्भिर्वोत्पादयद्भिर्भृत्यैः। यतः कीदृशैः। श्रान्तैर्भारहरणादिना खिन्नैः। श्रान्ता हि श्रमोत्थसन्तापोच्छेदकं चन्द्रोदयं स्पृहयन्ति ॥

वांशभारिकैः। कौटभारिकैः। वांशिकैः। कौटिकैः। अत्र "वंशादेर्०" [१६६] इत्यादिना-इकण् ॥

द्रव्यकैः। वस्त्र(स्नि?)कैः। अत्र "द्रव्य०" [१६७] इत्यादिना केकौ ॥

लसन्ती खेऽष्टके दिग्भिश्चक्रैर्दैवहतैस्तदा ।
पञ्चकैर्न्वैष्टकं वासो ज्योत्स्ना द्रौणिक्यकामि न ॥१००॥

१००. तदा तस्मिन्काले ज्योत्स्ना। अपिरत्र ज्ञेयः। विश्वविश्वाह्लादिका चन्द्रिकापि चक्रैश्चक्रवाकैर्नाकामि न वाञ्छिता। यतो दैवहतैर्निष्पुण्यैः। दैवहतानां हि सर्वानन्दकमपि वस्त्वसुखायैव स्यात्। कीदृशी। द्रोणो मानमस्या द्रौणिक्यतिप्रभूतेत्यर्थः। अत एव दिग्भिः कृत्वाष्टावंशा भागा अस्याष्टकं तत्राष्टके खे लसन्ती दिशो व्योम च व्याप्नुवतीत्यर्थः। यथा पञ्च द्रम्मा भृतिः कर्ममूल्यं येषां तैः पञ्चकैर्भृत्यैर्दैवहतैः सद्भिरष्टौ द्रम्मा वस्त्रं मूल्यं यस्य तदष्टकं वासः परिधानार्थं नेष्यते ॥

---

१ प °क्रैर्दैव°. २ प °कैर्नेष्टवा°. ३ प सी °त्स्ना द्रोणि°. ४ प °कागिना। त°. ५ बी °मि नः। त°.

---

१ बी °घकु°. २ बी हरिभिर्दे°. ३ बी °द्भिभृत्यैः. ४ बी °दृश्यै। श्रा°. ५ प °कैः। वंशि°. सी °कैः। वाशि°. ६ प °देक°. ७ प °कैः। दस्तकैः. ८ सी °का च°. ९ सी °वाक्यैर्ना°. १० सी °ता। या दै°. ११ बी सी °तैर्निःपुण्यैः. १२ प °ण्येः। देव°. १३ प °नदक°. १४ बी °खा तं कः. १५ प द्रोणा मा°. १६ प °त्यैर्देव°.

पञ्चकैः । अष्टकं[1] वासः । अष्टके । अत्र "सोस्य० [ १६८ ] इत्यादिना यथाविहितं कः ॥

द्रौणिकी । इत्यत्र "मानम्" [ १६९ ] इतीकण् ॥

द्विषाष्टिका वरस्तोत्रैरष्टिकाधीतयोष्टकैः ।
बध्नन्तः[2] पञ्चकान्संघान्द्विजराजं[3] जगुर्द्विजाः ॥ १०१ ॥

१०१. द्वे षष्टी वर्षाणि जीवितमानमेषां द्विषाष्टिका अतिवृद्धा द्विजा[3] ऋत्विजो द्विजराजं चन्द्रं जगुर्गायन्ति स्म । यो हि येषां राजा स्यात्स तैर्गीयते[4] । कीदृशाः सन्तः । अष्टावृचो मानमेषां तैरष्टकैः पङ्क्तिर्वरस्तोत्रैः[5] सोमस्तुतिरूपपङ्क्त्यृगष्टकमयेन बृहता स्तोमेन कृत्वेत्यर्थः । अष्टौ रूपाणि वारा मानमस्या अष्टिका साधीतिः[6] पाठो येषां ते स्तोत्रै[7]स्वरूपाणि पङ्क्त्यृगष्टकान्यष्टौ वारान्पठन्त इत्यर्थः । तथा पञ्चावयवा मानमेषां पञ्चकान्संघानजौघान्बध्नन्तः । किलायुष्टोमयाग आयुर्वृद्ध्यर्थं[8] परमायुर्भिरेव यज्वभिः क्रियते तत्र च तैः पूर्णिमाचन्द्रोदय आलम्भाय पञ्चाजान्यूपस्तम्भे बध्नद्भिरष्टाचत्वारिंशदृग्मयमष्टाचत्वारिंशाख्यं महास्तोममष्टौ वारान्गायद्भिश्च चन्द्रः[9] स्तूयत इति याज्ञिकाः[10] ॥

द्विषाष्टिकाः । अत्र "जीवितस्य सन्" [ १७० ] इतीकण् स च सन् ॥

पञ्चकान् । अष्टकैः[11] । अष्टिका[12] । इत्यत्र "संख्यायाः०" [ १७१ ] इत्यादिना कः ॥

---

१ ए °कावीत°. २ बी °भन्ता प°. ३ सी °न्संध्यान्द्वि°.

---

१ ए अथकं. २ बी °ण् । द्वेषा°. ३ सी °जा द्वि°. ४ बी °गीयंते. ५ ए सी °स्तोत्रै सो°. ६ ए सावीतिः. ७ सी °त्ररू°. ८ ए °युभिः—य°. बी °युभिरिव. ९ बी चन्द्र श्रये इ°. सी चंद्र स्तू°. १० ए °काः । अ°. ११ बी °कैः । षष्टि°. १२ सी अष्टका.

पञ्चका नु शकुनयः[2] क्वाप्युड्डीय तमांस्ययुः ।
इन्दौ निदधति व्योम्नि विंशतिं त्रिंशतं करान् ॥१०२॥

१०२. पञ्चेति संख्या मानमेषां पञ्चैवे[1] वा[2] पञ्चका नाम शकुनयः[3] पक्षिणो यथा क्वाप्युड्डीय यान्ति[4] । शिष्टं स्पष्टम् ॥

पञ्चकाः । अत्र "नाम्नि" [ १७२ ] इति कः ॥

विंशतिम्[5] । त्रिंशतम् । एतौ "विंशत्यादयः" [ १७३ ] इति निपात्यौ ॥

ब्राह्मणैर्ब्राह्मणास्त्रैंश[3]चात्वारिंशैरिवानघैः ।
जहृपुर्यज्वनां[4] पत्युरोषधिद्योतिभिः करैः ॥ १०३ ॥

१०३ यज्वनां[6] पत्युरिन्दोः[7] करैः कृत्वा ब्राह्मणा ऋत्विजो जहृषुः[8] । यत ओषधिद्योतिभिः सोमवल्ली नाम महौषधी यदेन्दुः क्षीयते तदा प्रतिदिनमेकैकपत्रपातेन[9] क्षीयते । यदा त्विन्दुर्वर्धते तदासाप्येकैकपत्रवृद्ध्या[10] वर्धते । सा च यागेषु महोपकरणमिति ऋत्विग्भिर्गिरिषु गवेष्यमाणासौ चन्द्रांशुभिः प्रकाश्यत इत्यृत्विजां[11] हर्ष इत्यर्थः । यथा ब्राह्मणैर्वेदविशेषैः कृत्वा स्वसिद्धान्ततया ब्राह्मणा हृष्यन्ति । किंभूतैः । त्रिंशच्चत्वारिंशच्चाध्याया[12] मानमेषां तैस्तथानघैर्निष्पापैः[13] ॥

त्रै(त्रैं?)शच्चा(चा?)त्वारिंशैः[14] । एतौ[15] "त्रैंश०" [१७४] इत्यादिना निपात्यौ ॥

---

१ ए °का मु श°. २ ए °यः काप्यु°. ३ ए सी °शचत्वा°. ४ बी जहर्पुर्यज्वानां.

---

१ सी °श्चैवं प°. २ बी °व प°. ३ ए °नय प°. ४ सी °न्ति । प°. ५ ए °शति । त्रिं°. सी °शतं । त्रिं°. ६ बी यज्वानां. ७ ए °रिन्दो क°. ८ बी °हृपु । य°. ९ ए °कैप°. १० ए °दा साप्ये°. ११ बी इत्यत्वि°. १२ ए °शत्वाध्या°. १३ ए सी °पैः । त्रिंश. १४ बी °शच्चत्वा°. सी °शव्यत्वा°. १५ ए °तौ त्रैश.

दशकेषु दशद्वर्गो यथा पञ्चत्सु पञ्चकः ।
तथा शशिकरेष्वन्तर्बभूव ज्योतिषां प्रभा ॥ १०४ ॥

१०४. दशमानमेषां तेषु दशकेषु वर्गेषु मध्ये दशद्वर्गो दशसंख्यामान एकः समूहो यथा यादृशोल्पत्वेनालक्ष्यः स्याच्छशिकरेष्वन्तर्मध्ये ज्योतिषां ताराणां प्रभा तथा तादृश्यलक्ष्या बभूव । शिष्टं स्पष्टम् ॥

पञ्चत्सु । दशत् । इत्येतौ "पञ्चद्०" [ १७५ ] इत्यादिना निपात्यौ वा ॥ पक्षे । पञ्चकः । दशकेषु ॥

विंशस्तोमविदां मन्त्रैर्यज्ञियानां नु शीतगोः ।
आभिषेचनिकस्योस्रैर्दण्ड्यं वध्यं तमोद्रवत् ॥ १०५ ॥

१०५. तमोद्रवदनश्यत् । कीदृक्सत् । शीतगोरिन्दोरुस्रैः किरणैः कृत्वा दण्ड्यं वध्यं च निग्रहं हिंसां चार्हत् । कीदृशस्य । आभिषेचनिकस्य सकलपृथ्व्याह्लादकत्वादभिषेचनं राज्याभिषेकमर्हतः । योप्याभिषेचनिको राजा तस्य दण्ड्यो वध्यश्च संस्तमस्तुल्यश्चौरादिर्भयेन नश्यति । यथा यज्ञो नाम क्रियासमुदायः कश्चित् । तदभिव्यङ्ग्यं वापूर्वमित्याहुस्तमर्हतां यजमानानां तमः पापं द्रवति । कीदृक्सत् । विंशतिऋचो मानैमस्य विंशो यः स्तोम ऋक्समूहस्तं विदन्ति ये तेषामृत्विजां मन्त्रैः कृत्वा यागकाले दण्ड्यं वध्यं च ॥

विंशस्तोम । इत्यत्र "स्तोमे डट्" [ १७६ ] इति डट् ॥

---

१ प प्रभाः । द°. २ प °गोः । अभि°. ३ बी °ण्ड्यं वध्यं.

---

१ सी °करैधान्त°. २ प °ना पा°. ३ बी पक्षं । प°. ४ प °रुस्तो कि°. ५ प °श्चादि°. ६ प °पूर्वामि°. ७ प °नस्य. ८ प °स्य विंशो. ९ बी विंशनो यः. १० सी °शो य स्तो°. ११ प °ट् । अभि°.

आभिषेचनिकस्य । इत्यत्र "तमर्हति" [ १७७ ] इतीकण् ॥

दण्ड्यम् । वध्यम् । अत्र "दण्डादेर्यः" [ १७८ ] इति यः ॥

यज्ञियानाम् । अत्र "यज्ञादियः" [ १७९ ] इतीयः ॥

प्राप्येन्दोः पात्रियान्रश्मीन्व्यकसन्कुमुदान्यथ ।
स्थालीबिलीयं पात्र्यं वा कडंगर्या इवौदनम् ॥ १०६ ॥

१०६. अथ तथेन्दो रश्मीन्कान्तीः प्राप्य कुमुदानि व्यकसन् । किंभूतान् । पात्रियानतिप्रधानत्वात्पात्रमर्हतः । यथा कडंगर्याः कडंगरं पलालमर्हन्तो वृषा ओदनं प्राप्य हर्षाद्विकसन्ति । कीदृशम् । स्थालीबिलीयं स्थालीबिलमर्हन्तं पाकार्हमित्यर्थः । पात्र्यं वातिप्रधानत्वात्पात्रमर्हन्तं वा ॥

दक्षिण्यो दक्षिणीयानामपीन्दुः स्वधियैक्षि खे ।
कडंगरीयैही(र्ही) स्थालीबिल्यहैयङ्गवीनकम् ॥ १०७ ॥

१०७. दक्षिणीयानामपि दक्षिणार्हाणां द्विजानामपि दक्षिण्यो दक्षिणार्हः पूज्यः खे वर्तमान इन्दुर्ही विस्मये । कडंगरीयैः । अपिरत्र ज्ञेयः । वृषभादिपशुभिरपि स्वधियैक्षि ज्ञातः । कीदृक् । स्थालीबिल्यहैयङ्गवीनकम् । इवोत्रावसीयते । स्थालीबिल्यं स्थालीबिलमर्हत्पाकार्हं मन्थन्यां पिण्डीकृतमित्यर्थः । यद्धैयङ्गवीनकं ह्योगोदोहस्य

१ बी °त्रस्मीन्व्य°. २ प °सकुमु°. ३ प °दनाम्. ४ प दक्षणी°. ५ प °न्दुः स्वाधि°. ६ बी °धियैः क्षि°. ७ प °यैर्ह स्था°. बी यैर्हा स्था°. ८ बी बिलाहैगवी°. ९ प °ल्यहेयगवी°.

१ प °त्र म°. २ प °त्वातपत्र°. ३ सी गरं. ४ प °न्तो तृषा. ५ सी °कामि°. ६ बी °र्हतं वा. ७ प सी °क्षिणो द°. ८ सी °पशूना°. ९ प °ल्यहेय°. १० प इत्रोत्रा°. ११ बी °बिल°. १२ प यद्धेय°. १३ प °गोदेह°.

विकारस्तदिव पशूनामपि सद्य उत्तीर्णनवनीतपिण्डवच्चन्द्र आह्लादकोभूदित्यर्थः । यद्वा ही खेदे । सकलजगत्पूज्योपीन्दुः पशुभिः स्वतुच्छबुद्ध्या नवनीतपिण्डक इव ज्ञात इत्यर्थः ॥

पात्र्यम् । पात्रियान् । अत्र "पात्रात्तौ" [ १८० ] इति य-इयौ ॥

दक्षिणीयानाम् । दक्षिण्यः । कडंगरीयैः । कडंगर्याः । स्थालीबिलीयम् । स्थालीबिल्य । इत्यत्र "दक्षिणा०" [ १८१ ] इत्यादिना-ईययौ ॥

छैदिको भैदिकः[1] शीर्षच्छेद्यः किं न विधुंतुदः ।
इति वैरङ्गिकोप्यूचे विधोरानन्दितः करैः ॥ १०८ ॥

१०८. वैरङ्गिकोपि विरागमर्हन्नीरागो मुनिरपि विधोरिन्दोः करैरानन्दितः सन्नूचे । किमित्याह । विधुंतुदो ग्रसनेन विधोर्व्यथको राहुश्छैदिको भैदिकः शीर्षच्छेद्यः किं न । छेदं द्विधाकरणम् । भेदं विदारणम् । शीर्षच्छेदं च किं नित्यं नार्हति किं त्वर्हत्येवेति ॥

अपकौपीनशालीनैरार्त्विजीनैरिवाम्बुजैः ।
स्थितं संकुच्य चक्रैश्च[2] शैर्षच्छेदिकमानिभिः ॥ १०९ ॥

१०९. अम्बुजैश्चक्रैश्चक्रवाकैश्च संकुच्य स्थितम् । यतः शैर्षच्छेदिकमानिभिश्चन्द्रविपक्षस्यार्कस्याश्रितत्वेनेन्दुना शीर्षच्छेदार्हं स्वं मन्यमानैरिव । ये हि विपक्षाश्रितत्वेन स्वं राज्ञा शीर्षच्छेदार्हं मन्यन्ते तैर्भयात्कुत्रापि संकुच्य स्थीयते । यथार्त्विजीनैर्ऋत्विजं याजयूकमर्ह-

१ ए °दिका शी°. २ बी °श्च शीर्ष°.

१ ए °त्र्य । पा°. २ बी ग्रसेने°. ३ ए विधौर्व्य°. ४ बी °धोव्यथ°. ५ ए °हुश्छेदि°. बी °हुच्छैदिकोभैदिकः. ६ ए च कि नि°. सी °च कि ना°. ७ ए किं अर्ह°. बी किं त्वार्ह°. ८ बी सी °तः शीर्ष°. ९ ए °र्हं स्वम°. १० बी सी याजयूक°.

द्रियेजमानैर्ऋत्विक्कर्मार्हद्भिर्ऋत्विग्भिरेव वा संकुच्य स्थीयते । कीदृशैः[1] सद्भिः । कूपप्रवेशनमर्हति कौपीनः । कौपीनशब्दः पापकर्मणि गोपनीयपायूपस्थे तदावरणे[2] च चीवरखण्डे वर्तते । अपगतं कौपीनं चीवरखण्डं येषां तेपकौपीना नग्ना अत एव लज्जया शालीनाः शालाप्रवेशं[3]मर्हन्तो ये तैः ॥

छैदिकः । भैदिकः । अत्र "छेदादेर्नित्यम्" [ १८२ ] इतीकण् ॥

वैरङ्गिकः । अत्र "विरागाद्विरङ्गश्च" [ १८३ ] इतीकण् विरागस्य विरङ्ग[4]श्च ॥

शीर्षच्छेद्यः शैर्षच्छेदिक । इत्यत्र "शीर्ष०" [ १८४ ] इत्यादिना वा यः ॥

शालीनैः । कौपीन । आर्त्विजीनैः । एते[5] "शालीन०" [ १८५ ] इत्यादिना निपात्याः ॥

चतुर्विंशः पादः ॥

**गोष्विन्दोर्युग्यधुर्येषु द्विरथ्येष्विव हारिषु ।**
**प्रासङ्ग्या नु भधौरेया न धौरेयकतां दधुः ॥ ११० ॥**

११०. इन्दोर्गोषु कान्तिषु हारिषु दीप्रतया मुख्येषु सत्सु भधौ[6]रेया धुरं यानमुखं भारं वा वहन्ति धौरेया मुख्यवृषभा उपचारादन्येपि मुख्या उच्यन्ते । भेषु नक्षत्रेषु धौरेया दीप्रतया[7] मुख्याः शुक्रादयो धौरेयकतां मुख्यतां न दधुः । इन्दुकरैर्निस्तेजसोभूवन्नित्यर्थः । यथा प्रासङ्ग्याः प्रासङ्गो यत्काष्ठं वत्सानां दमनकाले स्कन्ध आसज्यते तद्वहन्तो द[8]म्यवृषा धौरेयकतां मुख्यवृषभतां न दधति । केषु सत्सु । गोषु वृषभेषु । कीदृक्षु । द्विरथ्येषु बलिष्ठत्वाद्द्वौ रथौ वहत्स्वत एव युग्यानां युगं वहतां वृ[9]षाणां मध्ये धुर्येषु मुख्येषु ॥

---

१ सी °शैः । कू°. २ प °वरेणे. ३ सी °शनम°. ४ प °ङ्गस्य । शी°. ५ सी °ते शलीत्या°. ६ सी भधोरेया मुख्य°. ७ प °तयं मु°. ८ बी दन्यवृ°. ९ प °तां नृपाणां. १० सी वृषभाणां.

धुर्यो वामधुरीणाः सर्वधुरीणा मनोभुवः ।
धुरीणैः सर्वधुर्यैश्चेशै रन्तुं प्रावृतन् स्त्रियः ॥ १११ ॥

१११. स्त्रिय ईशैः सह रन्तुं प्रावृतन् । कीदृश्यः । मनोभुवो धुर्यो धुरं गाढरिरंसादिकरणरूपं कार्यप्राग्भारं वहन्त्यस्तथा वामधुरीणा यथा वामधुरां वहन्वृषभः सातिशयं भारं वहति तथा सातिशयं स्मरकार्यप्राग्भारं वहन्त्य इत्यर्थः । किं बहुना मनोभुवः सर्वधुरीणाः । किंभूतैः । ईशैर्मनोभुवो धुरीणैः सर्वधुर्यैश्च ॥

द्विरथ्येषु । युग्य । प्रासङ्ग्याः । अत्र "वहति०" [ २ ] इत्यादिना वहत्यर्थे "यः" [ १ ] इति यः ॥

धुर्येषु । धौरेयाः । अत्र "धुरो यैयण्" [ ३ ] इति यैयणौ ॥ कश्चित्तु यदृएयकणावपीच्छति । धुर्यः । टित्वादत्र ङीः । धौरेयकताम् ॥

वामधुरीणाः । सर्वधुरीणाः । अत्र "वामाद्यादेरीनः" [ ४ ] इतीनः ॥ सर्वधुर्यैः । अत्र यप्रत्ययोपीति कश्चित् ॥ धुरीणैः । अत्र केवलादपीन इत्यन्यः ॥

रामेण हालिकेनैकधुरीणो हालयाधिनोत् ।
रेवत्यैकधुरां कान्तां कोप्यूर्जन्गौर्न्वसैरिकः ॥ ११२ ॥

११२. कोपि युवा कान्तां हालया सुरयाधिनोदप्रीणात् । सुरामपाययदित्यर्थः । कीदृग् । ऊर्जन्बलिष्ठः । यथासैरिकः सीरं हलमवहन्

१ ए °रीणा सर्व धु°. २ ए °नोभुवा । धु°. ३ ए °र्यैश्चशै. बी यैश्चशै रन्तं प्रा°. ४ ए कान्ता को°. ५ ए °र्जन्मोर्न्व°. बी °र्जन्गौन्वसै°.

१ ए °य विशैः. २ बी °नोभवो. ३ सी °रं रि°. ४ ए °न्वृषः सा°. ५ ए °शयस्म°. ६ ए °हन्त इ°. ७ ए °नोभवो. ८ ए °धुर्येणैश्च. ९ बी °र्थे इ°. १० ए धुर्य । टि°. ११ सी °रीणा । अ°. १२ बी °त्र प्र°. १३ ए °त्यनः । रा°. १४ ए सी कान्ता हा°.

गौर्वृष ऊर्जन्हलवहनाभावेनात्रुटितबलः स्यात् । अत एव मद्यप्रियत्वाच्च हालिकेन हलं वहता रामेण बलभद्रेणैकधुरीण एकां सदृशीं धुरां वहन्सदृशः सन्नित्यर्थः । कीदृशीं कान्ताम् । रेवत्या बलदेवभार्ययैकधुरां तुल्याम ॥

एकधुराम् । एकधुरीणः । अत्र "अश्वैकादेः" [ ५ ] इति-अ ईनश्च ॥

हालिकेन । सैरिकः । अत्र "हल०" [ ६ ] इत्यादिनेकण् ॥

**तोत्रैर्द्विशकटानुक्ष्णो यथा द्वैशकटी पुमान ।**
**मधुमत्तान्स्मरो यूनो विव्याधोरस्यसायकैः ॥ ११३ ॥**

११३. स्मर उरो हृदयं विध्यन्त्युरस्या ये सायका बाणास्तैः कृत्वा मधुमत्तान्मद्यपानेन क्षीबान्यूनस्तरुणांस्तरुणीश्च विव्याधाताडयत् । यथा द्वे शकटे वहन्ति द्वैशकटा वृषाः सन्त्यस्य द्वैशकटी पुमान् द्विशकटान्द्वयोः शकटयोर्वोढृनुक्ष्णो वृषांस्तोत्रैः प्रवयणैः कृत्वा विध्यति ॥

द्वैशकटी । इत्यत्र "शकटादण्" [ ७ ] इत्यण् ॥ ननु च "तस्येदम्" [ ६.३.१६० ] इति शकटादण् सिद्ध एव । यो हि यद्वहति स तस्य संबन्धी स्यात् । सत्यम् । रथवदेव तदन्तार्थमुपादानम् । तेनात्रापि द्विगौ द्वैरूप्यं स्यात् । द्वितीयं तु रूपं द्विशकटान् ॥

उरस्य । इत्यत्र "विध्यति०" [ ८ ] इत्यादिना यः ॥ अनन्येनेति किम् । स्मरो यूनो विव्याध सायकैः । अत्र हि स्मरो यूनो विध्यन्सायकैर्विध्यति ॥

१ सी °कटिकी पु°.

१ ए °लं दह°. २ बी °धुरेण. ३ बी सी धुरं व°. ४ बी सी °म् । रेव°. ५ सी °लभद्रभा°. ६ सी °रिक । अ°. ७ ए वृषा स°. ८ बी वृषास्तो°. ९ सी °यणैः कृ°. १० सी °टी । तत्र. ११ सी द्विगौ द्वै°. १२ बी °ध्यन्नेन°.

धन्या गण्यान्नेवातुल्यं हृद्यपथ्यं न मध्वधात् ।
जिज्ञासुः प्रेयसो भावं मधुवश्यस्य काचन ॥ ११४ ॥

११४. काचन मधु मद्यं नाधान्नापिबन् । कीदृग् । हृद्यपथ्यं हृद्यं हृदयस्य प्रियमपि पथ्यं रोगोपशमकमपि तथातुल्यं पेयवस्तुषु मध्येऽत्युत्कृष्टमपि । यतः कीदृशी । मधुवश्यस्य मत्तस्य प्रेयसो भावमनुरागविषयमभिप्रायं जिज्ञासुः । यथा धन्या धनं लब्ध्री वेश्या गण्या च गणं पुरुषसमूहं लब्ध्री कुलटा चान्ना चान्नं धान्यं लब्ध्री दासी च पुरुषस्य भावं जिज्ञासुः सती मधु न पिबति ॥

अमूल्यपद्यकस्तूरीलेखां नु लुलितालकैः ।
अतिजन्यवयस्यास्ये चक्रे हाला मृगीदृशाम् ॥ ११५ ॥

११५. हाला सुरा मृगीदृशामास्ये मुखेषु लुलितालकैर्मत्ततावशेनेतस्ततो लुंठितैश्चूर्णकुन्तलैः कृत्वा चक्रे । काम् । अमूल्या मूल्यं विना सुधिकयैव(?) संपन्नेत्यर्थः । तथा पद्मस्यां दृश्यं पद्मा नातिद्रवा नातिशुष्केत्यर्थः । या कस्तूरी तस्या लेखां नु मण्डनविच्छित्तिमिव । अत एव कीदृग् हाला । अतिजन्यवयस्या जनीं वधूं वहन्ति जन्या जामातुः स्निग्धा वयस्याः सख्यो द्वन्द्वे ता अतिक्रान्ता तत्तुल्येत्यर्थः । जामातृवयस्याः स्वसख्योपि हि वधूमुखेषु कस्तूरीलेखां कुर्वन्ति ॥

---

१ **सी** धन्यग°. २ **ए** °थ्यं मम°. ३ **बी** न ध्व°. ४ **बी** °खां तु लु°.

---

१ **ए** कापि म°. २ **सी** °थम°. ३ **सी** °त्यं प्रेय°. ४ **बी** °प्राय जि°. ५ **बी** °नं वे°. ६ **ए** चान्नं धा°. ७ **ए** भाव जि. ८ **बी** मुख्येषु. ९ **सी** °खेष्युल्ललि°. १० **ए सी** लुचितै°. ११ **ए** °ना मुधि°. १२ **सी** °मस्य दृ°. १३ **ए सी** तस्यां ले°. १४ **बी** °खां तु म°. १५ **ए सी** वधू व°. १६ **सी** °न्ता तुल्ये°. १७ **सी** °मातृ°.

धनी धेनुष्यया धर्म्यो गार्हपत्येन ना यथा ।
नदी [1]नाव्यै[2]र्जलैर्[3]वासां क्रीडयाप्रीयत स्मरः ॥ ११६ ॥

११६. आसां स्त्रीणां क्रीडया मद्यपानके[1]ल्या स्मरोप्रीयत विजृम्भित इत्यर्थः । यथा धेनुष्ययाधमर्णेनोत्त[2]मर्णाय ऋणप्रदाना[3]द्दोहार्थं धेनुर्दीयते सा धेनुरेव धेनुष्या पीतदुग्धेति यस्याः प्रसिद्धिस्तया कृत्वा धनीश्वर उत्तमर्णः प्रीयते । यथा वा गार्हपत्येनाग्निभेदेन कृत्वा धर्म्यो धर्मादनपेतो धार्मि[4]को ना नरः प्रीयते । यथा वा [5]नाव्यैर्नावा [6]तार्यै[7]र्जलैः कृत्वा नदी प्रीयते विजृम्भत इत्यर्थः ॥

विष्यः कोपीति न न्याय्यमर्थ्यं मत्यमिति स्मरन् ।
गुडकल्पेन ताः कामो मद्यास्त्रेणाक्षिपत्ततः ॥ ११७ ॥

११७. ततो विजृम्भणानन्तरं कामो गुडकल्पेनेषद[8]परिसमाप्तगुडेन प्रायो गुडमयेनेत्यर्थः । मद्यास्त्रेण कृ[9]त्वा ता अङ्गना अक्षिपन्निराचक्रेहन्नित्यर्थः । यतः स्मरन् । किमित्याह । कोपि शत्रुरपि विष्यो विषेण वध्य इत्येतन्नार्थ्यमर्थादर्थशास्त्रादनपेतं न । यो गुडेना[10]पि म्रियते स शत्रुरपि विषेण न वध्य इत्युक्ते[11]रिदं नीतिशास्त्रोत्तीर्णमित्यर्थः । अत ए[12]वं न न्याय्यं न युक्तमत एव च न मत्यं मतस्याभीष्टस्य करणं न कस्याप्येतन्न संमतमित्यर्थ इति ॥

धन्या । ग[13]ण्या । इत्यत्र "धन०" [ ९ ] इत्यादिना यः ॥

१ ए नाध्यैर्जलेवामां. २ बी °व्यैजलै°. ३ सी °वांसं क्री°.

१ ए °केल्यां स्म°. २ बी °मर्णाया ऋ°. ३ ए °नाद्दोहा°. ४ बी °को न°. ५ ए नान्येनावा. ६ बी तार्वैजे°. ७ ए °र्यैजलैः. ८ ए °ल्पेनैष°. ९ ए °त्वा अ°. १० बी °पि मृयते स सत्रु°. ११ ए °रिदानींति°. १२ ए °व न्या° १३ ए गणा । द°.

आज्ञा। इत्यत्र "णोज्ञात्" [ १० ] इति णः ॥

हृद्य। पद्य। तुल्यम्। मूल्य। वैश्यस्य। पथ्यम्। वयस्या। धेनुष्यया। गार्हपत्येन। जन्य। धर्म्यैः। इत्येते "हृद्यपद्य०" [११] इत्यादिना निपात्याः ॥

नाव्यैः। विष्यः। अत्र "नौ०" [ १२ ] इत्यादिना यः ॥

न्याय्यम्। अर्थ्यम्। अत्र "न्याय०" [ १३ ] इत्यादिना यः ॥

मत्यम्। मद्य। अत्र "मत०" [ १४ ] इत्यादिना यः ॥

कृता सामन्यया मद्यातिथेय्यासीत्तथा प्रिया।
वासतेय्यां न पाथेयस्वापतेयं यथा नृणाम् ॥ ११८ ॥

११८. मद्यातिथेयी मद्यमेवाह्लादकत्वादातिथ्यं तथा प्रियस्य प्रियाभीष्टासीद्यथा पाथेयस्वापतेयं संबलद्रव्यं नृणां न प्रियं स्यात्। यतः कीदृशी। सामन्यया सामनि सामोक्तौ साध्व्या प्रियया वासतेय्यां वसतौ साध्व्यां रात्रौ कृता प्रियं प्रति। संबलद्रव्यं किल पथि जीवनतुल्यत्वान्नृणामतिप्रियं स्यात्तस्मादपि प्रियया स्वयंकृतत्वेन मद्यातिथेयी प्रियस्यातिप्रियाभूदित्यर्थः ॥

सामन्यया। इत्यत्र "तत्र साधौ" [ १५ ] इति यः ॥

पाथेय। आतिथेयी। वासतेय्याम्। स्वापतेयम्। अत्र "पथि०" [ १६ ] इत्यादिनैयण् ॥

भाक्तशालिभुवं हालां पीत्वा पारिषदैः प्रियैः।
नापारिषद्यं पार्षद्याः पार्षदेषूचिरे स्त्रियः ॥ ११९ ॥

---

१ सी °त्वा परि°.

---

१ प वशस्य. २ सी यः। कृता. ३ प यः। कृता. ४ बी °थेयाम°. ५ प °कत्वां ति°. ६ प °दृशीः सा°. ७ प साध्या प्रि°. ८ प साध्यां रा°. ९ प सामान्य°. १० बी °त्र मा°. ११ प °दिनेय°.

११९. स्त्रियः पार्षदेषु पर्षदि सभायां साधुषु विचक्षणेष्वित्यर्थः । प्रियेषु विषयेपारिषद्यं सभायामनुचितं ग्राम्यं वचो मदवशान्नोचिरे । यतः पार्षद्या विचक्षणाः । सदा सदभ्यस्तसभ्यवचना इत्यर्थः । किं कृत्वा । पारिषदैः प्रियैः सह हालां पीत्वापि । किंभूताम् । भक्त ओदने साधुर्भाक्तो यः शालिस्तस्माद्रुत्पत्तिर्यस्यास्ताम् । हाला हि शालिपिष्टक्षेपेण संधीयते ॥

भाक्त । इत्यत्र "भक्ताण्णः" [ १७ ] इति णः ॥

पार्षद्याः । पार्षदेषु । इत्यत्र "पर्षदो ण्यणौ" [ १८ ] इति ण्यणौ ॥ परिषदोपीच्छन्त्यन्ये । पारिषद्यम् । पारिषदैः ॥

जितोप्यास्यैः शशी सार्वजन्यः सार्वजनीनगुः ।
अचिचेष्टन्मदाचेष्टाः सतां प्रातिजनीनता ॥ १२० ॥

१२०. शशीन्दुरास्यैः कृत्वा स्त्रीभिर्जितोपि मदाचेष्टा अतिरिक्तमद्यपानोत्थक्षीबतया निश्चेतनीभूताः स्त्रीरचिचेष्टत् । शीतकिरणैर्मदस्योपशमनात्सचेतनीचक्रे । कीदृक्सन । सार्वजन्यः सर्वजनेषु शत्रुष्वशत्रुषु चाह्लादकत्वात्साधुस्तथा सार्वजनीनाः सर्वजनेषु साधवो गावः किरणा यस्य सः । अथ च यः सार्वजन्यः सज्जनः स्यात्स सर्वजनीना गावो वाचो यस्य स तथा स्यात् । युक्तं चैतत् । यदास्यैर्जितोपि शशी स्त्रीरचिचेष्टद्यतः सतां साधूनां प्रातिजनीनता प्रत्यर्थिनो जनाः प्रतिजनाः शत्रवस्तेष्वपि साधुता स्यात् ॥

---

१ बी सार्धज°.

---

१ सी °त्वा । परि°. २ ए °ण सोर्वी°. ३ बी °ते । भोक्त. ४ बी पारिषदे°. ५ सी महाविष्टा. ६ बी °शमात्स°. ७ बी °त्रुपु. सी °त्रु आह्ला°. ८ बी °त्सर्व°. ९ बी °त । यादा°. १० सी °नां प्रीति°. ११ बी सी °नताः प्र°.

सांयुगीनमनङ्गस्य काथिकं गौणिकं मधु ।
देवानां देवदेवत्यं पुष्ट्यै हविरिवाभवत् ॥ १२१ ॥

१२१. मधु मद्यमनङ्गस्य पुष्ट्यै पोषायाभवत् । यतोनङ्गस्य काथिकं कामोद्दीपकत्वेनानङ्गकथायां साधु । तथानङ्गस्य गौणिकं गुण उपकारे साधूपकारकं तथानङ्गस्य सांयुगीनं संयुगे रणे साधु । देवदेवत्यं हविरिव । देवताशब्देन[2] देवस्य[3] हविरादेः प्रतिगृ(ग्र)हीता स्वामी संप्रदानमुच्यते । देवाश्च ते देवताश्च[4] ताभ्य इदं[5] हव्यं यथा देवानां पुष्ट्यै स्यात् ॥

सार्वजन्यः[6] । सार्वजनीन । इत्यत्र "सर्व०" [ १९ ] इत्यादिना ण्य ईनञ्च ॥

प्रातिजनीनं[7] । सांयुगीनम् । अत्र "प्रति०" [ २० ] इत्यादिनेनञ् ॥

काथिकम्[8] । गौणिकम् । अत्र "कथादेरिकण्" [ २१ ] इतीकण् ॥

देवदेवत्यम् । अत्र "देवता०" [ २२ ] इत्यादिना[9] यः ॥

तदार्घ्यपाद्यमातिथ्यं प्रियाभ्यः पूर्वतोधिकम् ।
आसेदुः[2] कामिनो हल्याद्विहल्यातः फलं यथा ॥ १२२ ॥

१२२. तदा[10] मद्यपानकाले[11] कामिनः प्रेयसीनां स्मरातुरतया प्रियाभ्यः सकाशादासेदुः प्रापुः । किमित्याह । आतिथ्यम् । किमातिथ्यमित्याह[12] । अर्घ्यपाद्यमर्घः पूजोपचारस्तस्मायिदमर्घ्यं स्रग्विलेपनादि तथा पादायेदं पाद्यमुदकादि । द्वन्द्वे तत् । कीदृशमासेदुः ।

१ बी काविकगौ°. २ बी °सेदु का°.

१ प °स्य सं°. २ बी °न हे देवस्य. ३ सी देवस्य. ४ प देता°. ५ बी इदह°. ६ सी °जनी°. ७ सी °नता । मां°. ८ बी कायिक°. ९ प °दिनेयः. १० प तथा म°. ११ बी °पाने का° १२ सी किमि°.

पूर्वतोधिकं मद्यपानकालाद्यत्पूर्वमातिथ्यं तस्मादतिरिक्तम् । यथा हल्यादेकस्माद्धलकर्षाद्यत्फलं स्यात्ततोधिकं द्विहल्यातो द्वयोर्हलयोः कर्षात्सकाशाल्लोका आसादयन्ति ॥

पाद्यम् । अर्घ्यं । इत्येतौ "पाद्यार्घ्ये" [ २३ ] इत्यनेन निपात्यौ ॥

आतिथ्यम् । अत्र "ण्योतिथेः" [ २४ ] इति ण्यः ॥

हल्यात् । इत्यत्र "सादश्चातदः" [२५] इत्यधिकाराद् द्विहल्यातः । इत्यत्र च "हलस्य कर्षे" [ २६ ] इति यः ॥

**आमिक्षीयमनामिक्ष्याद्द्विसीत्यं सीत्यतो यथा ।**
**अत्यशेत प्रियागण्डूपासवश्चषकासवात् ॥ १२३ ॥**

१२३. चषकासवाच्चषकेभ्यः प्राप्तान्मद्यात्सकाशात्प्रियागण्डूपासवः प्रियामुखेभ्यः प्राप्तं मद्यमत्यशेत । प्रेमातिशयोल्लासकत्वेन प्रियाणामतिसुस्वादुरभूदित्यर्थः । यथा शृते क्षीरे दधि क्षिप्तमामिक्षा तस्यायिदं दध्यामिक्षीयमनामिक्ष्यात्सकाशादतिशेते । यथा वा द्विसीत्यं सीता लाङ्गलपद्धतिः । सस्यं वा द्वाभ्यां सीताभ्यां संगतं क्षेत्रं सीत्यत एकया सीतया संगतात्क्षेत्रादतिशेते ॥

**ओदनीयैर्यथौदन्यमपूपीयमपूप्यकैः ।**
**तन्दुल्यं तन्दुलीयैर्वा स्त्रीणां मद्यैर्मदोवृधत् ॥ १२४ ॥**

१२४. स्त्रीणां मद्यैर्मदः क्षीबतावृधत् । यथौदन्यमोदनायेदं

---

१ ए °पावसश्च°. २ ए °कावमात. ३ बी °यथोद°. ४ ए °णां माधे°.

१ सी °पानाद्य°. २ बी °हल्यातोर्द्वयो°. ३ ए °तोधिकं द्विहल्यातो द्व°. ४ बी अर्घ । इ°. ५ सी °र्घ्यमेतौ. ६ सी °द्यार्घे इ°. ७ ए बी चकपास°. ८ सी °शादतिशेते ।. ९ बी °णामति°. १० ए °मिक्षान्म°. ११ ए °शाद्विसीत्य°. १२ सी °सा सं°. १३ बी °थोद°.

स्तोकतन्दुला ओदनीयैरोदनार्थैर्बहुभिस्तन्दुलैः कृत्वा वर्धते । एवमग्रेपि योजना कार्या । अपूपायेदमपूपीयं पिष्टकणिकाघृतदध्यादि । तथा तन्दुलेभ्य इदं व्रीह्यादि तन्दुल्यम् ॥

सीत्यतः । द्विसील्यम् । अत्र "सीतया संगते" [ २७ ] इति यः ॥

हविर्भेद । अनामिक्ष्यात् आमिक्षीय । अन्नभेद । ओदन्यम् ओदनीयैः । अपूपादि । अपूप्यकैः अपूपीयम् । तन्दुल्यम् तन्दुलीयैः । अत्र "हविरन्न०" [ २९ ] इत्यादिना वा यः ॥ पक्षे "ईयः" [ २८ ] इत्यधिकृत ईयः ॥

शङ्कव्यीकुरुते युग्यं नभ्यं स्रुच्यं च दारु कः ।
नोष्णीपीचक्रिरे नाभ्यं वसनान्तं मदेपि ताः ॥ १२५ ॥

१२५. ता नायिका मदेपि नाभ्यं नाभये हितं नाभिदेशस्थमित्यर्थः । वसनान्तमन्तशब्दः शोभार्थो वस्त्रश्रेष्ठमधोवसनं नोष्णीपीचक्रिरे । सदा सद्भ्यस्तलज्जावशेन मदेनात्यन्तं वैकल्यस्याभावाच्च न मूर्धवेष्टनीचक्रुः । दृष्टान्तमाह । दारु काष्ठं कः शङ्कव्यीकुरुते कीलकार्थदारु करोति न कोपीत्यर्थः । यतः कीदृशम् । युग्यं नभ्यं स्रुच्यं च । युगो यूपः । अरकमध्यवर्त्यक्षधारणश्चक्रावयवो नाभिः । स्रुग् यज्ञोपकरणं दर्वी । एतेभ्यो हितमेतेभ्य स्युरिति वा तन ॥

उवर्ण । शङ्कव्यीकुरुते । युगादि । युग्यम् । स्रुच्यम् । अत्र "उवर्ण०" [३०] इत्यादिना यः ॥

१ बी स्रुभ्यं च.

१ सी °यां । आपू°. २ बी °भेदः । अ°. ३ ए °न्दुलीं°. ४ बी °शस्थि-तमि°. ५ बी °शब्दशो°. ६ सी °त्यन्ताभा°. ७ ए स्रुभ्यं च. ८ ए °तेभ्य स्यु°. ९ सी युग्य मु°.

नभ्यम् । अत्र "नाभेर्०" [३१] इत्यादिना यो[1] नाभेर्नभ् च ॥ अदेहांशादिति किम् । नाभ्यम्[2] ॥

ऊधन्यवर्[1]त्स्तनस्पर्शी शुन्ये शून्यदृशं प्रियाम् ।
तु[2]लामिव सकम्बल्यां घूर्णन्ती(न्तीं) कोपि सस्वजे ॥१२६॥

१२६. कोपि कामी शुन्ये शुने हिते विजनप्रदेशे प्रियां सस्वजे । आलिङ्गत् । कीदृशीं सतीम् । मदवशेन घूर्णन्तीं तुलामिव सकम्बल्यां कम्बलोस्य स्यात्कम्[3]बल्यं परिमाणमूर्णापलशतमुच्यते । अशीतिशतमित्यन्ये । पट्पष्टिशतमित्यपरे । तेन सहिता तुला भाराक्रान्तत्वाद्यथा घू[4]र्णति.। तथा शुने हितं[5] शून्यं विजनप्रदेशः । अत्र चोपचाराच्छून्ये विशिष्टचैतन्यव्यापाररहिते दृशौ यस्यास्ताम् । कीदृक्सन् । स्तनस्पर्शी प्रियास्तनौ स्पृशन् । य[6]थोधसे हितं[7] ऊधन्यो गोधुक् स्तनस्प[8]र्शी दोहनाय गोस्तनस्पर्शकः स्या[9]त् ॥

ऊधन्य । इत्यत्र "न्चोधसः" [ ३२ ] इति यो नश्चादेशः[10][11] ॥

शुन्ये । शून्य । इत्यत्र "शुनः०" [ ३३ ] इत्यादिना यः । वश्च उरूपं[12] ऊरूपश्च स्यात् ॥

सकम्[13]बल्याम् । अत्र "कम्बलान्नाम्नि[14]" [ ३४ ] इति यः ॥

नाचार्याय ब्राह्मणाय राज्ञे वृष्णे हितास्तथा ।
यथासन्कामुकाः स्त्रीभ्यो मैरेयमदविह्वलाः ॥ १२७ ॥

१ बी °वस्तनर्शी पुन्ये. २ ए तुल्यामि°.

१ ए °योर्नाभे°. २ ए °म् । औध°. ३ ए °म्वल्यां प°. ४ बी घूर्णति. ५ ए °हितौ दृ°. ६ ए यथौध°. ७ ए बी °त औध°. ८ ए स्तन्यस्पर्शी दो°. ९ सी °स्पशी दो°. १० ए °त् । औध°. ११ ए °शः । शून्ये. १२ बी °प उरू°. १३ बी °म्बल्यम्. १४ ए बी °लानाम्नि.

१२७. स्पष्टः । किं तु वृषण इन्द्रार्य[1] । मैरेयो मद्यम् ॥

राज्ञे आचार्याय ब्राह्मणाय वृष्णे हिताः[2] । अत्र "तस्मै हिते" [ ३५ ] इति प्राप्त ईयो "न राज॰[3]" [ ३६ ] इत्यादिना न स्यात् ॥

वाणिनीमणितैः कर्ण्यैर्मुमुदे कामिनां गणः ।
रथ्यवृष्यखल्यतिल्यमाष्ययव्यैरिवेतरः ॥ १२८ ॥

१२८. स्पष्टः । किं तु वाणिनीमणितैश्छेकानां मत्तानां[4] च स्त्रीणां रतकूजितैः । कर्ण्यैः कर्णेभ्यो हितैः सुखदैः । रथाय हितो रथ्यः सममार्गस्तथा वृषेभ्यो वृषभेभ्यो हितो वृष्यो बुसादिर्यद्वा वृषाय मैथुनाय हितं वृष्यं क्षीरपाणं तथा खलाय हितं खल्यमग्निरक्षणं तथा तिलेभ्यो हितस्तिल्यो वातस्तथा माषेभ्यो हितो माष्यो वातस्तथा[5] यवेभ्यो हितो यव्यस्तुषारो द्वन्द्वे एतैः कृत्वा यथेतरो ग्राम्यलोको रथ्याद्यर्थित्वान्मोदते ॥

मानं मत्तापि[1] नौज्झत्काप्यजथ्याविथ्यवृत्तयः ।
ब्रा(ब्र?)ह्मण्याश्चारकीणा माणवीना वा भवन्ति किम् ॥१२९॥

१२९. काप्यतिमानिनी स्त्री मत्तापि[6] मानं नौज्झत् । युक्तं चैतत् । यतो ये ब्रह्मणे ब्रह्मचर्याय ब्राह्मणाय वा चरकेभ्यो द्विजभेदेभ्यो[7] माणवेभ्यो वा हिता भवन्ति धार्मिकाः स्युरित्यर्थस्तेजेभ्य-श्छागेभ्यो[8] हिता अजथ्या अजापालास्तथाविभ्य ऊ(उ?)रणेभ्यो हिता अविथ्या अविपाला द्वन्द्वे तेषामिव वृत्तिर्व्यापारो[9] येषां ते निर्धर्माः किं भवन्ति ॥

---

१ ए °पि नोज्झ°.

---

१ ए °य । मेरे°. २ ए हिता अ°. ३ ए राज्य इ°. ४ सी °नां स्त्रीणां च र°. ५ बी °ततस्त°. ६ बी °पि मौनं. ७ ए °भ्यो द्विजभेदेभ्यो मा°. बी सी °भ्यो वा. ८ ए °भ्यश्चागे°. ९ बी °त्तिव्यापा°.

कर्ण्यैः । रथ्य । खल्य । तिल्य । येय्यैः । वृष्य । ब्रह्मण्याः । माष्य । इत्यत्र "प्राणि०" [ ३७ ] इत्यादिना यः ।

अविथ्य । अजथ्य । इत्यत्र "अव्यजात्थ्यप्" [ ३८ ] इति थ्यप् ॥

चारकीणाः । माणवीनाः । अत्र "चरक०" [ ३९ ] इत्यादिनेनञ् ॥

आत्मनीनस्तदा यूनां स्त्रीभोगीणो निशामरुत् ।

जह्रे पञ्चजनीनः सर्वजनीनो रतश्रमम् ॥ १३० ॥

१३०. तदा निशामरुद्यूनां रतश्रमं जह्रे । कीदृक्सन् । पञ्चजनीनः सर्वजनीनश्च । रथकारपञ्चमस्य चातुर्वर्ण्यस्य पञ्चजन इति संज्ञा । पञ्चजनेभ्यः पञ्चजनाय वा सर्वजनेभ्यश्च हितः शैत्यादिगुणैः सुखदोत एव स्त्रीभोगीणो नारीसंभोगाय हितोत एव यूनामात्मनीन आत्मने हितः ॥

मरुद्विश्वजनीनोताय्यमाहाजनिकं स्मरम् ।

हितः सार्वे न्वसर्वीये यः सार्वजनिकः स हि ॥ १३१ ॥

१३१. विश्वजनीनः सर्वलोकेभ्यो हितः सन्मरुत्स्मरमतायि पालितवानवर्धयदित्यर्थः । किंभूतम् । अमाहाजनिकं महान्पूज्यो जनो मुनिलोकस्तस्मै हितो माहाजनिको न तथा तमपि । युक्तं चैतत् । हि यस्मादसर्वीयेपि न सर्वेभ्यो हितेपि नरे सार्वे नु सर्वस्मै हित इव यो हितोनुकूलः स्यात्स सार्वजनिकः सर्वस्मै जनाय हितः ॥

१ ए °नीनेः स°. २ ए °निकस°. ३ सी °तः सर्वे.

१ बी सी यय्यै । वृ°. २ ए प्राणिभ इ°. ३ ए सी °कीणा । मा°. ४ बी सी °वीना । अ°. ५ ए °दामिनि°. ६ सी °नीनश्च. ७ ए °गीणा ना°. ८ बी सी °संगा°. ९ बी °धयेदि°. १० ए °तमहा°. ११ सी अमहा°. १२ बी सी °तो महा°. १३ ए °थाम°. १४ बी स्यात्सार्वज्ञज°.

स्त्रीभोगीणः । आत्मनीनः । अत्र "भोग०" [ ४० ] इत्यादिनेनः ।

पञ्चजनीनः । सर्वजनीनः । विश्वजनीनः । अत्र "पञ्च०" [ ४१ ] इत्यादिनेनः ॥

माहाजनिकम् । सार्वजनिकः । अत्र "महत्०" [ ४२ ] इत्यादिनेकण् ॥

सार्वे । सर्वीये । अत्र "सर्वाण्णो वा" [ ४३ ] इति वा णः ॥

अङ्गं विरहिणीनां दार्वङ्गारीयमिवादहत् ।
वार्ध्रौपानह्यचर्मेवादारयच्च मनः स्मरः ॥ १३२ ॥

१३२. स्मरो विरहिणीनामङ्गमदहत्संतापितवान् । यथा कश्चिदङ्गारीयमङ्गारार्थं दारु दहति । तथा स्मरो विरहिणीनां मनोदारयद्यथा वर्ध्रायेदं वार्ध्रमुपानहे पादुकायायिदमौपानह्यं च चर्म चर्मकृद्वर्ध्राद्यर्थं दारयति ॥

हृदयं कस्य नामभ्रात्स्मर उच्छृङ्खलस्तदा ।
यथार्षभ्यश्छादिषेयतृणबालेयतन्दुलान् ॥ १३३ ॥

१३३. पूर्वार्धं स्पष्टम् । छदिषे छादनायेमानिच्छादिषेयाणि यानि तृणानि तानि तथा बलय इमे बालेया ये तन्दुलास्ते तथा द्वन्द्वे तान्यथा ऋषभायायमार्षभ्यो वत्स उच्छृङ्खलः सन्खादनेन मभ्राति ॥

अङ्गारीयं दारु । इत्यत्र "परिणामिनि०" [ ४४ ] इत्यादिनेयः ॥

वार्ध्रं । इत्यत्र "चर्मण्यञ्" [ ४५ ] इत्यञ् ॥

---

१ बी °रहणी°. २ ए वार्ध्रौपा°. बी वार्ध्रोपा°. ३ बी °र्षभश्छा°.

---

१ ए °नीयः । अ°. २ बी सी °नेन । मा°. ३ ए सार्वे । स°. ४ ए °रहणी°. ५ बी वर्धाये°. सी वध्राये°. ६ सी वाध्रमु°. ७ बी सी °मैकृ°. ८ ए °द्ध्राद्यर्थं दा°. सी °द्रय°. ९ बी °नायेमनि°. सी °नायेनि°. १० ए तान्यथा. ११ ए °रीय दा°. १२ सी °त्र च्छदिर.

आर्षभ्यैः । औपानह्य । इत्यत्र "ऋषभ०" [ ४६ ] इत्यादिना ञ्यः ॥

छादिषेय । बालेय । इत्यत्र "छदिर्०" [ ४७ ] इत्यादिनैयण् ॥

इष्टकौघैः प(पा?)रिखेयप्राकारीयैर्यथा भुवः ।

पारिखेयप्राकारीयाः कान्ताः कौतैः(न्तैः) स्मरोयुनक् ॥१३४॥

१३४. स्मरः कान्ताः कान्तैः सहायुनक् संयोजितवान् । यथा कश्चिद्वर्धकिरिष्टको(कौ)घैः सह भुवः परिखाप्राकारनिष्पत्तये युनक्ति । यतः कीदृशीः । परिखा प्राकारश्चासु स्यात्पारिखेयप्राकारीयाः । किंभूतैः । परिखा प्राकारश्चैषां स्याद्भुत्वात्पारिखेयप्राकारीयास्तैः ॥

पारिखेयैरिष्टकौघैः । अत्र "परिखास्य स्यात्" [ ४८ ] इत्येयण् ॥

पारिखेया भुवः । अत्र "अत्र च" [ ४९ ] इत्येयण् ॥

प्राकारीयैः । प्राकारीयाः । अत्र "तद्" [ ५० ] इति यथाविहितमीयः ॥

आचरन्कामवत्कामः क्षत्रवत्प्रहरंस्तथा ।

तृणवन्मानिनीर्धून्वन्भृत्यवत्सेवितो न कैः ॥ १३५ ॥

१३५. कामो भृत्यवद्भृत्यैरिव कैर्न सेवितः । कीदृक्सन् । कामवत्कामार्हं यथा स्यादेवमाचरन् । त्रैलोक्येनापि स्वशासनं मूर्ध्नि वाहयन्नित्यर्थः । तथा क्षत्रवत्क्षत्रिय इव प्रहरन्नत एव मानिनीस्तृणवद्धून्वन्मानात्पातयन्नित्यर्थः । योपि क्षत्रियः प्रहरंस्तृणानीव मानिनो धूनोति स भृत्यैरिव कैर्न सेव्यते ॥

---

१ बी सी °ष्टकोघैः. २ बी °रिपेय°. सी °रिपय°. ३ बी °यप्रका°. ४ सी कातै स°.

---

१ बी °भ्यः । उपा°. २ ए दिनेय°. ३ बी सी °दृशी । प°. ४ सी °रिपेय°. ५ बी °रिपेयैरि°. ६ बी °ष्टकोघैः. ७ ए °त्कामर्हिं य°. ८ ए °लोकोना°. ९ ए °शानं. १० ए °वत्क्षत्रयप्र°.

प्रतीच्यै[1] स्पृहयञ्छ्रीवद्द्रुवत्खाच्छशय[2]वातरत् ।
द्रष्टुं[3] ताः पूर्वदद्रौ स्त्रीः पूर्वदद्रेरुत[4] श्रियम् ॥ १३६ ॥

१३६. शशी द्रुवद्वृक्षादिव खादवातरदुत्ततार । यतः[1] प्रतीच्यै पश्चिमायै स्पृहयञ्छ्रीवद्यथा कश्चिच्छ्रियै[2] स्पृहयत्यस्तं जिगमिषन्नित्यर्थः । उत्प्रेक्ष्यते । द्रष्टुमिव । काः । पूर्वत्पुर्यामिवाद्रावर्बुदे[3] वर्तमानास्ताः सुरतासक्ताः स्त्रीः । उताथ वा[4] पूर्वत्पुरस्येवाद्रेरर्बुदस्य श्रियं प्राग्वर्णितां[5] शोभाम् । चन्द्रस्यास्तोन्मुखत्वेनाकाशादवतीर्णत्वादर्बुदस्य[6] च पश्चिमदिग्वर्तित्वे[7]नेन्दुनिकटत्वा[8]च्चैवमाशङ्का । अन्योपि यो नीचैःस्थं वस्तु[9] व्यक्त्या द्रष्टुमिच्छति स उच्चस्थानादवतरति[10] ॥

आचारन्कामवत् । इत्यत्र "तस्य०" [ ५१ ] इत्यादिना वत् ॥

क्षत्रवत्प्रहरन् । तृणवन्मानिनीर्धून्वन् । भृत्यवत्कैर्न सेवितः । प्रतीच्यै श्री[11]वत्स्पृहयन् । द्रुवत्खादवातरत् । इत्यत्र "स्यादेरिवे" [ ५२ ] इति वत् ॥

पूर्वदद्रौ[12] । अत्र "तत्र" [ ५३ ] इति वत् ॥

पूर्वदद्रेः[13] श्रियम् । अत्र "तस्य" [ ५४ ] इति वत् ॥

गोतावतो यथा गोत्वं शुक्लत्वं शुक्लतावतः ।
प्रबोधित्ववतो राज्ञस्तथाथाभूत्प्रबोधिता ॥ १३७ ॥

१३७. स्पष्टः । किं तु प्रबोधित्ववतः प्रबोधो जागरणं बुद्धिश्चा[14][15]-

---

१ ए °तीत्यै स्पृ°. २ बी °च्छसवा°. ३ ए द्रष्टुतापू°. ४ ए °वेवद्रे°.

---

१ ए यता प्र°. २ सी °च्छ्रितये. ३ बी °वेपुर्या°. ४ बी वात्पूर्वे°. ५ सी °र्णितशो°. ६ बी °स्य प°. ७ बी °ग्वर्त्तत्वे°. ८ ए °त्वेनैन्दु°. ९ बी सी °स्तु वक्त्या. १० ए °तरंति. ११ सी °तीच्यैः श्री°. १२ ए °र्वेदिद्रौ. १३ बी °र्वद्रेः. १४ ए बुश्चिश्चा°. १५ सी °द्धिरस्या°.

स्यास्ति प्रबुध्यत इत्येवंशीलो वा प्रबोधी[1] तस्य भावः प्रबोधित्वं[2] तद्वतो जागरूकस्य धीमतश्च[3] सतो राज्ञः कुमारपालस्य । अथ चन्द्रास्तानन्तरं प्रबोधिता जागरणं प्रयाणकविषया बुद्धिश्च ॥

डित्थत्वराजपुरुषत्वधनैरबालि-
श्यागाडुलीकमजिरं नृपतेरभाजि ।
प्राची तमोगडुलतां हरता च सद्यो
देवेन चक्रगडुलत्वविमोचनेन ॥ १३८ ॥

१३८. डित्थत्वराजपुरुषत्वे धने येषां तैर्डित्थादिसंज्ञै राजपुरुषैः कर्तृभिरित्यर्थः । नृपतेः कुमारपालस्याजिरमावास[4]भूमिरभाजि । राज्ञः सेवार्थमाश्रितम् । कीदृशम् । अबालिश्यं बालिशानामभावाद्बालिश्येन मौर्ख्येण[5] रहितं च तदगाडुलीकं च कालुष्यवतामभावाद्गाडुल्या कालुष्येण रहितं च तत् । तथा तेन देवेन च रविणा च सद्यः प्राची पूर्वाभाजि[6] । उदितमित्यर्थः । कीदृशा सता । तमोगडुलतां ध्वान्तकृतं[7] कालुष्यं हरता । तथा चक्रगडुलत्वविमोचनेन चक्रवाकाणां विरहव्यथाकृतस्य चित्तकालुष्यस्य[8] त्याजकेन ॥

जातिवचनेभ्यो जातौ । गोत्वम् । गोता[9] ॥ गुणशब्देभ्यो गुणे । शुक्लत्वम् । शुक्लता ॥ समासात्संबन्धे । राजपुरुषत्व ॥ कृतस्तद्धिताच्च संबन्धे । प्रबोधित्व । प्रबोधिता[10] ॥ डित्थादेः स्वरूपे[11] । डित्थत्व । इत्यत्र "भावे त्वतल्"

१ बी °बालेश्या°.

१ ए °बोधां त°. २ ए °धितत्वं. ३ सी धीतमश्च. ४ सी °मावस्याभू°. ५ सी °णरणरहि°. ६ बी °र्वाभांजि. ७ बी °तां ध्वांक्षकृ°. ८ ए चित्तःका°. ९ सी गोता. १० ए °धिताः । डि°. ११ बी °रूपा डि°.

[ ५५ ] इति त्वतलौ ॥ "प्राक्त्वादगडुलादेः" [ ५६ ] इति त्वप्रत्ययात्प्राक्त्वतलावधिकृतौ ज्ञेयौ गडुलादीन्वर्जयित्वा ॥ अगडुलादेरिति किम् । गाडुली । बालिश्य ॥ गडुलादेरपि केचिदिच्छन्ति । गडुलत्व । गडुलताम् ॥ वसन्ततिलका छन्दः ॥

इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तौ सप्तदशः सर्गः ॥

# द्व्याश्रयमहाकाव्ये

## अष्टादशः सर्गः।

कैरविण्यपटुताकृति पाथोजापटुत्वहृति तेजसि भूपः।
सोथ धीप्रथिमतो जगदाबुध्याचतुर्यहरणः प्रचचाल ॥ १ ॥

१. अथ स भूपः कुमारपालः प्रचचालान्नं प्रति प्रतस्थे। क सति। तेजसि रवेरुद्योते। कीदृशे। कैरविण्यपटुताकृति कुमुदिनीनां संकोचकारके तथा पाथोजापटुत्वहृति पद्मसंकोचस्यापनेतरि। कीदृक्सन्। धीप्रथिमतो बुद्धेर्विस्ताराद्धेतोर्जगतो यदाबुध्येनाबुधत्वेनाज्ञानेनाचतुर्यं कृत्याकृत्यविषयमकौशलं तस्य हरणोपनेता पृथ्वीं न्याये प्रवर्तयन्नित्यर्थः॥ स्वागताच्छन्दः॥

पार्थवेन स बलस्य निरास्यद्दिक्पृथुत्वमवनीपृथुतां च।
ध्वान्तचण्डिमहरस्य च चण्डत्वं रजोनिचयचण्डतयांशोः॥२॥

२. स भूपो बलस्य पार्थवेन विस्तारेण कृत्वा दिक्पृथुत्वं दिशां विस्तारमवनीपृथुतां च निरास्यन्निराचक्रे। तथा रजोनिचयचण्डतयाश्वखुराद्युत्खातधूलिनिकरनिबिडतया च कृत्वांशो रवेश्चण्डत्वं संतापकत्वेन तीव्रतां निरास्यत्। किंभूतस्य। ध्वान्तचण्डिमहरस्य। दिशो भूमिं च सैन्यैरर्कं च तद्रजोभिराच्छादितवानित्यर्थः॥

---

१ बी सी पार्थिवे°. २ बी निरस्यदिक्पृ°. ३ ए °स्यदिक्पृ°. ४ बी °गरहस्य.

---

१ ए स नृपः. २ बी सी °रुद्योते. ३ बी सी °बुद्धेना° ४ बी °नाचातु°. ५ बी पृथ्वी न्या°. ६ सी पार्थिवे°.

चाण्ड्यदार्ढ्य[1]वृढतास्पदमन्वव्राजि सव्रढिमसद्रढिमांसः ।
पार्थिवैः[2] श्रितद्रढत्[3]त्ववृढत्वैर्वैरिवार्ढ्यद्रढते स[4] हरिष्यन् ॥ ३ ॥

३. स कुमारपालः श्रितद्रढत्ववृढत्वैराश्रितबलोत्साहैः पार्थिवैरन्वव्राज्यनुव्रजितः । यतो वैरिवार्ढ्य[2]द्रढते आन्नस्योत्[3]साहवलौ(ले?) हरिष्यन्नपह[4]र्तुमनाः । ईदृशोपि कुत इत्याह । यतः सव्रढिमानौ सोत्साहौ स[5]द्रढिमानौ च सबलावंसौ स्कन्धौ यस्य सः । तथा चाण्ड्यं सत्त्वानभिभवनीयताहेतुर्भीमत्वगुणो वा(दा)र्ढ्यं बलिता द्र(वृ)ढतोद्यम एषामास्पदम् ॥

व्योम्न्यशुक्लिमनि शौक्ल्य[5]दमाभाच्छत्रमस्य निजशुक्लतयोच्चैः ।
क्ष्मापतित्वपिशुनं[6] श(स)मशुक्लत्वाधिपत्यमिव बिभ्रदद्भ्रम् ॥४॥

४. अस्य राज्ञश्छत्रमाभात् । कीदृक्सन्[6] । क्ष्मापतित्वपिशुनं नृपत्वसूचकं तथादभ्रं संपूर्णं समशुक्लत्वाधिपत्यमिव समं सर्वं यच्छुक्लत्वं शुक्लो गुणस्तस्य स्वामित्वमिव बिभ्रत् । कया कृत्वा । उच्चैरतिशयितया निज[8]शुक्लतया । अत एवाशुक्लिमनि कृष्णे व्योम्नि शौक्ल्यदं शुक्लतां ददत् । यो हि यस्या लक्ष्म्याः स्वामी स्यात्स तां लक्ष्मीं तल्लक्ष्मीदरिद्रस्य नरस्य ददद्गौरवास्पदत्वेन[9] शोभते ॥

---

१ बी सी °र्ढ्यद्रढ°. २ बी °र्थिवै श्रि°. ३ ए बी °त्वद्रढ°. ४ ए म हिष्य°. ५ बी °दमभा°. ६ ए °नं तसम°.

---

१ ए °पाल श्रितद्रढत्वं°. २ ए °र्ढ्यवृढ°. ३ बी °त्साहेव°. ४ ए °र्तुमानाः. ५ सी सद्रढि°. ६ ए °त् । क्ष्म्याप°. ७ बी °त्वशत्र°. ८ ए निशु°. ९ सी °न लभ°.

**साध्[1]वधादिव दिवस्पतितां[2]भृद्यौवराज्यमधिराजतया सः ।**
**मूढतां[3]वियुगयन्नधिराजत्वाप्तमौढ्यरिपुनिर्दलनाय ॥ ५ ॥**

५. स राजा[1] साधुर्य(धु य)था स्यादेवं दिवस्पतिताभृ[2]द्यौवराज्यमि-[3]वेन्द्रयु[4]वराजतामिवाधाद्दधार । कीदृक्सन् । मूढतां[5]वियुक् । तादृक्प्र-चण्डवै[6]रिविरोध उपस्थि[7]तेपि व्याकुलचित्ततारहितो धीर इत्यर्थः । अत एवाधिराजत्वाप्तमौढ्यरिपुनिर्दलनाया[8]धिको राजाधिरा[9]जस्तस्य भावोधिराजत्वमधिकराज्यलक्ष्मीस्तेनाप्तं मौढ्यं मोहो[10] विचेतनत्वं येन स तथा योरिपुरान्नस्तस्य निर्दलनायार्थं[11]न्गच्छन् । कया कृत्वा । अधि-राजतया महासैन्यादिसंपदा । संपदुत्कर्षेण यान्कुमारपाल इन्द्रस्य[12] युवराज इव[13] जात इत्यर्थः ॥

**राजतापि कवितापि विमूढत्वान्यराज्यपरकाव्यजिदेव ।**
**इत्यसावरमगादरिराजत्वेप्सुरभ्युदितवन्दिकवित्वः ॥ ६ ॥**

६. असौ राजारं शीघ्रमगात् । यतोरि[14]राजत्वेप्सुरान्नराज्येच्छुः । कुत इत्याह । राजतापि कवितापि च नास्ति मूढत्वं लक्षणया नि-न्द्यत्वं यस्यां साविमूढत्वाप्रशस्या । कीदृक्सती । अन्यराज्यप[15]रका-व्यजिदेवान्यराज्यं शत्रुराज्यं परकाव्यमन्यदीयकवित्वं चोत्कृ[16]ष्टत्वाज्ज-[17]यन्त्येवे[18]ति हेतोः । तथाभ्युदितान्युल्लसितानि वन्दिनां भट्टानां कवि-त्वानि काव्यानि यत्र सः ॥

---

१ ए °ध्वदि°. बी °ध्वदादि°. २ बी °तासृद्यौ°. ३ बी °तान्त्रियु°.

---

१ ए °जा, यथा साधु स्या°. २ ए °भृद्यैव°. ३ बी °वेन्दुयौव°. ४ ए °युथरा°. ५ बी °तान्त्रियु°. ६ सी °रिवध. ७ बी °स्थितोपि°. ८ बी °या-धेको. ९ ए °जत्व°. १० ए °हो वेचे°. ११ सी °यन्कया. १२ ए °न्द्रयु°. १३ बी °व ज्ञात. १४ ए °रिपुरा°. १५ बी °परिका°. १६ ए °त्कृत्वा°. १७ सी °यत्येवे°. १८ ए °ति हितोः.

अपटुत्व । अपटुता । अत्र "नञ्०" [ ५७ ] इत्याद्यधिकारात्त्वतलावेव ॥ अबुधादेरिति किम् । आबुध्याचतुर्य ॥

प्रथिमतः । चण्डिम । इत्यत्र "पृथ्वादेरिमन्वा" [ ५८ ] इतीमन्वा । प्राक्त्वादित्यधिकारात्त्वतलौ च । वावचनाद्यथाप्राप्तमणादिः प्राप्तोपि सोपि स्यात् । पृथुत्वम् । पृथुताम् । पार्थवेन । चण्डत्वम् । चण्डतया । चाण्ड्य ॥

शौक्ल्य । शुक्लिमनि । शुक्लत्व । शुक्लतया ॥ दृढादि । दार्ढ्य । द्रढिम । दृढत्वं । दृढते । वार्ध्य । व्रढिम । वृद्धत्वैः । वृद्धता । इत्यत्र "वर्ण०" [ ५९ ] इत्यादिना ट्यणिमनौ वा । त्वतलौ चाधिकृतत्वात् ॥

पत्यन्त । आधिपत्यम् । क्ष्मापतित्व । दिवस्पतिता ॥ राजान्त । यौवराज्यम् । अधिराज्य(ज)त्व । अधिराजतया । गुणाङ्ग । मौढ्य । अविमूढत्वा । मूढता । राजादि । राज्य । राजत्व । राजता । काव्य । कवित्व । कविता । इत्यत्र "पति०" [ ६० ] इत्यादिना ट्यण् ॥ त्वतलौ चाधिकृतौ ॥

**अर्हत्तयार्हन्त्यजुषां यथैवार्हत्त्वाद्वि(द्वि)पक्षुक्षुभुरस्य तद्वत् ।**
**द्विपोपसाहायकया सहायताकाङ्क्षिसाहाय्यकृतो ध्वजिन्या ७**

७. यथार्हन्त्यजुषामर्हतामर्हत्तया देवकृताष्टमहाप्रातिहार्यादिलक्ष्मीरूपेणार्हतो भावेन कर्मणा वार्हत्त्वाद्वि(द्वि)पोन्यदर्शनिनः क्षुभ्यन्ति तद्वत् तथास्य राज्ञो ध्वजिन्या सेनया कृत्वा द्विपक्षुक्षुभुर्बिभ्युः ।

---

१ बी सी °र्हत्वद्वि°. २ ए °पक्षक्षु°. ३ ए °पहासायिक°. सी °पहासाय°. ४ बी °जिन्याः । य°.

---

१ ए इत्यधि°. २ ए पृथ्वादे°. ३ ए बी वाच°. ४ ए सी °शुता°. ५ ए °क्ल्यम°. ६ ए °ढत्वं । वृढता । वा°. ७ सी °त्व । वृद्ध°. ८ सी °जता. ९ ए °ण् । तत्व°. १० ए °र्हतोर्ह°. ११ बी °महत°. १२ बी °प्रातीहा°. १३ बी सी °र्हत्वद्वि°. १४ ए °पक्षक्षु°.

कीदृश्या । असहायकयापगतान्यकृतसाहाय्यया । यतः । कीदृशोस्य । सहायताकाङ्क्षिणां साहाय्यैषिणां साहाय्यकृतो महाबलत्वेन प्रत्युत साहाय्यकारिणः ॥ उपजातिश्छन्दः ॥

**स दोःसहायत्वधनोपसख्यं वणिक्क्रयारिं गणयन्नथाप ।**
**तमःसखित्वासखिते दधानै रजोभ्रभो(भौ)घैः कथिताग्रसैन्यः ॥८॥**

८. अथ स राजापारिमेव प्राप[3] । कीदृक्सन् । दोषोर्बाह्वोः सहायत्वं साहाय्यं धनं यस्य स तथा भुजबलान्वितोत एवापसख्यमपगतमैत्रीकमरिमाशं वणिक्क्रया गणयन्वणिजमिव निःसत्त्वं मन्यमान इत्यर्थः । तथा रजोभ्रभौघै[4] रेणुभिः शस्त्रकान्तिपूरैश्च कथिताग्रसैन्यः । किंभूतैः । तमःसखित्वासखिते दधानैरुद्यो(द्यो)तस्योच्छेदकत्वात्तमसः सखित्वं दधानै रजोभिस्तथा तमउच्छेदकत्वात्तमसोसखितां[5] शत्रुतां दधानैरस्त्रभौघैः[6] । उपेन्द्रवज्रा[7] ॥

**समिद्वणिज्यासु नवाग्रदूत्या आकर्ण्य[1] हेषा यमदूततार्हाः ।**
**दूतत्वयोग्यं हि वणिक्त्वभाजामुक्त्वेत्यथाजावुदतिष्ठतान्ये[2]ः ॥९॥**

९. अथान्न आजौ रणायोदतिष्ठतोदयच्छन् । किं कृत्वा । हेषा आकर्ण्य । कीदृशीः । समितः संग्रामा एव जयश्रीलाभहेतुत्वाद्वणिज्याः क्रयविक्रयादीनि[8] वणिक्कर्माणि तासु विषये नवमग्रदूत्यमग्रेगूत्वं[9] यासां तां[10]ः व्यवसाया इव रणवणिज्यानां मेलिका[11] इत्यर्थः । अत एवं[12] यमदूत[13]-

---

१ बी °र्ण्यं मूषा.　२ ए सी °न्नः । तथा°.

---

१ ए दृशा । अपद्दासाय°.　२ ए °कृसा°.　३ ए प्राप्य । की°.　४ बी °स्त्रभोघै.　५ सी °खित्वं श°.　६ ए °स्त्रभूतैः.　७ ए बी °वज्राः । स°.　८ बी °नि वाणि°.　९ बी °गूत्वा या°.　१० बी सी ताः । व°.　११ ए मेलका.　१२ ए °व ग°.　१३ बी °दूता°.

ताह्नी यमस्य यद्दूतकर्म तस्य योग्या यमपार्श्वेनेकप्राणिनामाकारिका यमदूतीरिवेत्यर्थः । तथोक्त्वा च । किमित्याह । योजनं योग्यं भावप्रत्ययान्तोयम् । दूतत्वस्य दूतक्रियाया योग्यमौचित्यं हि स्फुटं वणिक्त्वभाजां वणिजामेव । यद्वा दूतत्वस्य योग्यमुचितं प्रधानप्रेषणादिकं वणिजामेव स्याद्धीरुत्वात्तेषां न तु क्षत्रियाणामिति ॥

आर्हन्त्य । अर्हत्त्व । अर्हत्तया । इत्यत्र "अर्हतस्तोन्त् च" [ ६१ ] इति ट्यण् । तस्य न्त(न्त्)आदेशश्च । त्वतलौ चाधिकृतौ ॥

साहाय्य । साहायकया । सहायत्व । सहायता । इत्यत्र "सहायाद्वा" [ ६२ ] इति ट्यण्वा । पक्षे योपान्त्यलक्षणोकञ् । त्वतलौ च ॥

सख्यम् । सखित्वासखिते । वणिज्यासु । वणिक्त्व । वणिक्तया । दूत्याः । दूतत्व । दूतता । इत्यत्र "सखि०" [ ६३ ] इत्यादिना यः । त्वतलौ च ॥ उपजातिः ॥

**सोस्तेनत्वायाः स्तेनतामन्यकीर्ते रक्षोज्ञातेयं ज्ञातितां कालरात्रेः ।**
**मृत्योर्ज्ञातित्वं वीरहृत्स्तेयकारी प्रेप्सुर्निष्कापेयोसिमादत्त दर्पात्**
**॥ १० ॥**

१०. स आम्नो दर्पादसिमादत्त । कीदृक्सन् । नास्ति स्तेनत्वं चौर्यं यस्यास्तस्याः केनाप्यहृताया इत्यर्थः । अन्यकीर्तेः शत्रुकीर्तेः स्तेनतां प्रेप्सुर्जयप्राप्त्या जिहीर्षुरित्यर्थः । अत एव कापेयात्कपिकर्मण-

१ बी °रहृत्स्तेय°. २ बी °प्सुनिष्का°.

१ ए °न्तो दूतक्रि°. २ सी °यायो°. ३ सी °दिकव°. ४ सी °न्त्य । आर्ह°. ५ बी °या । साहा°. ६ ए °त्र साहा°. ७ बी सी च । संख्य°. ८ ए °णिक्त्वया । दूत्या । दूत°. ९ ए सी °तलो च. १० ए यस्याः के°. ११ बी °स्तस्या के°. १२ ए अन्यः की°. १३ बी °नताः प्रेप्सुर्जे°.

श्चापलान्[1]निष्क्रान्तो निष्कापेयो युद्धे स्थिरचित्त इत्यर्थः । अत एवं[2] वीरै[3]हृतस्तेयकारी[4] शूराणां हृदयावर्जकस्तथा तदातिरौद्रत्वाद्रक्षोज्ञातेयं राक्षसस्वजनतां काल[5]रात्रेः कृष्णचतुर्दशीरात्रेर्ज्ञातितां मृत्योर्ज्ञातित्वं च [6]प्रेप्सुः ॥ वैश्वदेवी छन्दः ॥

**कपितावतामिव कपित्वमश्व[1]ताश्ववतां नु [2]शावमिव शावतावताम् ।**
**युवतेव यौवनवतामहंकृतिर्ददृशेऽस्य सौष्ठवयुवत्वशालिनः[3] ॥११॥**

११. स्पष्टम् । किं[7] त्वाश्ववतामश्वत्वान्वितानामश्वानाम् । शावमिव बाल्यमिव । अस्यान्नस्य सौष्ठवयुवत्वशालिनः सौष्ठवेनातिशयेन यद्युवत्वं तारुण्यं तेन शोभमानस्य ॥ नन्दिनी छन्दः ॥

**निःशावत्वाश्वत्वभाक्सुरद्विड्[4]न्नेत्रारुणिमा क्रुधास्य रेजे ।**
**चातुर्हायनपञ्चहायनत्वनवहायनताभाजिनो नु मद्यात् ॥१२॥**

१२. अस्यान्नस्य क्रुधा नेत्रारुणिमा रेजे । मद्यान्नु यथा सुरातो नेत्रारुणिमा राजते । किंभूतात् । चातुर्हायन[8]पञ्चहायनत्वं[9]नवहायनताभाजिनश्चतुर्वार्षिका[त्पञ्चवार्षिका?]न्नववार्षिकाद्वातिजातादित्यर्थः । निःशावत्वाश्वत्वभाक्सुरद्विड्[10]न्निःशावत्वं[11] बालत्वा[12]न्निष्क्रान्तं यदश्वत्वमश्वजाति[13]र्निःशावत्वाश्वत्वं तरुणाश्वतेत्यर्थः । तद्भजते यः सुरद्विड्[14]केशिदानवस्तस्य यथा विष्णुं वैरिणं प्रति क्रुधा नेत्रारुणिमा रेजे ॥

---

१ प °श्वव°. २ बी शामि°. ३ सी °नः ॥ ११ ॥ सौष्ठवे°. ४ बी °द्भुं त्रा°.

---

१ बी °लान्निःक्रान्तो. २ सी °व च वी°. ३ बी सी °रहस्तेय°. ४ बी °री सूरा°. ५ बी सी °रात्रे कृ°. ६ बी प्रप्सुः । वै°. ७ प किं त्वश्व°. ८ प °नत्वप°. ९ प °त्वव°. १० प °द्भुन्निशा°. ११ सी °द्विवलत्वं. १२ बी °त्वानिःक्रान्तं. १३ बी °तिर्निशा°. १४ प °कैशदा°.

स्तेय । अस्तेनत्वायाः । स्तेनताम् । अत्र "स्तेनान्नलुक्" [ ६४ ] इति यो नस्य लुक्च । त्वतलौ च ॥

निष्कापेयः । कपित्वम् । कपिता । ज्ञातेयम् । ज्ञातित्वम् । ज्ञातिताम् । अत्र "कपि०" [ ६५ ] इत्यादिनेयण् ॥ त्वतलौ च ॥

प्राणिजाति । आश्व । अश्वत्व । अश्वता ॥ वयोर्थे । शावम् । शावत्व । शावता । इत्यत्र "प्राणि०" [ ६६ ] इत्यादिनाञ् । त्वतलौ च ॥

यौवन । सौष्ठव । इत्यत्र "युवादेरण्" [ ६७ ] इत्यण् । त्वतलौ च । युवत्व । युवता ॥

चातुर्हायन । पञ्चहायनत्व । नवहायनता । इत्यत्र "हायनान्तात्" [ ६८ ] इत्यण् । त्वतलौ च ॥ औपच्छन्दसकापरान्तिका ॥

आरातकार्शानवगौरवस्य पैत्रं दधत्पौरुषसौरभाढ्यः ।

भेजे स भूपैः पुरुषत्वभाग्भिर्हार्दं दधानैर्हृदयत्वधारी ॥ १३ ॥

१३. स आन्नो भूपैर्भेजे । कीदृक् । पौरुषस्य यत्सौरभमुत्कर्ष इत्यर्थः । तेनाढ्योत एवारातेर्भावः कर्म वारातं वैरं तदेव कार्शानवं कृशानुकर्म ज्वलनं तस्य यद्गौरवं महत्त्वं तस्य पैत्रं पितृत्वं जनकतां दधज्जाज्वल्यमानं महद्वैरं कुर्वन्नित्यर्थः । तथा हृदयत्वधारी स्वकीय-भूपेषु स्नेहवान् । किंभूतैर्भूपैः । पुरुषत्वभाग्भिः पौरुषान्वितैस्तथा हा-र्दमान्ने स्नेहं दधानैः ॥ इन्द्रवज्रा छन्दः ॥

सौहृदय्यघनसत्पुरुषत्वभ्राजिभिर्हृदयतायुगमात्यैः ।

श्रौत्रवत्पुरुषताभृद्दिवैष श्रोत्रियत्वदयितैः प्रतिपेदे ॥ १४ ॥

---

१ बी °नेहद°. २ बी °धाराः । स. सी °धारैः । म. ३ सी °दलय°.

---

१ ए °नानलु°. २ बी कुल त्व°. ३ बी °पेय । क°. ४ सी °न । शा°. ५ बी °न । शौष्ठ°. ६ बी °वादिरित्य°. ७ ए °ञ्हान°. °अपाय°. ८ ए °पभेजे.

१४. अमात्यैः स (त्यैरेप?) आन्नः प्रतिपेद आश्रितः । कीदृक्सन् । हृदयतायुगमात्येष्वनुरागवान् । यतः किंभूतैः । सौहृर्द[1]य्यघना गाढानुरागसान्द्रा ये सत्पुरुपत्वभ्राजिनः[2] सत्पुरुपत्वेन साधुपुरुपस्य भावेन कर्मणा वा स्वाम्यद्रोहसुबुद्ध्यादिना भ्राजिष्णवस्तैः । यथा श्रोत्रियस्य भावः कर्म वा[3] श्रौत्रं तदस्यास्ति[4] श्रौत्रवान्यः पुरुपताभृत्पुरुषो वैदिकद्विज इत्यर्थः । वेदपाठाद्यर्थमाश्रीयते । कैः । श्रोत्रियत्वं छान्दसत्वं[5] दयितं प्रियं येपां तैर्वेदार्थिभिर्द्विजैरित्यर्थः ॥ स्वागता छन्दः ॥

**आचार्यताश्रोत्रियताप्तसुप्रख्यत्वो नयाचार्यकभागमात्यः[1] ।**

**द्विपद्यशश्चौरकधौर्तिकाचार्यत्वं[2] दधानं तमथेत्युवाच ॥ १५ ॥**

१५. अथामात्य आगतामात्येपु मुख्यो[6] मन्त्री तमान्नमिति वक्ष्यमाणमुवाच[7] । कीदृक्सन् । आचार्यतया[8] नीतिशास्त्रादिसर्वशास्त्रव्याख्यातृत्वेन यद्वोपचारान्मन्त्रिपु मुख्यतया श्रोत्रियतया च वैदिकद्विजतया चाप्तं प्राप्तं सुप्रख्यत्वं[9] शोभना विख्यातिर्येन स तथात एव नयाचार्यकभाङ्न्यायस्य सम्यक्प्रतिपादयितेत्यर्थः । कीदृशं सन्तं तम् । द्विपतः कुमारपालस्य यद्यशस्तस्य ये चौरकधौर्तिके द्विपत्पराभूत्यापहरणवञ्चने इत्यर्थः । तयोर्विपये यदाचार्यत्वमतिनैपुणं[10] तद्दधानं युद्धायोद्यतमित्यर्थः ॥ उपजातिः[11] ॥

**स्वाम्यायुक्तानां[3] चौरतां वेत्त्वचौर-**

**त्वं वा शैष्योपाध्यायिकां वाथ कुर्यात् ।**

१ **ए** नवाचा°. २ **सी** °श्रौरिक°. ३ **ए** °नां चोर°

१ **ए** °दस्यध°. २ **ए** °जिताः भ°. ३ **ए** वा श्रोत्रं. ४ **ए बी** °स्ति श्रोत्र°. ५ **बी** °न्दसं द°. ६ **ए** मुख्यो भ°. ७ **ए** °णवा°. ८ **सी** °र्यत्वत°. ९ **ए** प्रमुख्य°. १० **सी** °पुण्यं त°. ११ **बी** °जाति । स्वा°. **सी** °जातिश्छन्द । स्वा°.

श्लाघात्याकारौ गार्गिकाकाठिकाभ्यां
भाषेतामात्यस्तथ्यपथ्यं तथापि ॥ १६ ॥

१६. स्वामी प्रभुरायुक्तानामधिकृतानां मन्त्रिणामहितमानितया[1] चौरतां वेत्त्व[2]चौरत्वं[3] वा हितमानितया साधुतां वा वेत्तु[4] शैष्योपाध्यायिकां[5] वा किंचिज्ज्ञमानित्वाच्छिष्यत्वं वा वेत्त्वतिविज्ज्ञमानित्वादुपाध्यायतां वा वेत्तु । अथाथ वा गार्गिकाकाठिकाभ्यां[8] गार्ग्यत्वेन कठत्वेन च श्लाघा[9]त्याकारौ कुर्यात् । सत्यवादित्वादि[10]गुणोपेतस्य गर्गस्यर्षेरपत्यत्वेन सत्यवादित्वादिगुणोपेता एत इति । तथा हेयोपादेयार्थोक्तियुक्तस्य सर्वशास्त्र[11]सारस्य कठप्रोक्तवेदस्य वेदित्रध्येतृत्वेन सर्वशास्त्ररहस्यज्ञा विधेयज्ञाश्चामी इति श्लाघां करोतु । पुलिन्दस्येव सदा वनेवासिनो गर्गर्षेरपत्यत्वेनाकिंचिज्ज्ञा एत इति । तथा कठवेदा[12]भ्या[13]सजडत्वेन[14] न नीतिशास्त्रज्ञा नापि लोकव्यवहारमात्रस्याप्यभिज्ञा इति निन्दां वा करोतु स्वामीत्यर्थः । तथाप्यमात्यस्तथ्यपथ्यं स्वामिनः सत्यहितं वचो भाषेत वक्तुमर्हति । वैश्वदेवी छन्दः ॥

तथ्यप[15]थ्याभणनेमात्यस्य दोषमाह ॥

ब्रह्मत्वपोत्रीयधरोपि गार्गिकां सकाठिकां क्ष्मावगतामवाप्य च ।
पापः स यो नावति शाकशाकटेक्षुशाकिने नु[1] स्वनियोगमुद्यतः ॥ १७ ॥

१७. यो नियुक्तो मन्त्र्युद्यतः सावधानः सन्स्वनियोगं स्वाम्यादिष्टं तथ्यपथ्यभाषणादिकं स्वव्यापारं नावति न रक्षति स पापो निन्द्यः

१ बी नु स्वानि°.

१ प °णाहि°. २ प °यातचोर°. ३ प °त्वचोर°. ४ बी °रत्वाहि°. ५ सी °त्तु अथा°. ६ प वाऽकिं°. ७ बी °विज्ञमा°. ८ बी °गिककाठि°. ९ बी श्लाघ्याला°. १० बी सी °दिगु°. ११ बी °स्त्रशार°. १२ बी °वेदन्यास°. १३ प °भ्यासाज°. १४ बी सी °न नी°. १५ प °पथ्योभ°.

स्यात् । कीदृक् । ब्रह्मत्वपोत्रीयधरोपि ब्राह्मणत्वपोतृत्वे धारयन्नपि । ब्राह्मणोपि ऋत्विग्विशेषोपि वेत्यर्थः । तथा क्ष्मावगतां पृथ्व्या ज्ञातां सकाठिकां काठिकया कठप्रोक्तवेदित्रध्येतृत्वेनान्वितां गार्गिकां गर्गापत्यत्वमवाप्यापि च । अपिरत्रापि योज्यः । पृथ्व्यां प्रसिद्धो गार्ग्योपि कठोपि वा भूत्वेत्यर्थः । यथोद्यतः सन्यः शाकशाकटेक्षुशाकिने शाकक्षेत्रमिक्षुक्षेत्रं च न रक्षति स ब्राह्मणादिरपि निन्द्यः स्यात् । गम्यमानास्तिक्रियापेक्षयैककर्तृत्वादवाप्येत्यत्र क्त्वा ॥

सौरभ । गौरवस्य । पैत्रम् । अत्र "ऋवर्णाल्लघ्वादेः" [६९] इत्यण् ॥ केचित्तु कार्शानव आरातेत्यादिष्वपीच्छन्ति । तन्मतसंग्रहार्थं लघ्वादेरिति प्रकृतेर्विशेषणं न ऋवर्णस्येति व्याख्येयम् ॥

पौरुष । पुरुषत्व । पुरुषता । हार्दम् । हृदयत्व । हृदयता । अत्र "पुरुष०" [ ७० ] इत्यादिनाण् । त्वतलौ च ॥ असमास इति किम् । सत्पुरुषत्व । सौहृदय्य । अत्र नाण् ॥

श्रौत्र । श्रोत्रियत्व । श्रोत्रियता । इत्यत्र "श्रोत्रियाद्यलुक् च" [७१] इत्यण् । यलोपश्च त्वतलौ च ॥

आचार्यक । आचार्यत्वम् । आचार्यता । इत्यत्र " योपान्त्य०" [ ७२ ] इत्यादिनाकञ् । त्वतलौ च ॥ असुप्रख्यादिति किम् । सुप्रख्यत्वः ॥

चौरक । धौर्तिका । इत्यत्र "चोरादेः" [७३] इत्यकञ् । त्वतलौ च । चौरत्वम् । चौरताम् ॥

शैष्योपाध्यायिकाम् । अत्र "द्वन्द्वाल्लित्" [ ७४ ] इति लिदकञ् ॥

गार्गिकाकाठिकाभ्यां श्लाघात्याकारौ । गार्गिकां सकाठिकामवाप्य । गार्गिकां सकाठिकां क्ष्मावगताम् । अत्र "गोत्र०" [ ७५ ] इत्यादिनाकञ् ॥

१ बी °प्रोक्तोवदि°. २ सी °शाकने. ३ ए °रुपः । पुरुपात्व. ४ बी °रुत्व. ५ ए °र्द । हृ° ६ ए °मा इ° ७ सी °दत्व । अ°. ८ बी °पान्त इ°. ९ ए सी °ख्यत्व । चौ°. १० बी °त्र चौरा°. ११ ए सी च । चोर°. १२ ए सी °म् । चोर°.

पोत्रीय । इत्यत्र "होत्राभ्य ईयः" [ ७६ ] इतीयः ॥

ब्रह्मत्व । इत्यत्र "ब्रह्मणस्त्वः" [ ७७ ] इति त्वः ॥

शाकशाकटेक्षुशाकिने । अत्र "शाकट०" [७८] इत्यादिना शाकटशाकिनौ ॥

इन्द्रवंशावंशस्थयोरुपजातिः ॥

अथ तथ्यपथ्यं वच एकादशभिर्वृत्तैराह ।

मौद्गीनशालेयंयवक्ययव्यंत्रैहेयपष्टिक्यमणव्यमाष्यम् ।

औमीनभाङ्गीनमभञ्जि तैलीनं वा न केनापि विभोः प्रसह्य ॥१८॥

१८. यवका यवतुल्या धान्यभेदाः । पष्टिकाः पष्टिरात्रैः पच्यमाना व्रीहिभेदाः । अणवो मणिचव्याख्या धान्यभेदाः । उमा अतस्यः । भङ्गाः सणधान्यानि । विभोस्तव सत्कानि मुद्गादिक्षेत्राणि प्रसह्य हठात्केनापि शत्रुणा न भग्नानि । तव भूमिः केनापि न भग्नेत्यर्थः । इन्द्रवज्रा छन्दः ॥

स को नाम यो ममापि भूमिं भङ्क्ष्यति तत्किमेवं त्वमजल्प इत्ययं मदान्मा वादीदित्याशङ्क्योपसान्त्वनायास्य सामर्थ्यं वर्णयन्नाह ॥

तिल्याणवीनमथ भङ्ग्यमथौ(थो)म्यमापी-

णं वास्तु देव भवतो विषयेद्य यावत् ।

भङ्गाकटं तिलकटं तदुमाकटं वा-

लाबूकटांशमपि वेप्सति को विगृह्य ॥ १९ ॥

१९. वा यद्वा हे देव भवतस्तव विषये देशे तिलादिक्षेत्रजातिरस्तु । शत्रुणा तव भूमेर्भङ्गे का वार्तेत्यर्थः । यतोद्य यावत्ते विषये भङ्गाकटं

१ ए °लेयंयव°. बी °लेयव°. २ ए °व्यत्रैहे°. ३ बी °ष्टिकम°. ४ सी °मणिव्य°. ५ ए °नभ°. ६ ए °पीर्णां वास्तु दे°.

१ ए °ह्म इ°. २ बी °वंशस्थ°. ३ ए सी °जाति । अ°. ४ बी °ह । मौद्गी°. ५ ए °तस्य । भ°. ६ बी त्वज°. ७ सी °दीरित्या°. ८ बी सी °शङ्क्याप°.

तैलकटं[1] तदुमाकटं वा तदत्यल्पीयस्त्वेन प्रसिद्धं भङ्गानां तिला[2]-ामुमानां वा रजोप्यलाबूकटांशमपि वालाबूकटस्य तुम्बकरजसोंशमपि[3] ा कः शत्रुर्विगृह्य विग्रहं कृत्वेप्सति[4]। त्वत्तः समर्थस्य राज्ञोभूतत्वान्न कोपीत्यर्थः ॥

मौद्गीन। इत्यत्र "धान्येभ्य[5] ईनञ्" [७९] इतीनञ् ॥

व्रैहेय। शालेय। इत्यत्र "व्रीहि०" [८०] इत्यादिनैयञ्[7] ॥

यव्य। यवक्य। षष्टिक्यम्। अत्र "यव०" [८१] इत्यादिना यः ॥

अणव्य आणवीनम्। माष्यं[8] माषीणम्। अत्र "वाणुमाषात्" [८२] इति वा यः। पक्ष ईनञ् ॥

उम्य औमीन। भङ्ग्य भाङ्गीनम्। तिल्य तैलीनम्। अत्र "वोमा०"[९] [८३] इत्यादिना वा यः ॥

अलाबूकट। उमाकटम्। भङ्गाकटम्। तिलकटम्। अत्र[10] "अलाब्वाश्च०" [८४] इत्यादिना कटः ॥ वसन्ततिलका छन्दः ॥

एवं च तव केनापि किमपि नापराद्धमित्युक्तम्। ततश्च किमित्याह।

> कौलीनमस्ति यदु गूर्जरविग्रहाया-
>
> श्वीनां करीर[1]कुणपीलुकुणास्पदं[2] क्ष्माम्।
>
> उत्कर्णजाहविनमन्मुखजाहरम्यै-
>
> र्वाहैस्त्वमारिथ सुपक्षतिपक्षिवेगैः ॥ २० ॥

२०. हे राजं[11]स्तत्कौलीनं कुलस्य जल्पो लोकापवादोस्ति यत्त्वं वाहैरश्वैः कृत्वा गूर्जरविग्रहाय कुमारपालविग्रहणार्थं क्ष्मां मरुदेश-

१ ए °रगुण°. २ ए °पीलगुणा°. सी °पीलकु°.

१ ए °टं वा. २ बी °लानां मुनीनां. ३ सी °पि कःकः. ४ सी °ति। ततः स°. ५ ए सी धानेभ्य. ६ बी भ्य इत्यनिता°. ७ बी सी °दिनेय°. ८ ए ष्यं। अ°. ९ बी °त्र वामा°. १० बी °त्र ला°. ११ बी °स्तत्कौली°.

भूमिमारिथागतः। किंभूताम्। आश्वीनां सीमसंधिवर्तित्वेन[1] निकटत्वादश्वस्यैकेनाह्ना गम्यां तथा करीरकुणपीलुकुणास्पदं करीरपाकपीलुपाकस्थानम्। किंभूतैः। सुजात्यत्वेनोदूर्ध्वानि यानि कर्णजाहानि कर्णमूलानि तथा विनमन्ति नम्राणि यानि च मुखजाहानि मुखमूलानि तै रम्यैस्तथा शोभना पक्षतिः[2] पक्षमूलं यस्य स यः पक्षी तद्वज्जवो वेगो येषां तैः। गूर्जरैः[3] सहासतो विरोधस्य प्रथमत उत्थापकत्वात्त्वां जनोपवदतीत्यर्थः॥

आश्वीनाम्। अत्र "अह्ना०" [८५] इत्यादिनेनञ्॥

कौलीनम्। अत्र "कुलाज्जल्पे" [८६] इतीनञ्॥

पीलुकुण[4]। करीरकुण[5]। इत्यत्र "पीत्वादेः०" [८७] इत्यादिना कुणः॥

कर्णजाह। मुखजाह। इत्यत्र "कर्णादेर०" [८८] इत्यादिना जाहः॥

पक्षति। इत्यत्र "पक्षात्तिः" [८९] इति तिः॥

अन्यैश्च[6]।

**हिमेलुवातूलबलूलसैन्यः[1] शीतालुरुष्णालुरमर्पतोसौ[2]।**
**स्वदेशतृप्रालुरिहार[3] भैमिर्यथामुखीने त्वयि संमुखीनः॥२१॥**

२१. त्वयि यथामुखीने संमुखमत्रागते[7] सत्यसौ भैमिः कुमारपालोमर्पतोमर्पात्संमुखीनः संमुख इह त्वत्समीप आरायया। कीदृक्सन्। हिमेलु वातूलं बलूलं च हिमं शीतं वातं लूकादि बलं परबलं च सहमानं सर्वसहमित्यर्थः। सैन्यं यस्य स तथा शीतालुरुष्णालुः शीतोष्णयोरसहोप्यतिसुकुमारोपीत्यर्थः[8]। यद्येवं सुकुमार-

१ ए °मेलवा°. २ बी शीलालु°. ३ सी तृष्णालु°.

१ सी °संबन्धव°. २ बी °क्षति प°. ३ बी गूर्जरैः. ४ बी °लुकण. ५ ए °रकण. ६ सी °न्यथा। हि°. ७ बी °मत्र ग°. ८ बी °रहसोप्य°. ९ ए °तिकु°.

स्तर्हि किमित्यारेत्याह । यतः स्वदेशतृप्रालुः स्वदेशस्य कष्टमसहमानः । एतेन त्वया विरोद्धोयमत्रागादित्यस्य न्यायित्वमुक्तम् ॥

हिमेलु । इत्यत्र । "हिमाद्०" [९०] इत्यादिना-एलुः ॥

बलूल । वातूल । इत्यत्र "बल०" [९१] इत्यादिनोलः ॥

शीतालुः । उष्णालुः । तृप्रालुः । अत्र "शीत०" [९२] इत्यादिनालुः ॥

यथामुखीने । संमुखीनः । अत्र "यथा०" [९३] इत्यादिनेनः ॥ उपजातिः ॥

अयं मे सेवाद्यर्थमत्रायात इति न वाच्यं यतः ।

**स सर्वपत्रीणकसर्वकर्मीणपत्तिकः सर्वपथीननागः ।**
**द्राक्सर्वपात्रीणधनोऽस्ति सर्वाङ्गीणप्रभः प्राग्भवदाज्यपेक्षी ॥२२॥**

२२. स भैमिर्द्राक्प्राक्पूर्वं भवदाज्यपेक्षी तव संग्राममपेक्षमाणोस्ति । चेत्त्वं रणं प्रारब्धवांस्तदायमतितरां रणकरणे प्रगुण एवास्त इत्यर्थः । यतः सर्वपत्रीणका अज्ञाताः सर्वपत्राणि व्याप्नुवन्तः सर्ववाहनारोहणशक्ता इत्यर्थः । सर्वकर्मीणाः सर्वकर्माणि व्याप्नुवन्तः सर्वकार्यकरणक्षमाश्चेत्यर्थः । पत्तयः सेवका यस्य सः । तथा सर्वपथीना वंहीयस्त्वात्सर्वान्पथो व्याप्नुवन्तो नागा गजा उपलक्षणत्वादश्वा रथाश्च यस्य सः । एतेन सर्वसैन्यसंपदुक्तिः । तथा सर्वपात्रीणं वंहीयस्त्वात्सर्वाणि पात्राणि देयस्थानानि व्याप्नुवद्धनं यस्य सः । एतेन कोशसंपदुक्तिः । तथा सर्वाङ्गीणा सर्वाङ्गं व्याप्नुवती प्रभोत्साहादिसंपदुद्भवं तेजो यस्य सः ॥

१ **ए** °ज्यपक्षी. २ **बी** °क्षी । तव.

१ **बी सी** तृष्णालुः. २ **सी** °लुः यथा°. ३ **ए** ने । हंमु°. ४ **सी** भैमिः प्राक्पूर्वं द्राक् भ°. ५ **बी** °पेक्ष्यमा° ६ **सी** सः । यथा. ७ **ए** °थीनां वं°. ८ **सी** °र्वाणि पत्रा°. ९ **ए** °त्रीणां वही°. १० **सी** °तेनास्य सं°. ११ **बी** °र्वाङ्गव्या°. १२ **ए** °ङ्गीणां स°.

यद्येवं तर्हि किं कार्यमित्याह[1] ।

राजन्मौ[1](न्मो?)र्जौजसा निजानां सर्वशरावीणान्नभोजिनां त्वम् ।
पतनाय भवेन्निजापि पद्याप्रपदीनानुपदीनिका च तुङ्गा[2] ॥ २३ ॥

२३. हे राजंस्त्वं निजानां पूर्वजानां पतनाय स्वविनाशेन भ्रंशाय मा भूः । केन कृत्वा । ऊर्जौजसो[2]र्जया बलेन यदोजस्[3]तेजस्तेन बलावलेपेन[4] । कीदृशाम् । सर्वशरावीणानि[5] बहीयस्त्वेन[6] सर्वशरावान्व्याप्नु[7]वन्ति यान्यन्नानि तद्भोजिनां त्वत्सदृशस्यापत्यस्य श्राद्धादौ नानापिण्डप्रदत्वेन[8] तृप्तानामित्यर्थः । सर्वथा समर्थेन[9] न्यायिना च भैमिना सह रणं मा कृथा इत्यर्थः । स्वोक्तमेवार्थान्तरेण दृढयति । निजापि पटी वस्त्रमाप्रपदीना प्रपदं गुल्फं यावद्व्याप्नुवती सत्यतिविस्तीर्णत्वेन गतेः स्खलयित्रीत्वात्पतनाय भवेत्तथा निजाप्यानुपदीनिका कुत्सितानुपदं[10] बद्धा पदप्रमाणा पादुका[11] तुङ्गात्युच्चा सती पतनाय भवेत् ॥

सर्वपथीन । सर्वाङ्गीण । सर्वकर्मीण । सर्वपत्रीण[12] । सर्वपात्रीण । सर्वशरावीण । इत्यत्र "सर्वादेः[13]०" [९४] इत्यादिना-ईनः ॥

आप्रपदीना । इत्यत्र[14] "आप्रपदम्" [९५] इतीनः ॥

आनुपदीनिका । इत्यत्र "अनु०" [९६] इत्यादिनेनः ॥ औपच्छन्दसकं छन्दः ॥

अथ वृत्तत्रयेण त्वत्पूर्वजैरपि चुलुक्यैः सह[15] विग्रहो न कृत इति भणन् कृताया मैत्र्याः फलं चोपदर्शयन् स्वोक्तं रणाकरणमेवं[16] दृढयति[17] ।

---

१ ए °न्मोजोज°. २ ए तुरजा. बी तुजे । हे.

---

१ बी सी ननः कि. २ ए उर्जाज°. ३ ए °स्तेजव°. सी °स्तेन ब°. ४ ए °न । म°. ५ ए °नि बांही°. ६ सी °न तृ°. ७ ए °वान्वाप्नु°. ८ बी °दत्तेन. ९ ए °न आयि°. १० सी °दं यद्वा प°. ११ ए बी पाडुका. १२ बी °र्वपा°. १३ ए °र्वादिरित्या°. १४ बी °त्र प्र°. १५ सी स वि°. १६ बी °व दृढति°. १७ सी °ति । आया°.

अयानयीनैरकृतारिसर्वान्नीनैर्न ते कोप्यरितां चुलुक्यैः ।
परोवरीणोथ परंपरीणोस्मि पुत्रपौत्रीण इहान्वये ते ॥ २४ ॥

२४. हे राजंस्ते संबन्धी कोपि पूर्वजश्चुलुक्यैः सहारितां वैरं नाकृत । यतोयानयीनैः । अयः शुभं दैवम् । अनयोशुभम् । शुभाद्दैवात्सकाशादपवर्ततेशुभं दैवं यस्मिन्कर्मणि तदयानयं शान्तिकर्म मारिघोषणदेवगुरुपूजादि तत्र नेयाः कारयितव्यास्तैरीश्वरैस्तथा सर्वं सर्वप्रकारमदन्ति सर्वान्नीना अरिभिः सर्वान्नीना अरिसर्वान्नीनास्तैः सर्वारिविनाशकैरित्यर्थः । अत्रार्थे कः प्रमाणमिति न वाच्यम् । यतस्ते तवेहान्वये वंशेहमस्मि वर्ते । कीदृक् । परोवरीणोथ तथा परंपरीणः पुत्रपौत्रीणश्च परांश्चावरांश्च परांश्च परतरांश्च पुत्रांश्च पौत्रांश्चानुभवामि जानामि यः स तथा ॥

अयानयीनैः । अत्र "अया०" [ ९७ ] इत्यादिनेनः ॥

सर्वान्नीनैः । अत्र "सर्वान्नमत्ति" [ ९८ ] इतीनः ॥

परोवरीणः । परंपरीणः । पुत्रपौत्रीणः । एते "परोवरीण०" [ ९९ ] इत्यादिना निपात्याः ॥ उपजातिः ॥

यथाकामीनोर्जत्करिभिरनुकामीनतुरगैः
सदात्यन्तीनोच्चैर्धरणिधव संधाय चुलुकैः ।
नयाब्धेः पारीणानयसरिदवारीणजगृहु-
र्यशः पारावारीणमिह गुरवस्तेरिविजयात् ॥ २५ ॥

१ बी °नत्रीनै°. २ बी °त्रीन्नैर्न. ३ सी °णोस्मि. ४ बी °त्रपुत्री°.

१ सी अयं शु°. २ बी °भाशुभाद्दै°. ३ बी सी °कर्मा मा°. ४ ए °दिधे°. बी °दिनाधेन्यया का°. ५ सी तथैर्नेयाः. ६ सी °नारतैः. ७ ए °श्च पुत्राश्च पौ°. ८ सी °श्च पु°. ९ ए बी °मियाना°. १० ए °गि स. ११ सी °था । आया°. १२ ए °र्वाम°. १३ सी णः° । अत्र प°.

२५. हे धरणिधव[1] राजन् हे नयाब्धेः पारीण नीतिशास्त्रसागरपारगामिन्नत एव हे अनयसरिद्वारीणानावारनद्या अर्वाग्भागगामिन्न्यायनिष्ठ ते तव गुरवः पूर्वजा अरिविजयादिह जगति पारावारीणमब्धिगामि यशो जगृहुः । किं कृत्वा । चुलुकैः सह[2] सदा संधाय । कैः कैः कृत्वा । यथाकामीना यथाकामं गच्छन्तस्तथोर्जन्तो बलिष्ठा ये करिणस्तैस्तथानुकामीना अनुकामं यथेच्छं गच्छन्तो ये तुरगास्तैस्तथात्यन्तीना अत्यन्तं[3] गामिनो य उष्ट्रास्तैश्च हस्तितुरगोष्ट्रदानेनेत्यर्थः । एतेन चुलुकैः सह संधाने[4] तेषामरिविजयोत्थं यशः फलमुक्तम् ॥ शिखरिणी छन्दः[5] ॥

**अवारपारीणमुदन्वतस्तद्यशो निजानां द्युपथाध्वनीनम् ।**
**हारि त्वया मानुगवीनबुद्ध्या भैमिं नयाध्वन्यममुं विराध्य ॥२६॥**

२६. हे राजन्निजानां[6] पूर्वजानां तच्चुलुकैः संधानेनारिविजयोत्थं यशस्त्वया मा हारि[7] मापनायि । कीदृशम् । उदन्वतोऽब्धेरवारपारीणमर्वाग्भागपरभागयोर्गामुकं तथा द्युपथाध्वनीनं स्वर्गमार्गे पथिकतुल्यं स्वर्गगामीत्यर्थः । किं कृत्वा । नयाध्वन्यं न्यायमार्गपथिकममुं[8] भैमिं विराध्य[9] विरोध्य । कया कृत्वा । अनुगवीनबुद्ध्या गवां पश्चादनुगु तदलंगाम्यनुगवीनो गोपालस्तस्य या बुद्धिस्तयानुचितयुद्धविषयया मूर्खबुद्ध्येत्यर्थः ॥

यथाकामीन । अनुकामीन । अत्यन्तीन । इत्यत्र "यथाकाम०" [ १०० ] इत्यादिनेनः ॥

पारावारीणम् । पारीण । अवारीण । अवारपारीणम् । इत्यत्र "पारावारं०" [ १०१ ] इत्यादिनेमः ॥

---

१ सी °धर रा°. २ सी °ह सं°. ३ सी °त्यन्त गा°. ४ बी °धानते°. सी °धानात्तेषा°. ५ सी °न्दः । आवा°. ६ सी °नां तच्चूलैः सं°. ७ सी °रि नापायि. ८ बी °मार्गप°. ९ सी °ध्य क°.

अनुगवीन। इत्यत्र "अनुग्वलम्" [१०२] इतीनः ॥

अध्वन्यम्। अध्वनीनम्। अत्र "अध्वानं येनौ" [१०३] इति येनौ।

उपजातिः ॥

अथ स्वोक्तस्यैव रणाकरणस्य विशेषेण द्रढनाय यस्य सैन्यस्य बलेनाम्नो युद्धायोत्सहते तन्निराकुर्वन्नाह।

**तवाभ्यमित्रीणरणेभ्यमित्र्यो भाव्यभ्यमित्रीय इहाथ वा कः।**
**एष्वागवीनेषु समांसमीनाद्यश्वीनधेनुष्विव निःसहेषु ॥ २७ ॥**

२७. अथ वेति कृतकाभ्युपगमे। त्वत्संतोषाय युद्धं किल मयाभ्युपगतमित्यर्थः। परं हेभ्यमित्रीणामित्राभिमुखमलंगामिन्निह भैमावभ्यमित्रीयेमित्रस्य तुवाभिमुखमलंगामिनि सत्येषु प्रत्यक्षेषु तव भटेषु मध्ये को भटो रणेभ्यमित्र्योमित्रस्य भैमेरभिमुखमलंगामी भावी भविष्यति। यतः कीदृक्षु। आगवीनेष्वागोप्रदानं का(नका?)रिण आगवीनाः कर्मकरभेदास्तत्तुल्येषु। एतदपि कुत इत्याह। यतः समांसमीनाः प्रतिवर्षं गर्भग्राहिण्यो विजायमाना वा तथाद्यश्वीना अद्य श्वो वा विजनिष्यमाणा एवं नाम प्रत्यासन्नप्रसवा इत्यर्थः। द्वन्द्वे ता या धेनवस्तास्विव निःसहेष्वसमर्थेषु ॥

तदेवं सर्वथा युद्धं निषिध्य विधेयमाह ॥

**भैमौ ततः साप्तपदीनमद्यप्रातीनधेनुं नु पुषाण भूत्यै।**
**मन्त्रेषडक्षीण इहाश्वलंकर्मीणो भवालंपुरुषीणशक्ते ॥ २८ ॥**

२८. अलंपुरुषाय पौरुषोपेतायालंपुरुषीणा शक्तिर्यस्य हे अलंपुरुषीणशक्ते महापराक्रमिंस्ततो हेतोर्भूत्यै राज्यादिलक्ष्म्यर्थं भैमौ विषये

१ ए समास°. २ बी °हास्वलं°. ३ ए °शक्तेः। अ°. सी °शक्ते। अ°.

१ ए °पा यु°. २ ए °णामि°. ३ बी °मित्र्यस्य. ४ बी सी °स्ताश्विव. ५ बी °ह। भैमौ. ६ बी °लं पौरुषा°. ७ ए °क्रमंस्त°. सी °क्रमस्त°. ८ बी °तो भूत्यै.

साप्तपदीनं सप्तभिः पदैरवाप्यं सख्यं पुषाण पोषय । अद्यप्रातीनधेनुं न्वद्य प्रातर्वा[1] विजनिष्यमाणां धेनुं यथा कश्चित्पुष्णाति । तथाविद्यमानानि षडक्षीण्यस्मिन्नषडक्षीणस्तस्मिंस्त्वां[2] मां च विनान्येन केनाप्यज्ञात इत्यर्थः । इह[3] कृतपूर्वे मत्र आश्वलंकर्मणेलंकर्मीणः[4][5] समर्थो भवामु मदीयं मत्रमविलम्बं कुर्वित्यर्थः ॥ इन्द्रवज्रा छन्दः ॥

**रुदितमिव वचो[1]स्याशितंगवीने[2] न समीचीनममंस्त राडुदीच्याः ।**
**सम्यग्[3]भेदितयैव मन्यमानः सचिवं सोश्वतयाश्वकानिवो[4]च्चैः ॥२९॥**

२९. उदीच्या उत्तरस्या[6] दिशो राडा[7]न्नोस्यामात्यस्य वचः समीचीनं[8] युक्तं नामंस्त । यथाशिता[9] गावोस्मिन्नाशितंगवीनमरण्यं तस्मिन्रुदितं निष्फलत्वात्समीचीनं लोको न मन्यते । यतः कीदृक् । सचिवं सम्यग्निश्चितं भेद(दि)तयैव भेदोस्यास्ति भेदी तद्भावेनैव भेमिना भेदितमेवेत्यर्थः । मन्यमानः । यथा कश्चिदुच्चैरुन्नतानश्वकानश्वकाख्यानश्वसदृशा[10]न्पशुभेदानश्वस्य प्रतिकृती[11]: काष्ठा[12]दिमयान्प्रतिच्छन्दकान्वा भ्रान्त्या[13]श्वतयाश्वा अमी इति मन्यते । अनेनोपमानेनान्नस्य भ्रान्ततासूचि ॥

**अभ्यमित्रीये । अभ्यमि[14]त्र्यः । अभ्यमित्रीण । इत्यत्र "अभ्यमित्रमीयश्च" [ १०४ ] इतीययेनाः ॥**

---

१ ए °चोस्यशि°. २ **बी** °स्याशितं°. **सी** °स्याशितग°. ३ **बी सी** °ग्भेदत°. ४ **बी** °यास्वका°.

---

१ ए °र्वा ष्विज°. २ **बी सी** °स्तस्मिस्त्वां. ३ **सी** °इत्यकृ°. ४ **सी** कमीणोलं°. ५ **बी** °र्मणोलं°. ६ **बी** °रस्यां दि°. ७ **सी** राजान्नो°. ८ **सी** °नं लोको. ९ **बी** °शितगा°. १० **बी** °शानशु°. ११ ए **बी** °कृतीका°. १२ **बी** काष्ठम°. १३ **बी** °न्त्याश्वा इमी. १४ ए **सी** °मित्र्य । अ°.

समांसमीना । अद्यश्वीन । अद्यप्रातीन । आगवीनेषु । साप्तपदीनम् । एते "समांसमीना०" [ १०५ ] इत्यादिना निपात्याः ॥

अषडक्षीणे । आशितंगवीने । अलंकर्मीणः । अलंपुरुषीण । इत्यत्र "अष-डक्ष०" [ १०६ ] इत्यादिनेनः ॥

समीचीनम् । अत्र "अदिक्०" [ १०७ ] इत्यादिनेनो वा ॥ पक्षे । सम्यक् ॥ अदिक्स्त्रियामिति किम् । उदीच्याः ॥

अश्वकान् । इत्यत्र "तस्य०" [ १०८ ] इत्यादिना संज्ञायां प्रतिकृतौ च कः ॥ औपच्छन्दसकापरान्तिका छन्दः ॥

**ऊचे च चञ्चामपि किं चुलुक्यं स्तवीपि मां भापयितुं दुराशे ।**
**को नाम चित्रायतनध्वजस्थभीमान्तकव्याघ्रशताद्बिभेति ॥ ३० ॥**

३०. स्पष्टः । किं तु चञ्चामपि चञ्चा तृणमयः पुरुषो यः क्षेत्र-रक्षणाय क्रियते । अकिंचित्करत्वेन तत्तुल्यमपि । चित्रायतनध्वजस्थ-भीमान्तक[व्याघ्र?]शताच्चित्रस्थाश्चित्रे लिखिता ये भीमा भीमसेना आयतनस्था देवगृहस्था येन्तकाः पूजार्था यमप्रतिकृतयो ध्वजस्था ये च व्याघ्रास्तेषां शतादपि ॥

नृ । चञ्चाम् ॥ पूजार्थे । आयतनस्थान्तक ॥ ध्वज । ध्वजस्थव्याघ्र ॥ चित्र । चित्रस्थभीम । इत्यत्र "न नृ०" [ १०९ ] इत्यादिना न कः ॥ उपजातिः ॥

**विक्रीणते करटिकान्दधते च गौरीं**
**पथ्यत्र देवपथराजपथे स्वगुप्त्यै ।**
**राज्ञां चरास्त्वमु चरः प्रकटः शिलेय**
**वास्तेयवक्त्र सुचिरादुपलक्षितोसि ॥ ३१ ॥**

१ सी °श । केना°. २ प °थ्यस्य दे°.

१ बी °द्यप्रती°. २ सी °ना संज्ञायां. ३ प °नेन । स°. ४ सी का ॥ ऊ°. ५ बी सी °स्थाच्चित्रे. ६ प °श्चित्रलि°. ७ बी °स्थानक. ८ बी °ज-स्थान्तव्या°. सी °जस्थ°. ९ बी °त्र नाम्रिला°. १० प °ना कः.

३१. उ हे शिलेय [1]स्वस्वाम्यवदातैर[2]नार्द्रीकृतहृदयत्वा[3]च्छिलाया- स्तुल्य कठोरहृदय तथा वास्तेयमशुचिकल्पव[4]र्चःक्षेपित्वाद्वस्तेः पुरी- षोत्सर्गद्वारस्य तुल्यं वक्त्रं यस्य हे वास्तेयवक्त्र राज्ञां शत्रूणां चरा अत्र पथ्यस्य पुरस्य मार्गे करटिकान्करटिनो हस्तिनस्तुल्यान्मृत्तिकाम- यानि हस्तिप्रतिच्छन्दकानि विक्रीणते तथा [5]गौरीं [6]गौर्यास्तुल्यां जीवि- कार्थां [7]गौरीप्रतिमां दधते । किंभूते पथि । देवपथराजपथे विस्तीर्ण[8]त्वान्मनोज्ञत्वाच्च देवपथराजपथतुल्ये । त्वं पुनर्द्विपां प्रकटश्चरः परं सुचिरादुपलक्षितोसि । एतेनास्य गुप्तचरे[9]भ्योप्यतिदुष्टतो[10]क्ता ॥ वसन्ततिलका ॥

**शैलेय्यसौ धीः क्व भवादृशानां द्रव्यं कुशाग्रीय[1]धियां क्व मन्त्राः ।**
**त[2]त्काकतालीयमजाकृपाणीयं कार्यसिद्धिर्यदशाख्यमुख्यात् ॥३२॥**

**३२.** शैलेय्यतिस्थूलत्वाच्छिलायास्तुल्यासौ पू[11]र्वोक्ता भवादृशानां धीः क्व । तथा कुशाग्रीयधियां सूक्ष्मबुद्धीनां मन्त्राः क्व च । कीदृशाः । द्रव्यं द्रुतुल्या यथा द्रु अग्रन्थ्यजिह्मं [12]दारूपकल्प्यमानं विशि[13]ष्टेष्टफलरूपं स्यात्तथा विशि[14]ष्टे[15]ष्टफलदा इत्यर्थः । भवादृशाः स्थूलबुद्धयो मन्त्रायोग्या इत्यर्थः । ननु मन्मन्त्रेणाप्यनेकाः कार्यसिद्ध[16]योभूवंस्तत्कथमहं मन्त्रा- योग्य [17]इति न वाच्यम् । यतो भवत[18]स्त्वत्तो यत्कार्यसिद्धिस्तत्काकताली-

---

१ **बी** °धिकां क. २ **बी** °त्कालता°.

---

१ **सी** स्वष्वस्वा°. २ **बी सी** °नार्द्रीकृ°. ३ **बी** °च्छिशाया°. ४ **बी** °चःक्षपि°. ५ **सी** गौर्यां°. ६ **ए बी** गौर्यारतु°. ७ **बी** गौरी प्र°. ८ **बी** °त्वातमनेज्ञात्वा°. ९ **सी** °भ्योति°. १० **सी** °क्ता । भवादृशानां धीक्व । तथा. ११ **बी** °र्वोक्त्या भ°. १२ **सी** दारुप्रक°. १३ **बी सी** °ष्टरू°. १४ **ए** °ष्टफ°. १५ **सी** °फला इ°. १६ **सी** °योभवं°. १७ **बी** °ति वा°. १८ **ए** °स्त्व- त्तौत्का°.

यमाश्चर्यभूतमित्यर्थः । यद्वाजाकृपाणीयमजया पादेनावकिरत्यात्मवधाय कृपाणस्य दर्शनमजाकृपाणं तत्तुल्यं परिणामेनर्थहेतुरेवाभूदित्यर्थः । यतः । किंभूतात् । पुरुषस्कन्धस्य वृक्षस्कन्धस्य वा तिर्यक्प्रसृतमङ्गं शाखेत्युच्यते । तद्यथा शाखा पार्श्वायता तथा कुलस्य यः पार्श्वायतोङ्गभूतः स शाखायास्तुल्यः शाख्यस्तथा मुखस्य तुल्यो मुख्यः प्रकृष्टो विशेषणकर्मधारये न तथा यस्तस्मात् ॥

गौगीम् । अत्र "अपण्ये जीवने" [ ११० ] इति न कः ॥ जीवन इति किम् । करटिकान् ॥

देवपथराजपथे । अत्र "देव०" [ १११ ] इत्यादिना न कः ॥

वास्तेय । इत्यत्र "व(ब?)स्तेरेयञ्" [ ११२ ] इत्येयञ् ॥

शिलेय । शैलेयी । इत्यत्र "शिलाया एयच्च" [ ११३ ] इत्येयच् । एयञ्च ॥

शाख्य । मुख्यान् । इत्यत्र "शाखादेर्यः" [ ११४ ] इति यः ॥

द्रव्यम् । अत्र "द्रोर्भव्ये" [ ११५ ] इति यः ॥

कुशाग्रीय । इत्यत्र "कुशा०" [ ११६ ] इत्यादिनेयः ॥

काकतालीयम् । अजाकृपाणीयम् । एतौ "काक०" [ ११७ ] इत्यादिना निपात्यौ ॥ इन्द्रवज्रा छन्दः ॥

**भोः सपत्न वचनेन सैकताशार्करेण यशसो मम ध्रुवम् ।**
**श्र्येकशालिकभुजस्य नेच्छसि त्वं भवत्रिजगदेकशालिकम् ॥ ३३ ॥**

---

१ बी सी °न शैक°. २ ए °म श्रियः । एक°. ३ सी °च्छति त्वं.

---

१ बी °णीग°. २ बी °नाकि°. ३ बी सी °र्थः । किं°. ४ सी °स्य वा. ५ सी °था यः कुलस्य पा°. ६ सी °यताङ्ग°. ७ ए °त शा°. ८ बी शाखास्त°. ९ बी मुख्य प्र° १० ए °री । अ°. ११ बी °ण्ये न जी°. १२ बी °ति कः. १३ बी सी °शाग्राग्री°. १४ ए कुशीयेत्या°. सी कुश्येत्या°.

३३. भोः सपत्न सपत्न्यास्तुल्य शत्रो सैकतं काठिन्यवैरस्यादिना सिकताया वालुकायास्तुल्यमत एवाशार्करं न शर्कराया इक्षुविकारस्य तुल्यं यत्तेन प्राक्तनेन वचनेन कृत्वा भुवं ज्ञायसे त्वं मम यशस ऐकशालिकमेकशालायास्तुल्यं भवत्सत्रिजगन्नेच्छसि । ननु ते यशः कुतस्त्यमिति न वाच्यम् । यतः श्रियो विजयलक्ष्म्या एकशालिकावेकशालायास्तुल्यौ भुजौ यस्य तस्य कुमारपालस्यैकस्यैवारेर्जयेन जगत्त्रयेप्यकृच्छ्रेण विचरन्मम यशस्त्वं सपत्नत्वान्नेच्छसीत्यर्थः ॥ रथोद्धता छन्दः ॥

वाचापि कौलिशिक गौणिकलौहितीक-
वस्त्रार्ह नो पलितकार्किक हन्मि तत्त्वाम् ।
कार्कीककीर्तिगुरुलौहितिकानुरागे-
च्छा यद्विशालजगतीह विशङ्कटा मे ॥ ३४ ॥

३४. रे न केवलं हृदा वाचापि कौलिशिक वज्रतुल्यात एव रे गौणिकलौहितीकवस्त्रार्ह गौणिकमतिस्थूलत्वाद्गोण्यास्तुल्यं लौहितीकं च लोहितवर्णस्य तुल्यमलोहितवर्णमपि मञ्जिष्ठाद्युपाश्रयवशात्तथावभासमानं यद्वस्त्रं मञ्जिष्ठादिकोच्छलकवस्त्रमित्यर्थः । तस्यार्ह योग्य । तथा रे पलितकार्किक पलितैः श्वेताश्वतुल्य तत्तस्मात्त्वां न हन्मि यद्यस्मादिह विशालजगति मे मम कार्कीककीर्तयः श्वेताश्ववन्निर्मलयशसो ये गुरवो मत्पित्रादयः पूज्यास्तेषां लौहितिको लोहिततुल्यो रक्तो यस्त्वद्विष-

१ सी °र्ह गौणिकमतिरथू°. २ ए हतन्मि.

१ बी °पत्नारतु°. २ बी शत्रोः सै°. ३ सी °स्य तस्य कुमार°. ४ ए °शालक°. ५ ए °न्म य°. ६ बी °रत्वं संपन्नत्वा°. ७ बी °ल्यं लोहि°. ८ बी °द्वस्त्रम°. ९ ए °तैः श्वेता°. १० सी तस्मा°. ११ सी °शाले ज°. १२ बी °षां लोहि°. १३ ए °तिको लौहि°. बी °तिकालो°. १४ सी यद्वस्तुविष°.

योनुरागस्तस्येच्छा । यद्वा कार्कीककीर्तयो ये गुरवस्त्वत्पित्रादयस्तेषु या मम लौहितिकानुरागेच्छा सा विशङ्कटा विस्तीर्णास्ति । मद्गुरुभिस्त्वद्गुरुभिश्च त्वं मम भलापित इति त्वां न हन्मीत्यर्थः ॥

अशार्करेण । सैकत । इत्यत्र "शर्करादेरण्" [ ११८ ] इत्यण् ॥

सपत्न । इत्यत्र "अः सपत्न्याः" [ ११९ ] इति-अः ॥

एकशालिक । इत्यत्र "एक" [ १२० ] इत्यादिना-इकः ॥

गौर्णिक । कौलिशिक । ऐकशालिकम् । अत्र "गोण्यादेश्चेकण्" [ १२१ ] इतीकण् ॥

कार्कीक । कार्किक । लौहितीक । लौहितिक । इत्यत्र "कर्क०" [ १२२ ] इत्यादिना टीकणिकणौ ॥

विशाल । विशङ्कटा । इत्यत्र "वेर्०" [ १२३ ] इत्यादिना शालशङ्कटौ ॥

वसन्ततिलका ॥

**विकटोत्कटप्रकटवाक्स्तवीपि यं रणसंकटेवकटधन्वपाणिना ।**
**निकटेभिभूतमवटीटिनं मयावकुटारमौलिरवटीट पश्य तम् ॥३५॥**

३५. रे अवटीट नासानतिमच्चिपिटनासिक तिरस्कुर्वाण एवं संबोधयति । यद्वा रे अवटीट स्वाम्यभक्तत्वेनातिनिन्द्यत्वाल्लोकानां नासानतिहेतो यं भैमिं त्वं स्तवीपि । कीदृक्सन् । विकटा विस्तृतोत्कटाधिका प्रकटा सर्वलोकस्य प्रकाशा च वाग्यस्य सः । तं भैमिं त्वं पश्य । कीदृशम् । अवकटमारोपितत्वान्नतं धन्व यत्र स तथा पाणिर्यस्य तेन

१ ए °धनुपा°.

१ बी °म लोहि°. २ बी °म भिला°. ३ ए °त्र अ स°. ४ ए °णिकः । कौलि°. सी °णिकः । कौ°. ५ ए सी °शिकः । एक°. ६ ए °क । लोहि°. ७ सी °क । लोहि°. ८ बी सी विसङ्क°. ९ बी सी °लसङ्क°. १० बी °मंचिपि°. ११ ए °च्चिपुट°. १२ सी °ण इति सं°. १३ ए °नां ना°.

मया निकटे शीघ्रं करिष्यमाणत्वात्समीपस्थे रणसंकटे[1] रणसंकीर्णेभिभूतमत एवावटीटं[2] नासानतिरस्यास्त्यवटीटिनम् । पराभवेपि हि नासा मुटति । अत एव कीदृक्सन्पश्य । अवकुटारमौलिश्चौलुक्यपराभूत्यातिपराभूतंमन्यत्वान्नतशिराः ॥ नन्दिनी छन्दः ॥

> अनवभ्रटः[1] स मुनिरप्सरोजनो-[2]
> नवनाट आश्वचिपिटाश्च[3] बन्दिनः[4] ।
> अतिचिक्क[5] तेप्यचिकिना द्युवासिनो
> निबिडं ममाजिमवलोक्य भाविनः ॥ ३६ ॥

३६. अतिशयितं चिक्कं नासानतिरस्य यद्वातिशयेन चिक्को नासानतिमानतिचिक्कस्तत्संबोधनं हे अतिचिक्क । यद्वा हेतिनिन्द्य निबिडं ममाजिमवलोक्य स रणकौतुकी मुनिर्नारदो[3] भावी । कीदृक् । अनवभ्रटो[4] नासानतिरहितो[5]ऽनासानतिमान्वानिन्द्यो वा । हर्षेणोत्फुल्लनासिक इत्यर्थः । एवमग्रेपि योजना कार्या ॥

> अतिनिबिडतया तवात्र किं किं न्वतिनिबिरीसतयान्यदुर्जनानाम्[6] ।
> मम रणनिबिरीसताविचाराद्द्रुहिणसुतो भविता मुदश्रुचिल्लः ॥३७॥

३७. अत्राजिविषये तवातिनिबिडतयातिशयितं निबिडं नासानतिरस्य यद्वातिशयेन निबिडो नासानतिमानतिनिबिडस्तस्य भावेनारु[7]च्यात्यन्तं[8] नक्रमोटनेन किं न किंचिदित्यर्थः । अन्यदुर्जनानां त्वदितरखलानां वा[9]तिनिबिरीसतया नक्रमोटनेन किं नु । यस्मान्मम[10] रणनिबि-

१ सी अव°. २ ए °नोवन°. ३ बी °पिदाश्च. ४ सी °न्दिन । अ°. ५ बी °क्क तोप्य°.

१ बी सी °संकी°. २ ए °टीटा नासामति°. ३ बी सी °निनार°. ४ ए °भ्रष्टो मासा°. ५ बी नाशान°. ६ बी °नाशानाति°. सी °नाशान°. ७ सी °वेनरु°. ८ बी °त्यन्तन.° ९ ए वानि°. १० ए °न्मर°.

रीसताविचारात्संग्रामनीरन्ध्रताविमर्शाद्द्रुहिणसुतो नारदो भविता भविष्यति । कीदृक् । मुदश्रुचिल्लो हर्षनेत्राम्बुभिः क्लिन्नचक्षुरन्वितः[1] ॥ एतेनामात्यं निराकृत्य युद्धविधानमेव राज्ञा समर्थितम् ॥ औपच्छन्दसकम् ॥

**स मन्त्रिणं वार्धकचुल्लमेवमुत्कोपपिल्लस्तमुवाच यावत् ।**
**उपत्यकाधित्यकयोर्गिरीणां प्रतिध्वनंस्तावदभून्निनादः ॥३८॥**

३८. स आन्नो यावद्वार्धकचुल्लं वार्धक्येन गलन्नेत्रं तं मन्त्रिणमेवमुक्तनीत्योवाच । कीदृक्सन् । उदुल्लसितो मन्त्रिणं प्रति यः कोपस्तेन पिल्लो गलन्नेत्रः[2] । तावद्गिरीणामुपत्यकाधित्यकयोरधोभूम्यूर्ध्वभूम्योः[3] प्रतिध्वनन्निनादः कुमारपालसैन्यकलकलो[4]ऽभूत् ॥

विकट । इत्यत्र "कटः" [ १२४ ] इति कटः ॥

संकटे । प्रकट । उत्कट । निकटे । अत्र "संप्र०" [१२५] इत्यादिना कटः ॥

अवकुटार[5] । अवकट । इत्यत्र "अवात्०" [ १२६ ] इत्यादिना कुटारकटौ[6] ॥

नासानतौ । अवटीटिनम् । अवनाटः । अनवभ्रटः ॥ तद्वति । अवटीटं[7] । अनर्वनाटः । अनवभ्रटः[8] । अत्र "नासा०" [ १२७ ] इत्यादिना टीटनाटभ्रटाः ॥

अचिक्किनाः । अचिपिटाः । चिक्क । इत्यत्र "नेरिन०" [ १२८ ] इत्यादिना नेर्नासानतौ तद्वति चेनपिटकाः । नेर्यथासंख्यं चिक्[9]चिचिक इत्यादेशाः[10] ॥

नासानतौ तद्वति च । निबिड । निबिरीस ॥ नीरन्ध्रे[11] । निबिडम् । निबिरीसता । इत्यत्र "बिड०" [ १२९ ] इत्यादिना बिडबिरीसौ[12] ॥

---

१ बी °भूवन्निताव: । स.

---

१ ए क्लिनच°. २ ए °लनेत्र:. ३ ए °भूमूर्ध्व°. ४ सी °ललो°. ५ सी °टार: । अ°. ६ ए °रकौ । ना°. ७ बी °टीट: । अ.° ८ बी सी °वभ्र°. ९ बी सी चिकचि°. १० बी °देश: । ना°. ११ बी °रन्ध्य । नि°. १२ बी °रीशौ । चि°.

चिलः । पिलः । चुलम् । अत्र "क्लिन्नात्०" [ १३० ] इत्यादिना लः । क्लिन्नस्य च चिलपिलचुलादेशाः ॥

उपत्यकाधित्यकयोः । इत्येतौ "उपत्यका०" [ १३१ ] इत्यादिना निपात्यौ ॥

उपजातिः ॥

**अविकटाविपटैरिव जाङ्गलैः करटिगोष्ठनियोगिभिराकुलैः ।**
**तुरगपङ्गवसन्मयगोयुगाधिकृतिभिश्च विराविभिरेधि सः ॥ ३९ ॥**

३९. जाङ्गलैर्जङ्गलदेशोद्भवैर्नरैः स चौलुक्यसैन्यकलकल एधि वर्धितः । यत आकुलैर्द्विट्सैन्यनादश्रवणात्क्षुभितैः सद्भिर्विराविभिर्विरसं शब्दायमानैः । अविकटाविपटैरिव यथाविकटा ऊ(उ?)रणानां समूहा अविपटाश्चावीनां विस्ताराश्चाकुलाः सन्तो विरुवन्ति । किंभूतैः । करटिगोष्ठेषु हस्तिनां स्थानेषु नियोगिभिरायुक्तैस्तथा तुरगपङ्गवेष्वश्वपङ्गवेषु सन्मयगोयुगेषु शोभनोष्ट्रभेदानां द्वित्वेषु चाधिकृतिभिश्च ॥

अविकटाविपटैः । इत्यत्र "अवेः०" [१३२] इत्यादिना कटपटौ ॥

करटिगोष्ठ । इत्यत्र "पशुभ्यः०" [१३३] इत्यादिना गोष्ठः ॥

सन्मयगोयुग । इत्यत्र "द्वित्वे गोयुगः" [१३४] इति गोयुगः ॥

तुरगपङ्गव । इत्यत्र "षट्त्वे षङ्गवः" [१३५] इति षङ्गवः ॥ द्रुतविलम्बितं छन्दः ॥

**ढक्कानकशङ्खजोथ धीरैस्तिलतैलेङ्गुदतैलवद्व्यवेचि ।**
**रणकर्मठभैमिवीर्यशंसी स दिवा तारकितद्युवच्च भीदः ॥४०॥**

४०. स्पष्टम् । किं तु धीरैर्निर्भयभटैर्व्यवेचि । अयं ढक्काजोयं चा-

१ बी °येत्ति । र°. २ ए °भणि भीमत्री°.

१ ए बी क्लिनात्. २ सी °ना नः । क्लि°. ३ बी क्लिनस्य. ४ ए °लैर्द्वेट्सै°. ५ ए °णाक्षुभितैः सर्वि° ६ ए °भिर°. ७ बी पटोश्चा.° ८ सी °ष्ठे-त्यत्र पशुभ्यः. ९ ए °षु नि°. १० ए °षङ्गेषु. ११ ए षङ्गे ष°. १२ ए °वः । द्रु°. १३ ए चातजो°.

नकजोयं च शङ्खजो निनाद इत्यक्षुब्धचित्तत्वेन प्रथग्निर्णीतः। दिवा तारकितवुवद् दिने[१] संजाततारका द्यौर्महारिष्टसूचकत्वाद्यथा भीदा स्यादेवं[२] भीदः। औपच्छन्दसकम्[३]॥

सोश्रावि त्रासाद्वेगितैर्द्राग्यवौघा-
ल्लू(लूँ)त्वाप्युज्झद्भिर्गर्भितान्रज्जमात्रान्[१]।
गर्भः[२] संजातोस्याः प्रियाया हि योसौ
मा च्योष्टेत्यार्तैर्जाङ्गलैः कर्मकृद्भिः॥ ४१॥

४१. जाङ्गलैः कर्मकृद्भिः स निनाद[४]स्त्रासादश्रावि[५]। कीदृशैः सद्भिः। अस्याः प्रियाया भार्याजातेर्यो गर्भो गर्भजातिः संजातोसौ[६] मा च्योष्टेत[७]-द्रौद्रस्वरश्रवणोत्थभयातिरेकेण माधः पतदिति[८] हेतोरार्तैः सखेदैस्तथा वेगितैर्भयात्संजातवेगैरत एव यवौघाल्लू(लूँ)[९]त्वापि द्रागुज्झद्भिः। किंभूतान्। अपि गर्भितान्संजातगर्भान्फलितानित्यर्थः। तथा रज्जुस्तिर्यक्प्रमाणमेषां रज्जुमात्रास्तान्॥

तिलतैलेङ्गुदतैल। इत्यत्र "तिल०" [१३६] इत्यादिना तैलः॥

कर्मठ। इत्यत्र "तत्र०" [१३७] इत्यादिना ठः॥

तारकित[१०]। वेगितैः। अत्र "तदस्य०" [१३८] इत्यादिना इतः॥

गर्भितान् यवौघान्। इत्यत्र "गर्भादप्राणिनि" [१३९] इतीतः[११]॥ अप्राणिनीति किम्। गर्भः संजातोस्याः प्रियायाः॥

रज्जुमात्रान्। इत्यत्र "प्रमाणान्मात्रट्"[१४०] इति मात्रट्॥ वैश्वदेवी छन्दः[१२]॥

---

१ सी °घाल्लवाप्यु°. २ ए सी गर्ग सं°.

---

१ ए °दिनं सं°. सी °दिनमं°. २ ए °वं भेदः. ३ बी °म्। मौस्त्रावि°. ४ ए निनद°. ५ ए °दस्त्रावि. ६ ए °सौ मोच्योष्टौत°. बी सी° सौ सौ मा. ७ बी °ष्टैद्रौद्र°. ८ सी पतदि°. ९ ए °वौघल्ल°. १० ए ताराकि°. ११ बी इतः. १२ बी °न्दः। पोसखीभि°.

**पौरुषीमिव विलङ्घ्य हास्तिनीं हस्तिमात्रदृषदं नदीमथ ।**
**आगतोस्य कथितश्चुलुक्यराड्बन्दिभिः पुरुषमात्रफालदैः ॥ ४२ ॥**

४२. अथास्यान्नस्य चुलुक्यराडागतो बन्दिभिः कथितः । किं कृत्वा । नदीं पौरुषीमिव पुरुषे ऊर्ध्वमानं यस्यास्तामिव स्नाया(गाधा?)-मिव विलङ्घ्योल्लङ्घ्य । किंभूताम् । हस्त्यूर्ध्वमानं यस्यास्तां हास्तिनी-मस्नाया(गाधा?)मपीत्यर्थः । तथा हस्तिमात्रा दृषदः शिला यस्यां तां महाशिलाभिर्दुर्लङ्घ्यामपीत्यर्थः । यद्येवं तर्हि कथं व्यलङ्घितेत्याह । यतः पुरुषमात्रफालदैः शीघ्रं जिगमिषया पुरुषप्रमाणान्फालान्ददद्भिः ॥

हास्तिनीम् हस्तिमात्र । पौरुषीम् पुरुषमात्र । इत्यत्र "हस्ति०" [१४१] इत्यादिना वाण् ॥ रथोद्धता छन्दः ॥

**दोष्णेभहस्तद्वयसेन तालदघ्नं दधद्धस्तफलं च कुन्तम् ।**
**आन्नः पदन्यासविदीर्णहस्तमात्रावनिर्नागमथारुरोह ॥ ४३ ॥**

४३. स्पष्टम् । किं त्विभहस्तद्वयसेन हस्तिशुण्डाप्रमाणेन । तालदघ्नं तालवृक्षप्रमाणमतिप्रलम्बमित्यर्थः । हस्तफलं हस्तप्रमाणाग्रभागकं च । पदन्यासविदीर्णहस्तमात्रावनिः । अनेनास्यातिबलिष्ठत्वोक्तिरशकुनस्तथा च ॥ इन्द्रवज्रा छन्दः ॥

---

१ सी हस्तमा°. २ ए °दृष्विन्नदी°. ३ सी °तोथक°. ४ सी दोपेभ°.

---

१ सी °थान्न°. २ बी °पमूर्द्धमा°. ३ ए °व स्तांचागि°. सी °व वि°. ४ बी °स्नायाम°. ५ सी हस्तमात्र्यो दृ°. ६ बी °मात्र्यो दृ°. ७ बी °थं विल°. सी °थं विलंघ्यते°. ८ ए °ङ्घन्नेत्या°. ९ ए °णान्फलान्दद्भिः. बी °णान्फला°. १० ए °म् हास्ति°. ११ सी स्पष्टः । किं. १२ बी °स्तिसुण्डा°. १३ ए °लिष्ठः । त्वो°. १४ बी °स्तवा च.

राजानोस्येभैः शतमात्रैः शतयोधै-
रग्रेभूवन्द्राग्द्विवितस्त्यूर्जितकुम्भैः ।
बाणांश्चास्यन्षट्छतमात्रात्तधनुष्का-
स्त्रिंशन्मात्रान्विंशतिमात्रान्दशमात्रान् ॥ ४४ ॥

४४. अस्यान्नस्याग्रे द्राग्राजानोभूवन् । कैः सह । इभैर्गजैः । किंभूतैः । शतमात्रैः शतप्रमाणैस्तथा शताः शतप्रमाणा योधा येषु तैरनेकयोधशतान्वितैस्तथा द्वे वितस्ती मानमेषां द्विवितस्ती(स्ति?) मानमेषां स्यादिति वा द्विवितस्तयो वितस्तिद्वयमात्रमुच्छ्रिताः परिमण्डला वेत्यर्थः । ऊर्जिता बलिष्ठाः कुम्भाः कुम्भस्थलानि येषां तैस्तथास्याग्रे वर्तमानाः षट्छतानि मानमेषां स्यात्षट्छतमात्रा य आत्तधनुष्का धनुर्धरास्ते च बाणानास्यंश्चिक्षिपुः । कतिसंख्यान् । त्रिंशद्विंशतिश्च दश च मानमेषां स्यात्तांस्तथा ॥

तालदघ्नम् । इभहस्तद्वयसेन । हस्तमात्र । इत्यत्र "वोर्ध्वं०" [१४२] इत्यादिना वा दघ्नड्द्वयसटौ ॥ पक्षे मात्रट् ॥

हस्तफलम् । अत्र "मानाद्०" [१४३] इत्यादिना प्रस्तुतस्य मात्रडादेर्लुप् ॥ केचित्तु मानमात्रान्मात्रटं तस्यासंशये लुब्विकल्पं चेच्छन्ति । शतयोधैः । शतमात्रैः ॥

द्विवितस्ति । इत्यत्र "द्विगोः संशये च" [१४४] इति मात्रडादेर्लुप् ॥ अन्ये तु रूढप्रमाणान्तादेव द्विगोरिच्छन्ति । तन्मते षट्शतमात्र इत्यत्र मात्रटो न लुप् ॥

१ बी °वितिरफूर्जि°. २ ए °तस्यूर्जि°. ३ बी °श्चास्यान्षट्कत°. ४ ए °नुष्वास्त्रि°.

१ सी °तप्र°. २ ए सी °षां स्या°. ३ बी षट्शता. ४ बी °त्षट्शत°. ५ सी स्यात्तथा. ६ बी सी °यशटौ. ७ सी °तमा°. ८ बी °त्रैः । द्वयिस्ति. ९ ए °न्ति । दश्या°. १० सी °पू । त्रि°.

दशमात्रान्। त्रिंशन्मात्रान्। विंशतिमात्रान्। अत्र "स(श)न्०" [१४६] इत्यादिना डिनोपवादो मात्रट् ॥ मत्तमयूरं छन्दः ॥

दश्याननो विंशिभुजो नु राक्षसो जेतुं त्रयस्त्रिंशिन उद्यतः सुरान्।
आत्तोप्यधिज्यं रभसाद्धनुर्व्यधादियत्कियन्मेरिबलं ब्रुवन्निति ४५

४५. आत्तोपि रभसाद्युद्धातिरसेन धनुरधिज्यं व्यधात्। दशीनि दशसंख्यान्याननानि यस्य तथा विंशिनो विंशतिपरिमाणा भुजा यस्य स विंशिभुजो राक्षसो रावणो यथा रभसादधिज्यं धनुर्व्यधात्। कीदृक्सन्। त्रयस्त्रिंशन्मानमेषां त्रयस्त्रिंशिनः सुरान् ध्रुव १ धर २ सोम ३ विष्णु ४ अनिल ५ अनल ६ प्रत्यूष ७ प्रभासा ८ ख्यानष्टौ वसून् प्रागुक्तनामकानेकादश रुद्रान् द्वादशार्कांश्च नासत्यौ च ३३ जेतुमुद्यतः। शिष्टं स्पष्टम् ॥

दशि। त्रयस्त्रिंशिनः। विंशि। इत्यत्र "डिन्" [१४७] इति डिन् ॥

इयत्। कियत्। इत्यत्र "इदं०" [ १४८ ] इत्यादिनातुरिदंकिमोरियिकियौ च ॥ इन्द्रवंशावंशस्थयोरुपजातिः ॥

आस्यन्यावन्तोरिवीरा यतीपूंस्तावन्तोमी गूर्जरास्तत्यपि द्राक्।
एतावन्तः कत्यहो सप्ततय्यामब्धीनां नः सैन्य इत्यालपन्तः ४६

४६. पूर्वार्धं स्पष्टम्। किंभूता द्वयेपि। अहो इत्यक्षान्तौ। नोस्माकं सैन्य एतावन्त एतत्संख्या अरयः कति कियन्तो न कियन्तोपीत्यर्थः। यतः। किंभूते सैन्ये। अब्धीनां सप्तावयवा यस्याः संहतेस्तस्यां सप्ततय्यामसंख्यत्वेनाब्धिसप्तकतुल्य इत्यर्थः ॥

१ ए °न्। अत्तो°. २ बी °माधनु°. ३ ए बी °ति। अत्तो°. ४ बी °रिवारा. ५ ए सी °तीपूस्ता°. ६ बी °वतोमी. ७ ए एतव°. ८ बी °तय्यामर्ब्धीनां. ९ बी सैन्यं इ°.

१ सी °न्। दशमात्रान्। अ°. २ बी °सायुद्धा°. ३ बी दशानि. ४ सी °स्य सः त°. ५ बी धधर. ६ बी °नामाने°. ७ सी °त्यौ जे°. ८ बी एतान्संख्या. ९ ए °वा तय°. सी °वास्या संगते°. १० बी °तय्यामसंख्यना°.

यावन्तः । तावन्तः । एतावन्तः । अत्र "यत्तद्०" [१४९] इत्यादिना डावादिरतुः ॥

यति । तति । कति । इत्यत्र "यत्तद्०" [१५०] इत्यादिना डतिः ॥

सप्ततय्याम् । अत्र "अवयवात्तयट्" [१५१] इति तयट् ॥ शालिनी छन्दः ॥

द्वितयं द्वयेन त्रितयं त्रयेण युयुधे भटानामभिलाषुकाणाम् ।
द्विमयं स्वजीवं यशसः परस्य द्विमयं स्वजीवस्य यशस्तु नैव ॥४७॥

४७. पूर्वार्धं स्पष्टम् । कीदृशानां भटानाम् । परस्य शत्रुसंबन्धिनो यशसो द्वौ गुणौ क्रेयावस्य स्वजीवस्य तद्द्विमयं स्वजीवं स्वजीवितव्यमभिलाषुकाणामिच्छतां तथा स्वजीवस्य संबन्धिनौ द्वौ गुणौ मूल्यमस्य यशसः क्रयस्य तत्परस्य शत्रोः संबन्धि यशस्तु नैवाभिलाषुकाणाम् । स्वकीयानामल्पविनाशेन परेषां च द्विगुणं विनाशेन यत्स्वस्य द्विगुणं यशः स्यात्तदिच्छतां यत्तु स्वकीयानां द्विगुणं विनाशे परेषां चाल्पविनाशे स्वस्यैकगुणं यशः स्यात्तन्नेच्छतां चेत्यर्थः ॥ केकिरवं छन्दः ॥

द्विमयं तनोर्मूल्यमधीशवित्तं
भवतात्तमित्यालपतो भटस्य ।
सुभटे शिरश्छिन्दति तस्य रायो
द्विमयं वपुः क्रेयममंस्त भर्ता ॥ ४८ ॥

४८. भर्ता सुभटस्वामी तस्यारिशिरश्छेदकस्य स्वसुभटस्य वपुरमंस्ताज्ञासीत् । कीदृशम् । द्वौ गुणावस्य क्रेयभूतस्य वपुषस्तद् द्विमयं द्विगुणं रायो द्रव्यस्य क्रेयं क्रेतव्यम् । क सति । सुभटे । किंभूते । भटस्यारिवीरस्य शिरश्छिन्दति । यतः । किंभूतस्य । आलपतो वदतः ।

१ ए °यं ये°. २ सी °स्य । रा°.

१ ए °न्तः । ए°. २ ए इति । स°. ३ सी °गुणवि°. ४ सी यत् स्या°. ५ ए °स्य ल°.

किमित्याह । हे सुभट भवता तनोरङ्गस्य मूल्यं मूल्यभूतमधीशवित्तं स्वामिद्रव्यं द्वौ गुणावस्य मूल्यभूतस्याधीशवित्तस्य द्विमयं द्विगुणमात्रं स्वपराक्रमस्य मानेन द्विगुणं स्वामिद्रव्यं त्वया गृहीतमास्त इत्यर्थः । तस्मात्तस्याधिकस्य द्रव्यस्य कार्ये युद्धिशेषं दर्शयेत्यर्थाद्गम्यत इति । एवं वदतो महारेः शिरश्छेदरूपेणावदातेनातिरञ्जितत्वादेतत्पराक्रमापेक्षया मयातिस्वल्पमेव दत्तमिति स्वाम्यज्ञासीदित्यर्थः ॥

द्वयेन द्वितयम् । त्रयेण त्रितयम् । अत्र "द्वि०" [१५२] इत्यादिना वायट् ॥

द्विमयं यशः स्वजीवस्य । द्विमयं स्वजीवं यशसः । द्वितीयार्थव्याख्याने । द्विमयमधीशवित्तं तनोर्मूल्यम् । द्विमयं वपू रायः क्रेयम् । अत्र "द्यादेर्०" [१५३] इत्यादिना मयट् ॥

एकादशं त्रिंशमथैकविंशं शतं सहस्रं कनकस्य लब्धा ।
एकादशो रुद्र इवारिमौलिं भर्त्रे ददन्निष्क्रयमाप कोपि ॥ ४९ ॥

४९. कोपि भटो निष्क्रयं कनकलाभस्यानृण्यमाप । कीदृक् । कनकस्य शतं सहस्रं च लब्धा लभमानोपि । किंभूतम् । एकादश त्रिंशदेकविंशतिर्वाधिकास्मिञ् शते सहस्रे वा तदेकादशं त्रिंशमथाथ वैकविंशम् । ईदृग्महादानस्यापि निष्क्रयं कथमापेत्याह । यतोरिमौलिं भर्त्रे ददत् । ईदृशोपि कुत इत्याह । यत एकादशानां पूरण एकादशो रुद्रः पिनाक्याख्यस्तत्तुल्यो महावीर्यत्वात् । रुद्रोपि हि देवत्वापू(त्पू)-जार्थं भक्तेभ्यः कनकस्य शतं सहस्रं वा लब्धा स्यात् ॥

---

१ प °रिमैलिर्भर्त्रे. २ सी °पि ॥ किंभू°.

---

१ प °ण वदतो. २ सी °क्रमास्य. ३ बी °मस्यामा°. ४ प °र्ये बुद्धिशे. ५ प मति°. ६ प °यधी°. ७ सी °म् । कीदृ°. ८ सी °माप्येत्या°. ९ बी सी °नाकाख्य°. १० प °क्यास्त°. ११ सी °पि देवतापू°.

एकविंशम् । त्रिंशम् । एकादशं शतं सहस्रं वा । इत्यत्र "अधिकं०" [१५४] इत्यादिना डः ॥

एकादशः । अत्र "संख्या०" [१५५] इत्यादिना डट् ॥ उपजातिः ॥

त्रिंश्यस्य विंशतितमस्य युदेकविंशी
त्रिंशत्तमस्य च सहस्रतमस्य चास्य ।
अर्वाक्तिथेः शततमीयमु मासतस्या(म्या)
भर्त्रेति केपि कथिता द्विगुणीबभूवुः ॥ ५० ॥

५०. केपि भटा द्विगुणीबभूवुर्हर्षेणोच्छ्वसिताः । यतो भर्त्रा कथिताः प्रशंसिताः । कथमित्याह । विंशतितमस्य विंशतेर्भटानां पूरणस्य विंशतिभटस्वामिन इत्यर्थः । अस्य प्रत्यक्षस्य महाभटस्येयं प्रत्यक्षा युद्रणं त्रिंशी त्रिंशतो युधां पूरणी । तथा त्रिंशत्तमस्य त्रिंशतो भटानां पूरणस्यास्य च महाभटस्येयं युदेकविंश्येकविंशतेर्युधां पूरणी । तथा उ अहो सहस्रतमस्य सहस्रस्य भटानां पूरणस्यास्य च भटराजस्य मासतम्या मासपूरण्यास्तिथेरर्वाग्मासमध्य इत्यर्थः । इयं युच्छततमीति ॥ वसन्ततिलका ॥

संवत्सरतम्यर्धमासतम्योस्तिथ्योरिव पर्वाहवं विजानन् ।
युयुधेशीतितमोऽब्दकोपि कश्चित्षष्टितमाब्दमहेभवन्महौजाः ॥ ५१ ॥

५१. कश्चिद्भटोशीतितमोशीतेः पूरणोब्दो वर्षं यस्य स तथातिवृद्धोपि युयुधे । किंवत् । षष्टितमः षष्टेः पूरणोब्दो वर्षं यस्य सोतितरुण इत्यर्थः । स चासौ महेभश्च तद्वत् । यतः कीदृक् । संवत्सरस्य

१ बी °ति कोपि. २ सी °वुः ॥ हर्षे°. ३ बी °स्तिथोरि°. ४ सी °मा. ब्दिको°. ५ प °हौजः । क°.

१ प °नाडः । उ°. २ सी °शति.° ३ सी °था उ अहो. ४ प °विशेयु°. ५ बी °हस्रत°. ६ सी °स्रभ°. ७ सी °स्य भ°. ८ बी °तस्या मा°. ९ प °णोशब्दो-

पूरणी संवत्सरतम्यक्षयतृतीयादिस्तथार्धमासस्य पूरण्यर्धमासतम्यमावास्या पूर्णिमा वा । द्वन्द्वे तयोस्तिथ्योर्यत्पर्व हर्षक्रियारूप उत्सवस्तदिवाहवं विजानन् । ईदृशोपि कुत इत्याह । यतो महौजाः शौर्यातिरेकेणोत्सवमिव रणं प्राप्यापि[2] हृष्यन्नित्यर्थः ॥ औपच्छन्दसकापरान्तिका छन्दः ॥

एकषष्ट इव कोपि[1] कौरवः कोपि पञ्चम इवाथ पाण्डवः ।
युन्मुदं बहुतिथाद्दिनादवापैकषष्टितमहायनोपि हि ॥ ५२ ॥

५२. कोपि भटो हि स्फुटमेकषष्टितमहायनोप्येकषष्टिपूरणवर्षोपि[3] कथमप्येकषष्टिवर्षमध्ये युद्धाप्राप्त्या[4] बहुतिथाद्[5]बहूनां[6] दिनानां पूरणाद्दिना[7]च्चिरकालादित्यर्थः । युन्मुदं रणहर्षमवाप । यथैकषष्ट एकषष्टेः पूरणः कौरवः सेनान्याख्यो[8] बहुतिथाद्दिनाद्युन्मुदमवाप । अथ तथा[9] यथा पञ्चमः पाण्डवः सहदेवो बहुतिथाद्दिनाद्युन्मुदमवापैवं[10] कोप्यपरोपि भटः । किल सेनानीः सहदेवश्च कुरुपाण्डवयुद्धे[11] युन्मुदमवापतुस्तच्च[12] युद्धं पाण्डवानां कुरूणां च सर्वेषामपि षष्टितमवर्षानन्तरमेव[13] मिथो बभूवेति भारतम् ॥ रथोद्धता ॥

गणतिथैरिह संघतिथा[3] भटैरमरपूगतिथत्वमयुर्हताः[4] ।
विरहितेयतिथैः कतिथैश्चमूरिति न किंचिदबुध्यत तत्र तु ॥५३॥

५३. इह रणे संघतिथाः संघानां बहूनां पूरणा भटा[14] अयुः प्रापुः । किम् । अमरपूगतिथत्वं पूगानां बहूनां पूरणः पूगतिथोमराणां पूगति-

१ ए सी °पि कोर°. २ बी °नादिवा°. ३ ए °तितथा. ४ ए °र्हतः । वि°.

१ ए °स्तद्दिवा°. २ बी °प्यातिह°. ३ सी °रणो व°. ४ बी युद्धप्रा°. ५ बी °तिथ्याद्ब°. ६ ए °थाबहू°. ७ ए सी °णादिना°. ८ सी °न्याख्ये ब°. ९ सी °था प°. १० सी °तिम°. ११ ए °रुवपा°. १२ ए °द्धेन्मु°. १३ बी °तव°. १४ बी °टा आयुः.

थोमरपूगतिथस्तद्भावं[1] देवत्वमित्यर्थः । कीदृशाः सन्तः । गणतिथैर्गणानां बहूनां पूरणैर्भटैर्हताः । तत्र तु रणे कतिथैः कतीनां पूरणैर्भटैश्चमूर्विरहितेति प्रश्ने । इयतिथैरियतां पूरणैर्विरहितेतीदं[2] न किंचिदबुध्यत सैन्यानामतिबहुत्वान्न किमपि ज्ञातम् ॥ द्रुतविलम्बितम्[3] ॥

**बलकतिपयथः कोपि दोर्द्वितीयस्तूणतृतीयः सद्धनुश्चतुर्थः ।**
**पष्ठं तुर्यं विद्विषं नृपस्य घ्नंश्चक्रे भर्त्रात्मनस्तुरीयः ॥ ५४ ॥**

५४. कोपि भटो भर्त्रा नृपेणात्मनस्तुरीयश्चतुर्थश्चक्रे[4]तिमान्यत्वादात्मनश्चतुर्थस्थाने कृत इत्यर्थः । यतो नृपस्यारिभूपस्य तुर्यं षष्ठं च चतुर्थस्थानीयं[5] षष्ठस्थानीयं च विद्विषं घ्नन् । कीदृक्सन् । दोषौ बाहू[6] द्वितीयौ यस्य सः । तथात्म[7]भुजापेक्षया तूणौ तृतीयौ यस्य सः । तथात्मभुजतूणापेक्षया सद्धनुश्चतुर्थं यस्य सः । तात्पर्येणैकाकीत्यर्थः । एकाकी चेत्कथमसौ तादृशौ द्विपावहन्नित्याह । यतो बलकतिपयथो बलेन कतिपयानां स्तोकानां पूरणो बलेन कियन्तोपि तादृशा इत्यर्थः ॥

विंशतितमस्य । एकविंशी । त्रिंशत्तमस्य । त्रिंशी[8] । इत्यत्र "विंशति०" [१५६] आदिना वा तमट् ॥

शततमी । सहस्रतमस्य[9] । मासतम्याः । अर्धमासतम्योः । संवत्सरतमी । इत्यत्र "शतादि०" [१५७] इत्यादिना तमट् ॥

षष्टितम । अशीतितम । इत्यत्र "षष्ट्यादेर०" [१५८] इत्यादिना तमट् ॥ असंख्यादेरिति किम् । एकषष्टितम[10] । एकषष्टः ॥

पञ्चमः । अत्र "नो मट्" [१५९] इति मट् ॥

---

१ सी °स्तद्भवं. २ ए °दं ना किं°. ३ सी °म्बि । ब°. ४ बी °र्थकश्च°. ५ सी °र्थं च. ६ बी बाहौ द्वि°. ७ सी °त्मनो भु°. ८ बी त्रिंशतील°. ९ बी हस्रत°. १० सी °तमः । ए°.

बहुतिथात्। गणतिथैः। पूगतिथत्व[म्]। संघतिथाः। इत्यत्र "पित्तिथट्०" [१६०] इत्यादिना पित्तिथट्[1] ॥

इयतिथैः। अत्र "अतोरिथट्" [१६१] इतीथट् ॥

षष्ठम्। कतिथैः। कतिपयथः। अत्र "षट्कति०" [१६२] इत्यादिना थट् ॥

चतुर्थः। अत्र "चतुरः" [१६३] इति थट् ॥

तुर्यम्। तुरीयः। अत्र "येयौ चलुक्च" [१६४] इति येयौ चस्य लुक्च ॥

द्वितीयः। अत्र "द्वेस्तीयः" [१६५] इति तीयः ॥

तृतीयः। इत्यत्र "त्रेस्तृ च" [१६६] इति तीयस्त्रेश्च तृ ॥ औपच्छन्दसकापरान्तिका ॥

**कीर्त्या पूर्वी संदृष्टपूर्व्यद्य चाहं साध्विष्ट्याम्नाती युद्धयज्ञेसि वीर।**
**इत्युक्त्या कोप्यामोदयद्घातमूढं द्राक्छत्रुं यद्वच्छ्राद्धिकं श्राद्धिभक्तः**
**॥ ५५ ॥**

५५. कोपि भटो घातमूढं शत्रुं द्रागामोदयदाह्लादयत्। कया। उक्त्या प्रशंसावचनेन। कथमित्याह। हे वीरासि त्वं युद्धमेव स्वर्गहेतुत्वाद्यज्ञस्तत्र विषय आम्नातमभ्यस्तमनेनाम्नाती निपुणोसीत्यर्थः। अत एव साधु सुभटोचितं यथा स्यादेवं युद्धयज्ञ इष्टमनेकारिभटाहुतिभिर्यजनं येन स इष्ट्यसि। अत एव चाहं त्वां कीर्त्या कृत्वा पूर्वं दृष्टोनेन पूर्व्यतिविक्रान्तं त्वां पूर्वं श्रुतवानस्मीत्यर्थः। अद्य चाधुना त्वहं त्वां संदृष्टपूर्वी युद्धेन सम्यक्साक्षात्कारेण त्वां विक्रान्तं दृष्टवानित्यर्थ इति। यद्वद्यथा श्राद्धिभक्तः श्राद्धं पितृदैवत्यं कर्म। उपचारात्त-

१ ए °पूर्वंच. २ सी श्राद्ध°.

१ बी °त्तिथिट्. २ ए सी °त्तिथिट्. ३ ए °श्च तुः। औ°. ४ ए °त्य-थोऽस्यथ सा°. ५ बी युद्धं य°. ६ सी श्राद्धभ°.

दुपकरणमोदनाद्यपि श्राद्धं तद्भुक्तमद्यानेन श्राद्धी द्विजस्तत्र भक्तो यजमानः श्राद्धिकं श्राद्धे[1] भुक्तं द्विजमामोदयति। कया। हे द्विजासि यज्ञे साध्वाम्नातीष्टी चात एवाहं त्वां कीर्त्या पूर्व्येद्य च संदृष्ट[2]पूर्वीत्युक्त्या॥

पूर्वी॥ सादेः। संदृष्टपूर्वी। इत्यत्र "पूर्वम्[3]०" [१६७] इत्यादिनेन्॥

इष्टी। आम्नाती। इत्यत्र "इष्टादे[4]ः" [१६८] इतीन्॥

श्राद्धिकम्। श्राद्धि[न्]। इत्यत्र "श्राद्धमद्य०" [१६९] इत्यादिनेकेनौ॥

वैश्वदेवी छन्दः॥

अभूद्द्विषो[1]न्योनुपदीति संगृणं[5]स्त्वां चेन्न दाण्डाजिनिकाद्य हन्म्यहम्।
गृह्येय दण्डाजिनिकौघपार्श्वकायःशूलिकक्षेत्रियपातकैस्तदा॥५६॥

५६. अन्यो भटो द्विषोरेरनुपद्यनुपदं पदस्य पश्चात्पदस्य समीपं वान्वेष्टाभून्नश्यतो द्विषः पृष्ठे लग्न इत्यर्थः। कीदृक्सन्। संगृणन्प्रतिजानानः। किमित्याह। रे दाण्डाजिनिक दण्डाजिनं दम्भस्तेनान्वेष्टश्छलप्रहारित्वाद्दाम्भिक चेत्त्वामद्य न हन्मि तदाहं गृह्येयं[6] गृहीतः[7] स्याम्। कैः। दण्डाजिनिकौघो दाम्भिकसमूहस्तथा पार्श्वमनृजुरुपायो लञ्चादिस्तेर्नान्वेष्टा[8] पार्श्वक[9]स्तथायःशूलसाम्यादयःशूलं तीक्ष्णोपायस्तेनान्वेष्टा[10] आयःशूलिकोयःशूलिको[11] वा राभसिकस्तथान्यस्मिन्क्षेत्रे नाश्यः क्षेत्रियः पारदारिकः। स[12] हि स्वक्षेत्रादन्यस्मिन्क्षेत्रे परदारेषु वर्तमानस्तत्र नाश्यो निग्राह्यः स्याद्द्वन्द्वे एषां महापापिष्ठानां यानि पातकानि पापानि तैः। एतत्पापानि मम स्युरित्यर्थ इति॥

---

१ सी अत्र द्विपो°.

---

१ ए °द्धे भक्तं. २ बी संसष्ट°. ३ ए पूर्वाम्. ४ ए इष्टयादेः. ५ सी °गृहण°. ६ ए °ह्येयं गृहीत स्या°. ७ सी गृह्णीयाम्। कै द°. ८ बी सी °नान्विष्टा. ९ सी पार्श्विक°. १० बी °नान्विष्टा. ११ ए सी °को वा. १२ ए स ह स्व°.

अनुपदी । इति "अनुपद्यन्वेष्टा" [१७०] इति निपात्यम्[1] ॥

दाण्डाजिनिक[2] । आयःशूलिक[3] । पार्श्वक । इत्येते "दाण्डाजिनिक०" [१७१] इत्यादिना निपात्याः ॥ केचिद्दण्डाजिनायःशूलाभ्यामिकमेवाहुस्तन्मते दण्डाजिनिक[4] । अयःशूलिकेति ॥

क्षेत्रिय । इत्यत्र "क्षेत्रे०" [१७२] "इत्यादिनेयः ॥ वंशस्थेन्द्रवंशयोरुपजातिः ॥

द्रा[1]क्छ्रोत्रियैश्छान्दसव[2]र्जि(र्ज्जि)तेन्द्रियै-
र्धनुश्चणः कार्मुकच[3]ञ्चुना[5]मिलत् ।
द्विकं द्विकस्याशु तृतीयकं नु तत्
स्व[4]स्यास्त्रवेदग्रहणं प्रदर्शयन् ॥ ५७ ॥

५७. धनुश्चणो धनुषा वित्तो महाधनुर्धरजातिः । कार्मुकचु[5]ञ्चुना कार्मुके[6]ण वित्तेन सह द्रागमिलत् । कीदृक्सन् । द्विकस्य द्वितीयेन रूपेणास्त्रवेदग्रन्थग्राहकस्य स्वस्यात्मनो यद्द्विकं द्वितीयमस्त्रवेदग्रहणं धनुर्वेदाभ्या[7]सस्तत्तृतीयकं[8] नु तृतीयमिव प्रदर्शयन्[9] । द्विवारमभ्यस्तधनुर्विद्योप्युत्कृष्टधनुःकलाप्रकटनात्त्रिवारमभ्यस्तधनुर्विद्यो[10]ऽहमिति[11] लोकाञ्ज्ञापये[12]न्नित्यर्थः । यथा जितेन्द्रियैः श्रोत्रियैर्वेदमधीयानैर्द्विजैः सह छान्दसा वैदिकाः समानगुणत्वेन मिलन्ति ॥

श्रोत्रियैः । अत्र "छन्द०" [१७३] इत्यादिना-इयो[13] वा तत्संनियोगे च छन्दसः श्रोत्रभावः ॥ पक्षेण् । छान्[14]दस ॥

१ सी द्राक्श्रोत्रि°. २ बी सी °वर्जिते°. ३ बी सी °कचञ्चु°. ४ सी °स्वशास्त्र°. ५ ए °यत् ॥ ध°.

१ बी °म् । दण्डा°. २ ए बी °निकः आ°. ३ ए °लिकः । पा°. ४ ए °निकैः । अ°. ५ बी सी °कचञ्चु°. ६ ए °केन वि°. ७ ए °कस्या° ८ सी °सस्तृती°. ९ बी °र्शदय°. १० बी °नुविद्यो° ११ बी सी °द्योयमि°. १२ सी °यदित्य°. १३ सी °यो त°. १४ बी °न्दसः । इ°.

इन्द्रियैः। इति[1] "इन्द्रियम्" [१७४] इत्यनेन निपात्यम्॥

कार्मुक[2]चुञ्चुना। धनुश्चणः। अत्र "तेन०" [१७५] इत्यादिना[3] चुञ्चुचणौ॥

द्विकस्य। इत्यत्र[4] "पूरणाद्[5]०" [१७६] इत्यादिना कः पूरणप्रत्ययस्य लुक् च॥

द्विकं तृतीयक[6]मस्त्रवेदग्रहणम्। अत्र "ग्रहणाद्[7]वा" [१७७] इति कः पूरणस्य वा लुक्॥

**यत्सस्यकासीनसहन्त वीरा हिरण्यको नो धनकश्च हेतुः।**
**किं त्वत्र[1] दन्तौष्ठककेशकस्वःस्त्रीकामनानौदरिकोचिताभूत्॥५८॥**

५८. सस्यकासीन् सस्यशब्दोत्र गुणवचनः। सस्येन परिजाताः सस्यकाः सर्वतः सारेण संबद्धा येसयस्तान् यद्वीरा असहन्त। अत्र सस्यकासिसहनविषये हिरण्यको[9] हिरण्ये स्वर्णे कामो नो हेतुर्नापि धनकश्च धनाभिलाषश्च हेतुः। किं त्वत्र दन्तौष्ठकाः केशकाश्च दन्तौ[10]-ष्ठस्य केशानां च रचनायां प्रसक्ता[11] इत्यर्थः। याः स्वःस्त्रियो देव्यस्तासां कामना वाञ्छा हेतुः। किंभूता। अनौद[12]रिकोचितानौदरिकाणामुदरे[13]सक्तानां विजिगीषूणामुचिता योग्या॥

सस्यक। इत्यत्र "सस्याद्०" [१७८] इत्यादिना[14] कः॥

धनकः। हिरण्यकः। अत्र "धन०" [१७९] इत्यादिना कः॥

केशक। इत्यत्र "स्वाङ्गेषु[15] सक्ते" [१८०] इति कः। बहुवचनात्स्वाङ्गसमुदायादपि। दन्तौष्ठक[16]॥

अनौदरिक। इत्यत्र "उदरे[17] तु०" [१८१] इत्यादिनेकण्[18]॥ उपजातिः॥

---

१ ए °दन्तोष्वक°.

---

१ बी इत इ°. २ बी सी °कचञ्चु°. ३ बी सी °ना चञ्चु°. ४ बी सी °त्यस्य पू°. ५ सी °रणेत्या°. ६ ए °यम°. ७ सी °णाद इ°. ८ ए °रणाको. ९ सी °ण्यस्व°. १० ए दन्तोष्ठ°. ११ बी सी प्रशक्ता. १२ सी °रिका°. १३ सी °रेशक्ता°. १४ ए °ना क ध°. १५ सी °पु शक्ते. १६ बी °ष्ठकः। अ°. १७ सी °रे इ°. १८ सी °ण्॥ अ°.

**अप्युष्णिकां तन्त्रकवस्त्रखण्डलं वा शीतकः किं लभतेंशकोपि हि ।**
**इत्युष्णकैर्ब्राह्मणकोद्भवैर्बलेधिकैर्भृशं कीर्त्यनुकैर्विचक्रमे ॥ ५९ ॥**

५९. ब्राह्मणकोद्भवैः सदाचारब्राह्मणेभ्यस्तदानीमेवोद्धृत्य पृथक्कृतो ब्राह्मणको देशो यत्रायुधजीविनः काण्डस्पृष्टा नाम ब्राह्मणा भवन्ति । आयुधजीवी ब्राह्मण एव ब्राह्मणक इत्यन्ये । तत्रोद्भवैर्भटैर्विचक्रमे विक्रमः कृतः । किंभूतैः । उष्णकैरुष्णं क्षिप्रं कुर्वद्भिर्दक्षैरित्यर्थः । तथा बले सामर्थ्येधिकैरध्यारूढैस्तथा कीर्त्यनुकैः कीर्तिकामयमानैः । कुतो विचक्रमे । इति हेतोः । तमेवाह । हि यस्मादंशं हार्यंशकोपि दायादोपि शीतं मन्दं करोति शीतकोलसः सन् किं लभते नैवेत्यर्थः । किमित्याह । उष्णादचिरोद्धृतोष्णिका तामप्यास्तामन्यद्यवागूमपि । यद्वा तन्त्रात्तन्तुवायोपकरणादचिरोद्धृतं तन्त्रकं यद्वस्त्रं तस्य यत्खण्डलं खण्डं तदपीति ॥

अंशकः । अत्र "अंशं हारिणि" [१८२] इति कः ॥

तन्त्रक । इत्यत्र "तन्त्रादृ०" [१८३] इत्यादिना कः ॥

ब्राह्मणक । इत्यत्र "ब्राह्मणान्नाम्नि" [१८४] इति कः ॥

उष्णिकाम् । अत्र "उष्णात्" [१८५] इति कः ॥

शीतकः । उष्णकैः । अत्र "शीताच्च कारिणि" [१८६] इति कः ॥

अधिकैः । अत्र "अधेरारूढे" [१८७] इति कः ॥

अनुकैः । अत्र "अनोः कमितरि" [ १८८ ] इति कः ॥ इन्द्रवंशावंशस्थयोरुपजातिः ॥

---

१ **सी** वा मीत°. २ **ए** °त्युष्णुकै°.

---

१ **ए** °वोप्र°. २ **सी** देशे य°. ३ **सी** °मर्थ्याधि°. ४ **बी** स किं. ५ **सी** °णादिचि°. ६ **ए** °त्रादिना. ७ **बी** °ष्णिकम्.

एषोभिकः शृङ्खलकावतीर्णो
ममास्तु योद्धा जिनदत्तकान्यः ।
ममोत्सुकायास्त्वयमाहवोत्को-
भीकोस्त्वति व्याह्रियताप्सरोभिः ॥ ६० ॥

६०. अप्सरोभिर्व्याह्रियतोक्तम्। किमित्याह। एष योद्धा ममाभिको भर्तास्तु। कीदृक्। शृङ्खलं बन्धनमस्य शृङ्खलकः करभस्तस्माद्युद्धार्थमवतीर्ण इति। तथा मम तु मम पुनरुत्सुकाया उत्कण्ठिताया अयमाहवोत्को युद्ध उन्मना योद्धाभीको[1] भर्तास्तु। कीदृक्। जिनदत्तकान्यो जिनदत्तो मुख्योस्य[2] जिनदत्तकः संघस्तस्मादन्य इति च। देवीभिर्भटा इत्थं वृता इत्यर्थः॥

अभिकः अभीकः। अत्र "अभेरीश्च[3] वा" [१८९] इति क ईश्चास्य वा॥

जिनदत्तक। इत्यत्र "सोस्य[4] मुख्यः" [१९०] इति कः॥

शृङ्खलक। इत्ययं "शृङ्खलकः करभे" [१९१] इति निपात्यः॥

उत्कः। उत्सुकायाः[6]। अत्र "उदुत्सोरुन्मनसि[7]" [१९२] इति कः॥

उपजातिः॥

तेजोभिरुष्णकतृतीयककाशपुष्प-
कान्नु ज्वरानसुहृदां दिशता क्षणेन ।
कौल्मास(ष्य?)थ त्रिपुटिका वटकिन्यमानि[1]
केनापि सिद्धसुरसाक्षिरणस्य लीला ॥ ६१ ॥

६१. केनापि भटेन सिद्धा विद्यासिद्धादयः सुराश्च देवाः साक्षिणः कौतुकायातत्वात्साक्षाद्द्रष्टारो यस्य तद्रणं[8] तस्य लीला केलि-

१ ए बी वटिकि°.

१ सी योर्भी°. २ बी °ख्योख्य जि°. ३ सी °श्च श्चा इ°. ४ सी सो मु°. ५ ए °त्यत्र शृ°. ६ ए उन्मुका°. ७ ए उदुत्सो°. ८ बी °सद्रणं.

रमानि ज्ञाता । कीदृशी । हर्षहेतुत्वात्कुल्मासास्त्रिपुटाश्च धान्यभेदा[1] वटकानि च[2] प्रायेण प्रायो वान्नान्यस्य पौर्णमास्यां[3] कौल्मासी त्रिपुटिका[4] वा वटकिनी वोत्सवविशेषा इव । कीदृशा सता । तेजोभिः प्रतापैः कृत्वा क्षणेनासुहृदां शत्रूणां[5] ज्वरानिवातिसंतापकत्वाद्दिशता ददता । किंभूतान् । उष्णं फलं कार्यमस्योष्णकस्[6]तथा तृतीयो दिवसोस्याविर्भावाय तृतीयकस्तथा काशपुष्पं हेतुरस्य काशपुष्पको द्वन्द्वे तान् ॥

तृतीयक[7] । काशपुष्पकान्[8] । उष्णक । इत्यत्र "काल०" [१९३] इत्यादिना कः ॥

त्रिपुटिका[9] । इत्यत्र "प्रायः०" [१९४] इत्यादिना कः ॥

कौल्मासी(षी?) । इत्यत्र "कुल्मासा[10](षा?)दण्" [१९५] इत्यण् ॥

वटकिनी । इत्यत्र "वटकादिन्" [१९६] इतीन् ॥

साक्षि । इत्यत्र "साक्षा[11]द्द्रष्टा" [१९७] इतीन् ॥ वसन्ततिलका छन्दः ॥

पञ्चविंशः पादः[12] ॥

**कुमारिकस्येव जनः कुमारीमान्साधु नौमानिव नाविकस्य ।**
**जानन्प्रहारैः पततां रुजं कोप्याज्यब्धिनावी न पुनः प्रजह्रे ॥६२॥**

६२. आज्यब्धौ रणाम्बुधौ[13] नावी नौमान्दुर्विगाहं रणमवगाहमानः सन्नित्यर्थः । कोपि भटः प्रहारैः पततां भटानां पुनर्न[14] प्रजह्रे । यतस्तेषां रुजं पीडां क्षत्रियोत्तमत्वात्साधु जानन् । यथा[15] कुमारीमाननेककन्यान्वितो जनः कुमारिकस्यानेककन्यावतो जनस्य विवाहादिचिन्ताकृतां रुजं साधु जानाति । यथा वा नौमाननेकवेडान्वितो जनो नाविकस्यानेक[16]वेडावतोनेकवेडा[17]समार[18]चनादिविषयचिन्ताकृतां रुजं साधु जानाति । उपजातिः ॥

---

१ बी सी °भेदो व°. २ सी °नि प्रा°. ३ बी पौर्णिमा°. ४ बी °टि की वा. ५ ए °णां जरा°. ६ ए °ष्णस्त°. ७ ए °यकः । का°. ८ ए °ष्पकीन्. ९ बी °पुत्रिका. १० ए °सादिण्. ११ बी °क्षाद्दृष्टा. १२ ए °दः समाप्तः । कु°. १३ ए सी °म्बुधोना°. १४ बी °र्न ज°. १५ सी °था वा नौवाननेकवेडा°. १६ सी °कवेडा°. १७ सी °क वेडा°. १८ सी °रसना°.

**कुमारिणः खे वरमालिनोमिलञ्शिखावदस्त्राञ्शिखिनो नु तेजसा ।**
**मालावतोन्वेष्टुममायिनो भटानमायिका नव्यवरान्नभश्चराः ॥६३॥**

६३. अमायिका अमायिनो नभश्चरा देवाः खेमिलन् । किं कर्तुम् । नव्यवरान्नवान्वधूटानन्वेष्टुम् । किंभूतान् । शिखावन्ति दीप्तियुक्तान्यस्त्राणि येषां तान्युध्यमानानित्यर्थः । तथा तेजसा कृत्वा शिखिनो न्वग्नीनिव । तथा मालावतः कण्ठस्थपुष्पमालान्वितांस्तथामायिनो मायायुद्धरहितान् । किंभूताः सन्तः । कुमारिणः कन्यायुक्ता अत एव वरमालिनो वराय माला वरमालास्तदन्विताः कुमार्यभिरुचितवरकण्ठे क्षेप्तुं गृहीतवरमालाः । वंशस्थेन्द्रवंशयोरुपजातिः ॥

**नाज्ञाय्येकस्यैकतो गुर्वनीकं मायावद्भिः क्षुण्णमप्यत्र कैश्चित् ।**
**व्रीहिक्षेत्रं व्रीहिकाणां महीयो यद्वल्लूनं क्वापि चाव्रीहिमद्भिः॥६४॥**

६४. स्पष्टम् । किं त्वेकस्य राज्ञ एकत एकस्मिन्प्रदेशे मायावद्भिश्छलपरैः कैश्चिद्भटैः । अत्र रणे व्रीहिक्षेत्रं व्रीहियुक्तं क्षेत्रमव्रीहिमद्भिर्व्रीहिरहितैश्चौरादिभिः ।

नाविकस्य । कुमारिकस्य । इत्यत्र "नावादेरिकः" [ ३ ] इतीकः ॥ "आयात्" [ २ ] इति वचनात् "तदस्य०" [ १ ] इत्यादिना मतुश्च । तेन नौमान् । कुमारीमान् ॥ नौकुमारीभ्यामिनं केचिदाहुः । नावी । कुमारिणः ॥

शिखिनः । शिखावत् । मालिनः । मालावतः ॥ अत्र "शिखादिभ्य इन्" [ ४ ] इतीन् मतुश्च ॥

व्रीहिकाणाम् । व्रीहि । अव्रीहिमद्भिः । अमायिकाः । अमायिनः । मायावद्भिः । अत्र "व्रीह्यादिभ्यस्तौ" [ ५ ] इतीकेनौ मतुश्च । शालिनी छन्दः ॥

---

१ सी °कान्नव्य°. २ **ए** °हीया य°.

---

१ **बी** °न्युद्धमा°. २ **ए** °त्यर्थास्तथा. ३ **बी** °न्विताश्चथा°. ४ **ए** °ताः कु°. ५ **ए, सी** °माला । वं°. ६ **ए** °द्भिस्थल°. ७ **सी** °हिमद्भिर्व्रीहिर°. ८ **ए** °द्भिर्व्रीहि°.

**छत्रिणः कार्पिणो योधिनश्छत्रिकैः कार्पिकैर्भृ[1]त्यवद्भिः स्ववद्भिर्भटैः।**
**छत्रवान्माल्यवान्क[2]र्पटी स्वर्मुनिर्वीरवत्याहवे पश्यति स्मात्र सः ६५**

६५. वीरवति भटान्वि[1]तेत्राहवे रणे स रणकौतुकी स्वर्मुनिर्नारदो भटैः सह योधिनोवश्यं युध्यमानान्भटान्पश्यति स्म। कीदृक्। छत्रवांश्छत्रिकान्वितस्तथा माल्यवान्पुष्पमालान्वितस्तथा निन्द्यः कर्पटोस्यास्ति कर्पटी कक्षापटान्वितः। कीदृशान्यो[2]धिनः। छत्रिणश्छत्रकुरत्वेन धृतातप[3]त्रांस्तथा कार्पिणो रणव्यापारवतः। किंभूतैर्भटैः। छ[4]त्रिकैस्तथा भृत्यवद्भिस्तथा स्ववद्भिर्दानार्थद्रव्यवद्भिर्ज्ञा[5]तिमद्भिर्वा तथा कार्यि[6]कैः[7]॥ श्र(स्र)ग्विणी छन्दः॥

**धनिनः कर्पटिका अपि ह्यभूवन्रसिनः सत्यरणस्तवेषु सूताः।**
**धनिकाधीनधनैरपीह वीरै रसिकैस्त्यागरणक्रियास्वशङ्कैः॥ ६६॥**

६६. इह रणे सूता भ[8]ट्टाः कर्पटिका अपि निः[9]स्वत्वेन निन्द्यकर्पटान्विता अपि सत्यरणस्तवेष्ववितथभटयुद्धवर्णनासु रसिनो रसिकाः सन्तो वीरैः कृत्वा धनिन ईश्वरा अ[10]भूवन्। यतो धनिकाधीनधनैरप्युत्तमर्णायत्तद्रव्यैरप्यृणग्रस्तैरपीत्यर्थः। परं त्यागरणक्रियासु दानप्रधानेषु रणकर्मसु रसिकैः साभिलाषैः। एतदपि कुत इत्याह। यतोशङ्कैर्रणभयरहितैरकातरैश्चेत्यर्थः॥ औपच्छन्दसकापरान्तिका॥

**समित्खलिन्यां भुवि कोप्यशै(शी?)र्षिकः**
**प्रत्यर्थिकीर्त्यर्थ्यकरोदशीर्षिणम्।**
**अशीर्षवान्सोपि ननर्त खड्गभृत्**
**प्र[3]त्यर्थिकै[4]रर्थिकवत्परिष्टुतः॥ ६७॥**

१ प °त्यद्भिः. २ प °न्कर्पटी. ३ प °प्रार्थि°. ४ बी °रर्थक°.

१ बी °न्वितोत्रा°. २ प °न्योनिधि°. ३ बी °पत्रास्त°. ४ बी सी छत्रकै°. ५ बी °र्ज्ञातम°. ६ बी °र्यिकै। श्र°. ७ सी °कैः। स्वग्वि°. ८ सी भटा क°. ९ बी निमत्वे°. १० प अभव°.

६७. खला: सन्त्यस्यां खलिनी[1] समितो युद्धस्य खलिनीव समित्खलिनी तस्यां यथा खलिनी[2] धान्यखलाधार एवं संग्रामाधार इत्यर्थः । भुवि रणाङ्गणे कोपि भटोशी(शी?)र्षिकः शीर्षरहितोप्यशीर्षिणं शीर्षरहितमकरोदर्थात्प्रत्यर्थिनम् । यतः प्रत्यर्थिकीत्यर्थी शत्रुकीर्ति[3] जिघृक्षुरित्यर्थः । ततश्चाशीर्षवान् शीर्षरहितः सोपि प्रत्यर्थ्यपि खड्गभृत्सन्ननर्त वीर्यातिशयाद्युद्धाय ववल्ग । अत एव प्रत्यर्थिकैः शत्रुभिरर्थिकैर्वद्याचकैरिव परिप्लुतः ॥

छत्रिकैः । छत्रिणः । छत्रवान् । इत्यत्र "अतः०" [ ६ ] इत्यादिना-इकेनौ मतुश्च ॥ अनेकस्वरादिति किम् । स्ववद्भिः ॥ अभिधानार्थस्येतिकरणस्यानुवृत्तेः कृदन्तान्न भवतः । भृत्यवद्भिः ॥ क्वचिद्भवतः । कार्यिकैः । कार्यिणः ॥ जातिशब्देभ्यो न भवतः । माल्यवान् । क्वचिद्भवतः । का(क)र्पटिकाः । कर्पटी ॥ धनादुत्तमर्णे भवतः । धनिकः(क) । धनिनः ॥ सप्तम्यर्थे च न भवतः । वीरवत्याहवे ॥ क्वचिद्भवतः । खलिन्याम् ॥ रसरूपगन्धस्पर्शशब्दस्नेहेभ्यो गुणवाचिभ्यो न भवतः ॥ क्वचिद्भवतः । रसिकैः । रसिनः ॥

अशीर्षिकः । अशीर्षिणम् । अशीर्षवान् । इत्यत्र "अशिरसोशीर्षश्च" [ ७ ] इतीकेनौ मतुश्चाशिरसोशीर्षादेशः ॥ अर्थिकवत् । अर्थी । प्रत्यर्थिकैः । प्रत्यर्थि । इत्यत्र "अर्थ०" [ ८ ] इत्यादिना-इकेनौ ॥ वंशस्थेन्द्रवंशयोरुपजातिः ॥

**अतुन्दिलः क्वापि च तुन्दवन्तमतुन्दिकं क्वापि जिगाय तुन्दी ।**
**अशालिलं शाल्यथ शालिमन्तमशालिकः स्थानिवशेन यद्वत् ॥६८॥**

१ ए °ल्यपि शा° २ सी स्थानव°. ३ सी °त् । क्वापि.

१ सी °नी तस्यां खलिनी यथा धा°. २ ए °ना धन्य°. ३ ए सी °कीर्त्ति जि°. ४ सी एवा प्र°. ५ ए °कविया°. ६ सी °रस्या°. ७ सी कार्यकैः. ८ ए °काः । कार्पटीः । ध°. ९ वी °र्पिणाम्. १० ए °शीर्पिवा°. ११ ए °वंशोरु°.

६८. कापि च रणप्रदेशे तुन्दिलो स्थूलोदरस्तुन्दवन्तं जिगाय। कापि च तुन्द्यतुन्दिकं जिगाय। यथा स्थानं ग्रामादिस्तदस्यास्ति स्थानी ग्रामठकुरादिस्तद्वशेनाशालिलं शालिरहितं दरिद्रं शालीश्वरो जयति। अर्थाथ वा यद्वदशालिको दरिद्रोपि शालिमन्तमिति ॥ उपेन्द्रवज्रा ॥

**पङ्किलव्रीहिलक्षेत्रवद्युन्महीं शोणितैः पङ्किनीं पङ्कवन्मूर्तयः।**
**पङ्किकक्ष्मातलस्रंसिनः पादिलान्संत्यजन्तो मयांश्चक्रमुः पत्तयः ६९**

६९. पङ्कवती श्रमोत्थस्वेदसैन्यरजःसंपर्केण कर्दमवती मूर्तिर्येषां ते तथा पत्तयः स्फारका युन्महीं रणोर्वीं चक्रमुर्गताः। किंभूताम्। शोणितैः पङ्किनीमत एव पङ्किलव्रीहिलक्षेत्रवत्पङ्कयुक्तव्रीहियुक्तक्षेत्रतुल्याम्। किंभूताः सन्तः। मयानुष्ट्रभेदान्संत्यजन्तः। किंभूतान्। पङ्किकं शोणितकर्दमयुक्तं यत्क्ष्मातलं तत्र स्रंसिनः स्खलनेनाधःपातुकान्। एतदपि कुत इत्याह। यतोतिवृद्धा महान्तः पादाः सन्त्येषां पादिलास्तान् ॥ स्रग्विणी ॥

**यथैव शृङ्गारकपादिभिर्द्राग्मृगैर्मृगाः पादिकशृङ्गवन्तः।**
**वृन्दारकैस्तद्वदवृन्दवन्तो भटैर्भटा युद्धकृतोत्र दृष्टाः ॥ ७० ॥**

७०. तद्वत्तथा वृन्दारकैः समूहवद्भिर्भटैः सहावृन्दवन्त एकाकिनो भटा युद्धकृतो युध्यमाना अत्र रणे दृष्टाः। यथैव शृङ्गारकपादिभिः शृङ्गवद्भिर्विवृद्धपादवद्भिश्च मृगैरारण्यपशुभिः सह पादिकशृङ्गवन्तो मृगा युध्यमाना दृश्यन्ते ॥

---

१ ए °ङ्किनीं प°. २ बी °क्रमुः प°.

---

१ बी °शेन शालिनं शालिर°. २ सी °लिर°. ३ सी °रो गाय°. ४ ए °थावथाय°. ५ बी °क्रतुर्ग°. ६ बी °क्षेव°. ७ सी °क्तक्षे°. ८ सी °तुल्याः। किं°. ९ ए °लान्. १० सी °कादिनो भट यु°. ११ ए युद्धमा°. १२ सी °ङ्गारिक°. १३ ए °दिभिश्रृंगारव°. १४ सी °भिः शृंगारव°. १५ बी सी °द्भिर्वृद्ध°.

व्रीह्यर्थे । अशालिलम् । अशालिकः । शाली । शालिमन्तम् ॥ तुन्दादि । अतुन्दिलः । अतुन्दिकम् । तुन्दी । तुन्दवन्तम् ॥ पङ्किल । पङ्किक । पङ्किनीम् । पङ्कवत् । इत्यत्र "व्रीह्यर्थ०" [९] इत्यादिना-इलः । चकारादिकेनौ । "आयात्" [२] इति मतुश्च ॥ व्रीहिशब्दोपि व्रीह्यर्थो भवति । किं तु तस्य पूर्वत्रोपादानादिलो न स्यात् । भावे हि तत्रोपादानमनर्थकं स्यात् ॥ भवतीत्येके । व्रीहिल ॥

पादिलान् । पादिक । पादिभिः । अत्र "स्वाङ्गाद्०" [ १० ] इत्यादिना-इल-इक-इनः ॥

वृन्दारकैः । अवृन्दवन्तः । अत्र "वृन्दादारकः" [ ११ ] इत्यारको मतुश्च ॥

शृङ्गारक । शृङ्गवन्तः । अत्र "शृङ्गात्" [१२] इत्यारको मतुश्च ॥ उपजातिः ॥

**फलिनद्रुमद्बर्हवदातपत्रकाः फलवच्छरश्रेणिमुचोपि जाङ्गलाः ।**
**अथ गूर्जरैर्बर्हिणवन्महाहयः प्रबभञ्जिरे शृङ्गिणवच्च शाखिनः ७१**

७१. अथ गूर्जरैर्जाङ्गला आन्नभटाः प्रबभञ्जिरे । कीदृशाः । फलिनद्रुमन्ति सश्रीकत्वात्सफलद्रुमा इवाचरन्ति बर्हवन्ति मायूरपिच्छयुक्तान्यातपत्राणि येषां तेपि ठक्कुरा अपि । तथा फलवती प्रशस्यशस्त्राग्रभागान्विता या शरश्रेणिस्तां मुञ्चन्ति ये तेपि यथा बर्हिणैर्मयूरैर्महाहयो भज्यन्ते । यथा च शृङ्गिणैर्वनमहिषैः शाखिनो वृक्षा भज्यन्ते ॥

फलिन । फलवत् । बर्हिण । बर्हवत् । शृङ्गिण । इत्यत्र "फल०" [ १३ ] इत्यादिना-इनो मतुश्च ॥ सुदन्तं छन्दः ॥

---

१ ए °रैर्बर्हि°. २ बी प्रभ°.

---

१ ए बी °ह्यर्थः । अ°. २ बी °लिनम्. ३ ए °न्दिलं । अ°. सी °न्दिल । अ°. ४ ए °र्थोपि भ°. ५ सी °नर्थं°. ६ सी °दिकः । पा°. ७ बी अत्रवृन्द°. ८ बी °रकः । शृ°. ९ ए °त्वाशफ°. १० सी °क्तान्येव पात्रा°. ११ सी °स्यवस्त्रा°. १२ सी °था शृ°. १३ ए °नमहिषौ शा°. १४ ए °वतत्. १५ बी बर्हिव°. १६ ए °श्च । सुद°. १७ सी दतं छ°.

**मलवद्यशस्कान्मलिनेन कर्मणातिमलीमसांस्तर्जयिताग्नकः स्वकान्।**
**दलितुं मरुत्वानिव पर्वतान्द्विषो युयुधे ततः पर्ववदस्त्रभृत्स्वयम् ७२**

७२. यथा मरुत्वानिन्द्रः पर्वास्त्येषां तान्पर्वतानद्रीन्वज्रेण दलयत्येवमान्नको द्विषो दलितुं स्वयं युयुधे । कीदृक्सन् । पर्ववन्ति प्रशस्यग्रन्थिप्रदेशयुक्तानि यान्यस्त्राणि शरास्तद्भृत्तथा स्वकान्स्वकीयभटांस्तर्जयिता निर्भर्त्सयन् । यतो मलवद्यशस्कान्मलिनकीर्तीन् । एतदपि कुत इत्याह । यतो मलिनेन कर्मणा रणभङ्गेन निन्द्यकर्मणातिमलीमसान् ॥

**मरुत्तवत्तुण्डिभचक्रवर्षी स योधयन् क्रुद्धवलिभालिकोरीन् ।**
**ऊर्णायुवद्वा वटिभान्नवद्वाहंयुस्तदामंस्त शुभंयुमानी ॥ ७३ ॥**

७३. स आन्नस्तदारीन्योधयन्युध्यमानान्प्रयुञ्जानोमंस्त । कीदृशान् । ऊर्णायुवद्वा सुखविनाश्यत्वेनोरणकतुल्यान् । वटिभान्नवद्वा वटिभं वटीव्यञ्जनविशेषान्वितं यदन्नं तत्तुल्यान्वा । कीदृक्सन् । शुभंयुमानी शुभंयुं शुभसंयुक्तमनुकूलदैवमात्मानं मन्यमानोत एवाहंयुरहंकारवानत एव क्रुधा वलिभं रेखायुक्तमलिकं ललाटं यस्य सोत एव च मरुत्तवद्राजविशेष इव तुण्डिभानि प्रवृद्धनाभिमन्ति चक्राणि चक्रास्त्राणि वर्षतीत्येवंशीलो यः सः ॥

मलीमसान् । मलिनेन । मलवत् । इत्यत्र "मलादीमसश्च" [ १४ ] इतीमसेनौ मतुश्च ॥

मरुत्त । मरुत्वान् । पर्वतान् । पर्ववत् । इत्यत्र "मरुत्०" [ १५ ] इत्यादिना तो मतुश्च ॥

---

१ बी °लयव°. २ सी दलयन् म°. ३ ए °वन्ति प्रशस्य°. ४ ए °द्धभिलाभिको.°

---

१ ए °भंस्तय°. बी °भय°. २ सी °णाति°. ३ ए °र्मणोति°. ४ ए °युजानो°. ५ सी °श्यकत्वे°. ६ ए °द्वा भटिर्भवटी°. ७ सी °टिभव°. ८ बी °त्तद्रा॒ज°. ९ सी °मसोनौ. १० सी °त्त । अम°. ११ बी °रुत्तान्. १२ सी °त्र अम°.

वलिभ । वटिभ । तुण्डिभ । इत्यत्र "वलि०" [ १६ ] इत्यादिना भः ॥ ऊर्णायु । अहंयुः । शुभंयु । इत्यत्र "ऊर्णा०" [१७] इत्यादिना युस् ॥ उपजातिः ॥

**अशंयकंयोपि स शन्त्वकन्तुरशंयुकंयूनपि शन्त्यकन्तीन् ।**
**स्वकांश्चकारालमकन्तशन्तानशंब(व)कंवान् द्विपतश्च जिष्णुः ७४**

७४. स आन्नः स्वकान्निजभटान् शं सुखमस्त्येषां शन्तयः । कमित्ययं कुत्सायाम् । कं कुत्सास्त्येषां कन्तयो न तथाकन्तयो विशेषणकर्मधारये तान् शन्त्यकन्तीन्सुखितान् सतेजस्कत्वेनाकुत्सितांश्चालमत्यर्थं चकार । कीदृशान् । अशंयुकंयूनपि द्विड्भिः पराभवात्पूर्वमसुखितनिस्तेजस्कानपि । कीदृक्सन् । अशंयकंयोपि स्वसैन्यस्य पराभवादसुखितनिस्तेजस्कोपि जिष्णुः सन् शन्त्वकन्तुः सुखी सतेजस्कश्च । तथा द्विषतश्चाकन्तशन्तान् जितकाशित्वेन प्राक्कान्तान्सुखिनश्च संतोशंवकंवानसुखिनो निस्तेजस्कांश्चकार ॥ उपेन्द्रवज्रा ॥

**वातूलाशम्भान्कांश्चिदस्त्रैरकम्भा-**
**चूडालादन्तूलाललाटूलकांश्च ।**
**मूर्छालान्सोस्त्रैर्मक्षिकालान्बलूलो**
**द्विट्पत्तींश्चक्रे सिध्मलान्वा विवर्णान् ॥ ७५ ॥**

७५. स आन्नः कांश्चिद्द्विट्पत्तीनस्त्रैः कृत्वा चक्रे । किंभूतान् । वातूलाशम्भान्वातग्रस्तवदसुखितान् । तथाकम्भाचूडालादन्तूलाललाटूलकांश्च कांश्चिदकम्भान्मस्तकरहितान् कांश्चिदचूडालानवेणीकान्कांश्चिददन्तूलान्दन्तरहितान् । कांश्चिदललाटूलकांल्ललाटरहितांश्च । तथा कांश्चि-

१ प °लाहूल°. २ बी °टूकां°. सी °टूलंकां°.

१ सी °षां कंतयो. २ बी °यः किमि°. ३ सी °न्यप°. ४ सी °शिशब्देन. ५ प सन्तोशं°. ६ प °जस्काश्चत्वका°. ७ बी °ला°ल°. ८ बी °नवर्णी°. ९ सी °टूकान्कुत्सितान्लला°. १० प °कान्कुत्सितान्लला°. ११ प °हिताश्च°.

न्मूर्छालान्मूर्छावतस्तथा कांश्चिन्मक्षिकालान्मक्षिकावतः परासूनित्यर्थः । तथा कांश्चित्सिध्मलान्वा विवर्णान् । वात्रेवार्थे । सिध्मानि त्वक्पुष्पाणि रोगभेद एषां सन्ति सिध्मला यथा त्वचि श्वेतपुष्पैर्विवर्णा विच्छाया: स्युरेवं प्रहारैर्विवर्णाश्च । यतः । कीदृक् । सोस्त्रैः कृत्वा बलूलो बलिष्ठः ॥ वैश्वदेवी ॥

**फेनिलोदकिलवक्रममूर्छन्पत्तयः पृथुलशस्त्रमुचीह ।**
**फेनलोदकलसिन्धुरभूत्तच्छत्रशोणितजलैः पतितैश्च ॥ ७६ ॥**

७६. इहाग्रे पृथुलानि पृथुत्ववन्ति शस्त्राणि मुञ्चति यस्तस्मिन्सति पत्तयोमूर्छन् । कथम् । फेनिलानि फेनवन्त्युदकिलान्युदकवन्ति वक्त्राणि यत्र तद्यथा स्यादेवम् । तथा फेनलोदकलसिन्धुर्डिण्डीरान्वितोदकवती च नद्यभूत् । कैः कृत्वा । तच्छत्रशोणितजलैस्तेषां पत्तीनां छत्रैः श्वेतातपत्रैः शोणितजलैश्च रक्ताम्भःप्रवाहैश्च । किंभूतैः । रणोर्व्यां पतितैः ॥ स्वागता ॥

**प्रज्ञालोस्त्र प्रज्ञिलेनान्नकेन स्वांश्चौलुक्यस्ताप्यमानानथास्त्रैः ।**
**शाखीवोच्चैःपर्णिलोपर्णलद्रौ धन्वत्येत्याश्वासयत्तत्र धन्वी ॥ ७७ ॥**

७७. स्पष्टम् । किं त्वपर्णला अपर्णवन्तो द्रवो वृक्षा यत्र तस्मिन्धन्वति मरुस्थल उच्चैरुन्नतः पर्णिलः पत्रबहुलः शाखी यथा ताप्यमानाञ्जनानाश्वासयति । तत्र रण एत्य धन्वी धनुर्धरः ॥

कंयून् । अशंयु । अकन्तीन् । शन्ति । कंयः । अशंय । अकन्तुः । शन्तु । कन्त ।

---

१ सी फेनिलो°. २ बी सी °दकिल°. ३ बी °च्छस्त्रशो°. ४ ए °नावके°. ५ ए °मानांस्तथा°. ६ ए °लध्रो ध°. ७ बी °न्वतेत्या°. सी °न्वतेत्या°. ८ बी सी धन्वा । °स्प.

---

१ ए °त्सिध्माला°. २ ए °च्छायास्यु°. ३ सी °ति सति. ४ ए °दलिकान्यु°. ५ ए सी फेनिलो°. ६ सी °दकिल°. ७ ए °त पूर्णि°. ८ ए °प्यमञ्जना°. ९ ए °शंशय.

शन्तान्। कंवान्[1]। अशंव। अकम्भान् (कम्भ)। अशम्भान्। इत्यत्र "कंशंभ्यां०" [१८] इत्यादिना युस्-ति[2]-यस्-तु-त-व-भाः॥

बलूलः[3]। वातूलै[4]। दन्तूल। ललाटूलकान्। इत्यत्र "बल०" [१९] इत्यादिनोलः॥

चूडाल। इत्यत्र "प्राणि०" [२०] इत्यादिना लः॥

सिध्मलान्[5]। पृथुल। क्षुद्रजन्तु। मक्षिकालान्[6]॥ रुग्। मूर्छालान्[7]। इत्यत्र "सिध्मादि०" [२१] इत्यादिना लः॥

प्रज्ञालः[8]। प्रज्ञिलेन। पर्णल। पर्णिलः। उदकल। उदकिल। फेनल[9][10]। फेनिल। इत्यत्र "प्रज्ञा०" [२२] इत्यादिना ल-इलौ॥ शालिनी छन्दः॥

ऊचेथ जाङ्गलनृपोभिसरन्नकाला-
लोकालिलं[1] तमिति संप्रहरस्व दोष्मन्।
काडालघाटिलजटालतमैरघाटो-
लाकाडिलैरजटिलैश्च[2] हतैः[3] किमेभिः॥ ७८॥

७८. अथातिप्रकाशत्वात्क्षेप्या काला पार्दस्रसाविशेषो[11] यस्य स तथा नाकालालो जाङ्गलनृप[12] आन्नोभिसरन्नभिमुखं गच्छन्सन्नकालिलं तं चौलुक्यमुवाच। कथमित्याह। हे दोष्मन्संप्रहरस्व[13] युध्यस्व। यत एभिर्भटैर्हतैः किं न किंचित् त्वमेव मे वध्य इत्यर्थः। किंभूतैरेभिः। काडा पार्दस्रसामेदो[14] घाटा कृकाटिका जटाश्च क्षेप्याः सन्त्येषां तेतिशयितास्तैः काडालघाटिलजटालतमैस्तथाघाटोलाकाडिलैरजटिलैश्च[15][16]॥

१ सी काकिलं. २ सी °टाकालाडि°. ३ प °श्च हितैः.

१ प °न्। स्वागन। अक°. सी °न्। अक°. २ प °तिशव°. ३ प °लूल। वा°. ४ प °ल। लला°. ५ प सिध्माला°. ६ सी °न्। इ°. ७ बी मूर्छेला°. ८ प प्रशिलः. ९ प फेनिल। फे°. १० बी °नलः। फे°. ११ प °दस्रस्तावि°. १२ बी °प अन्नो°. १३ बी °प्रहार°. १४ प °दस्रमापादो. सी °दश्रमा°. १५ सी °टालका°. १६ बी रजिटि°.

कालालः[1] । कालिलम् । जटाल।जटिलैः। घाटाल[2] । घाटिल। अत्र "काला०" [२३] इत्यादिना ल-इलौ ॥ कालेति[3] डोपान्त्यं केचित्पठन्ति । काडाल । काडिलैः ॥ वसन्ततिलका ॥

ज्यावाचालधनुष्क किं न पुरतो वाग्गिमन्निहागाः स्वयं
वाचाटः प्रहितः खरामधुरवाग्योद्धुं जनोयं मुधा ।
बन्द्धुं नोरसिलैः कृषीवलजनैर्दन्तावलः पिच्छिलो
दानाल्लोमशकर्कशैरपि यतः शक्योङ्गनानिःसहैः ॥ ७९ ॥

७९. ज्यया प्रत्यञ्चया वाचालमसकृदाकृष्यमाणत्वादव्यक्तस्वरत्वाच्च बहुगर्ह्यवाग्युक्तं धनुर्यस्य हे ज्यावाचालधनुष्क तथा हे वाग्मि(ग्गिम)न् । उपहासेन संबोधने इमे । हे चौलुक्य पुरतः प्रथमं स्वयमिह[4] मत्समीपे किं किमिति त्वं नागाः । तथायं मया हतविग्रहतो जनो भटलोको योद्धुं मुधा मत्पुरोकिंचित्करत्वान्निरर्थकं[5] त्वया प्रहितः । कीदृक् । खं महत्कण्ठविवरमस्त्यस्यां खरा कठोरात एव न मधु माधुर्यमत्रास्त्य[6]मधुरा च वाग्यस्य सः[7]। तथा वाचाटो बहुगर्ह्यवागसकृन्निष्फलमात्मनः[8][9] प्रभोश्च पराक्रमादि प्रशंसन्नित्यर्थः । अर्थान्तरन्यासमाह । यतः कृषीवलजनैर्हालिकलोकैर्दन्तावलो हस्ती न बन्द्धुं[10] शक्यः । किंभूतैः । उरसिलैरपि महावक्षोभिरप्यतिस्थूलैरपीत्यर्थः । तथा लोमानि सन्त्येषां लोमशास्ते च ते कर्कशाश्च कर्कोइव[11] उपमेयतयास्त्येषां श्वेताश्ववत्कठोरास्तैरपि । तर्हि कस्मान्न शक्य इत्याह । यतोङ्गनानिःसहैः स्त्रीवद-

१ बी सी वाग्गिमन्नि. २ बी पिच्छलो. ३ बी °मक°. ४ बी शक्येङ्ग°.

१ ए °लाल । का°. २ सी °टालः । घा°. ३ बी सी °ति वोपा°. ४ सी °ह स°. ५ बी °मत्परो°. ६ ए °मथास्त्य°. बी °मत्रात्सम°. ७ ए °ग्य सः. ८ सी °कृन्निःफल°. ९ बी °न्निफल°. १० बी बद्धुं श°. ११ बी °र्को उ°.

पराक्रमैः । कीदृग्गजः । दानान्मदात्पिच्छं चिक्कणत्वमस्यास्ति पिच्छिलः पङ्किलो मदोत्कटः ॥ शार्दूलविक्रीडितम् ॥

युध्यस्व नान्योस्म्यहमात्मतेजसो-
ष्मणः स एवोद्धुषणेन दर्द्रुण ।
शाकीनतां याति न यत्पलालिनो
न वा पलालीनपदं च शाकिनः ॥ ८० ॥

८०. हे उद्धुषणेन रोमाञ्चेन कृत्वा दर्द्रुण दर्द्र्वाधियुक्त युध्यस्वानेकभटैः सह युद्धेनातिश्रान्तत्वाद्योद्धुं न शक्नोपीत्यहं न युध्य इति न वाच्यम् । यतोहमात्मतेजसा कृत्वोष्मोष्मत्वमस्यास्त्यूष्मणः सन्नान्योस्मि श्रान्तत्वादिप्रकारेण नान्यादृशो वर्ते । किं तु स एव यादृग्युद्धात्पूर्वं दृष्टस्तादृश एवास्मि। युक्तं चैतत् । यद्यस्मात्पलालिनो महत्पलालं पलालक्षोदो वा पलाली तद्वान्प्रदेशः । शाकीनतां महच्छाकं शाकसमूहो वा शाकी तद्वत्प्रदेशतां न याति । शाकिनश्च पलालीनपदं पलालीवत्स्थानं पलालीनतामित्यर्थः । न वा याति ॥

वाचाल । वाचाटः । अत्र "वाचः०" [ २४ ] इत्यादिना-आलाटौ ॥

वाग्ग्मिन् । इत्यत्र "ग्मिन्" [२५] इति ग्मिन् ॥

मधुर । खर । इत्यत्र "मध्वादिभ्यो रः" [ २६ ] इति रः ॥

कृषीवल । दन्तावल(लः)। इत्यत्र "कृष्यादिभ्यो वलच्" [२७] इति वलच् ॥

लोमश । कर्कशैः । इत्यत्र। पिच्छिलः । उरसिलैः । इत्यत्र च "लोम०" [ २८ ] इत्यादिना श इलश्च ॥

१ बी दद्रुण.

१ सी °ण म°. २ बी सी पिच्छलः. ३ ए °त्कण्ठः । शार्दूल°. ४ सी उद्धूष. ५ बी दद्रुण दद्र्व्या°. ६ ए °ध्यस्थाने°. ७ बी युद्ध इ°. ८ ए °शो वर्ते । किं. ९ ए सी यस्मा°. १० ए °लीव°. ११ सी. °नता°. १२ बी सी वाग्मिन्. १३ ए °कैश । इ°. १४ सी पिच्छलः.

अङ्गना । ऊष्मणः । अत्र "नोङ्गादेः" [ २९ ] इति नः ॥

शाकिनः[1] । पललिनः । दर्द्रुण[2] । इत्यत्र "शाकी०" [ ३० ] इत्यादिना नो ह्रस्वश्च ॥ केचित्तु शाकीपलाल्योर्ह्रस्वत्वं नेच्छन्ति । तन्मते शाकीनताम् । पलालीन ॥ इन्द्रवंशावंशस्थयोरुपजातिः ॥

युच्छ्राद्धवार्तो विषुणो नु लक्ष्मणः[1]
प्राज्ञार्च[2] उच्छार्करवाक् चुलुक्यराट् ।
खं पांशुतामिस्रमपि प्रपादयन्
दन्तांशुभिर्ज्यौत्स्नतुलामुवाच[3] तम् ॥ ८१ ॥

८१. चुलुक्यराट् तमान्नमुवाच । कीदृक्सन् । विषुणो[3] नु विष्वञ्चो रश्मयो[4] विष्वग्गतानि वास्य सन्ति विषुणो रविर्वायुर्वा[5]तितेजस्वित्वाद्वलिष्ठत्वाच्च तयोस्तुल्योत एव युधि श्राद्धः श्रद्धावान्वार्तश्च व्यापारवान् युच्छ्राद्धवार्तस्तथा प्राज्ञेषु प्रज्ञावत्स्वार्चोर्चावान्पूज्यः[6] प्राज्ञार्चो विद्वत्तमोत एव शर्करात्रास्ति शार्करं दुग्धमोदकादि माधुर्यातिशयेनोत्क्रान्ता शार्करमुच्छर्करा वाग्यस्य[7] सः । तथा लक्ष्मणः स्मितेन सश्रीकोत एव खमाकाशं पांशुभिस्तमिस्रा[8] तमस्ततिस्तमो वात्रास्ति पांशुतामिस्रं[9]मपि धूलीधूसरितमपि दन्तांशुभिः कृत्वा ज्योत्स्नात्रास्ति ज्यौत्स्नः श्वेतपक्षस्तस्य या तुला साम्यं तां प्रपादयन्नङ्गीकारयन् श्वेतीकुर्वन्नित्यर्थः ॥ इन्द्रवंशा ॥

किमुवाचेत्याह ।

---

१ बी °णो ल° २ सी °णः प्रज्ञा°. ३ बी °भिज्योत्स्न°.

---

१ ए °नः । द.° २ ए बी दद्रुण. ३ ए विषणो. ४ बी रसयो. ५ बी °विवायु°. ६ बी °ज्यः प्रज्ञा° ७ बी °ग्यस्यां सः. ८ ए बी °मिश्रा त°.

योशार्करासिकतिलेष्विव सैकतानः
कर्षेद्धिं शर्करिलसैकतभूषु गौः सः ।
चञ्चद्द्युमद्रुमसमानभुजोपि वीरः
काण्डीर शूर इह यः क्रियया गिरेव ॥ ८२ ॥

८२. काण्डानि[1] शराः सन्त्यस्य हे काण्डीर हे धानुष्क । उपहसन्नेवं संबोधयति । हे आन्न चञ्चन्तौ विलसन्तौ द्युमद्रुमसमानौ द्यौर्द्युर्वा[2]-स्यास्मिन्वास्ति द्युमो रूढिशब्दत्वादुच्चैस्तमो यो द्रूणि[3] दारूणि सन्त्यस्यास्मिन्वा द्रुमो रूढिवशाद्वृक्षस्तद्वत्प्रलॅम्बबलिष्ठौ भुजौ यस्य सोपि यो गिरेव यथा गिरा वाचा शूरस्तथा यः क्रियया रणकर्मणा शूरः स इह जगति वीरः । दृष्टान्तमाह । हि यस्माद्यो गौर्यथा शार्करासिकतिलेषु क्षुद्रपाषाणवालुकारहितेषु देशेषु सैकतं सिकतावद्वालुकाभृतं-(भृद् ?) यदनः शकटं तत्कर्षेत्तथा यः शर्करिलसैकतभूषु सैकतानः कर्षेत्स गौर्वृषभगुणोपेतो वृषभः स्यात् । तत्ते स्वशौर्यश्लाघावचनैः पूर्वोक्तैर्न किंचित्किं तु यदि शूरंमन्यस्तदा रणक्रियां प्रकटयेत्यर्थः ॥ वसन्ततिलका ॥

आण्डीरभाण्डीरहयाजिकच्छुरैः सदन्तुरेभै रथिरैः समेधिरैः ।
संभूय भूपैर्हृदयालुभिः स्वकैर्ढौकस्व नन्वेसि कृपालुरेकके ॥८३॥

८३. नन्विति संबोधने । हे आन्न स्वकैर्निजैर्भूपैः सह संभूय मिलित्वा त्वं ढौकस्व । किंभूतैः । आण्डीरा वृषणवन्तो भाण्डीराश्च भाण्ड-

१ बी °द्धि कश°. २ बी न्वस कृ°.

१ सी °नि शिराः. २ बी °द्युवास्या.° ३ सी °णि स°. ४ सी °लम्बौ ब°. ५ प °साद्यो गौ°. ६ बी °तलभू°. ७ बी °र्षेत्सा गौ°. ८ प °वोक्तैर्न°.

मश्वाभरणादि तद्वन्तश्च ये हयास्तैर्वाजियुद्धं[1] तत्र कच्छुरैः कण्डूमद्भिस्तथा सदन्तुरेभैरुन्नतदन्तान्वितगजयुक्तैस्तथा[2] रथिरै रथवद्भिस्तथा समेधिरैर्मेधिरा बुद्धिमन्तोमात्या युद्धक्रियाचतुरा योधाश्च तद्युक्तैस्तथा हृदयालुभिः सहृदयै रणे निपुणैरित्यर्थः । कस्मादेवमुच्यत इत्याह । यत एकक एकाकिन्यसहाये त्वयि विषयेस्म्यहं कृपालुर्वर्ते[3] ॥ इन्द्रवंशावंशस्थयोरुपजातिः ॥

मेधावता हृदयिना रथिनासि पातो
गाण्डीविकेशवसमेन[1] कृपावता यत् ।
तातेन तर्हि शिरसा मणिवेन नम्र-[2]
स्तन्नाद्य संस्मरसि नासिक सोसि वीरः ॥ ८४ ॥

८४. तर्हि[4] यदा जयसिंह आसीत्तस्मिन्काले यत्त्वं मणिवेन रत्नवता शिरसा नम्रः संस्तातेन जयसिंहेन कृपावता सता पातो द्विड्भ्यो रक्षितः । कीदृशा तातेन । मेधावता[5] तथा हृदयिना विक्रान्तेन तथा रथिनोपलक्षणत्वाद्गजाश्वपत्तिवता च शक्तित्रयोपेतेनेत्यर्थः । अत एव गाण्डीविकेशवसमेनार्जुनविष्णुतुल्येन । तत्तातकृतं रक्षणमद्य युद्धदिने न संस्मरसि । तत्तस्माच्छिन्ना नासिकास्यास्ति रे नासिक तदा कृपया तातेन रक्षितस्त्वाद्य मयैव सह युद्धकरणेन निर्लज्जत्वान्नक्रवर्धिततुल्य त्वं यः प्रणम्रः कृपया तातेन रक्षितः स वीरोसि वर्तसे । यत्त्वमात्मनो भटत्वं वर्णयसि तन्मे[6] विदितमेवेत्यर्थः ॥

---

१ ए ण्डीवके°. २ बी °म्रतन्ना°.

---

१ बी °जि युद्धं. २ सी °था हृ°. ३ बी °र्तेते । इ°. ४ सी °र्हि तदा. ५ बी °वन्तो त°. ६ बी °न्मे वेदितमिवे°.

विषुणः । अत्र "विष्वचो विषुश्च" [ ३१ ] इति नो विष्वित्यादेशश्च ॥

लक्ष्मणः । अत्र "लक्ष्म्या अनः" [ ३२ ] इत्यनः ॥

प्राज्ञ । श्राद्ध । आर्चः । वार्तः । इत्यत्र "प्रज्ञा०" [ ३३ ] इत्यादिना णः ॥

ज्यौत्स्नं । तामिस्रम् । इत्यत्र "ज्योत्स्नादिभ्योण्" [ ३४ ] इत्यण् ॥

सैकतानः । शार्कर । इत्यत्र "सिकता०" [ ३५ ] इत्यादिनाण् ॥

सिकतिलेपु । सैकत । शर्करिल । अशार्कर । इत्यत्र "इलश्च देशे" [ ३६ ] इतीलोण्च ॥

द्युर्म । द्रुम । इत्यत्र "द्युद्रोर्मः" [ ३७ ] इति मः ॥

काण्डीर । आण्डीर। भाण्डीर। इत्यत्र "काण्डाण्ड०"[३८] इत्यादिना-ईरः॥

कच्छुरैः । अत्र "कच्छ्वा डुरः" [ ३९ ] इति डुरः ॥

दन्तुर । इत्यत्र "दन्तादुन्नतात्" [ ४० ] इति डुरः ॥

मेधिरैः । रथिरैः । अत्र "मेधा०" [४१] इत्यादिना वा-इरः । वावचनाद्यथाप्राप्तमिनादि । "आयात्" [२] इति मतुश्च । मेधावता । रथिना ॥

कृपालुः । कृपावता । हृदयालुभिः । हृदयिना । इत्यत्र "कृपा०" [ ४२ ] इत्यादिनालुर्वा ॥

केशव । इत्यत्र "केशाद्वः" [ ४३ ] इति वः ॥

मणिवेन । गाण्डीवि । इत्यत्र "मण्यादिभ्यः" [ ४४ ] इति वः ॥

नासिक । इत्यत्र "हीनात्स्वाङ्गादः" [ ४५ ] इत्यः ॥ वसन्ततिलका ॥

**कालोर्शसेनाभ्र इवातरस्विना मायाविनानायितमामियांस्त्वया ।**
**स्रग्वी तपस्विन्नधुना युयुत्ससे मेधाव्यसि व्यक्तमनामयाव्यहो ८५**

१ बी °यां त्वया°. २ बी °से धा°.

१ सी °त्र लक्ष्म्या. २ ए आर्च । वा°. ३ बी वाचा । इ°. ४ बी °त्स्नम् । ता°. ५ ए °स्र । इत्यजोत्स्ना°. ६ बी °म । द्रुम. ७ ए °मित्यादिः । आ°. ८ ए सी °पालु । कृ°. ९ बी °ण्डीव । इ°. १० बी नाशिक. ११ ए °नास्वाङ्गा°.

८५. हे तपस्विन्वराक त्वयातरस्विनाबलिष्ठेनात एव मायाविना नमस्क्रियादिरूपमायान्वितेन सतेयान्कालोनायितमामत्यर्थमतिवाहितो यथार्शसेनार्शोरोगवता नरेणाभ्रोभ्रवान्कालो वर्षाकालोतरस्विनार्शोरोगस्यातिवृद्धेरबलेनात एव मायाविनार्शउपशमकतथाविधौषधक्रियादिनार्शोरोगवञ्चनावता सता नीयते । अधुना तु हे तपस्विन्स्रग्वी पुष्पमालावान्सन्युयुत्ससे । तस्मादहो आन्न त्वं व्यक्तं मेधाव्यसि माययेयतः कालस्यातिवाहनेन पण्डितोसि तथानामयाव्यस्यधुना युद्धाभिलाषेणामयरहितो बलिष्ठोसि ॥

अभ्रः । अर्शसेन । इत्यत्र "अभ्रादिभ्यः" [ ४६ ] इत्यः ॥

तरस्विना । तपस्विन् । मायाविना । मेधावी । स्रग्वी । इत्यत्र "अस्तपस्०" [ ४७ ] इत्यादिना विन् ॥

अनामयावी । इत्यत्र "आमयाद्दीर्घश्च" [४८] इति विन् दीर्घश्चामयस्य ॥

इन्द्रवंशा ॥

**स स्वामिगोमी मम तात ऊर्जस्व्यूर्जस्वलेष्वर्णवगीतकीर्तिः ।**
**हुं लज्जते त्वां न जयाम्यहिम्यज्योत्स्ना तमिस्रामिव यद्यगुण्याम् ८६**

८६. यदि त्वां न जयामि । यथाहिम्या हिमरहिता निर्मला या ज्योतिरत्रास्ति ज्योत्स्ना चन्द्रिका तमोत्रास्ति तमिस्रां तामसीं रात्रिं जयति तमोपहारेण पराभवति । कीदृशीम् । अगुण्यामालोकविनाशकत्वादिदोषैर्निर्गुणाम् । तदा हुमिति कोपे । स प्रसिद्धो मम तातो जयसिंहो लज्जते । कीदृक् । ऊर्जस्वलेषु बलिष्ठेषु मध्य ऊर्जस्व्यतिबलिष्ठोत एव स्वामी चासौ गोमी च भूमिमांश्च । यद्वा स्वामिनां प्रभूणां राज्ञां गोमी पूज्योत एव चार्णवगीतकीर्तिस्तस्माद्यावश्यं त्वां जयाम्येवेत्यर्थः ॥ इन्द्रवज्रा ॥

१ बी °र्जस्फूर्ज°.

१ प °ना ए°. २ प °न्युत्स°. ३ प °ना । तपस्विना । तप°. ४ सी °द्वा प्रभूणां स्वामिनां रा°. ५ प °श्यं त्वं ज°.

इति तं गदित्वा बहुरूप्यमूल्यं गुणवद्धनुर्हैमवतीपतिर्नु[1] ।
सशरं व्यधाद्रूप्यपि पौर्णमासीशशिरूप्यवक्त्रोथ चुलुक्यचन्द्रः ८७

८७. अथानन्तरं रूप्यपीत्यत्रापिर्भिन्नक्रमे[1] । न केवलमान्नश्चौलुक्यचन्द्रोपि धनुः सशरं व्यधात् । हैमवतीपतिर्नु हिमवतोपत्यस्य गौर्या भर्ता[2] हरो यथा त्रिपुरदाहादिकाले धनुः सशरं व्यधात् । किं कृत्वा । इत्युक्तरीत्या तमान्नं गदित्वा । कीदृक्सन् । पौर्णमास्या यः शशीन्दुस्तद्वद्रूप्यं प्रशस्यरूपान्वितं[3] सौम्यं मुखं[4] यस्य सः । रूप्यपीत्यस्य स्थाने कुत्रापि रुष्यपीति पाठो दृश्यते तदा रुष्यपि रोषेपि सति महापुरुषत्वेनालक्ष्य[5]कोपविकारत्वात्पौर्णमासीशशिवक्त्र इति यथास्थानमेवापिर्योज्यः[6] । हरोपि शशिरूप्यवक्त्रश्चन्द्रकलया रूपवन्मुखः । कीदृशं धनुः । आहतं रूपमस्त्येषां रूप्या दीनारादयः । निघातिकाताडनादीनारादिषु[7] यद्रूपमुत्पद्यते तदाहतं रूपम् । बहवो रूप्या मूल्यं यस्य तत् । यथा(तथा?) गुणवत्प्रशस्यप्रत्यञ्चम् ॥

स्वामि । इत्यत्र "स्वामिन्नीशे"[9][10] [४९] इति मिन् दीर्घश्चास्य ॥

गोमी । इत्यत्र "गोः" [ ५० ] इति मिन् ॥ पूज्य एव मिनमिच्छन्त्येके ॥

ऊर्जस्वी । ऊर्जस्वलेषु । इत्यत्र "ऊर्जो[11] विन्०" [ ५१ ] इत्यादिना[12] विन्वलावसू चान्तः ॥

तमिस्राम्[13] । अर्णव । ज्योत्स्ना । इत्येते[14] "तमिस्रा०" [ ५२ ] इत्यादिना निपात्याः ॥

---

१ प °नुर्हैम.

---

१ बी °पि भिन्न°. २ बी °र्ता हारो. ३ सी °रूप्यान्वि°. ४ प मुख्यं य°. ५ बी °लक्षको°. ६ प सी °पियोज्यः°. ७ प °नादीना°. ८ प °श्र । स्वा°. ९ सी स्वानूमिर्नाशे. १० बी °मित्तं से इ°. ११ बी ऊर्ज्यो वि°. १२ बी °दि वि°. १३ प °स्रा । अ°. १४ बी °त्येन्ये त°.

गुण्याम् । गुणवत्[१] । हिम्य । हैम[२]वती । इत्यत्र "गुणादिभ्यो यः" [५३] इति यो मतुश्च ॥

रूप्यवक्रः । रू[३]प्य । इत्यत्र "रूपात्०" [५४] इत्यादिना यः ॥ कथं रूपी । व्रीह्यादित्वाद्भविष्यति ॥

पौर्णमासी । इत्यत्र[४] "पूर्णमासोण्" [५५] इत्यण् ॥ केकिरवं छन्द[५]ः ॥

आन्नोर्थ[१] गौशतिकनैष्कसह[२]स्रिकैः स्वै-
भृत्यैः सनैष्कशतिकैः सह[३]गौत्रिकैश्च ।
संभूय[४] सर्वधनिभिश्च रुषान्धको नु
तं देवमैकगविकं पिदधेस्त्रवृष्ट्या ॥ ८८ ॥

८८. अथान्नो रुषा कृत्वान्धको नु कुत्सितोन्ध इवात्यन्तं कोपावि[६]ष्टः सन्नित्यर्थः[७] । तं चौलुक्यमस्त्रवृष्ट्या बाणवर्षणेन पिदधे । किं कृत्वा । स्वैर्भृत्यैः सह संभूय मिलित्वा । किंभूतैः । गो(गौ)शतिकनैष्कसहस्रिकैः[८] कैश्चिद्गोशतयुक्तैः कैश्चिच्च निष्कसहस्रयुक्तैः । निष्कोष्टोत्तरं शतं स्वर्ण[९]स्य पलं वा तथा निष्क[१०]शतमस्त्येषां सह[११] तैर्य(र्ये) तैः सनैष्कशतिकैस्तथा गोत्रा गोसमूहोस्त्येषां सह[१२] तैर्य[१३] तैः सह[१४]गौत्रिकै[१५]श्च गोशतादिमद्भिर्दे[१६]शपालैर्निष्कसहस्रादिप्रभूतजीविकैर्महायोधैश्चेत्यर्थः । तथा सर्वधनमस्त्येषां तैः सर्वधनिभिश्च चतुरङ्गबलोपेतनृपैश्चेत्यर्थः । यथा[१७]न्धको दैत्यः स्वै[१८]र्भृत्यैः सह संभूयैकगव एक[१९]वृषोस्या[२०]स्त्यैकगविकं देवं रुद्रमस्त्रवृष्ट्या पिदधे[२१] ॥

१ बी °थ गोश°. २ ए °सहिस्रि°. ३ बी सी °हगोत्रि°. ४ ए °य संबंध°.

१ ए °त् । है°. २ बी °वत्य°. ३ बी रूप । इ°. ४ ए °त्र पौर्ण°. ५ ए बी °न्दः । अन्नो°. ६ ए °विष्टा स°. ७ ए °त्यर्थं चौ°. ८ ए °कैः कश्चि°. ९ ए °र्णस्याप°. १० बी °ष्कत°. ११ सी सहितै°. १२ सी सहितै°. १३ बी °तैर्य तैः. १४ बी सी °हगोत्रि°. १५ सी °त्रिभिश्च. १६ ए °द्भिदेश°. सी °द्भिर्दश°. १७ सी °यद्वान्ध°. १८ ए स्वैभृत्यैः. १९ ए एषवृ°. सी एषोवृ°. २० सी °स्यास्त्येक°. २१ सी °धे । गोश°.

गौशतिक। इत्यत्र "गोपूर्वाद्०" [५६] इत्यादिनेकण्॥ केचित्तु गवादेरनकारान्तादपीच्छन्ति। गौत्रिकैः॥

नैष्कशतिकैः। नैष्कसहस्रिकैः। अत्र "निष्कादेः०" [५७] इत्यादिनेकण्॥

ऐकगविकम्। अत्र "एकादेः०" [५८] इत्यादिनेकण्॥

सर्वधनिभिः। अत्र "सर्वादेरिन्" [५९] इतीन्॥ वसन्ततिलका॥

**तां भैमिश्चास्यदस्त्रवृष्टिं शृङ्ग्यश्व इवोर्गप्यभान्न चान्नः।**
**सुकटकवलयी यथा हि कुष्ठी पोटा वा स्तनकेशवत्यपीह ॥८९॥**

८९. भैमिश्च तामान्नीयामस्त्रवृष्टिमास्यच्चिक्षेप। ततश्चान्न ऊर्गपि बलिष्ठोपि निस्तेजस्कत्वेन नाभात्। यथेह जगति शृङ्गी शृङ्गान्वितोश्व ऊर्गपि निकृष्टतमलक्षणत्वान्न भाति। यथा वा कुष्ठी न भाति। कीदृक्। वलयः प्रकोष्ठाभरणभेदः पादाभरणविशेषश्च पादकटकः। तथा च हंसकः पादकटक इत्यमरकोशे। ततः पादकटकैकदेशोपि कटक इति द्वन्द्वविरोधाभावे शोभनौ कटकवलयावस्य स्तः सुकटकवलय्यपि। यथा वा स्तनकेशवत्यपि पोटा नृलक्ष्मणा स्त्री दंष्ट्रिकादिपुंश्चिह्नेन विरूपत्वान्न भाति॥

द्वन्द्व। सुकटवलयी॥ रुक्। कुष्ठी॥ निन्द्य। शृङ्ग्यश्व। अत्र "प्राणिस्थाद्०" [६०] इत्यादिनेन्॥ अस्वाङ्गादिति किम्। स्तनकेशवती॥ औपच्छन्दसकम्॥

**अथेषुवर्षं विदधे च भैमिरान्नस्य भृत्या लुलुवु(ठु)श्च भूमौ।**
**वातक्यतीसारकिणः पिशाचकिनो यथा पश्चमिनश्च बालाः ९०**

---

१ ए शृङ्गाश्व. २ बी °लुवश्च.

---

१ ए °पूर्वद्. २ ए सी °न्ति। गोत्रि°. ३ बी °हश्रिकैः. ४ बी °त्र इका°. ५ ए °मसुवृष्टिगासाचि°. ६ ए °ष्ठो नि°. ७ सी °जस्त्वेन पा°. ८ ए °भेदाःपा° ९ बी दः पादाभरणभेदः पा°. १० सी °क इ°. ११ ए °भनो क°. १२ बी °क्षणे स्त्री. १३ बी °वलीय। रु°. १४ ए शृङ्गाश्व. सी शृङ्गश्व. १५ बी अश्वाङ्गा°.

९०. स्पष्टः । किं तु पिशाचकिनो ग्रहिलाः । पञ्चमो मासः संवत्सरो वा[1]स्त्येषां पञ्चमिनो बालाः । वातक्यादयो यथा भूमौ[2] लुठन्ति ॥

वातक्यतीसारकिणः । पिशाचकिनः । अत्र 'वात०'' [ ६१ ] इत्यादिनेन् कश्चान्तः ॥

पञ्चमिनो बालाः । अत्र ''पूरणाद्वय[3]सि'' [ ६२ ] इतीनेव ॥ उपजातिः ॥

**दुःखिनोपि सुखिनो नु मूर्छया मालिनो निपतितानहन्न सः ।**
**ब्रह्मवर्णिन इव द्विषोपि तान् क्षत्रधर्मियतिशील्ययं[1] यतः ॥ ९१ ॥**

९१. स चौलुक्यस्तां[4]नान्नभटान्द्विषोपि रणाङ्गणे निपतितान्सतो ब्रह्मवर्णिन इव ब्राह्मणजातिमतो ब्राह्मणानिव नाहन् । कीदृशान् । प्रभूत[5]प्रहारैर्दुःखिनोपि मूर्छया प्रहारकष्टो[6]त्थमोहेन कृत्वा दुःखस्यासंवेदकत्वात्सुखिनो नु । तथा मालि[7]नो रणे पातेन विसंस्थुलम्लानस्रक्त्वान्निन्द्यमालान्वितान् । अह[8]नने हेतुमाह । यतोयं भैमिः क्षत्रधर्मः क्षत्रियाचारः पतितेष्वप्रहारादिरस्यास्ति क्षत्रधर्मी स चासौ यतिशीलं मुन्याचा[9]रः कृपादिधर्मोस्यास्ति यतिशीली च[10] सः ॥

सुखिनः । दुःखिनः । अत्र ''सुखादेः'' [ ६३ ] इतीन् ॥

मालिनः । अत्र ''मालायाः क्षेपे'' [ ६४ ] इतीन् ॥

क्षत्र[11]धर्मियति[12]शीली । ब्रह्मवर्णिनः । अत्र[13] ''धर्म०'' [६५] इत्यादिनेन् ॥ रथोद्धता ॥

---

१ ए °ल्ययन्तः.

---

१ बी °वास्तेषां. २ बी °मौ लुंठ°. ३ ए बी °यसती°. ४ ए °स्तान्नात्र°. ५ ए °तपूरै°. ६ ए °ष्टं थ मो°. ७ ए °लिनं र°. ८ ए °हनेन हे°. बी °हमनेन हे°. ९ सी °चारक°. १० ए च सा । सु° ११ बी क्षत्रिध°. १२ ए °तिशिली. १३ सी °त्र ब्रह्म इ°.

स बाहुबल्यूरुबली सवर्मी स्वान्यामिनीपङ्कजिनीवदान्नः ।
म्लानान्विदित्वा करिणं[1] नुनोद रुषोऽब्जिनीपुष्पदलारुणाक्षः ९२

९२. स्पष्टः । किं तु सवर्मी वर्मास्यास्ति वर्म्येवं नाम राजा तेनान्वितः । अब्जिनीपुष्पं रक्तोत्पलम् ॥ उपजातिः[1] ॥

मदाम्भसा पुष्करिणीं नु तन्वत्यत्रान्नहस्तिन्यथ दन्तिनं स्वम् ।
नुनोद सद्दानतरङ्गिणीकं वर्णीव रामस्तरसा चुलुक्यः ॥ ९३ ॥

९३. स्पष्टः । किं तु पुष्करिणीं नु वापीमिव तन्वति मदोन्मत्त[2] इत्यर्थः । आन्नहस्तिनि[3] विषये सद्दानतरङ्गिणीकं विद्यमानमदनदीकं स्वं हस्तिनं नुनोद । यंतस्तरसा[4] बलेन कृत्वा वर्णो ब्रह्मचर्यमस्यास्ति वर्णी । राम इव परशुरामतुल्यः ॥

बाहुबली । ऊरुबली । इत्यत्र "बाहु०" [ ६६ ] इत्यादिनेन् ॥

मन्नन्त । वर्मी । मान्त । यामिनी ॥ अब्जादि[5] । अब्जिनी । पङ्कजिनी । इत्यत्र "मन्म०" [ ६७ ] इत्यादिनेन् ॥

हस्तिनि । दन्तिनम् । करिणम् । अत्र "हस्त०" [ ६८ ] इत्यादिनेन् ॥

वर्णी । इत्यत्र "वर्णात्०" [ ६९ ] इत्यादिनेन् ॥

पुष्करिणीम्[6] । तरङ्गिणी । इत्यत्र "पुष्करादेर्देशे" [ ७० ] इति-इन् ॥

वैमुक्तमैत्रावरुणीययज्ञायज्ञीयदैवासुरगर्दभाण्डान् ।
भयाद्द्विजास्तर्हि सगर्दभाण्डीयेषेत्वकं घोषदकं जगुर्न ॥ ९४ ॥

९४. तर्हि तस्मिन् रणकाले भयाद्द्विजा न जगुर्न पेठुः । कान् । विमुक्तशब्दोत्राध्यायेनुवाके वास्ति[7] वैमुक्तस्तथा मैत्रावरुणशब्दोत्रास्ति

१ प °रिणा नु°. २ प °पाङ्जिनी°.

१ प °जाति । मन्दाभसा. २ सी °न्मत्ते यइ°. ३ प °नि नु°. ४ प यस्त°. ५ प °ब्जाति । अ°. सी °ब्जानि । अ°. ६ सी °णी । त°. ७ प °वास्ति.

मैत्रावरुणीयं सूक्तमेवमग्रेपि[1] वाक्ये। यज्ञायज्ञीयं साम। दैवासुरो[2] गर्दभाण्डश्चाध्यायोनुवाको[3] वा द्वन्द्वे तांस्तथा गर्दभाण्डीयेपेत्वकाभ्याम-ध्यायाभ्यामनुवाकाभ्यां[4] वा[5] सहितं घोषच्छब्दोत्रास्ति[6] घोषदकमध्याय-[7]मनुवाकं वा ॥

मैत्रावरुणीय। यज्ञायज्ञीय। इत्यत्र "सूक्त०" [ ७१ ] इत्यादिनेयः ॥

गर्दभाण्डान्। गर्दभाण्डीय। इत्यत्र "लुब्वा०" [७२] इत्यादिनेयस्य लुब्वा ॥

वैमुक्तं। दैवासुर। इत्यत्र "विमुक्तादेरण्" [ ७३ ] इत्यण् ॥

घोषदकम्। इषेत्वकम्। अत्र "घोषदादेरकः" [ ७४ ] इत्यकः ॥

सुस्थूलकैः प्रहरतोर्दशनैः प्रवीर-
जातीययोस्तदिभयोरुदगुः स्फुलिङ्गाः।
भ्रष्टुं क्षमा यवककृष्णकजीर्णकादि
गोमूत्रकं[1] दिव इवानणुकं दिशन्तः ॥ ९५ ॥

९५. तदिभयोर्भैम्यान्नगजयोः स्फुलिङ्गा दन्तसंघट्टोत्था अग्निकणा उदगुरुच्छलिताः। यतः स्थूलः[10] प्रकार एषां स्थूलकाः सुष्टु स्थूलकाः सुस्थूलकास्तैरतिस्थूलैर्दशनैः[11] प्रहरतोः। एतदपि कुत इत्याह। यतः प्रवीरः[12] प्रकारो ययोस्तयोः प्रवीरजातीययोः प्रकृष्टशूरयोः[13]। किंभूताः। यवप्रकारा यवका व्रीहयः कृष्णप्रकाराः कृष्णकास्तिला जीर्णप्रकारा जीर्णकाः शालयो द्वन्द्वे तदादि वस्तु भ्रष्टुं दग्धुं क्षमास्तथारक्तप्रभूता-[14]तिसान्द्रत्वाद्दिवो व्योम्नो गोमूत्रकमिव गोमूत्रप्रकारं गोमूत्रवर्णमाच्छा-

१ ए °मूत्रिकं.

१ सी °ग्रे वा°. २ बी °सुरौ ग°. ३ बी °ध्यायानु°. ४ ए °वाक्याभ्यां. ५ बी °भ्यां स°. ६ बी सी °षशब्दो°. ७ बी °दकं। इषे°. सी °दकं वाध्या°. ८ ए °क्त। देवा°. ९ सी °क। अ°. १० बी सी स्थूलप्र°. ११ बी °दर्शनैः. १२ ए °वीरजा°. १३ बी °ष्टसूर°. १४ सी °स्तमार°.

दनमिव दिशन्तो ददतः । किंभूतम् । अणुः प्रकारोस्याणुकं न तथा महाप्रमाणम् ॥ वसन्ततिलका ॥

अवदातिकां पीत इवान्नकः सुरां
सुरकाहिरक्ताक्ष इषून्रुषामुचत् ।
नगरीं [1]नु गौष्ठीन इषूश्चुलुक्यपो-
प्यचिरा[2]दिहाविष्टचरीन्यवीविशत् ॥ ९६ ॥

९६. आन्नक इषूनमुचदक्षिपत् । कीदृक्सन् । रुषा हेतुना सुरकः सुरावर्णो योहिस्तद्वद्रक्ताक्षोत एव ज्ञायतेवदातिकामवदातप्रकारां प्रसन्नां सुरां मद्यं पीत इव । तथा चु[1]लुक्यपोपीहान्नेविष्टचरीः पूर्वमप्रविष्टा इषूरचिरान्न्यवीविशत्समस्थापयत् । यथा भूतपूर्वो गोष्ठो गोस्था[2]नं गोष्ठीनस्तत्र पवित्रभूमित्वेन कश्चित्पुरीं निवेशयति । गोखुरक्षु[3]ण्णे हि प्रदेशे पुरादि निवेश्यमिति [4]वास्तु ॥

प्रवीरजातीययोः । अत्र "प्रकारे जातीयर्" [ ७५ ] इति जातीयर् ॥

अनणुकम् । सु[5]स्थूलकैः । अत्र "कोण्वादेः" [ ७६ ] इति कः ॥

जी[6]र्णक । गोमूत्रकम् । अवदातिकाम् । सुरक । यवक । कृष्णक । इत्यत्र "जीर्ण०" [ ७७ ] इत्यादिना कः ॥

अविष्टचरीः । अत्र "भूत०" [ ७८ ] इत्यादि[7]ना प्चरट् ॥

गोष्ठीने । अत्र "गोष्ठादीनञ्" [ ७९ ] इतीनञ् ॥ सु[8]दन्तम् ॥

चौलुक्यरूप्या भृशमान्नतोभ[3]वंश्चौलुक्यतश्चान्नचराः पदातयः ।
तौ तेभितो वा परितश्च युच्छमप्रवाहिकातो न्यधुरादितस्ततः॥९७॥

---

१ प बी नु गोष्ठी°. २ बी °दिहवि°. ३ बी °वं चौलु°.

---

१ प °लुक्योपी°. २ प °स्थानां गो°. ३ बी °क्षुन्ने हि. ४ बी वास्तुः । प्र°. ५ सी °म् । सस्थू°. ६ प °र्णकः । गो°. ७ प °ना स्वर°. ८ प °दन्ता । चौ°.

९७. चौलुक्यरूप्याश्चौलुक्यस्य[1] भूतपूर्वाः पदातयश्चाहडादयो भृशमान्नत आन्नस्य पक्षेभवन् । तथान्नचरा आन्नस्य[2] भूतपूर्वाश्च पदातयो गोविन्दराजादयश्चौलुक्यतश्चौलुक्यपक्षेभवन्[3][4] । ततस्तस्मिन्पक्षद्वयभवने सति ते चौलुक्यरूप्या[5] आन्नचराश्चादितोग्रे भूत्वा तौ भैम्यान्नावभितो वा । वात्र समुच्चये । परितश्च[6] तयोरग्रे पार्श्वयोः सर्वतश्च भूत्वेत्यर्थः । व्यधुः । किं युच्छ्रमप्रवाहिकातो युच्छ्रम एव भैम्यान्नयोर्युद्धश्रान्तिरेव दुःखकत्वात्प्रवाहिका रोगभेदस्तस्य प्रतीकारं स्वयं युद्धकरणेन तौ युद्धश्रान्तौ विश्रमयामासुरित्यर्थः ॥

चौलुक्यरूप्याः । आन्नचराः । अत्र "पञ्चम्याः०"[7] [ ८० ] इत्यादिना रूप्यप्चरटौ[8] ॥

चौलुक्यरूप्या आन्नतोभवन् । चौलुक्यतश्चान्नचराः । अत्र[9] "व्याश्रये तसुः" [ ८१ ] इति तसुः ॥

प्रवाहिकातो व्यधुः । अत्र "रोगात्०"[10] [ ८२ ] इत्यादिना तसुः ॥

परितः । अभितः । अत्र "परि०" [ ८३ ] इत्यादिना तसुः ॥

आदितः । ततः । अत्र[11] "आद्यादिभ्यः" [ ८४ ] इति तसुः ॥ इन्द्रवंशावंशस्थयोरुपजातिः[12] ॥

**ते वृत्ततोप्यव्यथिताः प्रहीणाः[1] क्षिप्ताश्च पापाः[2] प्रहृतेः[3] प्रहारम् ।**
**भिथोसुतोसून्प्रति[4] दायिनो द्राग्न नात्यगृह्यन्त तदा यशस्तः[5] ॥९८॥**

---

१ ए प्रहीःणाक्षप्ता°. २ सी पापैः प्र°. ३ ए हृते प्र°. ४ सी °थोसतो°. ५ बी °स्तः । त्तौ चौ°.

---

१ ए °क्यस्य भू°. सी °क्यस्य स्वरू°. २ ए °स्य पू°. ३ बी विदरा°. ४ ए °श्चौलक्य°. ५ ए °प्या अन्न°. ६ ए °श्च यो°. ७ ए सी पष्ठयादि°. ८ ए °प्यचर°. सी °प्यर°. ९ ए °त्र द्याश्र°. १० ए °गादिना. बी °गादि इ°. ११ ए °त्र आ°. १२ ए °वंश°.

९८. ते चौलुक्यरूप्या आन्नचराश्च राणकास्तदा युद्धकाले द्राग्यशस्तः पराक्रमोत्थयशसा कृत्वा न नात्यगृह्णन्त किं त्वन्यानतिक्रम्य यशसा गृहीता अतियशस्विनः संभाविता इत्यर्थः । यद्वा । अतिशयेन यशसा गृहीता इत्यर्थः । यतो मिथः प्रहृतेः प्रति प्रहारं दायिनः । तथासुतः प्रत्यसून्दायिनः । आधमर्ण्येत्र णिन् । प्रहृतेरसुत इत्यत्र "यतः प्रतिनिधि०" [ २. २. ७२ ] इत्यादिना पञ्चमी । विपक्षाणां प्रहृतिं प्राणांश्च गृहीत्वा स्वस्य प्रहारं प्राणांश्च ऋणमिव ददतः । प्राणनिरपेक्षं युध्यमाना इत्यर्थः । किंभूताः । वृत्ततः शौर्यवृत्त्यादिना चरित्रेण कृत्वाव्यथिता अप्यचलिता अप्यभीता अपि वा यावतो स्वस्वामिनं परिहृत्य रिपुपक्षे स्थितास्तावता वृत्ततः स्वस्वामिनि चुक्कपदातितारूपेण निकृष्टाचारेण कृत्वा प्रहीणाः सदाचाराद्भ्रष्टास्तथा वृत्ततः पापाश्च पापिष्ठाश्चात एव वृत्ततः क्षिप्ता निन्दिताः ॥

वृत्ततः क्षिप्ताः । यशस्तो न नात्यगृह्णन्त । वृत्ततोऽव्यथिताः । अत्र "क्षेप०" [ ८५ ] इत्यादिना तसुः ॥

वृत्ततः पापाः । वृत्ततः प्रहीणाः । अत्र "पाप०" [८६] इत्यादिना तसुः ॥

प्रहारं प्रहृतेः प्रति दायिनः । असूनसुतः प्रति दायिनः । अत्र "प्रतिना०" [ ८७ ] इत्यादिना वा तसुः ॥ उपजातिः ॥

**मानाद्रिमूर्ध्नोनवरोहिणौ नृपौ वीर्यादहीनौ प्रसभं प्रजहतुः ।**
**निर्यन्न तूणान्न च चापतः शरोलक्ष्यापतन्नेव कुतोपि सर्वतः॥९९॥**

---

१ सी °रोहणौ. २ प °तः शिरो°.

---

१ बी °शश्विनः. २ प °तिय°. ३ सी यथा मि°. ४ सी °ते प्र°. ५ बी °र्ण्येत्र्य णि°. ६ प °मी । प्र०. ७ प °त्वा स्तस्य. सी °त्वा तस्य. ८ सी °तयः शौ°. ९ प अच°. १० प अथाभी°. ११ °ता स्वं स्वा°. १२ प वृत्तेन स्व° सी वृत्तयः स्व°. १३ प °ष्टा प्र°. १४ बी °ह्णन्ते । वृ°.

९९. स्पष्टम्[1] । किं तु सर्वस्मात्कुतोप्यस्माद्देशादयमायातीति विवेक्तुमशक्यप्रदेशादापतन्नेवागच्छन्नेव तयोः शरोलक्षि । अतिलघुहस्तत्वात् ॥ इन्द्रवंशा ॥

स्थाम्नाधिकाभ्यां बहुतोथ विश्वतो
द्वाभ्याममूभ्यां चकितोन्तकोपि सः ।
कालाद्बहोरौज्झदितः कुतोपि ता-
मतो न मत्कोपि बलीत्यहंकृतिम् ॥ १०० ॥

१००. स सर्वजगद्ग्रासकत्वेन प्रसिद्धोन्तकोपि । अपिः संभावने । संभावयेहं यमोपीतः प्रत्यक्षेणानुपलभ्यमानादथ वानुभूयमानादत एव कुतोप्यनिर्देश्याद्बहोर्विस्तीर्णात्कालादौज्झदत्यजत् । काम् । अतोस्मान्मत्सकाशान्न कोपि बली बलिष्ठ इत्येवंविधां तां सर्वत्र प्रसिद्धामहंकृतिम् । यतो द्वाभ्याममूभ्यां भैम्यान्नाभ्यां सकाशाच्चकितो भीतः । यतो बहुतो बहुभ्यः सकाशादथाथ वा विश्वतः सर्वस्मादपि सकाशात्स्थाम्ना बलेन कृत्वाधिकाभ्याम् ॥

तूणान्निर्यन् । चापतो निर्यन् । इत्यत्र "अहीय०" [ ८८ ] इत्यादिना वा तसुः ॥ अहीयरुह इति किम् । वीर्यादहीनौ । मूर्ध्नोनवरोहिणौ ॥

---

१ सी रोहणौ. २ प °तः शिरो°. ३ प °रौघदि°. बी °रौज्झिदि°. ४ सी न हि कोपि. ५ बी °कृतिः । स°.

---

१ सी स्पष्टः । किं. २ प बी °मापती°. ३ बी शक्यात्प्रदे°. ४ प °पन्ने°. ५ बी °न्नेव. ६ सी °क्षित अ°. ७ सी °द्धोपि. प द्धोतको°. ८ प बी अपि सं°. ९ सी °देंशाद्ब°. १० बी °श्यानातीतस्यापि कर्णार्जुनयुद्धस्य सुराणां वर्तमानत्वेन प्रसिद्धमात्मयोधं स्वभटं. (१०३ श्लोको द्रष्टव्यः). ११ सी °स्मात्स°. १२ प °पि बलि°. १३ प °त्र सि°.

किम्[1] । कुतः ॥ सर्वादि । सर्वतः । विश्वतः ॥ बहु[2] । बहुतः । अत्र "किमद्व्यादि०"[3] [ ८९ ] इत्यादिना पित्तस् ॥ द्व्यादिवर्जनं किम् । द्वाभ्याम् । मत् ॥ बहोर्वै-पुल्यप्रतिषेधः किम् । बहोः कालात् ॥

इतः । अतः । कुतः । एते "इतोतः कुतः" [ ९० ] इति निपात्याः ॥ इन्द्र-वंशावंशस्थयोरुपजातिः ॥

**स भवान्बली कोस्त्वभि तं भवन्तं भवितालमस्मै भवतेपि कोत्र ।**
**न ऋते भटोस्माद्भवतोप्यनेन भवतेति कोस्तौन्न ततोभवन्तौ[1] १०१**

१०१. ततोभवन्तौ पूज्यौ भैम्याम्नौ को नास्तौत् । कथमित्याह । हे भैमे स प्रसिद्धो भवान् बल्यतश्च तं प्रसिद्धं भवन्तमभिलक्ष्यीकृत्य[4] को बल्यस्तु न कोपीत्यर्थः । अत एवास्माद् भवतस्त्वत्त ऋते विना न भटस्त्वमेव वीर इत्यर्थ इति । तथा हे आम्नास्मै प्रत्यक्षाय भवतेपि तुभ्यमप्यलं समर्थोत्र जगति को भवितास्ति भविष्यति वा न कोपी-त्यर्थः । अत एवानेन[5] भवतापि सह को भटो न कोपीत्यर्थ इति च ॥ केकिरवम् ॥

**आयुष्यते किमु ततोभवतो[2] विवस्वतः**
**पुत्रेण पार्थ उ ततोभवता ततोभवान् ।**
**विष्णोर्ऋतेपि हि ततोभवतः सुरा इति**
**शश्लाघिरे किल ततोभवतेथ भैमये ॥ १०२ ॥**

१०२. अथ किलेति सत्ये । सुरास्ततोभवते पूज्याय भैमये शश्लाघिरेवर्णयन् । कथमित्याह । उ हे भैमे ततोभवान्पूज्यः पार्थो-र्जुनस्ततोभवतः पूज्यस्य विवस्वतो रवेस्ततोभवता पूज्येन पुत्रेण

१ प °स्तौस्त्वत्त ऋते. २ सी °वतेथ.

१ प किमु । कु°. २ सी °हुतः. ३ सी °दिव°, ४ सी °वन्तिम°. ५ सी °त्यकौ ब°. ६ सी °वान्नेन.

कर्णेन सह[1] हि स्फुटं किमु आयुध्यते नैवेत्यर्थः । कथं ततोभवतः पूज्याद्विष्णोर्ऋ[2]तेपि विष्णुं सहायं विनापीत्यर्थः । एतेन त्वमसहाय एव कर्णतुल्येनान्नेन सहायुध्यमानोर्जुनादप्यतिबलिष्ठ इति व्यञ्जितं स्यादि[3]ति । प्रत्यक्षस्य भैम्यान्नयुद्धस्य दर्शनेनातीतस्यापि कर्णार्जुनयुद्धस्य सुराणां वर्तमान[4]त्वेनावभासनादायुध्यत इत्यत्र वर्तमाना । मृदङ्गच्छन्दः ॥

**आन्नं स दीर्घायुरहंस्ततो देवानां प्रियं भैमिरयःशरेण ।**
**पपात सोथानवलम्ब्य तं देवानांप्रियं घातरुजात्मयोधम् ॥१०३॥**

१०३. स प्रसिद्धो दीर्घायु[5]श्चिरजीवी भैमिस्ततो देवानां प्रियं पूज्यमान्नमयःशरेण लोहबाणेनाहन् । अथ स आन्नो घातरुजा प्रहारपीडया हेतुना पपात भूमौ । किं कृत्वा । तं ह[6]स्त्यारोहश्रेष्ठत्वेन प्रसिद्धमात्मयोधं स्वभटं गजाग्रभागारूढं चाहडमनवलम्ब्यानवष्टभ्य यतो देवानां[7]प्रियं मूर्खमवलम्बदानेसमर्[8]थमित्यर्थः[9] ॥ उपजातिः ॥

**न ततोदीर्घायुर्न्यहंश्चुलुक्योस्त्वयमायुष्मानित्युपेक्ष[1]माणः[2] ।**
**इतआयु[3]ष्मान्केवलं तदीयां जग्राहेभघटां तुरङ्गमांश्च ॥ १०४ ॥**

१०४. स्पष्टम् । किं तु ततोदीर्घायुः पूज्यः । अयमान्न आयुष्मानस्त्विति जीवतादित्यु[10]पेक्षमाणः[11] । इतआयुष्मान्पूज्यः ॥ औपच्छन्दसकापरान्तिका ॥

**स्वस्त्यस्तु तत्रभवतेत्रभवाञ्जयत्वि-**
**त्याशंसिनात्रभवता दिविषज्जनेन ।**

१ सी °पेक्ष्यमा°. २ प °णः । अत. ३ सी °युष्मन्न केव°.

१ सी °ह स्फु°. २ प °ष्णो ते°. ३ सी °वित्यप्र°. ४ प °नत्वभा°. ५ सी °युरहंस्त°. ६ प हस्त्यरो°. ७ बी °प्रियमू°. ८ प °र्थ इत्य°. ९ सी °र्थः ॥ न. १० सी °पेक्ष्यमा°. ११ प °णः । अत.

शक्रस्य तत्रभवतस्तनये नु भैमौ
न्यक्षेपि तत्रभवति प्रसवोत्करोथ ॥ १०५ ॥

१०५. स्पष्टम् । किं तु तत्रभवते पूज्याय । एवमग्रेपि । यथा कर्णस्य विजये शक्रस्य तनयेर्जुने दिविषज्जनेन पुष्पौघो न्यक्षेपि ॥ वसन्ततिलका ॥

इन्दो ऋतेत्रभवतोत्रभवन्तमीशं
स्थित्यानुकुर्वति ततोभवतीह भैमौ ।
द्राक्तत्रभोः क नु गमिष्यसि कं ततोभो
यामीति वादिन इतो रिपवोथ नेशुः ॥१०६॥

१०६. अथ रिपवो द्रागितो भैमेर्नेशुः । किंभूताः । इति वादिनः । तदेवाह । नुः प्रश्ने । हे तत्रभोः पूज्य शरणार्थं कं कं देशं नृपं वा गमिष्यसीति । तथा हे ततोभोः पूज्याहं कं नृपं देशं वा यामीति । क सति । ततोभवति पूज्य इह भैमौ । किंभूते । अत्रभवतः पूज्यादिन्दोः शिरःशेखराच्चन्द्राहते चन्द्रकलारहितमित्यर्थः । अत्रभवन्तमीशं शंभुं स्थित्या जित्वा रणाङ्गणे समपादाख्येन स्थानविशेषेण कृत्वानुकुर्वति । शंभुर्हि समपादस्थानेन तिष्ठति । अत एव स्थाणुरिति नामास्य ॥

ततोभवान् । ततोभवन्तौ । ततोभवता । ततोभवते । ततोभवत आते । ततोभवतः पुत्रेण । इतआयुष्मान् । ततोदीर्घायुः । ततो देवानां प्रियम् । अत्र "भवतु०" [ ९१ ] इत्यादिना तस्वा ॥

१ बी °ये न भैमो न्य°. सी °ये न भै°. २ बी इन्द्रो रुते°. ३ ए ह भीमौ. ४ ए °त्त भोः. ५ ए °न अतो.

१ सी °ह । नुप्र°. २ ए °क कः दे°. ३ ए °मिष्यासी°. ४ ए °तोभीति. ५ सी °र्थः । तत्र°. ६ बी स्थित्वा जि°. ७ ए °वतः पु°. ८ सी °वत पु°.

अत्रभवान्[1] । अत्रभवन्तम् । अत्रभवता[2] । तत्रभवते । अत्रभवत[3] ऋते । तत्रभवतस्तनये । तत्रभवति । इत्यत्र "त्रप्च" [९२] इति त्रप् ॥ एवमायुष्मदादि[4]भिरप्युदाहार्यम् । सूत्रद्वयस्यापि विकल्पपक्षे । स भवान् । तं भवन्तम् । अनेन भवता । अस्मै भवते । अस्माद्भवतः । अयमायुष्मान् । स दीर्घायुः । तं देवानांप्रियम् ॥ "त्रप्च" [ ९२ ] इति योगविभागश्चकारेण पुनस्तस्विधानार्थः । तेन सप्तम्यन्ता[5]दपि तस् स्यात् । ततोभवति । तत्रभवति । अन्यथा हि ततः "सप्तम्याः" [ ९४ ] इति परत्वात्त्रबेव स्यात् ॥ केचिच्च[6] भवच्छब्दस्यामन्त्रणे सौ[7] भो आदेशं कुर्वन्ति । तन्मते ततोभोः । तत्रभोः । इत्यत्रापि स्यात् ॥ कश्चित्तु भवदाद्ययोगेपि त्रसप्ताविच्छति । क्व गमिष्यसि[8][9] । क्वं यामि ॥

इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां[10] श्रीसिद्ध[11]-हेमचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तावष्टादशः सर्गः ॥

---

१ **प** °भवता. २ **प** °ता । अ°. ३ **प** °वते । अत्र°. **बी** °वते ऋ°. ४ **प** °युष्मादि°. ५ **प** °प्तम्यान्ता°. ६ **बी सी** °चित्तु भ°. ७ **प** सौ भे आ°. **सी** सौ भा आ°. ८ **सी** °ष्यति । कं. ९ **बी** °सि । किं या°. १० **बी** °यां सिद्धहे°. ११ **प** श्रीहे°.

## एकोनविंशः सर्गः ।



ख्यातो बहुत्र सर्वत्रेहैव भैमिरथावसत् ।
रणेऽत्र पतितान्कुत्राप्यरीन्स्वान्काप्यशोधयत् ॥ १ ॥

१. अथ भैमिरिहैव रणभूनिकट एवावसत् । कीदृक्सन् । आत्म-विजयेन बहुत्र बहुषु स्थानेषु सर्वत्र जगत्त्रयेपि ख्यातः । ततश्चात्र रणे कापि स्थानेरीन्पतितानशोधयदगवेषयत् । कापि च स्वान्स्वकीय-भटान्पतितानशोधयद्रणभूमिमशोधयदित्यर्थः ॥

क । कुत्र । अत्र । इह । इत्येते "क०" [ ९३ ] इत्यादिना निपात्याः ॥

सर्वत्र । बहुत्र । इत्यत्र "सप्तम्याः" [ ९४ ] इति त्रप् ॥

नैकदा नान्यदोत्सेको न कदाचिन्न सर्वदा ।
ह्रीः प्रत्युत तदा तस्य यदासीज्जयकीर्तनम् ॥ २ ॥

२. यदा तस्य भैमेर्जयकीर्तनमासीत्तदा प्रत्युतेति विपरीतफलो-पदर्शने । तस्य ह्रीर्लज्जासीत् । यस्मान्महापुरुषत्वात्तस्यैकदोत्सेकहेता-वेकस्मिन्विवक्षिते शत्रुविजयरूपाभ्युदयकाल उत्सेक औद्धत्यं नासीत्त-थान्यदा शत्रुविजयाभ्युदयकालादन्यस्मिन्नप्यभ्युदयकाले तस्योत्सेको

---

१ बी °हुत्व स°. २ प °वंत्र है°. ३ बी °रवाव°. ४ बी °णेप्रप°. ५ सी °रीन्वीक्ष्याप्य°. ६ सी °दा मान्य°. ७ सी °दासी°.

---

१ सी °हुवहुस्था°. २ प °मिशो°. ३ प °हुव । इ°.। ४ बी °स्य भीमे°. ५ सी प्रत्येति. ६ बी ह्रीलज्जा. ७ प °न्यदो'श°. ८ बी °स्योच्छेको.

नासीत् । न[1] तस्यान्यदोत्सेकोभवत्किं कदाचिन्नासीत्सर्वदा वेत्याह[2] । न कदाचिन्न सर्वदा न स्तोकेनापि सर्वस्मिन्नपि काल इत्यर्थः ॥

कदाचित् । यदा । तदा । सर्वदा । एकदा । अन्यदा । इत्यत्र "किंयत्[3]०" [ ९५ ] इत्यादिना दा ॥

आन्नदूतो[1]भ्यगादेतर्ह्यूचे[2] चेति सदा पटुः ।
यत्तदानीं व्यधत्तान्नो[3] न तत्सन्मन्यतेधुना ॥ ३ ॥

३. स्पष्टः । किं त्वेतर्ह्यस्मिन्प्रस्तावेभ्यगा[5]द्धेमिमभ्याययौ । ततः सदा पटुर्वाग्मी( ग्मी ? ) सन्नूचे[6] च । यद्विग्रहादि । तदानीं कल्ये । न सन्मन्यते मया भद्रं[7] न कृतमिति जानातीत्यर्थः ॥

क्षात्रो धर्म इदानीम[4]स्त्यद्याद्यानां कथा ऋताः ।
यत्सद्यो मूर्छिते शत्रौ परेद्यवि कृपां व्यधाः ॥ ४ ॥

४. इदानीं कलिकालेपि क्षात्रो धर्मः पतितप्रहाराकरणादिः क्षत्रियाचारोस्ति । तथाद्यानां रामचन्द्रादीनां कथा अद्य ऋताः सत्या बभूवुः । अनेन क्षत्रियोचितयुद्धेन कृत्वा त्वया पूर्वे क्षत्रियाचारयो[8]धिनोद्य सत्यीकृता इत्यर्थः । शत्रावाम्रे । परेद्यवि परस्मिन्नहनि । शिष्टं स्पष्टम् ॥

सदा । अधुना । इदानीम्[9] । तदानीम् । एतर्हि । इत्येते "सदा०" [ ९६ ] इत्यादिना निपात्या[10]ः ॥

सद्यः । अद्य[11] । परेद्यवि । इत्येते "सद्योद्य" [ ९७ ] इत्यादिना निपात्याः ॥

---

१ ए °तोभागातर्ह्यनेचेति. २ बी °गादैतह्यूचेति. ३ बी °त्तान्ये न. ४ सी °नीनस्तदाद्यानां. ५ बी °मस्तथा°.

---

१ ए सी नन्वस्या°. २ सी °र्थः ॥ य°. ३ सी यदेत्या°. ४ सी स्पष्टम् । किं. ५ ए °वेभ्यागा°. ६ ए सचेव । य°. ७ ए बी °द्रं कृ°. ८ ए °योधनो°. ९ सी °म् । ए°. १० सी °त्याः ॥ पू°. ११ बी अद्यः । प°.

पूर्वेद्युरपरेद्युश्चान्येद्युरन्यतरेद्युरु[1] ।

तुभ्यं द्रुह्यन्ति ये दर्पादुत्तरेद्युः पतन्ति[2] ते ॥ ५ ॥

५. स्पष्टः । किं तु उ हे चौलुक्य । उत्तरेद्युरप्रेतनेह्नि ॥

नोभयेद्युर्व्यधात्कर्णो नोभ[3]यद्युर्यदर्जुनः ।

अधरेद्युर्व्यधास्त्वमितरेद्युः करोषि किम् ॥ ६ ॥

६. स्पष्टः[1] । किं तूभयेद्युर्दिनद्वये । यदन्योन्यं युद्धम् । कर्णार्जुनौ हि दिनद्वयं मिथो युद्धाविति पुराणम् । अधरेद्युरधरस्मिन्नहनि दिनस्यान्त्ये[2] याम इत्यर्थः । तन्निरुपमविजयफलं महायुद्धम्[3] । इतरेद्युरधरस्मादह्नोन्यस्मिन्नह्नि करोपि किं विधेयस्यातिस्तोककाले[4]पि विहितत्वाच्छेपकाले किं करिष्यसीत्यर्थः ॥

पूर्वेद्युः । अपरेद्युः । अधरेद्युः । उत्तरेद्युः । अन्येद्युः । अन्यतरेद्युः । इतरेद्युः । अत्र "पूर्वापर०" [ ९८ ] इत्यादिनै[5]द्युस् ॥

उभयद्युः । उभयेद्युः । अत्र "उभयाद् द्युश्च" [९९] इति द्युस्[6] एद्युस् च ॥

न परुन्न परार्यासीन्न बहुर्हि न कर्हिचित् ।

चौलुक्यैर्विग्रहो नः किं त्वकस्मादेष[4] ऐषमः ॥ ७ ॥

७. स्पष्टः । किं तु बहु[7]र्हि बहुषु संवत्सरेषु । कर्हिचित्कस्मिन्नप्यनद्यतने काले । अकस्मादतर्कितम् । ऐपमोस्मिन्संवत्सरे ॥

अकुप्यत्सर्वथा[5] यर्हि कथंचित्ते पितामहः ।

तर्ह्यपीत्थं व्यधान्नान्नो भक्तिं तु बहुधाकरोत् ॥ ८ ॥

---

१ सी °द्युश्चा°. २ सी °न्ति । स्पष्ट उ. ३ बी °भयेद्यु°. ४ बी सी °ष एष°. ५ प °था यर्हि.

---

१ बी °ष्टः । उभ°. २ बी सी °स्यान्ते या°. ३ प °म् । अत°. ४ प °ले किं करोष्यतीत्य°. ५ प सी °दिनेद्यु°. ६ प °स् ॥ न. ७ सी °हुषु. ८ बी °तम् । एमेस्मि°. सी °त एष°.

८. स्पष्टः । किं त्वकुप्यदाम्नं प्रति । ते पितामहो जयसिंहः । इत्थमिममेतं[1] वा विग्रहलक्षणं प्रकारं न व्यधात् । बहुधा बहुभिः प्रकारैः[2]॥

ऐषमः । पैरुत्[3] । परारि । इत्येते "ऐषमः०" [ १०० ] इत्यादिना निपात्याः ॥

कर्हिचित् । यर्हि । तर्हि । बहुर्हि । इत्येतेषु "अनद्यतने र्हि( र्हिः )" [ १०१ ] इति र्हिः ॥

सर्वथा । इत्यत्र "प्रकारे[4] था" [ १०२ ] इति था ॥

कथंचित् । इत्थम् । एतौ "कथमित्थम्" [ १०३ ] इति निपात्यौ ॥

बहुधा । इत्यत्र "संख्याया धा" [ १०४ ] इति धा ॥

**चिकीर्षत्याम्न ऐकध्यं पूर्वस्नेहं द्विधाकृतम् ।**
**तितिक्षस्वै[1]कधैकध्यमपराद्धं[2] तदास्य तत् ॥ ९ ॥**

९. आम्नो द्विधाकृतमनेन विग्रहेणैकं सन्तं द्वौ कृतं पूर्वस्नेहमग्रेतनीं[5] प्रीतिमैकध्यमनेकं सन्तमेकमभिन्नं चिकीर्षति मैत्रीं चिकीर्षतीत्यर्थः । तत्तस्माद्धेतोस्तदानन्तरातीतदिनेस्याम्नस्यापराद्धं विग्रहलक्षणमैकध्यं प्रसादकरण[6]रूपेणैकप्रकारेण तितिक्षस्व सहस्व । किंभूतम् । एकधानेकदुर्वाक्यप्रहाराद्यपेक्षयानेकं सदेकविग्रहापेक्षयैकमाम्नस्यैकमपरा[7]द्धं प्रसह्य सहस्वेत्यर्थः ॥

**द्वेधा त्रेधापराद्धेपि द्वैधं त्रैधमिवैकधा ।**
**प्रार्थितानां सतां चेतो द्वैधं त्रैधं च नो भ[3]वेत् ॥ १० ॥**

१०. द्वेधा त्रेधा द्वाभ्यां[8] प्रकाराभ्यां त्रिभिः प्रकारैर्वापरा[9]द्धेपि द्वि-

१ प °कध्य°. २ सी °राधं त°. ३ प भवत्.

१ सी °तं च वि°. २ बी सी °रैः । एष°. ३ बी परत्. ४ बी °रे वा इ°. ५ बी °नीं प्रति°. ६ बी °रूपप्र°. ७ प बी °राधं प्र°. ८ सी °भ्यां त्रि°. ९ सी °राधेपि.

स्त्रिर्वापराधे कृतेपीत्यर्थः । सतां सज्जनानां चेतो न भवेत् । कीदृशम्[1] । द्वैधमेकं सत्तोषातोषाभ्यामुभयरूपं त्रैधं चैकं सत्तोषातोषमिश्रत्वैस्त्रिरूपं च । कीदृशां सताम् । प्रार्थितानां[2] मैत्र्यर्थं याचितानाम् । कथम् । एकै[3]-धैकप्रकारेण सकृदित्यर्थः । किंवत् । द्वैधं त्रैधमिव । द्वाभ्यां प्रकारा-भ्यामिव त्रिभिः प्रकारैरिव वा । अनेकशो या[4]चितानामिव सकृद्या-चितानामपीत्यर्थः । तस्मादात्रे प्रसन्न एव भवेति सकलश्लोकस्य भावार्थः[5] ॥

द्वेधा त्रेधा न भाव्याप्तो द्वैधस्त्रैधश्च मा[7] स्म भूः ।
सकृद्विस्त्रिश्चतुः पञ्चकृत्वो वागः सहेन्महान् ॥ ११ ॥

११. आप्तो न भावी । कीदृक् । द्वेधा भक्तोभक्तश्च । तथा[6] त्रेधा भक्तोभक्तो मिश्रश्च । अत्यन्तं भक्त एव भविष्यतीत्यर्थः । तथा त्वमपि मा स्म भूः । कीदृक् । द्वौ[8] विभागौ प्रकारौ वास्य द्वैधः प्रसन्नोप्रसन्न-श्चैवं त्रैधश्च । उत्तरार्धं स्पष्टम् ॥

द्विधाकृतम्[9] । अत्र "विचाले च" [ १०५ ] इति धा ॥

ऐकध्यं तितिक्षस्व एकधा प्रार्थितानाम् ॥ विचाले । ऐकध्यं चिकीर्षति एकधापराद्धम्[10] । अत्र "वैकाद्ध्यमञ्" [ १०६ ] इति ध्यमञ् ॥

द्वैधं त्रैधं प्रार्थितानाम् । द्वेधा त्रेधापराद्धे ॥ विचाले । द्वैधं त्रैधं मनः (तः) । द्वेधा । त्रेधा । इत्यत्र "द्वित्रेर्०" [ १०७ ] इत्यादिना धमञेधौ ॥

द्वैधः । त्रैधः । अत्र "तद्वति धण्" [ १०८ ] इति धण् ॥

---

१ बी मा साभूः.

---

१ ए °पं । की°. २ सी °नां मत्यर्थया°. ३ ए °कधेक°. ४ बी °चिना°. ५ सी °र्थः । द्वैधा त्रैधा. ६ ए °था त्रैधा. ७ बी मा साभूः. ८ बी द्वौ भा°. ९ सी °त । अ°. १० ए °धाप°. '११ ए °द्वविधति धण् । प°.

पञ्चकृत्वः। अत्र "वारे कृत्वस्" [ १०९ ] इति कृत्वस्॥

द्विस्त्रिश्चतुः। इत्यत्र "द्वित्रि०" [ ११० ] इत्यादिना सुच्॥

सकृत्। इत्यत्र "एकात्सकृच्चास्य" [ १११ ] इति सुच् सकृदित्यादेशश्च॥

बहुधा गणधा तावद्धा वा[1] वक्ष्याम्यहं यथा।
भवेत्प्रागागतः स्नेहो युवयोः प्रागिवाधुना॥ १२॥

१२. बहवः प्रभूता गणाः समुदायभूतास्तावन्तश्च कियन्तोपि विवक्षिता आसन्ना[1] वारा अस्य वचनस्य बहुधा गणधा तावद्धा वा तथाहं वक्ष्यामि यथा युवयोः प्राक्प्राचः कालादागतश्चिरकालीन इत्यर्थः[2]। स्नेहः प्रागिव प्राचि काल इवाधुनापि भवेत्॥

र[2]मणीयं यथासीत्प्राक्सिद्धेशे प्राग्गतागते।
भृत्येनान्नेन दे[3]वात उपर्यपि तथास्तु ते॥ १३॥

१३. हे देव भैमेतोस्य वर्तमानकालस्योपर्यप्यूर्ध्वकालेपि ते तव भृत्येनान्नेन कृत्वा प्राक्प्राची दिग्देशो वावन्तयस्तथा रमणीयं[3] त्वदाज्ञामनोज्ञमस्तु। यथा सिद्धेशे जयसिंहे सति प्राक्प्राची दिग्देशः कालो वा रमणीयं जयसिंहाज्ञया[4] मनोज्ञमासीत्। किंभूते। प्राग्गतागते[5] गतश्चासावागतश्च[6] गतागतस्तस्मिन्प्राक्प्राच्यां दिशि[7] देशे वा मालवेषु यशोवर्म[8]नृपजयाय[9] गते प्राच्या दिशो देशाद्वा[10] विजित्यागते[11] च। आन्नेन सह तव सख्य आन्नमाश्रितोवन्तिपतिर्बल्लालोपि त्वत्किंकरो भविष्यत्यतो यथा सिद्धेशाज्ञयावन्तयः प्राग्रमणीया आसंस्तथाधुना त्वदाज्ञा-

१ बी वा पक्ष्या°. २ प °मर्णा य°. ३ बी देवता उ°.

१ प °न्नां चारा. २ बी इत्यः स्ने°. ३ प °यं त्वादा°. ४ °हाज्ञाया. ५ प °गतश्चासावगत आगता°. ६ सी °श्च तस्मि°. ७ सी °शि दिशो वा. ८ प बी °शोधर्म°. ९ सी °यादाग°. १० बी देशाद्वा वितिजि°. ११ सी °ते आ°.

यापि सन्त्वित्यर्थः । क्रियाव्ययविशेषण इति वचनाद्रम्य( मणीय ? )-मित्यत्र क्लीबता । एवमग्रेपि ॥ अत इत्यत्र "आद्यादिभ्यः" [ ७. २. ८४ ] इति षष्ठ्यर्थे तस् । " रिरिष्टात् " [ ७. २. ८२ ] इत्यादिना रियोगे षष्ठ्या विधानात् ॥

उपरिष्टाद्गते सिद्धेधस्तादिन्द्रस्त्वमागमः ।
द्वयं युवाभ्यां भोक्तव्यमाभ्स्तज्ज्ञातवान्न हि ॥ १४ ॥

१४. हे भैमे त्वमुप(त्वमिन्द्र उप?)रिष्टादूर्ध्वाया दिशो देशाद्वा स्वर्गात्सकाशादधस्तादधरस्यां दिशि देशे वा मर्त्यलोक आगम आगतः । क्व सति । सिद्धे जयसिंहेधस्तान्मर्त्यलोकात्सकाशादुपरिष्टात्स्वर्गे गते प्राप्ते । ततश्च द्वयमुपरिष्टादधस्ताच्च स्वर्गो मर्त्यलोकश्च युवाभ्यां भोक्तव्यमुपभोग्यम् । तत्तु स्वर्गः सिद्धेन भोक्तव्यो मर्त्यलोकश्च त्वयेत्येतदाज्ञो मर्त्यलोकोपभोगवाञ्छया त्वया सहैवं युद्धकरणेन न हि नैव ज्ञातवान् ॥

खेचराः कौतुकं द्रष्टुं ये यान्त्यायान्त्युपर्यधः ।
अस्तु रम्यं द्वयं तेषां युन्मैत्रीवार्तयाद्य वाम् ॥ १५ ॥

१५. ये खेचरा विद्याधराद्याः कौतुकं रणकुतूहलं द्रष्टुं यान्ति । क्व । उपर्यूर्ध्वायां दिशि देशे वा स्वर्गे तथाधश्चाधरस्यां दिशि देशे वा पाताले च । तथा य आयान्ति मर्त्यलोक आगच्छन्ति । कुतः । उपर्यधश्च स्वर्गात्पातालाच्च । कौतुकं द्रष्टुं लोकत्रयेपि ये भ्राम्यन्तीत्यर्थः । तेषां खेचराणामद्यास्मिन्दिने वां युवयोर्युन्मैत्रीवार्तया रणसख्ययोर्वृ-

---

१ सी °यावि°. २ सी °स् । अरिष्टा°. ३ प °ष्टादिना. ४ प °तश्चाद्गमु°. ५ बी °र्गो मृत्युलो°. ६ प °न हि. ७ बी वा पा°. ८ सी °लाद्वा । कौ°. ९ बी °योन्मै°.

त्तान्तेन कृत्वा द्वयमुपर्यधश्च रम्यमस्तु । युवयोः संबद्धां युन्मैत्रीवार्तां स्वर्गे पाताले च खेचराः कुर्वन्त्वित्यर्थः ॥

**पुरस्तादुदयत्यंशाववस्ताच्च त्वयि प्रभो ।**
**अर्घाञ्जलिं करोत्वान्नो रम्यमस्तु द्वयं च तत् ॥ १६ ॥**

१६. हे प्रभो आन्नः पुरस्तात्पूर्वस्यां दिशि देशे[1] वावस्ताच्चावरस्यां दिशि देशे वापि गूर्जरत्रायां च रविं त्वां चोद्दिश्यार्घाञ्जलिं पूजार्थमञ्जलिं करोतु । क्व सति । अंशौ रवौ । कीदृशे । पुरस्तात्पूर्वस्या दिशो देशात्[2]का-लाद्वा प्रभातात्सकाशादुदयत्युदयं गच्छति । तथा त्वयि च । कीदृशे । अवस्तादवरस्याः पश्चिमाया दिशो देशाद्वा[3] गूर्जरत्रायाः सकाशादु-दयति वृद्धिं गच्छति । ततश्चाश्चर्यत्वात्तद्द्वयं पुरस्तादवस्ताच्च रम्यमस्तु ॥

**योधो याति पुरोवश्च येन रम्यं त्रयं च तत् ।**
**तस्मान्नित्योदयोन्योसि [1]भास्वान्मोहात्तु [2]नार्चितः ॥ १७ ॥**

१७. यो भास्वानधोधरस्या[4] दिशो देशाद्वा समुद्रमध्यात्[5]सकाशा-दुदयकाले पुरः पूर्वस्यां दिशि देशे वा याति । तथा यः पुरः पूर्वस्या[6] दिशो देशाद्वा सकाशा[7]दपराह्णेवोवरस्यां पश्चिमायां दिशि देशे वा याति तथा योर्व[8]श्च पश्चिमाया दिशो देशाद्वा सकाशादस्तकालेधोब्धिमध्ये [9]याति । अस्तकाले हि रविः पश्चिमा[10]ब्धि[11]मध्ये मज्जति प्रातश्च पूर्वाब्धि-मध्यादुदेतीति रूढिः । तथा येन च भास्वता तत्त्रयमधः पुरोवश्च

१ प भासान्मो°. २ बी नार्चितः.

१ बी °शेव°. २ प °शाकालाद्वायप्र°. ३ सी °द्वा समुद्र°. ४ बी °रस्यां दि°. ५ प °ध्यासका°. ६ बी °र्वस्यां दि°. ७ सी °शादस्त°. ८ बी °व प°. ९ प यास्ति । अ°. १० प °माध्यमज्ज°. ११ सी °ब्धिचम°.

प्रकाशितत्वाद्रम्यं तस्माद्भास्वतः सकाशादसि त्वमन्यो भिन्नो भास्वान्रविः । यतो नित्योदयः । मोहात्त्वज्ञानात्पुनस्त्वमाज्ञेन नार्चितः ॥

बहुधा । इत्यत्र "बहोर्धासन्ने" [ ११२ ] इति धा ॥ एके तु । गणधा । तावद्धा । अत्रापीच्छन्ति ॥

प्राग्रमणीयम् । प्रागागते । प्राग्गते ॥ काले । प्रागागतः । प्रागिव । इत्यत्र "दिक्शब्दाद्०" [ ११३ ] इत्यादिना धा ॥

उपरि रम्यम् । उपरिष्टाद्भोक्तव्यम् । उपरि आयान्ति । उपरिष्टादागमः । उपरि यान्ति । उपरिष्टाद्गते ॥ काले । अत उपरि । अत्र "ऊर्ध्वाद्रि०" [ ११४ ] इत्यादिना रिरिष्टातावूर्ध्वस्य चोपादेशः ॥

पुरः पुरस्ताद्रम्यम् । पुरः सकाशाद्याति । पुरस्तात्सकाशादुदयति । पुरो याति । पुरस्तादर्घाञ्जलिम् ॥ अवः अवस्ताद्रम्यम् । अवः सकाशाद्याति । अवस्तात्सकाशादुदयति । अवो याति । अवस्तादर्घाञ्जलिम् ॥ अधो रम्यम् । अधस्ताद्भोक्तव्यम् । अधः सकाशाद्याति । अधस्तात्सकाशाद्गते । अधो याति । अधस्तादागमः । अत्र "पूर्वावर०" [ ११५ ] इत्यादिना-अस्-अस्तातौ । पूर्वावराधराणां च पुर्-अव्-अधादेशाः ॥

परस्तादवरस्ताद्यात्वायात्वान्नस्त्वदाज्ञया ।
दक्षिणतोथोत्तरतस्तच्चतुष्कं वशं हि ते ॥ १८ ॥

१८. त्वदाज्ञयान्नः परस्तादवरस्ताद्दक्षिणत उत्तरतश्च पूर्वपश्चिमाद-

१ बी दक्षण°. २ सी °णत उत्त°. ३ प °तुष्कव°.

१ बी °काशत्वा°. सी °काशत°. २ सी °भिनवो भा°. ३ प °तो मित्याद°. ४ बी °हाचज्ञा°. ५ बी °न्नेना°. ६ सी °रिष्टा°. ७ प °ति । अव°. ८ बी °धः शका°. ९ बी अधःस्ता°. १० प सी °राणां. ११ सी °या प°. १२ प °स्तान्दक्षि°.

क्षिणोत्तरासु दिक्षु देशेषु वा यातु स्वेच्छया विचरतु । तथा त्वत्से-वाद्यर्थं पूर्वपश्चिमादक्षिणोत्तराभ्यो दिग्भ्यो देशेभ्यो वा[1] त्वत्पार्श्वमा-यातु । हि यस्मात्तच्चतुष्कं परस्तादवरस्ताद्दक्षिणत उ[3]त्तरतश्च ते वशं जितत्वा[4]दायत्तमस्ति ॥

परतोवरतो यात उत्तरा[1]द्दक्षिणादे[2]थ ।
त्वत्सैन्यस्याग्रगोस्त्वाप्नो वश्यं यद्यपि तत्तव ॥ १९ ॥

१९. आप्नस्त्वत्सैन्यस्याग्रगोस्तु । कीदृशस्य सतः । यद्यपि तत्परतो-व[5][6]रत उत्तरा[7]द्दक्षिणाच्च पूर्वपश्चि[8]मादक्षिणोत्तरा दिशो देशा[9] वा तव वश्यं तथापि कौतुकाद्देशश्रीदर्शनाद्यर्थं यातो विचरतः । क । परतः सकाशादव[10]रतस्तथा[11]वरतः सकाशात्परतोथ तथोत्तरात्सकाशाद्दक्षिणा[12][13]त्तथा दक्षिणात्सका[14]शादुत्तरात् । चतुर्ष्वपि दिक्षु देशेषु वेत्यर्थः ॥

यात ऐ[3]तोधरात्पश्चाद्रामरूपेण यः फ[4]णी ।
यत्कीर्त्या तद्वयं रम्यं वेत्त्याप्नस्त्वां तमोजसा ॥ २० ॥

२०. यः फणी शेषाहिरधरादधरस्या दिशो देशा[15]द्वा पातालाद्राम-रूपेण बलभद्रमूर्त्येत आगतः । क । पश्चादपरस्यां पश्चिमायां दिशि देशे वा सुराष्ट्रासु । यो मर्त्यलोकेवतीर्ण इ[16]त्यर्थः । बलभद्रो हि शेषा-वतार इति रूढिः । तथा यश्च पश्चात्सुराष्ट्राभ्यो मर्त्यलोका[17]त्सकाशादि-

---

१ बी सी °रादक्षि°. २ बी °दश्च । त्व°. ३ सी °एवाध°. ४ प फणीः । य°.

---

१ बी वा तत्पा°. २ प °स्ताद्°. ३ सी °त्तश्च. ४ बी °दायात्त°. ५ सी °वतर°. ६ बी °र उ°. ७ बी सी °रादक्षि°. ८ प °श्चिमद°. ९ बी °शाद्वा त°. १० सी °रतः स°. ११ प °वतर°. १२ सी °णात्स°. १३ प °त्साद°. १४ बी °शात्तथादु°. १५ सी °शात्पाता°. १६ बी °र्थः । तथा यत्की°. १७ सी °काशा°.

त्यर्थः । अधरात्पाताले यातो गतः पुनः शेषाहिरेवाभूदित्यर्थः । तथा यत्कीर्त्या तद्वयमधरात्पश्चाच्च पातालमर्त्यलोकावित्यर्थः । रम्यमोजसा बलेन कृत्वा तं शेषाहिं शेषतुल्यबलमित्यर्थः । त्वामाप्नो वेत्ति ॥

परस्तात् अवरस्ताद्वशम् । परस्तादवरस्तादायातु । परस्तादवरस्ताद्यातु । इत्यत्र "पर०" [ ११६ ] इत्यादिना स्तात् ॥

दक्षिणत उत्तरतो वशम् । दक्षिणत उत्तरत आयातु । दक्षिणत उत्तरतो यातु । परतोवरतो वश्यम् । परतोवरतः सकाशाद्यातः । परतोवरतो यातः । अत्र "दक्षिण०" [ ११७ ] इत्यादिना तस् ॥

अधरात् पश्चाद्रम्यम् । अधरात्पश्चादेतः । अधरात्पश्चाद्यातः । दक्षिणादुत्तराद्वश्यम् । दक्षिणादुत्तरात्सकाशाद्यातः । दक्षिणादुत्तराद्यातः । अत्र "अधर०" [ ११८ ] इत्यादिना-आत् ॥

वसता दक्षिणा रम्यं येन तस्य मुनेः समम् ।
मात्रा सह गुरुं प्रैषीदाप्नस्ते दातुमात्मजाम् ॥ २१ ॥

२१. आप्नस्ते तुभ्यमात्मजां दातुं मात्रा +पुत्रीजनन्या सह गुरुं पुरोहितं प्रैषीत् । कीदृशम् । तस्य मुनेरगस्त्यस्य प्रभावादिना समं तुल्यम् । येन मुनिना कृत्वा दक्षिणा दक्षिणा दिग्देशो वा रम्यं पवित्रम् । यतो दक्षिणा दक्षिणस्यां दिशि देशे वा वसता तिष्ठता ॥

दक्षिणा रम्यम् । दक्षिणा वसता । इत्यत्र "वा दक्षिणात्०" [ ११९ ] इत्यादिना-आ वा ॥ पक्षोदाहरणानि प्राक्तनान्येव ज्ञेयानि ॥

---

१ बी सी गुरप्रै°.

---

१ प °श्चान्वपा°. २ प °णतो । उ°. ३ प °त्तराद्यातः । अत्र. ४ बी °गस्तस्य. ५ सी °क्षिण°. ६ प °म् । याद°.

---

+ पञ्चाशत्तमश्लोकस्थेन पितामहीसममित्यनेन विरोधं परिहर्तुं स्वजनन्या इत्यावश्यकमिति भाति ।

यदितो दक्षिणा रम्यं स्थितैर्लोकैस्ततोपि यत् ।
दक्षिणाह्यागतस्तत्र गुरुरान्नस्य तिष्ठति ॥ २२ ॥

२२. इतः स्थानाद्दक्षिणा दक्षिणस्यां दूरवर्तिन्यां दिशि देशे वा स्थितैर्लोकैः कृत्वा यद्दक्षिणा रम्यं या दक्षिणा दूरा दिग्देशो वा रम्यस्ततोपि दक्षिणस्या दिशो देशाद्वापि परं यद्दक्षिणाहि या दूरा दक्षिणा दिग्देशो वास्ति तत्र दक्षिणाहि[1] दक्षिणस्यां दूरायां दिशि देशे वागत आन्नस्य गुरुस्तिष्ठति ॥

दक्षिणा रम्यम् । दक्षिणा स्थितैः । दक्षिणाह्यस्ति[2] । दक्षिणाह्यागतः । अत्र "आही दूरे" [ १२० ] इत्यादि[3]प्रत्ययौ[4] ॥

यैः ख्यातमुत्तरा जातैर्वर्धितैरुत्तराहि सत् ।
तानश्वान्प्राहिणोदान्नो दातुमुद्वाहमङ्गले ॥ २३ ॥

२३. उत्तरोत्तरस्यां दिशि देशे वा केकाणे[5] जातैर्यैः केकाणाश्वैः कृत्वोत्तरोत्तरा[6] दिग्देशो[7] वा ख्यातं तथोत्तराह्युत्तरस्यां दिशि देशे वा वर्धितैर्वृद्धिं नीतैर्यैः कृत्वोत्तराहि[8] सच्छोभनम् । उत्तरार्धं स्पष्टम् ॥

उत्तरा ख्यातम् । उत्तरा जातैः । उत्तराहि सत् । उत्तराहि वर्धितैः । अत्र "वोत्तरात्" [ १२१ ] इत्याही वा ॥ पक्षोदाहरणानि[9] प्राक्तनान्येव ॥

जातैर्विन्ध्याद्रेः पूर्वेणोत्तरपश्चादपाक्तथा ।
पश्चाच्छ्लाघ्यं च यैस्तान्स प्राहिणोत्त्वत्कृते गजान् ॥ २४ ॥

२४. स आन्नस्त्वत्कृते तान्गजान्प्राहिणोत् । भद्रजातीयत्वेन यैः

१ ए °णात्याग°. २ ए °तैरु°. ३ बी °हि तत्. ४ ए °त् । न°. ५ बी °श्चाछाध्यं.

१ ए दक्षणाहि दक्षण°. २ ए °णाहस्ति. ३ बी सी °त्यादिप्र. ४ ए °यौ । यै ख्या°. सी °यौ । खैः ख्या°. ५ ए °काणे जा°. ६ बी सी °त्तरा°. ७ ए °शो व्याख्या°. ८ ए °हि वृ°. ९ ए °क्षोद°.

कृत्वा श्लाघ्यम् । किम् । विन्ध्याद्रेर्विन्ध्यशैलात्पूर्वेण पूर्वादूरा दिग्देशो वा । तथोत्तरपश्चादुत्तरा च सापरा चोत्तरापरा दिग्देशो वा वायव्यकोणस्तथापागपाची दक्षिणा दिग्देशो वा तथा पश्चाच्चापरा पश्चिमा दिग्देशो वा । उपलक्षणत्वाद्विन्ध्याद्रेरष्टापि दिशो देशा वेत्यर्थः । यतः । किंभूतैः । जातैः । क । विन्ध्याद्रेः पूर्वेण । तथोत्तरपश्चात्तथापाक्तथा पश्चाच्च पूर्वेण श्लाघ्यम् ॥

पूर्वेण जातैः । अत्र "अदूरे एनः" [ १२२ ] इत्येनः ॥

अपाक् श्लाघ्यम् । अपाग्जातैः । अत्र "लुबञ्चेः" [ १२३ ] इति धाप्रत्ययस्य लुप् ॥

पश्चात् । उत्तरपश्चात् । अत्र "पश्चः०" [ १२४ ] इत्यादिना पश्चादेशः ॥

इत्युक्त्वोत्तरपश्चार्धभूपदूते स्थितेब्रवीत् ।
क्ष्मापरार्धं खपश्चार्धं शुक्लीकुर्वन्सितैर्नृपः ॥ २५ ॥

२५. स्पष्टः । किं तूत्तरपश्चार्धभूपदूत उत्तरापरस्या दिशो यदर्धमुत्तरदिग्विभागस्तस्य भूप आन्नस्तस्य दूते । क्ष्मापरार्धं खपश्चार्धं पृथ्व्या व्योम्नश्चापरमन्यतममर्धं खण्डमेकमित्यर्थः । नृपो भैमिः ॥

अरूकुर्वन्नजीकुर्वन्संमुखीभवतो रणे ।
अस्मानप्युन्मनीकुर्वन्न्यूनीस्यादान्नकः कुतः ॥ २६ ॥

२६. आन्नकः कुतो न्यूनीस्याद्धीनो भवेन्न कस्मादपीत्यर्थः । कीदृक्सन् । रणे संमुखीभवतो भटानरूकुर्वन्शस्त्रव्रणवतः कुर्वंस्तथा

१ बी सी °त्युक्त्वोत्त°. २ ए सी °र्धं शु°.

१ ए बी °द्रेविन्ध्य°. २ बी °रा चासा अप°. ३ बी °क्षणादि°. ४ सी देशो वे°. ५ बी पश्चा इ°. ६ सी °त्तरस्याप°. ७ बी °मर्द्धा ख°. ८ ए °पो नैमि ॥ अ°. ९ सी °तोपि न्यू°.

रजीकुर्वन्धूलीकुर्वंस्तीव्रप्रहारैश्चूर्णीकुर्वन्नित्यर्थः । अतिविक्रान्त इत्यर्थः । अत एवास्मानप्युन्मनीकुर्वन्सङ्क्रमायोत्कण्ठयन्नित्यर्थः । साश्चर्यीकुर्वन्नित्यर्थो वा ॥

उच्चक्षूभवतोचेतीभवतो मूर्छया भटान् ।
रहीभूते रणे नाहन्यः श्लाघार्हः कथं न सः ॥ २७ ॥

२७. स आन्नः कथं न श्लाघार्हः । यः क्षत्रियोत्तमत्वाद्रणे भटान्नाहन् । किंभूतान् । मूर्छया तीव्रप्रहारोत्थमोहेनोच्चक्षूभवत उद्भ्रान्तनेत्रगोलकीभवतस्तथाचेतीभवतोचेतनीभवतः । अत एव किंभूते रणे । रहीभूते रहसि रहसि भूते भटानां मूर्छितत्वेनासत्कल्पत्वाच्छून्यीभूत इवेत्यर्थः ॥

पश्चार्धम् । अपरार्धम् । उत्तरपश्चार्धे । इत्यत्र "वोत्तर०" [ १२५ ] इत्यादिना वा पश्चादेशः ॥ उत्तरापरार्धम् । इति पक्षोदाहरणं ज्ञेयम् ॥

शुक्लीकुर्वन् । संमुखीभवतः । न्यूनीस्यात् । अत्र "कृभू०" [ १२६ ] इत्यादिना च्विः ॥

अरूकुर्वन् । उन्मनीकुर्वन् । उच्चक्षूभवतः । अचेतीभवतः । रहीभूते । रजीकुर्वन् । इत्यत्र "अरुर्मन०" [ १२७ ] इत्यादिना च्वावन्तस्य लुक् ॥

सर्पीकृत्यादति भटान्संबन्धोप्यत्र युज्यते ।
धनूभवति वंशे हि गुणः श्लाघास्पदं भवेत् ॥ २८ ॥

---

१ सी °त्यादिति. २ बी °न्संबोधोप्य°. ३ प °ते । धेनू°. ४ बी वंशो हि. ५ बी सी गुण श्ला°. ६ प श्लाघ्यास्प°.

---

१ सी °त्यर्थादत. २ प °क्रमयो°. ३ सी °थं श्लाघार्हे न यः. ४ सी °न् । मू°. ५ प °न्ततत्र°. ६ बी °चेत°. ७ सी °सि भू°. ८ बी रभू°. ९ प °च्छून्यां भू°. १० सी °श्चार्धः ः अ°. ११ सी रजी°.

२८. स्पष्टः । किं तु सर्पीकुर्यादति भटान् सर्पींषीवे सुखेन भटा-न्संहरमाण इत्यर्थः । संबन्धो विवाहेन स्वजनसंबन्धः । अत्रान्नवि-षये । धनूभवति चापीभूत इत्यर्थः । गुणो ज्या । यथा धनूभूतो वंशो गुणारोपयोग्यस्तथैव विक्रान्त आन्नोपि संबन्धयोग्य इत्यर्थः ॥

आन्न एवेदृशो नान्यः कश्चिद्भवितुमर्हति ।
सर्पिर्भवति किं तैलं धनुर्भवति किं नडम् ॥ २९ ॥

२९. स्पष्टः । किं त्वीदृशो विक्रान्तत्वादिगुणोपेत आन्न एव भवि-तुमर्हति नान्यः कश्चित् । नडं तृणभेदः ॥

सर्पीकुर्यं । धनूभवति । इत्यत्र "इसुसोर्बहुलम्" [ १२८ ] इति च्व्यव-न्तस्य बहुलं लुप् । न च स्यात् । सर्पिर्भवति । धनुर्भवति ॥

यथार्को दृषदीभूतं कुर्यादुदकसाद्धिमम् ।
आन्नभक्तिर्दृषद्भूतमस्मदीयं मनस्तथा ॥ ३० ॥

३०. यथा रविर्हिमं दृषदीभूतं शीतेन पाषाणतुल्यीभूतं सदुदक-सात्कुर्यात्सर्वमप्युदकीकरोति तथान्नभक्तिरस्मदीयं मनो दृषद्भूतं कोपा-त्कठोरीभूतं सदुदकसात्कुर्यादार्द्रीकरोति प्रसन्नं करोतीत्यर्थः ॥

आन्नो भक्त्यानया मित्रसात्स्यात्संबन्धिसाद्भवेत् ।
सर्वोप्येवं सखिसात्स्यात्संपद्येत च बन्धुसात् ॥ ३१ ॥

३१. स्पष्टः । किं तु मित्रसात्स्यान्मित्रीभवेत् । संबन्धिसाद्भवे-त्संबन्धीभवेत् । एवं भक्त्या कृत्वा ॥

१ ए °वेति च.

१ सी °त्यादिति. २ सी °वतेत्यत्र जाते संपदा च इति स्सात. ( ३३ श्लोको द्रष्टव्यः ). ३ बी °माणेत्य°. ४ ए °ये । धेनू°. ५ ए °था धेनू°. ६ ए °थैवं विक्रीत आ°. ७ ए °त्य । धेनू°. ८ बी °सुसोबाहु°. ९ ए °वेत् । ए.

भक्त्याम्नस्य प्रसादो नः सुघटोनन्यसात्कृतः ।
वर्षासु कोम्बुसात्कुर्याल्लवणं हि स्वयं भवेत् ॥ ३२ ॥

३२. नोस्माकं प्रसाद आम्नस्य भक्त्या कर्त्र्या सुघटः[1] सुखेन घट्यते क्रियते[2] सुघटः । यत[3] आम्नभक्त्यानन्यसात्कृतो नान्यत्राधीनः कृत आम्न एवायत्तीकृतः[4] । युक्तं चैतत् । हि यस्माद्वर्षासु लवणं कोम्बुसात्कुर्यादुदुकीकुर्यात्[5]किं तु स्वयमेव लवणमम्बुसाद्भवेत् ॥

संबन्धो गुरुसात्संपद्येताथो मातृसाद्भवेत् ।
आत्मसात्केवलो न स्यात्तद्युक्तं तौ न्ययुङ्क्त सः ॥ ३३ ॥

३३. तत्तस्माद्धेतोः स आम्नस्तौ मातृगुरू युक्तं न्ययुङ्क्त विवाहसंबन्धाय व्यापारयत् । यस्मात्संबन्धो विवाहसंबन्धो गुरुसात्संपद्येत[6] पुरोहितेधीनो भवेत्तथा मातृसाद्भवेन्मातर्यधीनः स्यात् । आत्मसादात्मन्यायत्तः केवलोयं न स्यात् ॥

दृषदीभूतम् । अत्र "व्यञ्जनस्यान्त ई( ईः )" [ १२९ ] इति[7] च्वौ-ई ( ईः )। न च स्यात् । दृषद्भूतम् ॥

उदकसात्कुर्यात् । संबन्धिसाद्भवेत् । मित्रसात्स्यात् । अत्र "व्याप्तौ स्सात्" [ १३० ] इति स्सात् ॥

वर्षासु लवणमम्बुसात्कुर्यात् । अम्बुसाद्भवेत् । सर्वोपि सखिसात्स्यात् । बन्धुसात्संपद्येत । इत्यत्र[8] "जातेः संपदा च" [ १३१ ] इति स्सात् ॥

अनन्यसात्कृतः । मातृसाद्भवेत् । आत्मसात्स्यात् । गुरुसात्संपद्येत[9] । इत्यत्र "तत्राधीने" [ १३२ ] इति स्सात् ॥

---

१ प सुघंटः. २ प °ते । य°. ३ बी आम्नः भ°. ४ बी °ययत्ती°. ५ बी °र्या उद°. ६ बी °पद्यते पुरोहिताधी°. ७ बी °ति च्वौः ई । न चः स्या°. ८ प°त्र ह्याते । सं°. ९ प सी °पद्यत.

सोऽस्मत्रा भाविनीं कन्याममत्रा कुरुतां पुरे ।
अस[1]त्रा[2] सन्त्विभाः संपद्यन्तां तत्रैव वाजिनः ॥ ३४ ॥

३४. स्पष्टः । किं तु स आह्नः । अस्मत्रा भाविनीमस्मासु देयामधीनां भविष्यन्तीम् । पुरे[1]णहिलपाटके । अस्मत्रा कुरुतामस्मदे[2]र्थं प्रेषयत्वित्यर्थः । तत्रैव पुरे ॥

अस्मत्रा कुरुताम् । अस[3]त्रा भाविनीम् । अस्मत्रा सन्तु । अ[4]स्मत्रा संपद्यन्ताम् । अत्र "देये त्रा च" [ १३३ ] इति त्रा ॥

येषां बहुत्रा देवत्रा भ्राम्यन्त्यद्यापि कीर्तयः ।
तेषां पुरं नः पूर्वेषां गुरुर्माता च पश्यतु ॥ ३५ ॥

३५. येषामस्मत्पूर्वजानामद्यापि संप्रत्यपि कीर्तयो बहुत्रा भ्रा-[5]म्यन्ति दे[6]वत्रा भ्राम्यन्ति च[7] । बहुषु देशेषु देवे[8]षु च विजृम्भन्ते । उत्तरार्धं स्पष्टम् ॥

देवत्रा भ्राम्यन्ति[9] । बहुत्रा भ्राम्यन्ति । इत्यत्र "सप्तमी०" [ १३४ ] इत्यादिना त्रा ॥

[3]व्यसृजत्तं प्रतीष्यो[4]प्तकार्यबीजां स तद्गिरम् ।
क्ष्मां द्वितीयाकृतशम्बाकृतबीजाकृतामिव ॥ ३६ ॥

३६. स भैमिस्तं दूतं व्यसृजत् । किं कृत्वा । तद्गिरं दूतवाणीं प्रतीष्याङ्गीकृत्य । किंभूताम् । उप्तं न्यस्तं कार्यबीजं संधिविवाहरूपं

---

१ सी °सत्राः स°. २ ए °त्रा सीत्वभाः. ३ ए व्यसृज°. ४ सी °ष्योप्ते का°.

---

१ बी सी °हिलपा°. २ ए °दर्थी प्रे°. ३ सी °सत्राभा°. ४ सी °सत्रा सं°. ५ बी °म्यति दे°. ६ सी °वता भ्रा°. ७ बी °न्ति । ब°. ८ बी °पुवि°. ९ सी °न्ति । इ°.

कार्यसारो यस्यां ताम् । यथा कश्चित्क्ष्मां भूमिं प्रतीच्छति । किंभूताम् । द्वितीयं वारं कृता द्वितीयाकृता द्वितीयं वारं कृष्टेत्यर्थः । तथा शम्बं तिर्यक्कृता शम्बाकृतानुलोमं कृष्ट्वा पुनस्तिर्यक्कृष्टेत्यर्थः[1] । अन्ये त्वाहुः । शम्बसाधना कृषिरिति[2] शम्बेन हलभेदेन कृष्टेत्यर्थः । तथा बीजैः कृता[3] बीजाकृतोप्ते पश्चाद्बीजैः सह कृष्टेत्यर्थः । विशेषणकर्मधारये[4] तां तथोप्तं[5] कार्याय धान्य[6]निष्पत्तिप्रयोजनाय बीजं यस्यां ताम् ॥

दूतः शीघ्रं ययौ काले द्विगुणाकर्तुमुर्वराम् ।
कः शम्बाकृतकुलिवः समयाकुरुतेथ वा ॥ ३७ ॥

३७. दूतः शीघ्रं ययौ । अर्थान्तरमाह । अथ वा लोहकाञ्ची वर्ध्र[7]-कुण्डलिका वा शम्बमस्य क्रियते शम्बाकृतं कुलिवं हलविशेषो येन[8] स तथा क्षेत्रकर्षणाय सज्जितहलैः[9][10] कः कर्षकः काले वर्षासु समया[11]-कुरुते समयं कालक्षेपं करोति । किं कर्तुम् । उर्वरां सर्वसस्याढ्यां भूमिं[12] द्विगुणाकर्तुं[13] द्विगुणं[14] कर्षणं कर्तुं द्विगुणं क्रष्टुमित्यर्थः ॥

द्वितीयाकृत । शम्बाकृत । बीजाकृताम् । अत्र "तीयशम्ब०"[15] [ १३५ ] इत्यादिना डाच् ॥ एके तु शम्बाकृतकुलिव इत्युदाहरन्ति ॥

द्विगुणाकर्तुम् । अत्र "संख्या०" [ १३६ ] इत्यादिना डाच् ॥

समयाकुरुते[16] । अत्र "समयाद्०" [ १३७ ] इत्यादिना डाच् ॥

---

१ बी °कृष्ट्वेत्य°. २ बी °ति वा श°. ३ प कृतो°. ४ प बी °शेषेण°. ५ सी °थोप्तां का°. ६ सी °न्यत्ति°. ७ प वर्द्धकु°. सी वर्ध्रकु°. ८ सी °नथा°. ९ प सर्जितहलकर्ष°. १० प °लः कर्ष°. ११ प समाया°. १२ बी सी भूमिद्वि°. १३ प °गुणां क°. १४ सी °गुणक°. १५ बी तीयेश°. १६ प °मकु°. १७ प °यादिना°.

सपत्राकृत्य निष्पत्राकृत्यान्यानपि भूभुजः ।
निष्कुलाकृतकर्पासाल्पान्कुर्वन्व्यवृतन्नृपः ॥ ३८ ॥

३८. नृपो भैमिर्न्यवृतत्स्वदेशं प्रति[1] निवृत्तः । कीदृक्सन् । अन्यानन्यान्नादितरानपि[2] भूभुजः कुर्वन् । किंभूतान् । निकृष्टं कुलमवयवसंघातोस्मादिति[3] निष्कुलो निष्कुलः क्रियते स्म निष्कुलाकृतो निष्कुषित इत्यर्थः । स यः कर्पासस्तद्वदल्पान्निःसारान् । किं कृत्वा । सपत्राकृत्य सपत्रान्सशरान्कृत्वा शरानेषां शरीरे प्रवेश्येत्यर्थः । तथा काश्चन निष्पत्राकृत्य निर्गतशरान्कृत्वा शरानेषामपरपार्श्वे निष्क्रमय्येत्यर्थः ॥

सपत्राकृत्य । निष्पत्राकृत्य । इत्यत्र "सपत्र०" [ १३८ ] इत्यादिना डाच् ॥
निष्कुलाकृत[11] । इत्यत्र "निष्कुलाद्०" [ १३९ ] इत्यादि[12]ना डाच् ॥

क्ष्माप्रियाकृत्सुखाकृत्स[2] सत्याकुर्वञ्जगज्जयम् ।
दुःखाकुर्वन्नरीञ्शूलाकुर्वन्निव ययौ पुरे ॥ ३९ ॥

३९. स भैमिः पुरे पत्तनसमीपे ययौ । कीदृक्सन् । क्ष्मायाः[13] प्रियाकृतामानुकूल्यं कुर्वतां राजादीनां सुखाकृद्राज्यादिदानेनानुकूल्यं कुर्वंस्तथा जगज्जयं सत्याकुर्वञ्जगज्जयस्य सत्यं[14] सत्यंकारं कुर्वन्पराक्रमेण मयावश्यमेव जगज्जयः[15][16] क्रेतव्य इति शत्रून्प्रत्याययन्नित्यर्थः । अत एवारीञ्शूलाकुर्वन्निव शूले पचन्निव दुःखाकुर्वञ् शत्रूणां प्रातिकूल्यं कुर्वन्प्रतिकूलमाचरन्ननभिमतानुष्ठानेन तान्पीडयन्नित्यर्थः ॥

---

१ प °सान्कु°. २ सी °कृत्स.

---

१ सी °ति वृ°. २ बी °नपि अन्ना°. ३ सी °लमेव°. ४ प °मय°. ५ प °तोस्यादि°. ६ सी °ति निःकुलः क्रि°. ७ सी °त्वा । शरामेषामपर°. ८ प °वेशेत्य°. ९ प °पार्श्वो निष्क्रामयेत्य°. १० बी °र्थः । प°. ११ प सी °कृत्य । इ°. १२ बी °दि डा°. १३ बी °याः . कृ°. १४ सी °त्यंका°. १५ प °ज्जयके°. १६ सी °यः कर्तव्य.

स सत्यं कुर्वतो भद्राकृताल्ल(ल्लँ)क्ष्म्यपहारतः ।
क्लैब्यान्मद्राकृतश्मश्रूनप्यरीन्गुप्तितोमुचत् ॥ ४० ॥

४०. स भैमिरासतामन्येरीनपि गुप्तितः कारातोमुचत् । किंभूतान्सतः । लक्ष्म्यपहारतो राज्यलक्ष्म्या अपहारेण भद्राकृतान्मुण्डितानिव यथा मुण्डिता अपहृतकेशश्रीकाः स्युस्तथापहृतलक्ष्मीकानित्यर्थः । तथा क्लैब्यान्निःसत्त्वतया मद्राकृता तवाग्रे वयं क्लीबा नपुंसका न तु पुरुषा इति ज्ञापनाय मुण्डिता श्मश्रुयैस्तान् । तथा सत्यं कुर्वतोद्यप्रभृति वयं त्वद्दासा इति प्रत्यायनार्थं सप्रत्ययदेवतादिशपथं कुर्वाणान् ॥

प्रियाकृत् । सुखाकृत् । इत्यत्र "प्रिय०" [ १४० ] इत्यादिना डाच् ॥

दुःखाकुर्वन् । इत्यत्र "दुःखात्०" [ १४१ ] इत्यादिना डाच् ॥

शूलाकुर्वन् । इत्यत्र "शूलात्पाके" [ १४२ ] इति डाच् ॥

सत्याकुर्वन् । इत्यत्र "सत्याद्०" [ १४३ ] इत्यादिना डाच् ॥ अशपथ इति किम् । सत्यं कुर्वतः ॥

मद्राकृत । भद्राकृतान् । अत्र "मद्र०" [ १४४ ] इत्यादिना डाच् ॥

सोथ झात्कारिकाञ्चीनां स्त्रीणां झलझलाकृताम् ।
नेत्रैर्झलझलायद्भिः पीयमानः पुरेविशत् ॥ ४१ ॥

४१. अथ स भैमिः पुरेविशत् । कीदृक्सन् । स्त्रीणां नेत्रैः पीयमानः सतर्षं दृश्यमान इत्यर्थः । कीदृशीनाम् । झात्कारिण्यो दि-

१ ए °न्मद्राः कृ°. २ सी °तस्मश्रू°.

१ ए भैमीरा°. २ बी °न्सतोऽल°. ३ सी °हारे°. ४ बी क्ष्म्याप°. ५ सी °तानि त°. ६ सी °तानि सश्रूणि यैस्ता°. ७ बी °यं त्वं दासा. ८ बी °खाहृत्. ९ ए °नाच्. १० बी °त्र शूलात्पाके इति डाच् । अ°. ११ बी °रिण्या दि°.

दृक्षया सत्वरमागमनाज्झाच्छब्दकरणशीला[1]: काञ्च्यो यासां तासाम् । तथा झलझलाकृतः प्रसरज्जलानां शब्देन झलदिति शब्दं[2] कुर्वाणा नद्यादयस्ततः कान्तिजलानामितस्ततोतिप्र[3]सरणाज्झल[4]झलाकृत इव झल-झलाकृतस्तासां शरीराभरणादिकान्तिजलैः संभृता[5]नामित्यर्थः । किंभूतै-र्नेत्रैः । झलझलायद्भिः । झल[6]च्छब्दोत्र तद्वति वर्तते । ततो[7] झलच्छ[8]ब्दवन्तो[9] भवन्ति झलझलायन्तो दीर्घिकादयस्तत्तुल्यैः प्रसरत्स्वच्छ[10]स्निग्धज्योति-र्जलपूरेण संपूर्णै[11]रित्यर्थः ॥

तूर्ये झणिति कुर्वाणे द्राग्झणज्झणदित्यपि ।
पटत्पटेति पटहेलंचकार स्वधाम सः ॥ ४२ ॥

४२. स्पष्टः ॥

झलझलाकृताम् । झलझलायद्भिः । अत्र "अव्यक्त०" [ १४५ ] इत्यादिना डाच् ॥ अनेकस्वरादिति किम् । झात्कारि ॥ अनिताविति किम् । झणिति कुर्वाणे ॥ अत्र "इतावतो लुक्" [ १४६ ] इत्यतो लुक् ॥

झणज्झणदिति । इत्यत्र "न द्वित्वे" [ १४७ ] इति नातो लुक् ॥

प[12]टत्पटेति । इत्यत्र "तो वा" [ १४८ ] इति तस्य वा लुक् ॥

द्वास्थैः पटपटाकृत्य भूरिशः स्मारितान्नृपान् ।
संभा[1]षमाणो बहुशो नाल्पशो व्यसृजत्ततः ॥ ४३ ॥

४३. ततो भैमिर्बहुशो बहून्नृपान्नाल्प[13]शोल्पान्व्यसृजत्किं तर्हि सर्वो-

---

१ ए °पणो.

---

१ ए °शीला का°. २ ए शब्दकु°. ३ सी °सरेण ज्झ°. ४ ए °लज्झला°. ५ बी °तामि°. ६ बी सी °लशब्दो°. ७ बी सी °तोऽझ°. ८ ए बी °च्छब्दं व°. ९ बी °न्तो झलच्छब्दावन्तो भ°. १० ए °च्छम्रिधज्यो°. ११ ए सी °पूर्णैरि°. १२ ए °टपटे°. १३ बी °ल्पसोल्पा°.

नपि यथास्थानं मुत्कलितवानित्यर्थः । कीदृक्सन् । संभाषमाण आलपन् । किंभूनान्सतः । भूरिशः प्रभूतैर्द्वास्थैर्वेत्रिभिः पटपटाकृत्य भित्त्यादिषु प्रतिशब्दैः पटच्छब्दं कृत्वा स्मारिताम् ॥

अस्तोकशो रिपूञ्जिष्णुं तं पौरा एकशोभ्ययुः ।
अश्वमश्वं ढौकयतस्तोन्सोप्येकैकमालपत् ॥ ४४ ॥

४४. तं भैमिं पौरा एकशे एकैकोभ्ययुरभिजग्मुः । यतः स्तोकान्स्तोकशो न तथास्तोकशो बहूंत्रिपूञ्जिष्णुम् । सोपि भैमिरथ्यश्वमश्वं ढौकयेतः प्राभृतीकुर्वतः सतस्तान्पौरानेकैकमेकैमेकमालपत् ॥

नादण्डयद्द्विपदिकां न स द्विशतिकां च यान् ।
द्वे ते ददानास्ते ग्राम्या अश्वशश्च तमभ्ययुः ॥ ४५ ॥

४५. स भैमिर्यान्ग्राम्यान्द्विपदिकां द्वौ पादौ रूपकादेर्द्वौ भागावपि नादण्डयत् । द्विशतिकां च रूपकादेर्द्वे शते च नादण्डयत्ते ग्राम्यास्तं भैमिमभ्ययुः । किंभूताः सन्तः । ते द्वे द्विपदिकाद्विशतिके अश्वशश्चाश्वमश्वं च ददानाः ॥

ये लभन्ते द्विपदिकां वृत्तौ द्विशतिकां च ये ।
तानप्युत्कान्स्थितान्पश्चात्सोपश्यत्स्निग्धया दृशा ॥ ४६ ॥

४६. ये भटा वृत्तौ जीविकायां द्विपदिकां रूपकादेर्द्वौ द्वौ पादौ भागौ भोजनमात्रमित्यर्थः । लभन्ते ये च द्विशतिकां रूपकादेर्द्वे द्वे

१ ए °पूजिष्णुं. २ बी °यन्तस्तान्सोप्यैक°. ३ ए °श्यत्स्निग्ध°. ४ र दृशाः ॥ ये.

१ बी °रितवाम्. २ बी °श एकैकश ए°. ३ सी °कैकेभ्य°. ४ बी °यत प्रा°. ५ बी सी °कमा°. ६ ए °न्द्विपादि°. ७ सी °देर्द्वेश°. ८ ए °तिका च. ९ ए °पदाका°. १० बी °शतके. ११ सी °नमि°. १२ ए °कार्द्वे.

शते च लभन्ते तानल्पासतां महान्तोल्पकानपि भटान्स्निग्धया सानु[1]रागया दृशा स भैमिरपश्यत् । यत उत्कान्नृपदर्श[2]न उत्कण्ठितान् । तथाल्पकत्वेन पश्चात्स्थितान्दूरस्थानित्यर्थः ॥

पै[3]टपटाकृत्य । इत्यत्र[4] "डाच्यादौ" [ १४९ ] इति पूर्वपदे यस्तस्य[5] लुक् ॥

बह्वर्थादिष्टे । बहुशो नृपान् । भूरिशो द्रुत्यैः ॥ अल्पार्थाद्निष्टे । अल्पशो नृपान् । अस्तोकशो रिपून् । इत्यत्र "बह्वल्प[6]०" [ १५० ] इत्यादिना[7] प्शस् ॥

एकशः । एकार्थः[8] । अश्वशः । अत्र "संख्या०" [ १५१ ] इत्यादिना शस् ॥ वाधिकारात्पक्षे द्विर्वचनमपि । एकैकम् । अश्वमश्वम् ॥

द्विपदिकाद्विशतिके ददानाः । द्विपदिकाम् द्विशतिकामदण्डयत् ॥ वीप्सायाम् । द्विपदिकां द्विशतिकां लभन्ते । अत्र "संख्यादेः०" [ १५२ ] इत्यादिना अकल् । प्रकृतेरन्तस्य लुक्[9] च ॥

**द्वैतीयीकः शशी कान्त्या द्वितीयस्तेजसा रविः ।**
**तां तृतीयाग्र्यविद्यां स धारयंस्तर्कितो जनैः ॥ ४७ ॥**

४७. स्पष्टः । किं तु कान्त्या शशी तेजसा रविश्च । कुतोयमतर्कीत्याह । यतस्तां रा[10]ज्ञां[11] भीमकान्तगुणादीनां प्रतिपादकत्वेन प्रसिद्धां तृतीयाग्र्य[12]विद्यामान्वीक्षिकी त्रयी वार्ता दण्डनीतिरिति चतस्रो विद्यास्तत्र तृतीयस्या वार्ताविद्याया अग्र्या चतुर्थी या विद्या दण्डनीतिस्तां[13] धारयन् । राजनीतिशास्त्रो[14]क्तं राज्ञा प्रजासु कान्तेन भाव्यं शत्रुषु च तेजस्विनेत्याद्यर्थं प्रजासु कान्तीभवनेन शत्रुषु भीमीभव[15]नेन च बिभ्रत्[16] ॥

१ प °रागाया. २ सी °र्शनस्य लुप । बह्व°. ३ बी पटेप°. ४ बी °त्र द्राद्यादौ. ५ बी °स्तस्य. ६ प °ह्वल इ°. ७ बी °ना म्शस्. सी °ना शस्. ८ सी °कार्थाः । अ°. ९ बी °क्च । द्वितीयी°. १० बी राज्ञा भी°. ११ सी °ज्ञां सीम°. १२ बी °याग्रवि°. १३ प °नीस्तां. १४ प °नी शा°. १५ प °न बि°. १६ प °त् । द्वितीयी°. बी °त् । द्वितीयकः.

द्वैतीयीकः। द्वितीयः[1]। अत्र "तीयात्०" [ १५३ ] इत्यादिना टीकण् स्वार्थे ॥ न विद्या चेदिति किम्। तृतीयाध्यविद्याम् ॥

स यावद्वयसः स्थाम्ना तावन्मात्रो न कोप्यभूत्।
तिलपेजेतरसमस्तिलपिञ्जो भवेन्न हि ॥ ४८ ॥

४८. स भैमिः स्थाम्ना कृत्वा यावद्वयसो[2] यावानभूत्तावन्मात्रः[3] कोपि नाभूत्। हि यस्मात्तिलपिञ्जो निष्फलस्तिलस्तिलपेजेतरसमस्ति-लपेजान्निष्फलतिलादितरस्य फलतिलस्य समो न भवेत् ॥

तिलपिञ्जः। तिलपेज। इत्यत्र "निष्फले०" [ १५४ ] इत्यादिना पिञ्जपेजौ ॥

यावद्वयसः। तावन्मात्रः। अत्र "प्रायोतोर्द्व०" [ १५५ ] इत्यादिना द्वयसट्मात्रटौ ॥

रकारो नु षकारो नु मूर्धन्यो वाग्मि(ग्मि?)नां गुरुः।
नमस्कारार्ह आन्नस्यानहंकारोन्यदागमत् ॥ ४९ ॥

४९. अन्यदान्नस्य गुरुरागमत्। कीदृग्। यथा रकारषकारौ मूर्धन्यौ मूर्धनि स्थाने भवौ तथा वाग्मि(ग्मि?)नां मूर्धन्यो विद्वच्चूडा-मणिः परमनहंकारो ज्ञानाद्यहंकाररहितोत एव नमस्कारार्हः ॥

कन्यादाद्रेफशुभ्रभूर्जल्हणा[2] नामधेयतः[3]।
सुरूपधेया सद्भागधेया पितामहीसमम् ॥ ५० ॥

५०. नामधेयतो नाम्ना जल्ह(ह्ह)णा कन्या पितामह्या समं सह "ऊ-नार्थपूर्वाद्यैः" [ ३. १. ६७ ] इति समासे पितामहीसममागात्। कीदृशी।

---

१ बी सी °वद्वय°. २ प सी °जेल्हणा. ३ प °तः। सरू°. बी °तः। स्वरू°.

---

१ सी °तीया°. २ बी °वद्वय°. ३ बी °वानभू°. ४ बी °लमिल°. ५ बी °तिलेपे°. ६ प पेजोनिष्फ°. ७ सी °स सफ°. ८ प अपिंजौ. ९ बी °वद्वय°. १० सी °सः। तावद्वयसः। ता°. ११ बी आयातो°. १२ बी °समा°.

रेफवद्वक्रे कुटिले भ्रुवौ यस्याः सा तथा सुरूपधेया शोभनरूपा तथा सद्भागधेया कुमारपालसदृशवरभविष्यत्तया शोभनभाग्या ॥

षकारः । नमस्कार । इत्यत्र "वर्ण०" [ १५६ ] इत्यादिना कारः ॥ प्रायोनुवृत्तेरन्यत्रापि भवति । अनहंकारः ॥

रेफ । इत्यत्र "रादेफः*" [ १५७ ] इत्येफः ॥ प्रायोवचनाद्रकार इत्यपि ॥

नामधेयतः । सुरूपधेया । सद्भागधेया । अत्र "नाम०" [ १५८ ] इत्यादिना धेयः ॥

नूत्नातिथीनामेतेषां सूर्यो मर्त्येषु नूतनः ।
नवीनमार्पयद्भूप आवासं नव्यमन्दुरम् ॥ ५१ ॥

५१. भूपो भैमिरेतेषां पितामहीकन्यागुरूणां नूत्नातिथीनां नव्यप्राघूर्णकानां नव्यमन्दुरं नवाश्वशालं नवीनं नवमावासंमार्पयत् । कीदृक् । मर्त्येषु नूतनः सूर्यः प्रकाशकत्वाद्द्वितीयोर्कः ॥

मर्त्येषु सूर्यः । अत्र "मर्तादिभ्यो यः" [ १५९ ] इति यः ॥

नवीनम् । नूतनः । नूत्न । नव्य । इत्यत्र "नवाद्०" [ १६० ] इत्यादिना ईन-तन-त्न-या नवस्य नू-आदेशश्च ॥

पप्रच्छोद्वाहहोत्रीयं प्रीणेभ्योपि प्रणं विधीन् ।
नृपोप्रत्नोपि माहात्म्याद्देवता प्रतनेव सः ॥ ५२ ॥

---

१ ए °र्यो मूर्त्ये°. २ सी नदान°. ३ बी °यं प्राणे°. ४ ए माहत्म्यादे°

---

१ सी °भ्यतया. २ ए °कार । न°. ३ सी °ति । रे°. ४ ए इत्ररादेः इति फः प्रा°. ५ सी °नां प्रा°. ६ सी नव्याश्व°. ७ ए °समर्प°. ८ °षु अ म°. ९ बी नूलं । न°. १० ए बी नव । इ°. ११ ए °वादिना.

---

*रादिफ इति कात्यायनवार्तिकमेव युक्तम् । अन्यथा वृद्ध्यापत्तिर्दुर्वारा स्यात् । उच्चारणार्थकारानङ्गीकारे तु रकार इत्यादौ तदङ्गीकारेणार्धजरतीयत्वमापतेत् । इति आ

५२. स नृपो भैमि[1]: प्रीणेभ्योपि पुराणेभ्योपि प्रणं पुराणमतिवृद्धं विवाहहोत्रीयं विवाहस्य ऋत्विजं विवाहेग्निकारिका[2]कारकमान्नपुरोहितं विधीन्विवाहकार्याणि पप्रच्छ । कीदृशः । अप्रत्नोप्यपुराणोपि युवापि माहात्म्यात्प्रतना देवतेव[3] पुराणदेव इव । चिरकालीनदेवता ह्यतिसप्रभावा स्यात् ॥

प्रणम् । प्रीणे[4]भ्यः । प्रतना । अप्रत्नः । अत्र "प्रात्०" [ १६१ ] इत्यादिना स्वार्थे न-ईन-तन-त्नाः ॥

देवता । इत्यत्र "दे[5]वात्तल्" [ १६२ ] इति तल् ॥

होत्रीयम् । अत्र "होत्राया ईयः" [ १६३ ] इतीयः ॥

आवसथ्यं श्रियः प्राज्ञो भेषज्यं विश्वभीरु[1]जाम् ।
सोसज्जद्दैवतश्रौत्रः का[2]र्ष्णलक्ष्मकुलाग्रणीः ॥ ५३ ॥

५३. स भैमिर्विवाहोचितनेपथ्यविशेषेणातिशयितरूपादिलक्ष्मीकत्वाद्दै[6]वतस्येव देवस्येव[7] श्रौत्रमङ्गं यस्य स तथा सन्नसज्जद्विवाहार्थं[8] प्रगुणोभूत् । कीदृक् । प्राज्ञस्तथा विश्वभीरुजां जगद्भयरोगाणां भैषज्यमौषधं जगतः शरणमित्यर्थः । अत एव श्रियः[9] संपत्तीना[10]मावसथ्यमावासोत एव[11] च कृष्ण एव कार्ष्णो मृगो ल[12]क्ष्म चिह्नं यस्य स का[13]र्ष्णलक्ष्मा[14] चन्द्रस्तस्य यत्कुलं तत्राग्र[15]णीः ॥

---

१ बी °रुजम्. २ ए कार्ण्णल°. बी कार्ष्ण ल°.

---

१ बी °मि[illegible] २ सी °कारिक°. ३ सी °व इ°. ४ ए °णेभ्य । प्र°. ५ सी देवता[illegible] ६ ए °वस्ये°. ७ बी सी °व श्रोत्र°. ८ सी °य गु°. ९ ए °यः सर्वप[illegible]ना°. १० बी °मावासपथ्य°. ११ ए °व कृ°. १२ बी लक्ष्म्य चि°. १३ बी कार्ष्णलक्ष्म्या च°. १४ सी °लक्ष्म्यां च°. १५ बी सी °भणी । शं°.

शंसन्कार्मणमान्नीयसवैनयिकवाचिकैः ।

तं सांप्रदानिकायाह्वद्गुरुः संजीवनौषधम् ॥ ५४ ॥

५४. गुरुराज्ञपुरोहितः संजीवनौषधं संजीव्यतेनेन संजीवनं यदौषधं तत्तुल्यं चौराद्यन्यायिगदेभ्यः सकलजगतो रक्षकमित्यर्थः । तं भैमिमाह्वदाकारयत् । किमर्थम् । सांप्रदानिकाय कन्यासंप्रदानार्थम् । कीदृक्सन् । आज्ञीयान्याज्ञसंबन्धीनि सवैनयिकानि सविनयानि यानि वाचिकानि कन्याविवाहादिविषयाः संदिष्टा वाचस्तैः कृत्वा कार्मणं विवाहादिक्रियालक्षणं संदिष्टं कर्म शंसन् । सविनयमाज्ञेन संदिष्टमेतद्यदधुना कन्याया विवाहः प्रसद्य कार्य इति वदन्नित्यर्थः ॥

भैषज्यम् । आवसथ्यम् । अत्र "भेषजादिभ्यष्ट्यण्" [ १६४ ] इति ट्यण् ।

प्राज्ञः । दैवत । इत्यत्र "प्रज्ञादिभ्योण्" [ १६५ ] इत्यण् ॥

श्रौत्रः । औषधम् । कार्ष्ण । इत्यत्र "श्रोत्र०" [ १६६ ] इत्यादिनाण् ॥

कार्मणम् । अत्र "कर्मणः संदिष्टे" [ १६७ ] इत्यण् ॥

वाचिकैः । अत्र "वाच इकण्" [ १६८ ] इतीकण् ॥

वैनयिक । सांप्रदानिकाय । इत्यत्र "विनयादिभ्यः" [ १६९ ] इतीकण् ॥

कान्त्यौपयिकमृद्रूपाभूः पुरोमृत्स्न आश्वगात् ।

समृत्समृत्तिकापात्रोद्यद्यवं तद्गृहं नृपः ॥ ५५ ॥

५५. नृपो भैमिः पुरोग्रतो मृत्स्ना प्रशस्ता मृच्छुभशकुनभूता

१ प शंकन्कर्म°. २ सी °ह्वुरुराज्ञ°. ३ बी °रुः सज्जीव°. ४ बी °पाभ ५ बी मृत्स्नमृ°.

[१] °दाका°. २ बी आतीयाज्ञाज्ञ°. ३ प न्धीन् स°. ४ सी °हावि°. [५] संशन्. ६ प °सद्य का°. ७ प °ण् । श्रोत्र । औ°. ८ प कार्ष्ण्यं [९] सी वाचि इ°. १० प °दायिका°. ११ सी मृत्स्नातिप्र°.

यस्य स पुरोमृत्स्नः संस्तद्गृहं गुरुगृहमाश्वगात्। कीदृशम् । माङ्ग-ल्याय समृ[3]त्सानि प्रशस्तमृत्तिकान्वितानि यानि मृत्तिकापात्राणि[4] शरा-वास्तत्रोद्यन्त उद्गच्छन्तो यवा यत्र तत्। कीदृग्नृपः। कान्ते रूपादि-श्रिय औ[5]पयिकमुपायः कारणं या मृद्रूपा प्रशस्ता मृत्तस्या भवति स्मोत्पद्यते स यः सः। कान्तिहेत्वत्युत्कृष्टपरमाणुभिर्निष्पन्न इत्यर्थः ॥

औ[6]पयिक। इत्यत्र "उपायाद्ध्रस्वश्च" [ १७० ] इतीकण् ह्रस्वश्च ॥

मृत्तिका। इत्यत्र "मृदस्तिकः" [ १७१ ] इति [ति]कः ॥

समृत्स। पुरोमृ[7]त्स्नः। अत्र "सस्नौ प्रशस्ते" [ १७२ ] इति सस्नौ ॥ केचित्तु रू[8]पपमपीच्छन्ति । मृद्रूपा ॥

षड्विंशः पादः ॥

तिलकं मङ्गलमये राज्ञो दधिमयं व्यधुः ।

अग(गा?)णिक्याः स्त्रियो द्वारि महेत्रागणिकामये ॥ ५६ ॥

५६. न गणिकाः प्रकृता आ[9][10]स्वगाणिक्याः स्त्रियः कुलाङ्गना दधि प्रकृतं दधिमयं दधि[11]स्वरूपं तिलकं व्यधुः। कस्य। मङ्गलमये प्रकृतमौ-क्तिकस्वस्तिकादिमङ्गल[12]कर्मणि द्वारि गृह[13]द्वारदेशे वर्तमानस्य[14] राज्ञो भैमेः। क। अ[15]त्र महे विवाहोत्सवे। किंभूते। गणिकाः प्रकृता गीत-गानमाङ्गलिक्यकरणादौ प्राचुर्येण प्राधान्येन वा कृता अत्र गणिका-मयो न तथा तस्मिन्कुलाङ्गनाप्र[16]स्तुतोद्वाहविधावित्यर्थः ॥

---

१ [illegible] पु°. २ सी °म्। मङ्ग°. ३ बी सी °मृत्स्नानि. ४ बी °णि शा-स्त्रास्त°. [illegible] बी औपायि°. ६ बी औपायि°. ७ बी सी °मृत्स्न। अ°. ८ बी सी °पम°. ९ बी आश्वगा°. १० ए सी °स्वगणि°. ११ बी °स्त्रि°. १२ बी °कर्माणि. १३ सी °हदे°. १४ सी °स्य भै°. १५ ए °त्र। १६ सी प्रशस्तोद्वा°.

त्यक्त्वापूपमयं मौदकिकं च धवलान्दधुः ।
तत्रागायनपाशाश्च स्त्रीतमा विलसत्तमाः ॥ ५७ ॥

५७. स्पष्टः । किं त्वपूपमयं मौदकिकं च त्यक्त्वापूपान्मोदकांश्च तान्मुक्त्वा ॥

सूक्ष्मवस्त्रतमः श्रेष्ठतमश्चुलुकजन्मनाम् ।
ययौ गौरतमः सोन्तर्भित्वा लवणसंपुटम् ॥ ५८ ॥

५८. स्पष्टः । किं त्वतिशयेन सूक्ष्माणि वस्त्राण्यस्य सूक्ष्मवस्त्रतमः । णसंपुटं लवणाग्निगर्भं शरावसंपुटम् ॥

दधिमयम् । अत्र "प्रकृते मयट्" [ १ ] इति मयट् ॥

मङ्गलमये द्वारि । इत्यत्र "अस्मिन्" [ २ ] इति मयट् ॥

मौदकिकम् । अपूपमयम् । अगाणिक्याः । अगणिकामये । अत्र "तयोः०" ] इत्यादिना समूहवत्प्रत्ययाः स्युरिति "कवचि०" [ ६. २. १४ ] इत्या कण् । "गणिकाया ण्यः" [ ६. २. १७ ] इति ण्यः । चकारान्मयट् च ॥

अगायनपाशाः । अत्र "निन्द्ये पाशप्" [ ४ ] इति पाशप् ॥

गौरतमः । विलसत्तमाः । अत्र "प्रकृष्टे तमप्" [ ५ ] इति तमप् ॥ जाति- वचनेभ्योपि गुणक्रियाप्रकर्षविवक्षया स्यात् । स्त्रियोमूर्या अपूपपाकादिस्त्री- सुश्लिष्टाः कुर्वन्ति । स्त्रीतमा एता याः सुलक्षणा अपूपपाकादि गीतगानादि स्त्रीकार्यं कुर्वन्ति । द्रव्यान्तरसमवायिना च प्रकृष्टेन गुणेन प्रकृष्टे द्रव्ये तः प्रत्ययः स्यात् । सूक्ष्मवस्त्रतमः । प्रकर्षप्रत्ययान्ताच्च प्रकर्षस्यापि प्रकर्ष- [illegible] प्रत्ययः स्यात् । श्रेष्ठतमश्चुलुकजन्मनाम् ॥

बी °न्दधुः । त°.

[illegible] बी °यं मोद°. २ बी °पूपोमोद°. ३ बी °न शूक्ष्मा°. ४ बी [illegible] ५ बी °ट् । सोद°. ६ ए °नामस°. ७ सी. °षैक्रियावि°. ८ [illegible] बी °पूपका°. ९ बी °पूपा°. १० ए °ष्टे द्र°. ११ सी °षवि°.

अयं शुभतरः किं वासौ शोभनंतरा न्विति ।
दृष्टो वधूसखीवर्गैर्मातृवेश्माविशन्नृपः ॥ ५९ ॥

५९. वधूवरयोर्मध्ये किमयं वरः सौन्दर्यश्रिया शुभतरः प्रधानतरः किं वासौ वधूः शोभनतरातिशोभमानेति हेतोर्वध्वाः सखीलोकैर्दृष्टः सन्नृपो मातृवेश्म सप्तानां मातृणां देवतानां गृहमविशत् ॥

तत्र पूज्यतरैः सांकाश्यकेभ्यो नागरेयकैः ।
आगात्पुरोहितोग्रेपि प्रीतः प्रीततरस्तदा ॥ ६० ॥

६०. अग्रेपि भैम्यागमकालात्प्रागपि विवाहोत्सवे [illegible]तस्तदा भैम्यागमकाले तु प्रीततरः सन्पुरोहितोपि तत्र मातृगृह आगात् । कैः सह । नागरेयकैर्नगरे स्थानविशेषे भवैर्द्विजैः । किंभूतैः । सांकाश्यकेभ्यः सांकाश्ये पुरे भवेभ्यो द्विजेभ्यः सकाशात्पूज्यतरैः । नागरा हि द्विजाः सर्वद्विजेभ्योत्युत्कृष्टत्वेन प्रसिद्धाः ॥

किं पाणी पाणिपादस्यांह्री वा मृदुतराविति ।
ज्ञातुं नूच्चैस्तरां सख्यो(ख्या)त्रोत्क्षिप्यानायि कन्यका ॥ ६१ ॥

६१. स्पष्टः । किं त्वितीदमुच्चैस्तरामत्यन्तं ज्ञातुं नु वेत्तुमिवोत्क्षिप्योत्पाद्य सख्या कन्यकात्र मातृगृह आ[illegible]ये ॥

अतिशेतेतरां न्वेषोतिशेते किंतरामियम् ।
पुरोधा इति विमृशंस्तयोः पाणी अयोजयत् ॥ ६२ ॥

१ ए °नहरा. २ ए °[illegible]न्नृ°. ३ ए °त्पुरहि°. ४ बी प्रीतं प्री°. ५ सी [illegible]ादस्यंह्री. ६ ए °त्रोक्षिप्यानावि क°. ७ बी °न्यकाः । स्प°. ८ बी °शेषेतरा न्वे°.

१ सी °रः किं. २ ए वधू शो°. ३ बी °भने°. ४ ए °र्व शोकै°. ५ बी °पि भीम्यागमनका°. ६ सी °न्ना तु. ७ बी °मनका°. ८ ए °तो त°. ९ ए °काशकेभ्यः संका°. १[illegible] °त्पूज्यैः पूज्य°. ११ बी °त्क्षिप्योत्पा°.

६२. स्पष्टः। किं त्वियं कन्यका वा किंतरामतिशेते। इदमनयोर्वधू-[1]वरातिशयनयोर्मध्ये रूपश्रीप्रकर्षेणोत्कृष्टं[2] स्वस्यातिशयनं यथा स्यादेवं केमुत्कृष्टा भवति। किं वेयमत्यर्थमतिशेत[3] इत्यर्थः॥

स गायन्तितमां तत्र मन्त्रानग्रेतरां द्विजाः।
प्रगेतमामिवाब्जेषूच्चैस्तमां[1] हर्षिणोलयः॥ ६३॥

६३. स्पष्टः। किं तु स्म गायन्तितमां द्विजाः वनेर्षिवदुद्वि(द्वि?)-[4][5]जानां मध्ये द्विजा अतिशयेन गायन्ति स्म। तत्र महे। अग्रेतरां द्वयोरग्रकालयोर्मध्ये[6] प्रकृष्टेग्रकालेतिप्रथममित्यर्थः[7]। प्रगेतमामति-[8]प्रभात इत्यर्थः॥

वध्वा उत्तमसख्योथैवं नर्मधवलाञ्जगुः।
पटिष्ठो वञ्चयेतेसौ[2] किंतमां नः पटीयसीः॥ ६४॥

६४. अथ पाणियोजनानन्तरं वध्वा अतिशयेनोत्कृष्टा उत्तमा याः[9] सख्यस्ता[10] एवं वक्ष्यमाणरीत्या नर्मधवलान्हासप्रधानानि गीतानि जगुः। तथा हि। असौ भैमिः पटीयसीरपि द्वयोः पट्वीरा[11]श्योर्मध्येतिशयेन पट्वीरपि नोस्मान्किंतमां वञ्चयते बहूनां वञ्चनानामिदं[12] वञ्चनमतिश-यितं यथा स्यादेवं कथं नाम वञ्चयते। एवं सख्याः पाणिग्रहणेनायम-स्मान्पश्यन्तीरेव वञ्चयत इत्यर्थः। अत एव[13] कीदृक्। पटिष्ठो बहूनां पटूनां मध्येतिपटुः॥

शुभतरः। शोभनतरा[14]॥ विभज्ये। सांकाश्यकेभ्यो नागरेयकैः पूज्यतरैः।

१ ए °षूस्तैश्च्मां. २ बी °यति सो किं°.

१ बी °शयेन°. २ सी °ष्टं तस्या°. ३ बी °यमित्यर्थमिति°. ४ बी वमर्षि° ५ °नर्षेव°. ६ सी °रमग्र°. ७ ए °ष्टेतिका°. ८ बी °मामिति°. ९ बी °त्वानति°. १० ए सस्ता. ११ बी °रास्योर्म°. १२ ए °ञ्चना°. १३ ए °कौ°. १४ ए °तराः। विभजो। संका°.

अत्र "द्वयोर्०" [ ६ ] इत्यादिना तरप् ॥ पाणिपादस्य पाणी अंह्री वा मृदुतरौ । इत्यत्र यद्यपि विग्रहे बहुत्वसंख्या प्रतीयते तथापि समाहारेवयवौ स्वार्थमात्रं पाणित्वादिलक्षणमभेदैकत्वसंख्यायोग्युपाददाते न संख्याभेदमिति द्वयोरेव प्रकर्षः । तथाग्रेपि प्रीतः प्रीततरस्तदेत्यत्रैकस्यापि पर्यायार्थार्पणया द्वित्वमिति द्वयोरेव प्रकर्षः ॥

उच्चैस्तराम् । अत्र "क्वचित्स्वार्थे" [ ७ ] इति तरप् ॥

किंतराम् । किंतमाम् ॥ त्यादि । अतिशेतेतराम् । गायन्तितमाम् ॥ ए । अग्रेतराम् । प्रगेतमाम् ॥ अव्यय । उच्चैस्तराम् । उच्चैस्तमाम् । अत्र "किंत्यादि०" [ ८ ] इत्यादिना तरप्तमपोरन्तस्याम् ॥ असत्त्व इति किम् । उत्तमसख्यः ॥

पटिष्ठः । पटीयसीः । अत्र "गुण०" [ ९ ] इत्यादिना तमप्तरपोरर्थ इष्ठेयस् ॥

असौ हरतिरूपं नश्चौररूपः सखीमिमाम् ।
पद्मकल्पे करे गृह्णन्वज्रदेश्येन पाणिना ॥ ६५ ॥

६५. असौ वरो वज्रदेश्येन वज्रवत्कठोरेण पाणिना पद्मकल्पे पद्मवत्कोमले करे नोस्माकमिमां सखीं गृह्णन्हरतिरूपं सर्वलोकसंमत्या हरणात्प्रशस्तं चोरयति । अत एवासौ चौररूपः प्रशस्यश्चौरः ॥

वरोसौ सीरिदेशीयो धत्तेदेश्यं च पाणिना ।
इयं च कम्पतेकल्पं भ्रूमोदेशीयमत्र किम् ॥ ६६ ॥

---

१ ए बी हरति°. २ ए वसौ. ३ बी सीरेदे°. ४ बी °देश्यां च.

---

१ ए °पादिदा°. २ ए °दमति. ३ बी °र्थापण°. ४ सी °तमा° ५ सी °दिना. ६ सी °ज्रब°. ७ ए °देशेन. ८ सी °मव°. ९ बी °मलक°. १० सी °सचौरः.

६६. असौ वरः सीरिदेशीयो[1] हलधरतुल्यः सन्पाणिना धत्ते-ऽइयं च हलधरकर्तृक[2]कठोरपाणिधरणादीषदपरिसमाप्तमस्मत्सखीं हस्तेन धारयति हलधरवत्कठोरपाणिना गृह्णातीत्यर्थः । इयं चातिमृद्वङ्ग्यस्मत्सखी च कम्पतेकल्पं कठोरकर[3]ग्रहणोत्थकष्टे[4]नेषदपरिसमाप्तं कम्पते । अत्रास्मिन्विषये वयं किं ब्रूमोदेशीयं किं वदामः । सर्वलोकसंमत्यास्मत्सखीमेवं पाणौ गृह्णतोस्य पुरो वयं न किमपि वक्तुं शक्ता इत्यर्थः । अथ वासौ वरः[5] सीरिदेशीयो रूपाद्यतिशयेन बलभद्रतुल्यः सन्पाणिनेमां धत्तेदेश्यमनुरागेणास्याः कष्टभयादीषदपरिसमाप्तं धत्ते । इयं च कन्याभीष्टवरस्पर्शोत्थस्मरोद्रेकेण कम्पतेकल्पम् । अत्र च वयं[6] किं ब्रूमोदेशीयम्[7] । अस्माकमप्येतत्संमतमित्यर्थः[8] । इत्यर्थो व्यज्यते ॥

बहुरक्षोनु[1]वरोसौ प्रकृष्टः पटुकः सखि ।
वाञ्छतिच्छिन्नकतमो मनसा केन मोदकान् ॥ ६७ ॥

६७. हे सख्यसौ प्रत्यक्षो[9]नुवरो वरम[10]नुगतो नरः केन मनसा केनाभिप्रायेण मोदका[11]न्वाञ्छति । कीदृक्सन् । बहुरक्ष ईषदपरिसमा[illegible]क्ष औदरिकतया[12] राक्षसतुल्य इत्यर्थः । अत एव प्रकृष्टः पटुक[13] [illegible]योर्बहूनां वा पटुकानां मध्ये प्रकर्षवान्कुत्सितः पटु[14]र्बुभुक्षार्तमनस्कत्वेनातिकुपटुरित्यर्थः । अत एव चच्छिन्नकतमः । कुत्सितश्छिन्नश्छि

१ ए °नुवारो°.

१ सी °यो धत्ते°. २ ए °कठो°. ३ ए °रकरग्र°. ४ ए °ष्टेनैष°. ५ °रः सैरि°. ६ ए वर्या किं. ७ सी °म् । तेस्मा°. ८ सी °त्यर्थो. ९ °त्यकोनु°. १० सी °मनसा. ११ ए °कावान्छ°. १२ बी °या रक्ष°. १३ °टुके वांछति छिन्नकतमो मद्द°. १४ ए °टुर्बभु°. बी °टुबुभु°.

न्नकोयमेषामनत्यन्तं छिन्नकश्छिन्नकतमस्तत्तुल्यः कान्दविकश्ववत्सस्पृहं मुहुर्मोदकानामालोकनेन निर्लज्जत्वान्नक्रवर्धिततुल्य इत्यर्थः । अस्माभिः सहास्य कः संबन्धो येनायं निर्लज्जो मोदकान्वाञ्छतीत्यर्थः । जेमनवेलायां किल प्रधानं मोदकादि भोज्यं यादृग्वरो लभते तादृगनुवरोपीत्येवं[२] श्यालिकाद्या उपहसन्ति[३] । हास्यवशादेव च बहुरक्ष इत्यादिविशेषणान्यसन्त्यप्यनुवरे लोकैः प्रयुज्यन्ते । एवं वक्ष्यमाणान्यपि ॥

अस्य केशद्वयी दृश्यादेश्यिका[१]विकवन्मुखे ।
प्रकृष्टच्छिन्नकस्यानुवरस्य[२] यावकदृशः ॥ ६८ ॥

६८. यावकन्त्यावलक्तकवदाचरन्त्यौ[४] दृशौ यस्य तस्य रक्ताक्षस्यास्यानुवरस्य[५] मुखे दंष्ट्रिकाप्रदेशे केशद्वयी द्वौ वालौ[६] दृश्यादेश्यिका[७]तिलघुत्वेन कुत्सितेषदपरिसमाप्ता दृश्या यतोनत्यन्तं छिन्नश्छिन्नको बहूनां मध्ये प्रकृष्टच्छिन्नकस्तस्य दंष्ट्रिकायामतिनिन्द्यं मुण्डितस्येत्यर्थः । अविकवद्यथाविकस्यच्छागस्य मुखे केशद्वयी दृश्यादेश्यिका स्यात्[८] । मुण्डितश्मश्रुत्वादेवमुपहासः ॥

हरतिरूपम् । चौररूपः[१०] । अत्र "त्यादेश्च०" [ १० ] इत्यादिना रूपप्[११] ॥

कम्पतेकल्पम् । धत्तेदेश्यम् । ब्रूमोदेशीयम् ॥ पद्मकल्पे । वज्रदेश्येन । सीरिदेशीयः । अत्र "अतमबादेर्०" [ ११ ] इत्यादिना कल्पप्देश्यप्देशी[१२]यरः ॥ केचिद्देश्यं पितं नेच्छन्ति । तन्मते दृश्यादेश्यिका ॥

---

१ बी °देश्यका°. २ ए °स्य मव°.

---

१ ए °षामेत्य°. २ बी °वं शालि°. सी °वं शालका°. ३ ए °पस°. ४ ए °रन्त्यो दृशो य°. ५ सी °स्यानु°. ६ बी द्वो बालौ. ७ सी °देशिका°. ८ ए °का स्यात्. ९ सी °न्नको. १० सी °रूपं । अ°. ११ ए रूपपत् । क°. १२ ए °देशी°.

बहुरक्षः । अत्र "नाम्नः प्राग्बहुर्वा" [ १२ ] इति प्राग्बहुः ॥

प्रकृष्टः पटुकः । अत्र "न तमबू०" [ १३ ] इत्यादिना तमबादिनं ॥ अ-च्छिन्नादिभ्य इति किम् । छिन्नकतमः ॥

प्रकृष्टच्छिनकस्य । इत्यत्र "अनत्यन्ते" [ १४ ] इति न तमबादिः ॥

यावकत् । अविक । इत्यत्र "यावादिभ्यः कः" [ १५ ] इति कः ॥

कन्दुकं मोदकधिया ज्यायस्कानुवरेप्ससि ।
गृध्रो मणिपटौ क्रव्यधिया[1] लोहितकौ यथा ॥ ६९ ॥

६९. रे ज्यायस्क लाम्पट्यातिशयादतिवृद्धतुल्यानुवर कन्दुकं क-न्यायाः क्रीडार्थं गेन्दुकं मोदकधिया मोदकोयमिति बुद्ध्येप्ससि वा-ञ्छसि । यथा गृध्रः पक्षिभेदो लोहितकौ रक्तौ मणिपटौ क्रव्यधिया मांसबुद्ध्येप्सति[3] ॥

मणी व+ दृग्लोहिनिका क्रुधानुवर ते मुधा[2] ।
वैलक्ष्येण मुखं चैतत्कालकं कालकांशुक[3] ॥ ७० ॥

७०. हेनुवरास्माकमुपरि कोपेन यत्ते दृगारक्ता तेन[4] न कोपि बिभेतीत्यर्थः । तथा हे कालकांशुक कृष्णवस्त्रैतत्प्रत्यक्षं ते मुखं[5] च क्षमपि वैलक्ष्येण कोपवैफल्योद्भवया विलक्षतया कृत्वा मुधा कालकं कृष्णं दैन्याश्रयणेनापि[6] न किंचित्ते त्राणं भविष्यतीत्यर्थः । रात्रिजा-गरणादिना रक्ताक्षत्वात्कस्तूरिकामण्डनेन कृष्णमुखत्वाच्चैवमुपहासः ॥

कन्दुकम्[7] । ज्यायस्क । इत्यत्र "कुमारी०" [ १६ ] इत्यादिना स्वार्थे कः ॥

---

१ ए °या लौहि°. + इवार्थे वो ज्ञेयः. २ बी °धा । विल°. ३ ए °शुकः । हे°.

---

१ बी °नत्यं इ°. २ सी °भ्य इ°. ३ बी °द्ध्येप्सति. ४ सी °न को°. ५ सी °खं व°. ६ ए बी दैत्याश्र°. ७ बी °क । ज्या°.

लोहितकौ मणिपटौ । अत्र "लोहितान्मणौ" [ १७ ] इति कः ॥ लिङ्ग-विशिष्टस्यापि ग्रहणाल्लोहि[1]निका मणी ॥

रक्ते[2] । लोहितकौ मणिपटौ ॥ अनित्यवर्णे । क्रुधा लोहि[3]निका दृक् । अत्र "रक्त०" [ १८ ] इत्यादिना कः ॥

स्वार्थे[4] रक्ते । कालकांशुक[5] । अनित्यवर्णे । वैलक्ष्येण कालकं मुखम् । अत्र "कालात्" [ १९ ] इति स्वार्थे कः ॥

**रोमप्रावरणं वोढा शीतके नूष्णकेप्यृतौ ।**
**विहानकालूनकाङ्गवियातकपशुर्न्वयम् ॥ ७१ ॥**

७१. अयमनुवरो यथा शीतके[6] ऋतौ शीतकाले रोमप्रावरणं[7] शीतत्राणाय वहति तथोष्णकेप्यृतावुष्णकालेपि रोमाण्यङ्गलोमान्येवातिसान्द्रत्वेनाङ्गाच्छादकत्वात्प्रावरणमाच्छादनं तद्वोढा वहति । विगतं हानं गमनं यस्य स विहानः स एव विहानकस्तथा लून एव लूनको लूनरोमा पशुर्न[8] तथालूनकः सरोमा पशुस्तस्येवाङ्गमस्यालूनकाङ्गो[9] लोमशाङ्गस्तथा[10] वियात एव वियातकश्च धृष्टो यः पशुरुरणः[11] स यथा रोमाण्येव प्रावरणं शीतके नूष्णकेप्यृतौ वहति । रोमशत्वादे[12]वमुपहासः ॥

शीतके । उष्णक ऋतौ । अत्र "शीत०" [ २० ] इत्यादिना स्वार्थे कः ॥

अलूनक[13] । वियातक । इत्यत्र "लून०" [ २१ ] इत्यादिना स्वार्थे कः ॥

विहानशब्दादपीच्छन्त्येके । विहानक ॥

---

१ बी °णं बोढा.

---

१ सी °हितिका. २ बी रक्त । लो°. सी रक्तौ । लो°. ३ ए °हितिका ४ ए स्वार्थो र°. ५ ए °शुका । अ°. ६ सी °तकोले. ७ ए °वर्णं. ८ सी °शुस्त°. ९ ए °ङ्गो लोम°. १० बी °मसाङ्ग°. ११ बी °शुरूर°. सी °शुरूरणः. १२ बी °मसत्वा°. १३ बी °नकः । वि°.

पुरोधाः स्नातकाग्र्योथ तनुकब्रह्मसूत्रभृत् ।
पुत्रको न्वणुकः स्रष्टुरग्निकार्यं प्रचक्रमे ॥ ७२ ॥

७२. अथानन्तरं पुरोधा आम्नगुरुरग्निकार्यं वेदिकायामग्निकारिकां प्रचक्रमे । कीदृक् । तनुसूत्रं तनुकं भङ्गादिमयं तस्य यद्ब्रह्मसूत्रं यज्ञोपवीतं तद्बिभर्ति । यद्वा तनुकं शिक्षाकल्पादि सूत्रं तच्च ब्रह्मसूत्रं बिभर्ति यः सः । तथा वेदं समाप्य स्नाताः स्नातका वेदपारदृश्वानस्तेष्वग्र्यो मुख्योत एव स्रष्टुर्ब्रह्मणोणुको निपुणः पुत्रको नु कृत्रिमः पुत्र इवाङ्गीकृतः पुत्र इवेत्यर्थः ॥

अशून्यका बृहतिकावन्तोहौपुर्द्विजास्तथा ।
भागं खस्याष्टमं षाष्ठं वा धूमो व्यानशे यथा ॥ ७३ ॥

७३. स्पष्टः । किं तु शून्या एव शून्यका न तथाशून्यका विद्याधनसंपूर्णाः । बृहतिकावन्त उत्तरासङ्गवस्त्रावृताः । आष्टममष्टमम् । षाष्ठं षष्ठम् ॥

स्नातक । इत्यत्र "स्नाताद्०" [ २२ ] इत्यादिना कः ॥

तनुकः(क) । पुत्रकः । अणुकः । बृहतिका । अशून्यकाः । अत्र "तनुपु०" [ २३ ] इत्यादिना कः स्वार्थे ॥

आष्टमं भागम् । अत्र "भागेष्टमाञ्ञः" [ २४ ] इति ञः ॥

षाष्ठं भागम् । अत्र "षष्ठात्" [ २५ ] इति ञः ॥

---

१ बी °रोभा स्ना°. २ सी °कोण्वणु°. ३ बी असून्य°. ४ बी °वन्तौहोपु°. ५ ए °हौवुर्द्विजातास्त°. ६ सी °गं स्वस्या°. ७ ए °मो व्यानशो य°.

---

१ सी °कारि°. २ ए सी °त्रं च बि°. ३ ए °णुक्ये नि°. ४ बी शून्का. [illegible] °पूर्ण बृ°. ६ ए °तिकाः । अ°. ७ बी °माञ्शः इ°. सी माञ्यः इ°. [illegible] ञः ॥ षारी°.

खारीषाष्ठामेयकान्तिस्तालषष्ठकमेयदोः ।

वध्वानेकिकयानेकाक्येकेनामन्त्र्यथो वरः ॥ ७४ ॥

७४. अथो पुरोधसाग्निकार्यप्रारम्भानन्तरमनेकाकी महापरिवारान्वितो वरोनेकिकया महापरिवारान्वितया वध्वा सहितः सन्नेकेन महापुरुषेणामन्त्रि वेदिकायां प्रदक्षिणादानायाकारितः । कीदृक् । खारीषाष्ठेन खार्याः षष्ठभागेनामेयातिप्रभूतत्वान्मातुमशक्या कान्तिस्तेजो यस्य सः । तथा तालषष्ठकेन तालवृक्षस्य षष्ठेन भागेन मेयावतिप्रलम्बावित्यर्थः । दोषौ भुजौ यस्य सः ॥

तालषष्ठक । खारीषाष्ठ । इत्यत्र "माने कश्च" [ २६ ] इति कञो ॥

अनेकाकी । अनेकिकया । अत्र "एकाद्०" [ २७ ] इत्यादिना-आकिन् कश्च ॥ असहाय इति किम् । एकेन ॥

स वधूटिकया भ्राम्यतकि साग्नेः प्रदक्षिणम् ।

जगुश्च सर्वकानन्दि मङ्गलं विश्विकाः स्त्रियः ॥ ७५ ॥

७५. स वरो वधूटिकया ह्रसितया वधूट्या सहाग्नेः प्रदक्षिणं प्रदक्षिणावर्तं भ्राम्यतकयल्पं भ्राम्यति । तथा विश्विकाः कस्येमा इत्यज्ञाता विश्वाः सर्वाः स्त्रियो मधुरत्वेन सर्वकानन्दि मङ्गलं मङ्गलगीतानि जगुश्च ॥

वधूटिकया । इत्यत्र "प्राग्नित्यात्कप्" [ २८ ] इति कप् ॥

---

१ ए °मेका°. २ सी °यानैका°. ३ ए °काक्यैके°. ४ ए साग्ने प्र°.

---

१ ए °रमेका°. २ सी °न्वित°. ३ ए वध्वाः स°. ४ ए °था काल°. ५ ए °ष्ठक । इ°. ६ सी °कादिना°. ७ सी भ्राम्यंतकल्पं. ८ सी विश्वकाः. ९ ए सका°. १० ए °त्याक्षप्.

आम्र्यतकि[1]। सर्वक। विश्विका[2]:। अत्र "त्यादि०" [२९] इत्यादिनान्त्या-[3]
रात्पूर्वोक्॥

यद्युष्मकासु मयका लभ्यं न त्वस्मकासु तत्।
अर्प्यतां[1] त्वयकेत्युक्त्वा श्यालोऽङ्गुष्ठे दधार तम्॥ ७६॥

७६. स्पष्टः। किं तु युष्मकासु ह्रस्वेषु युष्मासु विषये। एवं सर्वत्र। तं वरम्॥

अयं युवकयोर्नावकयोर्भृत्यः कृतार्थ्यताम्।
युवकाभ्यां[3] नावकाभ्यां[4] सुहृद्द्वन्द्वैरगाद्यदः॥ ७७॥

७७. सुहृद्द्वन्द्वैर्युगलीभूतैर्भैमिमित्रैरन्योन्यमदोगादि[4] नर्मणोक्तम्। यथा। अयं[5] श्यालो युवकयोर्ह्रस्वयोर्युवयोर्भृत्यो[6] नावकयोस्ततश्चायं[7] युवकाभ्यां कृतार्थ्यतां भृतिदानेन कृतकृत्यः क्रियतां नावकाभ्याम्॥

तूष्णीकां नीचकैः स्थास्नुं[5] चित्तादपृथकन्नृपः[6]।
श्यालकं नर्मणेत्यूचे[7] देयं भवतकेत्र किम्॥ ७८॥

७८. स्पष्टः। किं तु तूष्णीकाम्। नीचकैः। अपृथकत्[9]। भवके। एषु कुत्सितत्वाल्पत्वाज्ञातत्वानि[10] त्रयोऽप्यर्था भावनीयाः। चिपृथकत्प्रियत्वेन भैमेश्चित्ते वसन्तमित्यर्थः। यद्वा चित्तादभिन्नं स्यादेवमूचे दानाभिप्रायेणोवाचेत्यर्थः[12]। श्यालकमल्पं[13] वा केनापि नाज्ञातं वानुकम्पितं वा श्यालम्॥

१ सी अर्पकं त्व°. २ बी त्वयंके°. ३ बी °भ्यां ताव°. ४ प नाका°. ५ सी स्थातुं चि°. ६ बी °पः। शाल°. ७ प °र्मणोत्यू°.

१ प °म्यतिकि. २ प सी विश्वकाः. ३ सी °दिनांक्षरा°. ४ बी °तैर्मि°. ५ सी °यं शालो. ६ प °योहस्व°. ७ बी °त्योर्नाव°. ८ प सी [illegible] क्रि°. ९ प अ अथपृक°. १० प °त्वाज्ञा°. ११ बी यस्मा°. १२ बी सी [illegible] शाल°. १३ प °मलां वा. १४ बी °णेन ज्ञा°. १५ प °नामाज्ञान्तं.

दिग्धकः पङ्केनासि बालकोत्तिष्ठक त्वकम् ।
ददके गुडधानाकाः ककिं देविय[1] देविक[2] ॥ ७९ ॥

७९. हे बालक त्वकं[2] पङ्केन पङ्किलभूमावेवं पाताल्लग्नेन कर्दमेन दिग्धकोसि लिप्तोसि । अत उत्तिष्ठक । हे देवियानुकम्पितदेवदत्त । तूष्णीकत्वेनाभाषमाणत्वात्पुनः[3] संबोधयति । हे देविकानुकम्पितदेवदत्त । अभिधान्तरेण[4] वा संबोधनम्[5] । हे अनुकम्पितदेवसिंह ककिं किं तुभ्यं गुडधानाका ददके ददामि ॥

व्याघ्रकं[3] व्याघ्रिलं मित्रं देवदत्तक देविल ।
उपडं रामकोपेन्द्रदत्तकावुपकोपियौ[4] ॥ ८० ॥

उपिकं[5] वोपिलं वा मातृयमातृकमातृलान् ।
भानुयं भानुकं भानुलं वा संपृच्छ्य मार्गय[6] ॥ ८१ ॥

८०, ८१. प्राग्वत् । हे देवदत्तक हे देविल मार्गय परं संपृच्छ्य[6] । कान् । व्याघ्रकं[7] व्याघ्रिलं[8] मित्रं व्याघ्राख्यौ[9] द्वौ वयस्याविति[10]र्थः । तथोपडमुपेन्द्रदेवम् । तथा रामकोपेन्द्रदत्तकौ [*रामोपेन्द्रदत्तौ । तथोपकोपियावुपाग्निशर्माणौ । तथोपिकं वोपाशीदत्तं[11] वा । तथोपिलं[12]

---

१ ए °य वेविकः । हे. २ बी °विकं । हे. ३ ए व्याघ्रलं. ४ बी °पियौ. ५ सी °पिमं वो°. ६ ए °य ॥ किं व्या°.

---

१ सी °क त्वं प°. २ बी त्वप°. ३ सी °णत्पु°. ४ सी °रे वा. ५ सी °म् । अ°. ६ बी °च्छय । क्वत् । व्याघ्रिकं. ७ सी व्याघ्रिलं. ८ ए °घ्रितं मि°. ९ सी °घ्रास्यो द्वौ. १० सी °दश°. ११ सी °पासीदे°. १२ ए तथापि°.

---

* विंशतितमसर्गस्यचतुर्विंशतितमपद्यटीकायां दर्शितधनुश्चिह्नपर्यन्तं बीपुस्तकस्यपत्राणि न लब्धानि ॥

बोपाशीर्देवं[1][2] वा । तथा मातृयमातृकमातृलान् मातृदत्तमातृदेवमातृभक्तान्वा । तथा भानुयं[3] भानुकं भानुलं वा[4] भानुदत्तं भानुदेवं भानुभक्तं वा । सर्वानप्येतान्वयस्याननुकम्पितान् । बालकत्वेन स्वयंमार्गणेनभिज्ञत्वादेतान्विज्ञान्वयस्यान्कियदहं मार्गयामीति पृष्टेत्यर्थः ॥

त्वयका । मयका । इत्यत्र "युष्मद्०" [ ३० ] इत्यादिनान्त्यात्स्वरात्पूर्वोक्[5] ॥ केचिद्भवच्छब्दस्यापि स्याद्यन्तस्यान्त्यस्वरात्पूर्वकम[6](वैम)कमिच्छन्ति । तन्मते भवतके ॥ असोभादिस्यादेरिति किम् । युष्मकासु । अस्मकासु । युवकयोः । आवकयोः । युवकाभ्याम् । आवकाभ्याम् ॥

नीचकैः[7] । अपृथकद् । इत्यत्र "अव्ययस्य को द् च" [ ३१ ] इत्यक् । तत्संनियोगे यत्ककारान्तमव्ययं तस्य दोन्तादेशः[8] ॥

तूष्णीकाम् । इति "तूष्णीकाम्" [ ३२ ] इत्यनेन निपात्यम् ।

श्यालकम् । भवतके[9] । नीचकैः । तूष्णीकाम् । अत्र "कुत्सित०" [ ३३ ] इत्यादिना[10] कबादयः ॥

अनुकम्पायाम्[11] । श्यालकम् ॥ तद्युक्तनीतौ । दिग्धकैः[12] पङ्केनासि । बालकोष्टिक[13] । ददके गुडधानाकाः । ककिम् । इत्यत्र "अनुकम्पा०" [ ३४ ] इत्यादिना[14] कबादयः ॥ असीत्यादिष्वनभिधान्न स्यात् ॥ यत्र त्वभिधानं तत्र [illegible] । त्वकम् ॥

देविय । देविक । देविल । इत्यत्र "अजातेर्[15]०" [ ३५ ] इत्यादिना-इये[16]-

---

१ सी °पासीर्दे°. २ प °शीदेवं. ३ सी °नुकं. ४ सी वा तथा भा°. ५ सी °नात्यस्वरा°. ६ सी °स्यात्यस्व°. ७ सी °चकै । अ°. ८ प दोन्वादे°. ९ प °के । नायकैः. १० सी °ना बा°. ११ सी °म् । शालकं । श्या°. १२ प °कः पंके°. १३ सी बालोको°. १४ सी °ना बा°. १५ सी अनुकं-अजातर्. १६ प °यइइ°.

इक-इला(लाः)[1] ॥ वावचनात्कबपि ॥ देवदत्तक ॥ अजातेरिति प्रायिको निषेध इत्यन्ये । व्याघ्रिलमिति हि दृश्यते । तन्मते बहुस्वरादित्यपि प्रायिकम् । स्वमते तु व्याघ्रकमित्येव भवति ॥ बहुस्वरादिति किम् । रामक ॥

उपडम् । उपकोपियौ[2] । उपिकम् । उपिलम् । अत्र "वोप०" [ ३६ ] इत्यादिना ड-अकौ चकारादिय-इकै[3]-इलाः । वावचनात्कबपि । उपेन्द्रदत्तकौ ॥

मातृय । मार्तृक[4] । मातृलान् ॥ भानुयम् । भानुकम् । भानुलम् । अत्र "ऋवर्ण०" [ ३७ ] इत्यादिनानुकम्पायां विहितस्य स्वरादेः प्रत्ययस्यादेर्लुक् ऋवर्णोवर्णान्तं[5] च प्रकृत्या तिष्ठति ॥

देवकां व्याघ्रकां पृच्छ वाचियां षडियां प्रियाम् ।
कुवियां[1] कहियां शेवलियां वाथ विशालियाम् ॥ ८२ ॥

८२. हे श्यालक प्रियां पृच्छ[6] । कां कामित्याह । देवदत्तायाः "ते लुग्वा" [ ३. २. १०८ ] इत्युत्तरपदलोपेनुकम्पिता देवी देवका । अत्र कपि[7] पित्वात्पुंवद्भावे[8] नित्वादाप्परेपि ककार इत्वं[9] न स्यात् तां देवकां तथा व्याघ्रकां व्याघ्राजिनां[10] व्याघ्रमहाजिनां वा । तथा वाचियां वागाशिषं वाग्दत्तां वागाशीर्दत्तां वा । तथा षडियां षडङ्गुलीं[11] तथा कुवियां कुबेरदत्ताम्[12] । तथा कहियां कहोडां वा । तथा शेवलियां शेवलदत्ताम् । अथ तथा विशालियां विशालदत्ताम् । सर्वा अप्येता अनुकम्पिता(ताः) ॥

---

१ सी °विया क°.

---

१ ए °इल । वा°. २ सी °को । पिक°. ३ ए °कलाः । वाच°. ४ सी °तृला°. ५ सी °र्णान्तरप्र°. ६ सी °च्छ । कारे इत्वं. ७ ए कम्रि पि°. ८ ए °द्भावि नि°. ९ ए °त्वं च स्या°. १० सी °नां वा. ११ ए °ङ्गुली त°. १२ सी कुबेर°.

इत्युक्त्वा बृहस्पतियविशाखिलकुमारिलैः ।
सोदापयद्त्तियाय[1] शुण्डारिकलभाश्वकान् ॥ ८३ ॥

८३. स भैमिरिति पूर्वोक्तं नर्मणोक्त्वा बृहस्पतियविशाखिलकुमारिलैरनुकम्पित[1]बृहस्पतिदत्तविशाखादत्तकुमारदत्तैः कर्तृभिर्दत्तियायानुकम्पिताय देवदत्ताय श्याले[2]यादापयत् । कान् । शुण्डारा ह्रस्वाः शुण्डाः सन्त्येषां शुण्डारिणस्ते ये कलभास्त्रिंशदब्दका गजास्ते शुण्डारिकलभास्तथा ह्रस्वा अ[3]स्वा(श्वा) अश्वकाः किशोरा द्वन्द्वे तान् ॥

माणिक्यकुतुपान्कूदीरशमीरकुटीरगान् ।
शमीरुस्तम्भमध्येसै[2] हयांश्चान्नगुरुर्ददौ ॥ ८४ ॥

८४. आन्नगुरुरस्मै भैमये ददौ । कान् । माणिक्यकुतुपान् माणिक्यैर्भृत्वा ह्र[4]स्वाः कुतूश्चर्ममयानि स्नेहपात्राणि । किंभूतान् । ह्रस्वाः कूद्यस्तृणभेदाः कूदीरास्तथा ह्रस्वाः श[5]म्यः शमीरा द्वन्द्वे तेषां यः कुटीरो ह्रस्वा कुटी तत्रस्थान्[6] । तथा शमीरुस्तम्भमध्ये[7] ह्रस्वशमीस्तम्भध्ये बद्धत्वेन वर्तमानान्हयांश्च ॥

देवकाम् । अ[8]त्र "लुकि०" [ ३८ ] इत्यादिना कप् ॥

व्याघ्रकाम् । अत्र "लुक्च०" [ ३९ ] इत्यादिना कप् लुक्चोत्तरपदस्य ॥

वाचियाम् । अत्र "षड्वर्ज०" [ ४० ] इत्यादिनोत्तरपदस्य लुक् ॥ षड्व[9]र्जेति किम् । षडियाम् । अत्र "द्वितीयाद्०" [ ४१ ] इत्यादिना द्वितीयात्स्वरादूर्ध्वं

१ सी °यायाशु°. २ प °ध्येसे ह°.

१ सी °म्पितैर्बृह°. २ प °लादा°. ३ ए अश्व°. ४ सी ह्रस्वा कु°. ५ सी शमी°. ६ सी °न् । यथा. ७ सी °ध्ये ब°. ८ सी अत्रांगुलि इ°. ९ सी षडि°.

लोपः । तथा च "अवर्णेवर्णस्य" [ ७. ४. ६८ ] इत्यल्लुकः(कः) स्थानिवद्भावात्पदस्यानिवृत्तेस्तृतीयत्वं न निवर्तते ॥

कुवियाम् । कहियाम् । अत्र "संध्यक्षरात्तेन" [ ४२ ] इति द्वितीयात्संध्यक्षररूपात्स्वरादूर्ध्वं लुक् तेन द्वितीयेन स्वसंध्यक्षरेण सह ॥

शेवलियाम् । विशालियाम् । अत्र "शेवल०" [ ४३ ] इत्यादिना तृतीयात्स्वरादूर्ध्वं लुक् ॥ केचित्तु विशाखिल । कुमारिलैः । इत्यत्रापीच्छन्ति ॥

बृहस्पतिय । इत्यत्र "क्वचित्तुर्यात्" [ ४४ ] इति क्वचिच्चतुर्थात्स्वरादूर्ध्वं लुक् ॥

दत्तियाय । इत्यत्र "पूर्वपदस्य वा" [ ४५ ] इति पूर्वपदस्य लुग्वा ॥ वावचनाद्यथाप्राप्तम् । देवियेत्यादीनि पूर्वोक्तान्येवोदाहरणानि ॥

अश्वकान् । इत्यत्र "ह्रस्वे" [ ४६ ] इति कप् ॥

कुटीर । शुण्डारि । इत्यत्र "कुटी०" [ ४७ ] इत्यादिना रः ॥ केचित्तु कुटीस्थाने कूदीं पठन्ति ॥ कूदीरं ॥

शमीरु । शमीर । इत्यत्र "शम्या रुरौ" [ ४८ ] इति रुरौ ॥

कुतुपान् । इत्यत्र "कुत्वा डुपः" [ ४९ ] इति डुपः ॥

वत्सतरोक्षतराश्वतरर्षभतरव्रजैः ।
ऊढं गोणीतरीः कासूतर्या छित्वा स वस्वदात् ॥ ८५ ॥

८५. स आम्नगुरुः कासूतर्या ह्रस्वय(या) कास्वा शक्तिशस्त्रेण कृत्वा गोणीतरीर्ह्रस्वा गोणीर्वस्वावपनानिच्छित्वा पाटयित्वा भैमये

१ सी °तराः का°. २ सी °र्याश्छित्वा पाट°.

१ ए °दस्यानि°. २. ए °क्षरांतत्वेन. ३ सी °क् । तेन वि°. ४ सी °क् । कन्यया°. ५ सी देवये°. ६ सी कूदी प°. ७ सी °दीरु. ८ सी °ये सुवर्ण°.

वसु स्वर्णमदात् । किंभूतम् । वत्सतरा दम्या उक्षतरा महोक्षा अश्वतरा वेसरा ऋषभतरा वृद्धोक्षा द्वन्द्वे तेषां व्रजैरतिबंहीयस्त्वेनोढम् ॥

कासूतर्या । गोणीतरीः । अत्र "कासू०" [ ५० ] इत्यादिना तरट् ॥

वत्सतर । उक्षतर । अश्वतर । ऋषभतर । इत्यत्र "वत्सोक्ष०" [ ५१ ] इत्यादिना पित्तरट् ॥

अपकृष्टो नैकतरः क्रियाहीनो न चैककः ।
अमहेच्छो न चैकोपि तयोः संबन्धिपक्षयोः ॥ ८६ ॥

८६. तयोः संबन्धिपक्षयोर्मध्येमहेच्छोनुदार एकोपि न च नैवाभूदत एवैकक एकोपि न च नैव क्रियाहीनो विवाहकार्यन्यूनोभूदत एव चैकतर एकोपि नापकृष्टो निन्दितोभूत् ॥

तयोरेकतरः । अत्र "वैकाद्०" [ ५२ ] इत्यादिना वा डतरः ॥ वावचनमगर्थम् । तयोरेककः ॥ महावाधिकाराच्च भवत्यपि । तयोरेकः ॥

पक्षयोर्यतरोप्यैक्षि ततरोपि क्रियाधिकः ।
स्तूयतां कतरस्तत्रान्यतरो निन्द्यतां कथम् ॥ ८७ ॥

८७. स्पष्टः । किं तु यतरोपि योपि । एवमग्रेपि ॥

पक्षयोर्यतरः । ततरः । कतरः । अन्यतरः । अत्र "यद्०" [ ५३ ] इत्यादिना डतरः ॥

स्वर्गभाजामन्यतमां वधूमन्यतरं च तम् ।
अकारयदथ प्रीतः पुरोधाः करमोचनम् ॥ ८८ ॥

८८. स्पष्टः । किं तु स्वर्गभाजां देवीनां मध्ये रूपाद्यतिशयेनान्य-

१ प °योर्यत°. २ प °रोधा क°.

१ सी °ति बही°. २ प °दिन त°. ३ सी °वनगमर्थ°. ४ प °पि । क्ष°.
५ सी °तरकन्य°.

तमामेकां वधूम् । स्वर्गभाजां देवानां मध्येन्यतरमेकं तं च वरं[1] च । करमोचनं पाणिग्रहणमोक्षम् ॥

कतरो[1] वः कठो विद्वान्[2] कतमो वेति भाषयन् ।
नृपो[3]प्रीणाद्धनैर्विप्रान्यतरां[4]स्ततरान्न हि ॥ ८९ ॥

८९. हे विप्रा वो युष्माकं मध्ये कतरः कठः[1][2][3] कः कठप्रोक्तवेदाध्यायी । वा यद्वा । वो मध्ये कतमः को विद्वानिति स्वनरैर्भाषयन्सन्नृपो विप्रान्कठत्वादिविशिष्टान्द्विजान्धनैरप्रीणाद्बहुद्रव्यैस्तृप्तीचक्रे । न हि पुनर्यतरांस्ततरान्कठत्वादिरहितान् ॥

भूरिदक्षिणया विप्रान्यतमा(मां)स्ततमानपि ।
कौन्तेयबलिकर्णानामयमेकतमोप्रृणत्[5] ॥ ९० ॥

९०. स्पष्टः । किं तु गुणिनो द्विजांस्तावद्भूरिद्रव्यैरप्रीणयत् । निर्गुणानपि भूरिदक्षिणामात्रेणाप्रीणयदित्यर्थः । कौन्तेयो युधिष्ठिरः ॥

यतरान् । यतमान् । ततमान् । ततरान् । कतमः । कतरः । अन्यतमाम् । अन्यतरम्[4] । अत्र "बहूनां०"[6] [ ५४ ] इत्यादिना डतमो[7] वा चकाराड्डतरश्च ॥

एकतमः । अत्र "वैकात्" [ ५५ ] इति डतमः ॥ वावचनादक् । एकक इति पूर्वोक्तमेव ॥

क्षणेत्रच्छिन्नतमकश्रमच्छि(श्छि ?)न्नकं[6]वस्त्रभृत् ।
रजसा भिन्नतरकः पुमानागाँ[7]दवन्तितः ॥ ९१ ॥

९१. अत्र क्षणेस्मिन्प्रस्तावेवन्तितो मालवदेशात्पुमानागात् । की-

१ सी °रो व कवो वि°. २ प °न् ऋत°. ३ सी °पोपूर्णद्ध°. ४ प °तरंस्त°. ५ सी °पृणात्. ६ प °कमस्त्र°. ७ प °गावदन्ति°.

१ सी °रं क°. २ सी कठकः. ३ प °ठः क°. ४ प °णानामपि. ५ सी °तराम्. ६ प °हूनादिर्त्या°. ७ प °तमो वा.

दृक् । छिन्नतमकोनत्यन्तं छिन्नतमस्तदैवागमनेनातिश्रान्तत्वादनपगतो राजदर्शने गमनावधेः[1] पूर्णत्वेन स्वस्थचित्तत्वाच्च किंचिदपगतश्चेत्यर्थः[2] । श्रमो मार्गखेदो यस्य सः । तथा छिन्नकमनत्यन्तं छिन्नं[3] स्फुटितमित्यर्थः । यद्वस्त्रं तद्बिभर्ति यः सः । तथा रजसा भिन्नतरकोनत्यन्तं भिन्नतरः किंचिद्व्याप्त उद्धूलितजङ्घ इत्यर्थः ॥

छिन्नक । तमबाद्यन्तात् क्तात् । छिन्नतमकः[4](क) । भिन्नतरकः । अत्र "क्तात्०" [ ५६ ] इत्यादिना कप् ॥

द्वाःस्थेन साम्यनत्यन्तं[1] प्रविष्टः सामिवारितः ।
सोर्धोक्तोर्द्धमनत्यन्तं निवेदिततमः[2][3] प्रभोः ॥ ९२ ॥

९२. स पुमान् द्वाःस्थेन प्रभोर्भैमेरत्यौत्सुक्यादिवशेनावन्तितः पुमानित्यर्धमनत्यन्तं मधुरवचसा निवेदिततमोतिशयेन विज्ञप्तः । कीदृक् । साम्यर्धमनत्यन्तं[6] प्रविष्टः सन् द्वाःस्थेन सामिवारितः प्रविशन्नर्धमनत्यन्तं[7] निषिद्धस्तथार्धोक्तो राज्ञो निवेदनेत्यन्तमुत्सुकत्वेन संपूर्णवाक्यस्योक्तावशक्तत्वात्क्षणं द्वारदेश एवेत्यर्धमनत्यन्तमुक्तः[8] ॥

भूपतिः साम्यनत्यन्तं निर्भुग्नतरया भ्रुवा ।
सांराविणं व्यावभाषीं विनापि तमवीविशत् ॥ ९३ ॥

९३. भूपतिः साम्यनत्यन्तं निर्भुग्नतरया प्रवेशसंज्ञार्थमनतिशयेन वक्रीकृतया भ्रुवा कृत्वा तं पुमांसमवीविशत्प्रवेशितवान् । कथम् । विनापि । किम् । सांराविणं समन्ताद्रवणं[9] पुमांसं शीघ्रं प्रवेशयेति[10]

---

१ सी °न्तं प्रावृष्टः स्यामि°. २ प °तमः. ३ सी °तमोति°.

---

१ सी गमाव°. २ सी °तश्च°. ३ प °न्नं स्फटि°. ४ प °तरकः. ५ प °तमकः. ६ सी °नस्यन्तं. ७ सी °न्तं न विषि°. ८ सी °मुक्तः ॥ भू°. ९ सी °द्रव्यणं. १० प °शयति.

संशब्दनम् । तथा व्यावभाषीं[1] व्यवभाषणं किमर्थमसावागतः[2] कीदृग्वामुनार्थेनागत ईदृग्वेत्यन्योन्यालापं च[3] ॥

साम्यनत्यन्तं प्रविष्टः[4] । अर्धमनत्यन्तं निवेदिततमः । साम्यनत्यन्तं निर्भुग्नतरया[5] । इत्यत्र "न सामि०" [ ५७ ] इत्यादिना न कप् ॥ अन्ये तु समास एवोदाहरन्ति[6] । सामिवारितः । अर्धोक्तः ॥

व्यावभाषीम् । सांराविणम् । अत्र "नित्यं ञजिनोण्" [ ५८ ] इति स्वार्थे नित्यमण्[7] ॥

वैरिवैसारिणाङ्केशं[1] शिबीनां सोग्रणीर्नृपम् ।
प्रणम्येत्यब्रवीद्वाचो देवदत्तकपूगजित् ॥ ९४ ॥

९४. स पुमान्वैरिण एव सन्तापकत्वाद्वैसारिणाङ्को मीनध्वजः[8] कामस्तत्रेशं शत्रूणां भस्मसात्कारकं तं भैमिं प्रणम्य स पुमानिति वक्ष्यमाणंवाचोब्रवीत्[9] । कीदृक् । शिबीनां नानाजातीयानामनियतवृत्ती-[10]नामर्थकामप्रधानानां संघानामग्रणीर्मुख्यस्तथा देवदत्तको देवदत्तमुख्यो[11] यः पूगः[12] संघविशेषस्तज्जित् । एतदपेक्षयोत्कृष्टानां शिविपूगानामग्रणीत्वात्स्वपूगस्वामिनो[13] देवदत्तादुत्कृष्ट इत्यर्थः ॥

वैसारिण । इत्यत्र "विसारिणो मत्स्ये" [ ५९ ] इति स्वार्थेण् ॥

शिबीनाम् । अत्र "पूगाद्०" [ ६० ] इत्यादिना[14] ञ्यः स च द्रिः । द्रित्वाद्बहुष्वस्त्रियां लुप् ॥ अमुख्यकादिति[15] किम् । देवदत्तकपूग[16] ॥

---

१ सी °वैशारि°.

---

१ प व्याबभा°. २ सी °र्थेमागतोसौ कीदृक् पुमर्थेना°. ३ सी च । सनमन°. ४ सी °वि अ°. ५ सी °तमया. ६ सी एववाह°. ७ प °ण् । विरि°. ८ सी °जः कमनस्त°. ९ सी °णवतोब्र°. १० सी °तव्रतीना°. ११ प °त्तख्यो. १२ सी पूग मं°. १३ सी °त्वात्सपू°. १४ सी °ना ञ्याः । स. १५ सी °मुष्यका°. १६ प °पूगः ॥ स्त्री°.

स्त्रीव व्रीहिमता[1] व्रीहिमतानां[2] संमतोस्म्यहम् ।
दण्डनेतुर्नियुक्तस्य मालवेषु सकुन्तिषु ॥ ९५ ॥

९५. यथा व्रीहिमतानां[1] व्रातानाम[2]नियत[3]वृत्तीनां शरीरायासजीविनां[4] संघानां व्रीहिमता स्त्री संमता भवति तथाहं दण्डनेतुः संमतोस्मि दण्डेशस्य पुमानहमित्यर्थः । किंभूतस्य[5] । सकुन्तिषु कुन्तिभिः शस्त्रजीविसंघेन सहितेषु मालवेषु मालवा वाहीकेषु शस्त्रजीविसंघस्तेषु विषये नियुक्तस्य त्वया विजयाय व्यापारितस्य ॥

तदा[3] गौपालिराजन्यकाम्ब्रव्यवृकपत्तिकः ।
सेनानीस्ते सयौधेयशौभ्रेयोगादवन्तिषु ॥ ९६ ॥

९६. तदा यदा त्वमान्नजयाय स्वयं चलितः । सेनान्यं तु बल्ला[6]लजयाय प्रेषितवांस्तस्मिन्काले ते सेनानीरवन्तिष्वगात् । कीदृक्सन्[7] । गौपालयो गोपालस्यापत्यानि ब्राह्मणभेदा राजन्याश्च राज्ञोपत्यानि[8] काम्ब्रव्याश्च काम्ब्रवस्यापत्यानि वाहीकेषु शस्त्रजीविसंघा[9] वृकाश्च शस्त्रजीविसंघाः पत्तयो यस्य सः । तथा युधायाः शुभ्रस्य वापत्यानि वहिका[10](क?)कुमारास्ते शस्त्रजीविसंघा यौधेयशौभ्रेयाः सह[11] तैर्यैः सः ॥

व्रीहिमतानाम् । अत्र "व्रातादस्त्रियाम्" [ ६१ ] इति स्वार्थे ञ्यः स च द्रिः[12] । अस्त्रियामिति किम् । व्रीहिमता स्त्री ॥

कुन्तिषु । इत्यत्र "शस्त्र०" [ ६२ ] इत्यादिना ञ्यट् स च द्रिः ॥

---

१ ए °ता व्रीहिम°. २ सी °मनानां सम°. ३ सी °दा गोपा°.

---

१ ए °नां व्रता°. २ सी °ताम°. ३ सी °तव्रतीनां. ४ सी °नां व्री°. ५ सी °स्य कु°. ६ सी बल्लोज°. ७ सी °न् । गोपा°. ८ सी राज्ञेप°. ९ सी °घा पत्तये य°. १० सी °हवकु°. ११ सी सहितै°. १२ ए द्रिः । मा°.

मालवेषु । इत्यत्र "वाहीकेषु०" [ ६३ ] इत्यादिना ञ्यट् स च द्रिः ॥

अब्राह्मणराजन्येभ्य इति किम् । गौपालिराजन्यकाम्बव्य ॥

वृक । इत्यत्र "वृकाट्टेण्यण्" [ ६४ ] इति टेण्यण् स च द्रिः ॥

यौधेय । शौभ्रेयः । अत्र "यौधेयादेरञ्" [ ६५ ] इत्यञ् स च द्रिः ॥

रक्षोभिः पर्शुभिर्दामनिभिरौलपिभिर्वृतः ।
श्रौमतैः श्रैमतैश्चामुं बल्लालो दर्पतोभ्यगात् ॥ ९७ ॥

९७. स्पष्टः । किं तु रक्षांसि पर्शवो दामनय औलपयश्च शस्त्रजीविसंघ(घा?)स्तैस्तथा श्रुमतः श्रीमतश्चापत्यानि श्रौमताः श्रैमताश्च त एव श्रौमताः श्रैमताश्च तैश्च वृतः ॥

शामीवत्याभिजित्याभ्यां शैखावत्येन चैष ते ।
कृत्यौ बिभेद सामन्तौ नाम्ना विजयकृष्णकौ ॥ ९८ ॥

९८. एष च बल्लालो नाम्ना विजयकृष्णकौ ते तव सामन्तौ बिभेद । कैः कृत्वा । शामीवत्याभिजित्याभ्यां शैखावत्येन च शमीवतोभिजितः शिखावतश्चापत्यैः । यतः कीदृशौ । कृत्यौ करणीयौ भेदार्हावित्यर्थः ॥

शालावत्यौर्णावत्याभ्यां वैदभृत्येन चेरितौ ।
किंराजानमराजानौ सुराजंस्तौ तमीयतु(तुः) ॥ ९९ ॥

---

१ सी पशुभि°. २ प °तैः श्रेमतैश्चा°. ३ प °मीवित्या°. ४ सी °भेदे सा°. ५ सी °कौ ॥ ते तव. ६ प °मीयुधः ॥ हे.

---

१ सी °ह्मण्यरा°. २ प °जनेभ्य. ३ सी °धेयः । अ°. ४ सी °मनेय. ५ सी °घस्त°. ६ सी तैर्वृत ॥ शा°. ७ प °भे कैः. ८ सी °त्याभ्यौ शै°. ९ प °र्हाबि°.

९९. हे सुराजन्पूजितनृप भैमे तौ सामन्तौ शालावत्यौर्णाव-त्याभ्यां वैदभृत्येन च शालावत ऊर्णावतो विदभृतश्चापत्यैरीरितौ बल्लालपक्षे भवनाय प्रेरितौ सन्तौ किंराजानं निन्द्यं नृपं बल्लालमीयतुराश्रितौ। यतोराजानौ। नञत्राल्पार्थो निन्दार्थो वा। स्वामिनि द्रूढत्वादल्पौ तुच्छौ निन्द्यौ वा राजानौ। निषेधार्थ एव वा नञ्। राजार्हचरित्ररहितावित्यर्थः॥

सौ(सो)तिराजंस्तवानीके आसन्नबहुभिर्नृपैः।
कुर्वन्नागादस्यसि द्विदण्डि द्विमुशलि क्षणात्॥ १००॥

१००. हेतिराजन्पूजितनृप स बल्लालस्तवानीके क्षणादागात्। कीदृक्सन्। आसन्ना बहवो भटगजाद्या येषां तैर्नृपैः कृत्वा कुर्वन्। किम्। अस्यस्यसिभिरसिभिः प्रहृत्य युद्धं वृत्तं तथा द्वौ दण्डौ द्वौ मुशलौ चास्मिन्प्रहरणे द्विदण्डि द्विमुशलि च॥

पर्शुभिः। रक्षोभिः। अत्र "पर्श्वादेरण्" [ ६६ ] इत्यण् स च द्विः॥

दामनिभिः। औलपिभिः। अत्र "दामन्यादेरीयः" [ ६७ ] इतीयः स च द्विः॥

श्रौमतैः। शामीवत्य। शैखावत्येन। शालावत्यं। और्णावत्याभ्याम्। वैदभृत्येन। अ(आ?)भिजित्याभ्याम्। इत्यत्र "श्रुमत्०" [ ६८ ] इत्यादिना स्वार्थे यञ् स च द्विः॥ श्रीमच्छब्दादपि केचिदिच्छन्ति। श्रैमतैः॥

---

१ सी °के क्ष°.

---

१ प °त्यौर्णव°. २ सी °तो वेद°. ३ सी °नौ। नाऽन्यत्रा°. ४ प वा टञ्. ५ सी °स्यसि आसिभिः प्र°. ६ सी °त्तं यथा. ७ सी °त्र पार्श्वा°. ८ सी द्विः। शा°. ९ प °त्य। ऊर्णा°. १० प °त्य। श्र°. ११ सी °च्छब्दमपि. १२ सी °न्ति। श्रौम°.

किंराजानम् । अत्र "न किमः क्षेपे" [ ७० ] इति वक्ष्यमाणः समासान्तोत् न स्यात् ॥

अराजानौ । अत्र "नञ्०" [ ७१ ] इत्यादिना समासान्तो न ॥

सुराजन् । अतिराजन् । अत्र "पूजा०" [ ७२ ] इत्यादिना टात्प्राक् समासान्तो न ॥

आसन्नबहुभिः । अत्र "बहोर्डे" [ ७३ ] इति डप्रसंङ्गे डः कच्च न ॥

अस्यसि । इत्यत्र "ईच्युद्धे" [ ७४ ] इतीच् ॥

द्विदण्डि । द्विमुशलि । इत्येतौ "द्विदण्ड्यादेः(दिः)" [७५] इति निपात्यौ ॥

तस्योक्तचैरिवर्त्विग्भिः श्रीपुरैः क्ष्वेडिभिर्भटैः ।
प्रा(आ?)रेभेसद्वलं होतुं समीपपथरोधिभिः ॥ १०१ ॥

१०१. उक्तचैरुच्चारितमन्त्रविशेषैः सद्भिर्ऋत्विग्भिर्यथा हव्यं होतुमारभ्यते तथा तस्य भटैर्बल्लालस्य वीरैरसद्वलं होतुमारेभे हन्तुमारब्धमित्यर्थः । किंभूतैः सद्भिः । श्रीपुरैः श्रियश्चतुरङ्गबलविक्रमादिलक्ष्म्याः पूर्भिर्नगरैर्निवासैरित्यर्थः । तथा क्ष्वेडिभिः सिंहनादवद्भिस्तथा संगता आपो यत्र तत्समीपं तडागादि तस्य ये पन्थानः प्रवेशमार्गास्तद्रोधिभिर्जलस्थानानि रुद्ध्वा स्थितैः । यद्वा रुद्ध्वा(?) समीपान्निकटान्पथो रुन्धानैरसमत्सैन्यस्य निकटमागतैरित्यर्थः ॥

ऋच् । उक्तचैः ॥ पुर् । श्रीपुरैः ॥ पथिन् । समीपपथ ॥ अप् । समीप । इत्यत्र "ऋक्पूर्०" [ ५६ ] इत्यादिना-अत् ॥

१ सी °अत्ररा°. २ प °जानं । अ°. ३ प °न् । अ°. ४ सी °होड इ°. ५ प °सङ्ग डः. ६ प इच् । द्वि°. ७ प °ण्ड्यादिभिः इनिपा°. ८ सी °ङ्गकलावि°. ९ सी °र्थः । यथा. १० सी °नि रदस्थि°. ११ सी उचैः. १२ सी °नाक ॥ ना°.

**नारोढुं दृढधूरक्षात्रथात्रणधुराक्षमान् ।**

**लेभिरेसङ्घटा रुद्धा उदग्भूमस्थितैः परैः ॥ १०२ ॥**

१०२. अस्मद्भटा उदीच्युत्तरा भूमिरुदग्भूमस्तत्र स्थितैः परै रुद्धाः सन्तो रथानुपलक्षणत्वादश्वेभं चारोढुं न लेभिरे । किंभूतान् । दृढधुरो बलि[ष्ठधु]रोक्षाश्वक्राणि येषु तान् । तथा र[ण]धुराक्षमान् शस्त्रादिसर्वसामग्र्या रणकार्यप्राग्भारशक्तान् ॥

**कृष्णभूमं पाण्डुभूमं द्विभूमं च विहाय नः ।**

**पुरोगा नेशुरत्यध्वं घातान्धतमसान्धिताः ॥ १०३ ॥**

१०३. नोस्माकं पुरोगा अग्रेसरभटा अत्यध्वं मुक्तमार्गं यथा स्यादेवं नेशुः । किं कृत्वा । कृष्णा भूमिः कृष्णभूमं तत् कृष्णा भूमिरत्र कृष्णभूमो देशस्तं वा । एवं पाण्डुभूमं तथा द्वयोर्भूम्योः समाहारो द्विभूमं तत् । द्वे भूमी अत्र त(तं) द्विभूमं देशं वा विहाय पश्चाद्भूत्वेत्यर्थः । यतो घाता द्विट्प्रहारा एवातिनिविडत्वेनान्धका(न्धं क)रोत्यन्धर्मेन्धं च तत्तमश्चान्धं तमोस्मिन्वान्धतमसमतिनिबिडतिमिरं तेनान्धिता अन्धीकृताः ॥

**शरसंतमसेरीणां मूर्छावतमसस्पृशः ।**

**अन्येप्यतप्तरहसा भियावरहसं ययुः ॥ १०४ ॥**

१०४. अन्येपि पुरोगेभ्योपरेपि भटा अवरहसमवहीनं रहोवहीनं रहसा वावरहसमवहीनं रहोस्यावरहसस्तं वा निकृष्टं विजनदेशं निकृष्ट-

१ ए °णधरा°. २ सी °न् । शस्त्रा°.

१ ए °मत्स्या र°. २ सी °हारे द्वि°. ३ ए °त्र तद्द्भू°. ४ ए °मन्तं च. ५ ए °श्चान्धत°. ६ ए °न्वान्धं तमसमिति°. ७ सी °हीनर°. ८ सी °स्तं-पिवा. ९ सी °कृष्ट विजनदेशा°.

विजनदेशान्वितं पर्वतादि वा ययुर्नेशुरित्यर्थः। किंभूताः सन्तः। अरीणां शरसंतमसे शरैरतिनिबिडत्वात्संतते तमसि सति मूर्छावतम[स]स्पृशो मूर्छया किंचिदचैतन्येन यदवहीनं तमोवहीनं तमसो[सा?]वहीनं तमोस्मिन्वावतमसमन्धकारिका तत्स्पृशन्तः। तथा भिया नास्ति तप्तरहसं तप्तं तप्ताय इवानधिगम्यं रहोप्रकाश्यं वस्तु येषां तेतप्तरहसाः। यद्वा। तप्तं रहो येषां ते तप्तरहसा न तथा स्वजीविताशयातिगोप्यं स्वाम्यादिमपि द्विषां दर्शयन्त इत्यर्थः ॥

प्रतिसामः प्रतिलोमो ज्ञातानुरहसो द्विषाम्।
सोनुसामोनुलोमः स्वान्नृपानूचे चमूपतिः ॥ १०५ ॥

१०५. स चमूपतिरनुगतानि लोमान्यस्यानुलोमो रूढ्यानुकूलोत एवानुसामः साम्नानुगतः सन्स्वान्नृपात्रणे स्थिरीभवनायोचे। यतः कीदृक्। द्विषां प्रतिलोमो रूढ्या प्रतिकूलस्तथा द्विषां प्रतिगतं सामास्य प्रतिसामो दण्डे प्रगुण इत्यर्थः। तथा द्विषां ज्ञातमनुरहसमनुरूपं रहो येन सः। गूढचरादिप्रयोगेण द्विषां विदितसामर्थ्यादिपरमार्थ इत्यर्थः ॥

अवलोमावसामेन भर्त्रा मे ब्रह्मवर्चसम्।
धिक्स्तुतं धिक्च वो राजवर्चसं हस्तिवर्चसम् ॥ १०६ ॥

१ सी सोनसामोनलो°.

१ सी °तायं वा. २ प °विडित्वा°. ३ सी मूर्छया. ४ सी °दही°. ५ प °नं तमो°. ६ सी °वसस°. ७ सी नाति त°. ८ सी °वाधिनम्यं. ९ सी °काशं वास्तु. १० सी °था साजी°. ११ सी °तिसगोप्यं संत्यादि°. १२ प °दिनपि. १३ सी °कूलात. १४ सी °गतसा°. १५ सी °था शा°. १६ प °रहंस°.

१०६. अवलोमेष्ववहीनलोमसु रूढ्या शत्रुषु विषयेवसामेनावहीनसाम्ना[1] सामरहितेनेत्यर्थः । भर्त्रा भैमिना धिक्स्तुतं श्लाघितम्[2] । किं तदित्याह । मे मम ब्रह्मवर्चसं ब्रह्मतेजस्तथा वो युष्माकं राजवर्चसं राजतेजो हस्तिवर्चसं च हस्तिनां बलं च । एवं नाशेनातिनिन्द्या[3]न्येतानि त्रीणि स्वामिना धिक्स्तुतानीत्यर्थः ॥

पल्यवर्चसवद्वर्म[1][2] धिग्वः प्रत्युरसं नृपाः ।
यन्नश्च स्वामुपाक्ष्येते विशन्त्योकोगवाक्षवत्[3] ॥ १०७ ॥

१०७. हे नृपाः प्रत्युरसमुरसि वर्तमानं वो युष्माकं[4] वर्म धिग्गर्हे । यतः पल्यवर्चसवत्पल्यं कटकृतं पलालवर्तिकृतं वा धान्यभाजनं[5] हस्तिविधा(?) वा तस्य[6] यद्वर्चो बलं रणकार्याकरणेन भारभूतत्वात्तत्तुल्यम् । एतदपि कुत इत्याह । यद्यस्मान्नोस्माकं च स्वा(?)मुपाक्ष्यक्ष्णोः[7] समीपे युष्माकं पश्यतामेवेत्यर्थः । एते शत्रवो विशन्ति । ओकोगवाक्षवत् । [*यथा गृहगवाक्षे सुखात्सर्वोपि विशति ॥

रणु(ण)धुरा । इत्यत्र "धुरोनक्षस्य" [ ७७ ] इत्यत् ॥ अनक्षस्येति किम् । दृढधूरक्षान् ॥

द्विभूमम् । [ पाण्डुभूमम् । ] उदग्भूमः(म) । कृष्णभूमम् । अत्र "संख्या०" [ ७८ ] इत्यादिना-अत् ॥

अत्यध्वम् । अत्र "उपसर्गादध्वनः" [ ७९ ] इत्यत् ॥

---

१ प °द्वर्माधि°. २ सी °र्मे द्विग्व प्र°. ३ प °क्षवात्.

---

१ प [illegible] सा°. २ प °म् । कं त°. ३ सी °न्यान्यिता°. ४ प °कं वमाधि°. ५ सी धान्यं भा°. ६ सी °स्य द्वयर्चो. ७ सी °पाक्षक्षणे

---

* एतदारभ्य १२० तमपद्यटीकादर्शितधनुश्चिह्नान्तस्थो ग्रन्थः सीपुस्तके नास्ति.

संतमसे । अवतमस । अन्धतमसा । इत्यत्र "[सम]व०" [ ८० ] इत्यादिना-अत् ॥

अतस्ररहसाः । अनुरहसः । अवरहसम् । अत्र "तस०" [८१] आ(इत्या)-दिना-अत् ॥

प्रतिसामः । अनुसामः । अवसामेन । प्रतिलोमः । अनुलोमः । अवलोम । इत्यत्र "प्रत्यनु०" [ ८२ ] इत्यादिना-अत् ॥

ब्रह्मवर्चसम् । [हस्तिवर्चसम् । राजवर्चसम् ।] पल्यवर्चसम् । अत्र "ब्रह्म०" [ ८३ ] इत्यादिना-अत् ॥

प्रत्युरसम् । अत्र "प्रतेर०" [ ८४ ] इत्यादिना-अत् ॥

गवाक्ष । इत्यत्र "अक्ष्णोप्राण्यङ्गे" [ ८५ ] इत्यत् ॥ अप्राणा(ण्य)ङ्ग इति किम् । [ उपाक्षि ] ॥

प्रत्यक्षं नः समक्षं च सैन्ये क्षुण्णे परोक्षवत् ।
कस्माद्रक्ष्यन्ति तेन्वक्षं कटाक्षैर्हासगर्भितैः ॥ १०८ ॥

१०८. स्पष्टः । किं त्वन्वक्षं सकललोकप्रत्यक्षम् ॥

समक्षम् । कटाक्षैः । इत्यत्र "स(सं)कटाभ्याम्" [ ८६ ] इत(त्य)त् ॥

प्रत्यक्षम् । परोक्षं(क्ष) । अन्वक्षम् । अत्र "प्रति०" [८७] इत्यादिना-अत् ॥

प्रतिराजं वदत्येवं सेनान्यां तेपि भूभुजः ।
अध्याजिकर्म निश्चिक्युः प्रतिवर्म कृतादराः ॥ १०९ ॥

१०९. स्पष्टः । किं तु प्रतिराजं नृपं नृपं प्रति । अध्याजिकर्म रणकर्मविषये । निश्चिक्युर्निश्चयं चक्रुः । प्रतिवर्म(र्म) सन्नाहं प्रति सन्नाहाभिमुख्येन लक्ष्यीकृत्य वा । ते नृपाः ॥

प्रतिराजम् । अत्र "अनः" [ ८८ ] इत्यत् ॥

अध्याजिकर्म । प्रतिवर्मम् । अत्र "नपुंसकाद्वा" [ ८९ ] इति वा-अत् ॥

उपनद्युपगिपर्य(गिर्य)न्तर्नदमन्तगि(र्गि)रं गतान् ।
तेध्याग्रहायणीवोडूम्ला(म्ला)नानाह्वन्स्वकान्भटान् ॥ ११० ॥

११०. स्पष्टः । किं तु ते नृपाः । यथाध्याग्रहायणि मार्गशीर्ष्यां हिमेन व्याप्तव्योमत्वेनोडवस्तारा म्लानाः स्युरेवं म्लानान् ॥

तेधियुत्प्रत्यसुहृदं प्रसस्रुः सोर्जगर्जिताः ॥
अध्याग्रहायणमुपपौर्णमासं यथाब्धयः ॥ १११ ॥

१११. ते नृपा अधियुद्रणे प्रत्यसुहृदं शत्रूनाभिमुख्येन लक्ष्यीकृत्य प्रसस्रुः प्रसृताः.। किंभूताः सन्तः । सोर्जाः सबला ये गर्जिताः कृतसिंहनादाः । यथाध्याग्रहायणं मार्गशीर्षपूर्णिमायामुपपौर्णमासं पौर्णमास्याः समीपे च श्वेतचतुर्दश्यां कृष्णप्रतिपदि वेन्दोरुदितत्वेनाब्धयः सोज(र्ज)गर्जिताः सन्तः प्रसरन्ति ॥

अन्वगाद्दण्डनेताधिपौर्णमासीन्दुरुक्स तान् ।
इदं पञ्चनदं सप्तगोदावरमिति ब्रुवन् ॥ ११२ ॥

११२. अधिपौर्णमासीन्दुरुग् रणाय भूभुजा(जां) व्यावर्तनेतिप्रमुदितत्वात्पूर्णिमाचन्द्रोज्ज्वलविकसितमुख(खः) स दण्डनेता तान्भूभुजोन्वगात् । कीदृक्सन् । उत्साहनाय ब्रुवन् । किमित्याह । इदं रणं स्वर्गहेतुत्वात्पञ्चनदसप्तगोदावरतीर्थयोस्तुल्यमिति ॥

अन्तर्गिरम् । उपगिरि । अन्तर्नदम् । उपनदि । उपपौर्णमासम् । अधिपौर्णमासं(सि) । अध्याग्रहायणम् । अध्याग्रहायणि ॥ अपञ्चमवर्ग्यं । प्रत्यसुहृदम् । अधियुत् । अत्र "गिरि०" [ ९० ] इत्यादिना-अत्( अद्वा ) ॥

पञ्चनदम् । सप्तगोदावरम् । अत्र "संख्यायाः०" [ ९१ ] इत्यादिना-अद्वा ( अत् ) ॥

सेनानीरधिशरदं शशीवाधितदं बभौ ।
व्याधो वोपशुनं निघ्नन्विनोपजरसं द्विषः ॥ ११३ ॥

११३. सेनानीरुपजरसं जरायाः समीपं विना वर्तमानांस्तरुणानित्यर्थः । द्विषो निघ्नन्सन्नधितदं तेषु स्वराजस्वाह्लादकत्वाद्बभौ । यथा शश्यधिशरदं शरत्काले भाति । यथा वा व्याध आखेटिक उपशुनं शुनां समीपे भाति ॥

तदास्त्राणामनुगवानोभिः पांशुस्तथोद्धतः ।
यथा सरजसं मृत्युर्महोक्ष इव जग्रसे ॥ ११४ ॥

११४. तदास्त्राणां सत्कैरनुगवानोभिर्गौ(र्गा) अन्वायतैः शकटै कृत्वा पांशुस्तथोद्धत उच्छलितो यथा निबिडं रणोर्व्या व्याप्तवान्मृत्युर्यमो महोक्ष इव सरजसं रजसा सकलं यथा स्यादेवं जग्रसेनेकसुभटादीनभक्षयत् ॥

नष्टाञ्जातोक्षवृद्धोक्षस्त्रीपुंसानिव मालवान् ।
न जघ्नुस्तावकाः शुद्धक्षत्रस्त्रीपुंसजा भटाः ॥ ११५ ॥

११५. स्पष्टः । किं तु जातोक्षस्तरुणवृषभः । स्त्री चासौ पुमांश्च स्त्रीपुंसो नपुंसकः । यथैते रणकातरत्वेन नश्यन्ति तथा नष्टान् शुद्धक्षत्रस्त्रीपुंसजाः । शुद्धं ब्राह्मणत्वादिजात्यासंकीर्ण(र्णं) क्षत्रं राजबीज यस्य तद्यत्स्त्रीपुंसं तस्माज्जाताः शुद्धक्षत्रिया इत्यर्थः ॥

अधिशरदम् । अधितदम् । अत्र "शरदादेः" [ ९२ ] इत्यत् ॥

उपजरसम् । अत्र "जराया जरस् च" [ ९३ ] इत्यत् । जरसादेशश्च ॥

स[illegible]म् । उपशुनम् । अनुगव । इत्येते "सरजस०" [ ९४ ] इत्यादिन निपात्याः ॥

जातोक्ष । महोक्षः । वृद्धोक्ष । इत्यत्र "जात०" [ ९५ ] इत्यादिना-अत् ॥

द्वन्द्वात् । स्त्रीपुंस । कर्मधारय(या)त् । स्त्रीपुंसान् । इत्यत्र "स्त्रियाः०" [ ९६ ] इत्यादिना-अत् ॥

ऋक्सामे ऋग्यजुषं वा केपि जीवातवे जगुः ।
तृणं धेन्वनु(न)डुहवक्षे(त्के?)प्यधुर्मार(न?)वा रदैः ॥११६॥

११६. स्पष्टः । किं तु जीवातवे जगुर्जीवनाय ब्राह्मणीवभूवुरित्यर्थः ॥

ऊर्वष्ठीवे पदष्ठीवेक्षिभ्रुवे च कृतव्रणः(णाः) ।
त्यक्तदारगवा नेशुस्तेहोरा[त्र]व(त्र)णार्दिताः ॥ ११७ ॥

११७. स्पष्टः । किं तूर्वष्ठीवे ऊर्वे(र्वो)र्जान्वोश्च केचित्कृतव्रणाः पदष्ठीवे केचिच्च । पादयोर्जान्वोश्च कृतव्रणा इत्यर्थः ॥

रात्रिंदिवमिवार्को भान्नक्तंदिवमिवानलः ।
अवाङ्मनसगम्यौजा बल्लालो वा(लोथा)भ्यधावत ॥ ११८ ॥

११८. [ अथ बल्लालोभ्यधावत । ] कीदृक्सन् । न वाङ्मनसेन वाचा मनसा च गम्यं परिच्छेद्यमोजस्तेजो यस्य सोतिप्रचण्डप्रतापोत एव च रात्रिंदिवं सर्वदा योर्कः स इव तथा नक्तंदिवं सदा योनलोग्निः स इव भाज्जाज्वल्यमानः ॥

गोगोदुहवदास्माकान्मन्वानोहर्दिवं च सः ।
शरैस्तुतोद कीर्णास्थित्वचमांसास्रविप्रुषैः ॥ ११९ ॥

११९. स बल्लाल आस्माकान्भटान्गोगोदुहवद्गोगोपालानिव निःसत्त्वान्मन्वानः सन् शरैः कृत्वाहर्दिवं सदा तुतोद विव्यते(थे). किंभूतैः । कीर्णे विक्षिप्ते अस्थित्वचमस्थीनि च त्वचश्च मांसास्रविप्रुषं मांसं चास्रविप्रुषो रक्तबिन्दवश्च यैस्तैः ॥

समिद्दृषदवद्भिस्त्वाशु दुर्भेदां द्व्यहेपि हि ।
शतराजीं तवाथारिः प्रपेदे दण्डनायकम् ॥ १२० ॥

१२०. अथारिर्बल्लालो दण्डनायकं प्रपेदे प्राप्तः। किं कृत्वा।] तव शतराजीमाशु भित्त्वेतस्ततः क्षिप्त्वा। किंभूताम्। महाबलत्वेन दृढव्यूहत्वेन च द्व्यहेपि दिनद्वयेपि दुर्भेदाम्। समिदृषदवत्। यथा समिधः काष्ठानि दृषदश्च दुर्भेदाः स्युः॥

ऋक्सामे। ऋग्यजुषम्। धेन्वनडुहे। वाङ्मनस। अहोरात्र। रात्रिंदिवम्। नक्तंदिवम्। अहर्दिवम्। ऊर्वष्ठीवे। पदष्ठीवे। अक्षिभ्रुवे। दारगवाः। एते "ऋक्साम०" [ ९७ ] इत्यादिना निपात्याः॥

चवर्ग। अस्थित्वच॥ दं। समिदृषद॥ ष। मांसास्त्रविप्रुषैः॥ ह। गोगोदुह। इत्यत्र "चवर्ग०" [ ९८ ] इत्यादिना-अत्॥

शतराजीम्। द्व्यहे। अत्र "द्विगोरन्नह्नोट्" [ ९९ ] इत्यट्॥

**सेनानीः स्वांस्ततर्जाथ द्व्यायुषं त्र्यायुषं न वा।**
**द्व्यञ्जलत्र्यञ्जलस्वर्णाहर्भृत्या जीविताः स्थ किम्॥ १२१॥**

१२१. अथ सेनानीः स्वांस्ततर्ज। यथा द्वयोरञ्जल्योः समाहारो द्व्यञ्जलमेवं त्र्यञ्जलम्। द्वन्द्वे उपचारात्तत्परिमाणं यत्स्वर्णं तदहर्भृत्या दिवसे भृतिर्येषां ते हे द्व्यञ्जलत्र्यञ्जलस्वर्णाहर्भृत्या हे स्वर्णभृताञ्जलीनां द्वयं त्रयं वा जीविकां दिने दिने लब्धारो न द्व्यायुषं वर्तमानजनायुरपेक्षया न द्वे आयुषी स्तो न वा त्र्यायुषं न वा त्रीण्यायूंषि सन्त्यर्थाद्वस्तत्किं जीविताः स्थ जीवथ। अद्य श्वो वा मृत्युर्भाव्येव तस्मात्स्वजीवितनिरपेक्षं युध्यध्वमित्यर्थः॥

---

१ ए °ता। म°. २ ए च द्व्याहे°. ३ सी °ये दु°. ४ सी अहर्दि°. ५ ए द। ष। मां°. ६ सी °रनह्नो°. ७ ए °नानी स्वां तस्ततर्जः। य°. ८ सी °रात्प°. ९ ए ते द्व्य°. १० ए °भृतीता°. ११ सी °यं वा. १२ सी °वितास्थ जीविथ. १३ सी °त्युभाव्ये°. १४ ए °र्भावेत°. १५ ए °ध्यमि°.

त्र्यञ्जलयस्त्र्यञ्जलयः पूर्वेषां नौरसाः स्थ भोः ।
द्व्यंलि(द्व्यञ्जलि)त्र्यञ्जलिकृता मया भ्रान्त्यैव पूजिताः ॥१२२॥

१२२. भो द्व्यञ्जलयस्त्र्यञ्जलयः स्वर्णादीनां द्वाभ्यामञ्जलिभ्यां त्रिभिरञ्जलिभिश्च क्रीता भटा यूयं पूर्वेषां[1] पूर्वमहाभटानामौरसाः पुत्रा न स्थ । एतद्युपस्थितस्य युद्धस्याकारकत्वात् । अत एव यूयं मया भ्रान्त्यैव[2] तेषां महाभटानामौरसा एत इति महायोधा भविष्यन्तीति मतिभ्रमेणैव पूजिताः स्वर्णवस्त्रादिदानैः सत्कृताः । कीदृशा सता[3] । द्व्यञ्जलित्र्यञ्जलिकृता द्वयोरञ्जल्योस्त्रयाणामञ्जलीनां समाहारं कुर्वता भक्त्यर्थं[4] द्विस्त्रिर्वाञ्जलियोजनानि कुर्वता ॥

द्व्यायुषम् । त्र्यायुषम् । अत्र "द्वित्रेरायुषः" [ १०० ] इत्यट् ॥

द्व्यञ्जलं[5] । द्व्यञ्जलि । त्र्यञ्जलं । त्र्यञ्जलि । इत्यत्र "वाञ्जलेरलुकः[6]" [१०१] इति वा-अट् ॥ अलुक इति किम् । द्व्यञ्जलयः । त्र्यञ्जलयः ॥

तेनेत्युक्ता युयुधिरे तेधिकीभूय[2] वैरितः ॥
द्विखारतस्त्रिखारीव[3][4] त्रिखारेः पञ्चखारि वा ॥ १२३ ॥

१२३. स्पष्टः । किं तु यथा द्विखारतो[7] द्वयोः खार्योः(र्योः) समाहारात्सकाशात्त्रिखारी तिसृणां[8] खारीणां समाहारोधिका स्यादेवं यथा त्रिखारेः पञ्चखारि वाधिकं स्यादेवं वैरितः शत्रुभ्योधिकीभूय ॥

द्विखारतः । पञ्चखारि । इत्यत्र "खार्या वा" [ १०२ ] इति वा-अट् ॥

केचिदत्र पुंस्त्वमपीच्छन्ति । तन्मते "गोश्च०[9]" [ २. ४. ९६ ] इत्यादिना

१ सी °यस्वर्णा°. २ प °भूयो वै°. ३ प द्विषार°. ४ सी °खारीव त्रिस्वारी°.

१ सी °र्वे म°. २ सी °न्त्यैते ते°. ३ सी °ता । द्यं कृ°. ४ प °ल त्र्य°. ५ सी °ञ्जलि त्र्य°. ६ सी °लुक् इ°. ७ सी °खारितो. ८ सी °णां म°. ९ प गोश्चात्या°.

ह्रस्वत्वे त्रिखारेः । खीत्वमप्यन्ये । तन्मते पूर्ववद्ध्रस्वत्वे "इतोक्त्यर्थात्" [ २-४. ३२ ] इति ङ्यां च त्रिखारी ॥

अर्धखार्यर्धखारेण भूत्वा खारीव ते स्वकैः ।
द्विनावव्यूहवन्तोर्धनावव्यूहं रिपुं व्यधुः ॥ १२४ ॥

१२४. ते नृपा रिपुं बल्लालं व्यधुः । किंभूतम् । नावोर्धमर्धनावं तेद्व्यूहः सैन्यरचना यस्य तं नावाकारस्य व्यूहस्य तत्सैन्यस्य संबन्धिनोर्धस्य हननेनार्धनावाकारव्यूहम् । किं कृत्वा । स्वकैर्भटैः कृत्वा द्वयोर्नावोः समाहारो द्विनावं तदाकारो यो व्यूहः सोस्त्येषां द्विनावव्यूहवन्तो भूत्वा । यथार्धखारि खार्या अर्धमर्धखारेण खार्या अर्धेन खारी स्यात् ॥

अर्धखारेण । अर्धखारि । इत्यत्र "वार्धाच्च" [ १०३ ] इति वा-अट् ॥

अर्धनाव ॥ द्विगोः । द्विनाव । इत्यत्र "नावः" [ १०४ ] इत्यट् ॥

सोवन्तिपुंगवः पञ्चराज्या हतमहासखः ।
सेनान्यो गूर्जरब्रह्मस्यान्वक्षं पातितो गजात् ॥ १२५ ॥

१२५. स्पष्टः । किं तु स बल्लालोवन्तिपुङ्गवो मालवश्रेष्ठः पञ्चराज्या पञ्चानां राज्ञां संहत्या कर्त्र्या पातितः । गूर्जरब्रह्मस्य गूर्जरेषु कुशे ब्रह्मा गूर्जरब्रह्मस्तस्य गूर्जरा(र)त्रावासिद्विजस्य सेनान्यः ॥

पुंगवः । अत्र "गोः०" [ १०५ ] इत्यादिना-अट् ॥

पञ्चराज्या । महासखः । अत्र "राजन्सखेः" [ १०६ ] इत्यट् ॥

गूर्जरब्रह्मस्य । इत्यत्र "राष्ट्र०" [ १०७ ] इत्यादिना-अट् ॥

---

१ ए °वः पुंवरा°.

---

१ ए °ल्लाभं व्य°. २ सी तद्व्यू°. ३ सी °स्य सः तं. ४ सी °त्वा द्व° ५ सी °न कृत्वारी°. ६ ए °राज्यां प°. ७ सी °ज्ञां हत्यां क°. ८ ए °ल कीर्त्या पा°. ९ ए °रत्वावासिर्ज्जन्म्य से°. १० सी °ट् । अर्को°.

अकौब्रह्मिम(र्म?)हाब्रह्मा महाब्रह्मैश्चमूपतिः ।
यावन्निषेधेत्तावत्स कैश्चित्कुब्रह्मभिर्हतः ॥ १२६ ॥

१२६. तावत्स बल्लालः कैश्चित्कुब्रह्मभिः पापिष्ठब्राह्मणैर्हतो यावच्चमूपतिर्महाब्रह्मैर्बृहद्ब्राह्मणैर्निषेधेन्मारणान्निवर्तयेत् । यतो महाब्रह्मा । एतदपि कुत इत्याह । यतोकौब्रह्मिः पापो ब्रह्मा कुब्रह्मो न तस्यापत्यम् ॥

अकौब्रह्मिः कुब्रह्मभिः । महाब्रह्मैः महाब्रह्मा । इत्यत्र "कुमहद्भ्यां वा" [ १०८ ] इत्यड्वा ॥

ग्रामतक्षैः कौटतक्षैः स्यूतानःश्वस्ततोचलत् ।
सोगोष्ठश्वैरतिश्वैर्युङ् व्याघ्रश्वैरिव लुब्धकः ॥ १२७ ॥

१२७. स चमूपतिस्ततो रणस्थानादचलत् । कीदृक्सन् । अनांसि शकटान्येवातिशीघ्रगत्वाच्छ्वानै इवानःश्वाः । स्यूताः प्रगुणीकृता अनःश्वा यस्य सः । कैः । ग्रामतक्षैर्ग्रामस्य तक्षभिर्ग्रामसाधारणैस्तक्षभिस्तथा कुटी शाला त(त)स्यां भवाः कौटा ये तक्षाणस्ते कौटतक्षा ये स्वतन्त्रा न कस्याप्यायत्तास्तैश्च तथा गोष्ठे गोकुले श्वानो गोष्ठश्वा गोष्ठश्वा इव गोष्ठश्वा यथा गोष्ठश्वास्तथाविधशौर्याभावेनापकारिषु गोष्ठश्वा एव भवन्ति नान्यत्किंचित्कर्तुमलं तथा ये स्युस्त एवमुच्यन्ते । न तथा ये तैर्महाशूरैरित्यर्थः । अतिश्वैः श्वानमतिक्रान्तैः सुष्ठु स्वामिभक्तैः सेवकैर्युङ् युक्तः । व्याघ्र इवातिशूराः श्वानो व्याघ्रश्वा जात्यकुर्कुरास्तैर्युङ् लुब्धको यथा स्यात् ॥

१ सी °ब्रह्मम°. २ प °रतैश्वैर्यङ्.

१ सी यतःकौब्र°. २ प शकायन्ये°. ३ प °न वा°. ४ सी इव श्वा स्यू°. ५ प °कुलश्वा°. ६ प °परि°. ७ सी° °स्तैर्यङ्.

अथोद्रजःपूर्वसक्थोत्तरसक्थाय भूपतिः ।
रामो नु वानरशुनेदात्तस्मै पारितोषिकम् ॥ १२८ ॥

१२८. अथ भूपतिस्तस्मै पुंसे पारितोषिकं परितोषप्रयोजनं स्वर्णाद्यदात् । कीदृशाय । पूर्वं सक्थि सक्थ्ना(क्थ्नः?) पूर्वभागो वा पूर्वसक्थमेवमुत्तरसक्थं द्वन्द्वे उद्रजसी भूरिमार्गात्तदैवागतत्वादुद्धूलिते पूर्वसक्थोत्तरसक्थे यस्य तस्मै । यथा रामः सीताप्रवृत्तिं गृहीत्वा बहुमार्गागतत्वेनोद्रजःपूर्वसक्थोत्तरसक्थाय वानरशुने वानरः श्वेव बलिष्ठत्वाद्वानरश्वा हनूमांस्तस्मै पारितोषिकमदात् ॥

हसन्कुक्कुटसक्थे स मृगसक्थे विडम्बयन् ।
पुमान्फलकसक्थाभ्यां निर्ययौ जवनोरसम् ॥ १२९ ॥

१२९. जवनानां वेगवतामुर(रः) प्रधानं जवनोरसं वेगवत्सु श्रेष्ठः स पुमान्निर्ययौ राजभवनान्निर्गतः । कीदृक्सन् । फलके इव फलके अमांसले अतिकठिने च ये सक्थ्नी(क्थिनी) ऊरू ताभ्यां कृत्वा कुक्कुटसक्थे हसन्मृगसक्थे च विडम्बयन्ननुकुर्वन्नित्यर्थः ॥

ग्रामतक्षैः । कौटतक्षैः । अत्र "ग्राम०" [ १०९ ] इत्यादिना-अट् ॥

गोष्ठश्वैः । अतिश्वैः । अत्र "गोष्ठ०" [ ११० ] इत्यादिना-अट् ॥

व्याघ्रश्वैः । अत्र "प्राणिनः०" [ १११ ] इत्यादिना-अट् ॥ प्राणिन उपमानादिति पूर्वपदविशेषणादिह न स्यात् । वानरशुने ॥

अनःश्वः । अत्र "अप्राणिनि" [ ११२ ] इत्यट् ॥ अप्राणिनीति किम् वानरशुने ॥

---

१ सी °क्थे च मृ°. २ ए °यौ व°.

---

१ सी °सक्थः द्व°. २ सी रामसी°. ३ सी °मुर प्र°. ४ ए अमा° ५ ए °न्नकु°. ६ ए °क्षैः.। अम्रत्या°. ७ ए उमा°.

पूर्वसक्थोत्तरसक्थाय । मृगसक्थे । उपमानात् । फलकसक्थाभ्याम् । अत्र "पूर्व०" [ ११३ ] इत्यादिना-अट् ॥ कुक्कुटादपीच्छन्त्यन्ये । कुक्कुटसक्थे ॥

जवनोरसम् । अत्र "उरसोग्रे" [ ११४ ] इत्यट् ॥

लावण्यजालसरसंमे(म)मृताश्मं दृशोर्वधूम् ।
गृह्णन्वेश्माभि भूपोथाचलत्कालायसास्त्रभृत् ॥ १३० ॥

१३०. अथ कालायसं प्रधानलोहजातिभेदस्तस्य यदस्त्रं क्षुरिका तद्भृद्भूपो वेश्माभिलक्ष्यीकृत्याचलत् । कीदृक्सन् । वधूं गृह्णन् । किंभूताम् । लावण्यस्य जालसरसमेवंनाम सरः सौन्दर्यामृतपूर्णामित्यर्थः । अत एव दृशोर्जगच्चक्षुषोरमृताश्ममममृतस्याश्मामृताश्म एवंनामा प्रधानाश्मजातिविशेषस्तत्तुल्यामत्याह्लादिकामित्यर्थः ॥

पौरैरुपानसाट्टस्थैः पुण्याहे ददृशे व्रजन् ।
संख्याताह्नजयोत्सिक्तैः सोसंख्याताहकौतुकात् ॥ १३१ ॥

१३१. स भैमिः पुण्याहे शुभदिने प्रासादाय व्रजन्सन्नुपगतमनं उपानसमित्यन्नविशेषस्य संज्ञा । तस्य यान्यट्टानि हट्टास्तत्रस्थैः पौरैर्ददृशे । कस्मात् । असंख्यातेष्वहःसु यत्कौतुकं तस्मादतिकौतुकादित्यर्थः । यतः कीदृशैः । संख्याताहेषु स्तोकदिनेषु यो जयः स्वामिकर्तृक आन्नविजयस्तेनोत्सिक्तैर्गर्वितैः ॥

जालसरसम् । उपानस । अमृताश्मम् । कालायस । इत्यत्र "सरोनोश्म०" [ ११५ ] इत्यादिना-अट् ॥

---

१ ए °सनमृ°. २ ए °शोवधू°. ३ ए °यस्यास्त्रभृ°.

---

१ ए °लक्षीकृ°. २ सी °स्यात्मैश्ममृ°. ३ ए °त्यामात्या°. ४ ए °सादय. ५ सी °न उपासन उपासनस°. ६ ए °षसं°. ७ ए °नि हाट्टा°. ८ सी कौका°. ९ ए आहवि°. १० ए °पाना अ°.

पुण्याहे । अत्र "अह्नः" [ ११६ ] इत्यट् ॥

संख्यातात्ह संख्याताह । इत्यत्र "संख्याताद्दह्नश्च वा" [ ११७ ] इत्यट् । अह्नोह्नादेशो वा ॥

सर्वाह्णशुभलग्ने स्वैर्युतो द्व्यह्नोत्सवैर्गृहम् ।
तयात्यह्नेन्दुमुख्या स पूर्वाह्णार्कप्रभोविशत् ॥ १३२ ॥

१३२. पूर्वाह्णार्कप्रभः प्रवर्धमानप्रतापोदय(यः) स भैमिः सर्वाह्णशुभलग्ने सर्वाह्णे सकलदिनमध्ये शुभं यल्लग्नं तत्र गृहमविशत् । कथम् । अत्यह्नोहरतिक्रान्तो रात्रौ भवो य इन्दुस्तद्वन्मुखं यस्यास्तया वध्वा सह । कीदृक्सन् । द्व्यह्नो द्वयोरह्नोर्भव उत्सवो येषां तैर्द्व्यह्नोत्सवैः स्वैः स्वजनैर्युत(तः) ॥

सर्वाह्ण ॥ अंश । पूर्वाह्ण ॥ संख्या । द्व्यह्न ॥ अव्यय । अत्यह्न । इत्यत्र "सर्वांश०" [ ११८ ] इत्यादिना-अट् । अह्नादेशश्च ॥

गते संख्यातरात्रेर्वाग् वर्षारात्रान्महीपतिः ।
व्यसृजत्पुण्यरात्रार्धरात्रे श्वश्रूं गुरुं च तम् ॥ १३३ ॥

१३३. भूपतिर्वर्षारात्रादर्वाक् पुण्यरात्रस्य नक्षत्रादिभिः पवित्राया रात्रेर्योर्धरात्रस्तस्मिन् सन्मुहूर्त इत्यर्थः । श्वश्रूं तं गुरुं च व्यसृजत् । क्व सति । संख्याता या रात्री रात्रिजातिस्तत्र संख्यातरात्रे गते कियतीष्वपि रात्रिष्वतिक्रान्तास्वित्यर्थः ॥

---

१ सी °यापाह्ने°. २ ए °ह्णाप्र°.

---

१ सी °ताह्नः सं°. २ ए °ह्णार्कः प्रव°. ३ ए यल्लग्नं. ४ ए °क्रान्तो रा° ५ ए °युता । स°. ६ सी °व्ययं । अ°. ७ ए °त्रेयोर्ध°. ८ सी °र्त्त मुहू° ९ सी °त्रे कि°.

कालेष्यदीर्घरात्रेन्तरेकरात्रद्विरात्रयोः ।
शक्त्यान्यानपि चक्रेरीनतिरात्रेन्दुनिष्प्रभान् ॥ १३४ ॥

१३४. भैमिरन्यानप्यान्नादितरानप्यरीनेकरात्रद्विरात्रयोरन्तरतिशीघ्रमित्यर्थः । शक्त्या कृत्वातिरात्रो रात्रिमतिक्रान्तो दिवातनो य इन्दुस्तद्वन्निष्प्रभान्निस्तेजस्कांश्चक्रेभिषेण्य जिगायेत्यर्थः । क । न दीर्घरात्रा दीर्घा रात्रयोत्रादीर्घरात्रस्तस्मिन्कालेपि यात्राया अयोग्य उष्णकाले वर्षाकालेपि चेत्यर्थः ॥

सर्वरात्रजागरूकः स्यन्द्विषां पुरुषायुषम् ।
आक्रामत्क्ष्मां स द्विस्तावात्रिस्तावे इव याज्ञिकः ॥ १३५ ॥

१३५. स भैमिः सर्वरात्रजागरूकः सदोद्यतोत एव द्विषां पुरुषायुषं पुरुषस्यायुर्वर्षशतं स्यंस्तद्वधेनान्तं नयन्सन्द्विषां क्ष्मामाक्रामद्वशीचक्रे । यथा याज्ञिकः सर्वरात्रजागरूकस्तथाभिचारमन्त्रैर्द्विषां रात्रिंचराणां पुरुषायुषं स्यन् द्विस्तावात्रिस्तावे विकृतियागस्य वेदिविशेषावाक्रामत्यनेकयागक्रियाकरणैर्व्याप्नोति ॥

वर्हिं द्विस्तावं त्रिस्तावमिव सश्वोवसीयसम् ।
श्वःश्रेयसार्थमार्चंस्तमुच्चेशाद्या हयद्विपैः ॥ १३६ ॥

१३६. सह श्वोवसीयसेन कल्याणेनास्ति यस्तं सश्वोवसीयसं भैमिं शोभनं श्रेयः श्वःश्रेयसं क्षेमं तदर्थमुच्चेशाद्या उच्चदेशाधिपाद्या नृपा हयद्विपैः कृत्वार्चन् । हयाश्च द्विपाश्च हयद्विपम् । हयद्विपं च

१ सी °त्रयोरतरतिशी°. २ सी °वंत्र°. ३ ए °रूकस्य°. ४ सी °स्ताव इ°

१ ए °त्त्याति°. २ सी दीर्घरा°. ३ ए °रात्रिस्त°. ४ सी °त्रार्या अ° ५ सी °ले चे°. ६ सी °वंत्र°. ७ ए °ज्ञिका म°. ८ सी °वशीय°. ९ सी °श्वशीय°. १० ए °यः स्वश्रे°. ११ ए °श्वा कुर्वन्. १२ सी °द्विपं चे°.

हयद्विपं च हयद्विपं चेत्येकशेषे हयद्विपानि तैरतिप्रभूतैरित्यर्थः । अन्यथा तु सेनाङ्गत्वादेकत्वमेव स्यात् । यथाग्निहोत्रिणः सश्वोवसीयसं[1] द्विस्तावान्द्विस्तावस्तमेवं[2] त्रिस्तावं च वह्निमग्निविशेषं श्वःश्रेयसार्थमर्चन्ति ॥

नि:श्रेयसार्थिभिरपि स्तुतदोस्तथोर्वी[1]
निस्त्रिंशपाणिरदशैः स जिगाय मासैः ।
न द्व्यङ्गुलं नयपथस्य विलङ्घते स्म
नात्यङ्गुलो भवति जातु यथा स कोपि ॥ १३७ ॥

१३७. यथा कोपि जातु नयपथस्य द्व्यङ्गुलं द्वे अङ्गुली न विलङ्घते स्म । यथा कोपि नयपथस्यात्यङ्गुलश्चाङ्गुलिमप्यतिक्रान्तश्च[3] जातु न भवति[4] स्म । सर्वोपि यथात्यन्तं[5] ना(न्या)य्यभूदित्यर्थः । तथात्यन्तं कण्टकोच्छेदाऽन्याय्यनुशासनादिप्रकारेण[6] स भैमिर्निस्त्रिंशपाणिः[7] खड्गव्यग्रकरः सन्नदशैः न दशादशास्तैर्न्यूनैर्दशभिर्मासैरुर्वी[8] जिगाय वशीचक्रे । अत एव कीदृक् । निःश्रेयसार्थिभिरपि मोक्षेच्छुभिर्निःस्पृहैर्मुनिभिरपि[9] स्तुतदोर्वर्णितबाहुवीर्यः ॥

संख्यातरात्रे । एकरात्रे[10] । पुण्यरात्र । वर्षारात्रात् । दीर्घरात्रे ॥ सर्व[11] । सर्वरात्र ॥ अंश । अर्धरात्रे ॥ संख्या । द्विरात्रयोः ॥ अव्यय । अतिरात्र । इत्यत्र "संख्यात०" [ ११९ ] इत्यादिना-अत् ॥

---

१ ए °स्तथार्वी नि°.

---

१ सी °वशीय°. २ ए स्तावास्त°. ३ ए °थयस्या°. ४ ए °ति । स°. ५ सी °त्यन्तक°. ६ ए °दानाय्य°. ७ ए स भौमिमिस्त्रि°. ८ सी °शादशा- ९ ए °मिर्निस्पृ°. १० सी °त्र । व°. ११ सी °वरा°.

पुरुषायुषम् । द्विस्तावात्रिस्तावे । इत्येते "पुरुष०" [ १२० ] इत्यादिना निपात्याः ॥ द्विस्तावात्रिस्तावयोर्वेद्यां प्रयोगः ॥ अन्यत्रापि दृश्यते । द्विस्तावं त्रिस्तावं वह्निम् ॥

श्वोवसीयस[म्] । अत्र "श्वसः०" [ १२१ ] इत्यादिना-अत् ॥

निःश्रेयस । श्वःश्रेयस । इत्यत्र "निसश्व०" [ १२२ ] इत्यादिना-अत् ॥

अदर्शः । निस्त्रिंश । इत्यत्र "नञव्ययात्०" [ १२३ ] इत्यादिना डः ॥

द्व्यङ्गुलम् । अत्यङ्गुलः । अत्र "संख्या०" [ १२४ ] इत्यादिना डः ॥ वसन्ततिलका छन्दः ॥

इति श्रीजिनेश्वरसूरिशिष्यलेशाभयतिलकगणिविरचितायां श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनद्व्याश्रयवृत्तावेकोनविंशः सर्गः ॥

---

१ ए °स्तावत्रिस्तावेत्ये°. २ ए °न्यथापि. ३ ए °द्वि।°यो°. ४ सी °श्रेस°.

## द्व्याश्रयमहाकाव्ये

### विंशः सर्गः ।

पद्माक्ष्य आततषडङ्गुलकृष्यरिक्था[1]
रन्तुं वनेष्वयुरथ श्रमजिह्मसक्थ्यः[2] ।
निःशङ्कमूषुरिह शासति गां द्विमूर्धा
कः कस्त्रिमूर्ध उत योपनयं विदध्यात्[3] ॥ १ ॥

१. पद्माक्ष्यः स्त्रियः पुष्पोच्चयादिक्रीडया रन्तुं वनेष्वयुः । कीदृश्यः[1] । आततं विस्तीर्णं यत्षडङ्गुलं षडङ्गुलयो यस्य तदङ्गुलिसदृशावयवं धान्यकण्टकादीनां विक्षेपणकाष्ठं[2] तेन कृष्यमतिबहुत्वात्कर्षणीयं रिक्थं धनं यासां ताः । अत्यन्तमीश्वर्य इत्यर्थः । अथ गमनानन्तरं श्रमजिह्मसक्थ्यः श्रान्ताः सत्यो वनेष्वेव निःशङ्कं निर्भयमूषुः । युक्तं चैतत् । यस्मादिह[3] भैमौ गां पृथ्वीं शासति को द्विमूर्धोताथ[4] वा कस्त्रिमूर्धो[5] योपनयं चौर्यलुण्टनाद्यना(द्यन्यायं) विदध्यात् । चण्डशासनत्वेनान्यायिनो मस्तकं ग्रहीतर्यस्मिन्[6] यो द्विमूर्धा त्रिमूर्धा वा स्यात्स एवाहमस्यैकं[7] द्वे वा मस्तके दत्त्वैकेन शिरसा जीविष्यामीत्यभिप्रायेणान्यायं कुर्यादित्यर्थः ॥ वसन्ततिलका ॥

जायाप्रमाणजनताभिरगायि स त्रि-
मूर्धद्विमूर्ध इव देव उदात्तशक्तिः ।

---

१ ए °रिक्था र°. २ सी °सक्थाः । नि°. ३ सी विध्यत्..

---

१ सी °श्य र°. २ सी °क्षेपणाका°. ३ सी °ह भीमो गां. ४ सी °र्धोऽ°. ५ सी °मूर्धो° वा स्या°. ६ ए यो द्वि मू°. ७ सी °कं वा.

**सुप्रातसुश्वसुदिवस्त्रिदशेश्वरो वा[1]**

**एणीपदाजपदभद्रपदादिराड्वा ॥ २ ॥**

२. स भैमिर्जाया भार्या प्रमाणी मुख्या यासां ता या जनता जनौघास्ताभिरगायि गीतः । यत उदात्तशक्तिरुद्भटप्रभुत्वादिशक्तित्रयस्तथा शोभनं कर्म प्रातः प्रभातेस्य सुप्रातस्तथा शोभनं कर्म श्वोस्य सुश्वस्तथा शोभनं कर्म दिवा यस्य सुदिवस्ततो विशेषणकर्मधारयः । सर्वदा न्याय्योचितसत्क्रिय इत्यर्थः । त्रिमूर्धद्विमूर्ध इव देवो यथा पञ्चशिराः सदाशिवो गीयते । यथा वा त्रिदशेश्वरो देवेन्द्रो गीयते । तथैण्या इव पादावस्यैणीपदं मृगशिर एवमजपदो मेषराशिः । स चाश्विनीभरणीकृत्तिकैकपादरूप[1] इत्यश्विनी भरणी कृत्तिकाया[2] एकपादश्चोच्यन्ते । तथा भद्राः[3] पादा आसां भद्रपदाः[4] पूर्वभद्रपदा उत्तरभद्रपदाश्च द्वन्द्वे ता आदिर्येषां नक्षत्राणां तेषां राट् चन्द्रः । श्रिया संपूर्णकलादिलक्ष्म्या युक्तो य एणीपदाजपदभद्रपदादिराट् स यथा वा गीयते ॥

**अशारिकुक्षं[2] चतुरश्रवक्षःस्थलं[3] स्वयं प्रोष्ठपदाधिपं[4] नु ।**

**नमस्यतां तं रजनी ध्रुवं कल्याणीद्वितीया समभून्न कस्य ॥ ३ ॥**

३. तं भैमिं नमस्यतां प्रणमतां[5] मध्ये कस्य नमस्यन्नरस्य[6] रजनी प्रणामरात्रिध्रु(र्ध्रु)वं[7] न समभूत् । किंभूता । कल्याणी भैमेः प्रसत्त्या सद्यः सर्वसंपदुल्लासात्सर्वशुभहेतुर्द्वितीया प्रणामरात्रेरनन्तरा रात्रिर्यस्याः सा कल्याणीद्वितीया । किंभूतं त[म् ।] न शारेरिव स्थूलः

१ सी वा श्रेणी°. २ सी °कुक्षि च°. ३ सी °रस्रव°. ४ प °पदधि°.

१ प °णी कृत्तिका°. २ सी °का ए°. ३ प भद्रापा°. ४ सी °द्रपाद उत्त°, ५ प °णम्यतां. ६ सी °स्य रज°. ७ सी °त्रिध्रावं. ८ सी °व स्थलं कु°.

कुक्षिर्मध्यं यस्य तं कृशोदरम् । तथा चतस्रोश्रयो यस्य तच्चतुरस्त्रं(श्रं) तद्वक्षःस्थलं यस्य तम् । उपलक्षणत्वात्प्रमाणोपेतसर्वाङ्गोपाङ्गमित्यर्थः । तथा सकलजगदाह्लादकत्वात्स्वयं साक्षात्प्रोष्ठपदाधिपं नु प्रोष्ठो गौस्तस्येव पादा आसां प्रोष्ठपदाः पूर्वभद्रपदा उत्तरभद्रपदाश्च । तासामधिपश्चन्द्रस्तमिव । अथ च ये प्रोष्ठपदाधिपं प्रस्तावाद्वितीयेन्दुं स्वयं नमस्यन्ति तेषां मध्ये कस्य नरस्य द्वितीया तिथि(थिः) कल्याणी शुभहेतुर्न स्याद्वितीयायामिन्दुदर्शनस्य सर्वसंपन्निबन्धनत्वेन शास्त्रेषु गीयमानत्वादित्युक्तिलेश(शः) ॥

पङ्कुल । इत्यत्र "बहु०" [ १२५ ] इत्यादिना टः ॥

जिह्मसक्थयः । पद्माक्ष्यः । अत्र "सक्थि०" [ १२६ ] इत्यादिना टः ॥

द्विमूर्धः द्विमूर्धा । त्रिमूर्धः(र्ध) त्रिमूर्धा । इत्यत्र "द्वि०" [ १२७ ] इत्यादिना वा टः ॥

जायाप्रमाण । त्रिदश । इत्यत्र "प्रमाणी०" [ १२८ ] इत्यादिना डः ॥

सुप्रात । सुश्व । सुदिवः । शारिकुक्षम् । चतुरश्र । एणीपद । अजपद । प्रोष्ठपद । भद्रपद । इत्येते "सुप्रात०" [ १२९ ] इत्यादिना निपात्याः ॥

कल्याणीद्वितीया रजनी । इत्यत्र "पूरणीभ्यः०" [ १३० ] इत्यादिना अप् ॥ उपजातिः ॥

समप्रथत सोचतुरः कषायैः

सदा सुचतुरोस्खलितैः पुंमर्थैः ।

---

१ ए पुमार्थैः.

---

१ ए °क्षिसंध्यं. २ सी °तश्रोस्रयो. ३ सी °दाश्व. ४ ए च यथोष्टप°. ५ ए तिथिं क°. ६ सी °यामि°. ७ सी °न्धत्वे°. ८ ए °लेश्यः । ष°. ९ सी °मूर्द्धि द्वि°. १० सी °कुक्षि । च°. ११ सी °रस्र । ए°. १२ ए °श्र । पाणी°.

इहोपचतुरेषु जगत्सु पाष-
ण्डिनां विचतुरं शतमर्चमानः ॥ ४ ॥

४. स भैमिश्चत्वारि समीपे येषां संख्येयानां तेपूपचतुरेषु त्रिषु जगत्सु समप्रथत प्रख्यातः । यतः कषायैः कृत्वा सदाचतुरः क्रोधादिकषायचतुष्टयरहित इत्यर्थः । तथास्खलितैः पुमर्थैः सुचतुरः शोभनपुमर्थचतुष्टयान्वित इत्यर्थः । तथेह पृथ्व्यां पाषण्डिनां विदृश्यानि विगतानि वा चत्वारि यस्य तद्विचतुरं शतं षण्णवतिमर्चमानः ॥ कोलश्छन्दः । ज्सौ स्यौ कोलः ॥

अन्तर्लोमं दधदथ बहिर्लोममौर्णं त्रिचत्वाः
कर्षन्दीनांस्त्रिचतुरपशूनेकदा पुष्यनेत्रे ।
आसेव्येहन्यनृचसहितैर्बह्वृचैः पद्मनाभे
दुःसक्थः पथ्यहलिरमुना कोपि दुःसक्त ऐक्षि ॥ ५ ॥

५. अथामुना भैमिना कोपि ग्राम्यनरो दीनान्बलादाकृष्यमाणत्वेन दीनमुखांस्त्रिचतुरपशूंस्त्रींश्चतुरो वा छागान्पथि कर्षन्विक्रेतुं राजमार्गे नयन्सन्नैक्षि । क । एकदैकस्मिन्काले । एकस्मिन्वर्ष इत्यर्थः । पुष्यो नेता नायको यस्य तस्मिन्पुष्यनेत्रे पुष्येण चन्द्रयुक्तेन युक्त इत्यर्थः । अहन्यामलकैकादशीत्याख्यया प्रसिद्धायां पौष्यां फाल्गुनशुक्लैकादश्याम् । महापर्वदिन इत्यर्थः । क सत्यैक्षि । पद्मनाभे विष्णौ । किंभूते । न विद्यन्त ऋचो येषामनृचा माणवास्तत्सहितै-

१ ए °न्तभोमं. २ सी °लोंम द°. ३ सी °मौर्ण त्रि°.

१ ए °षू च°. २ ए °तुर क्रो. ३ ए पुमार्थैः सच°. ४ सी °दृशानि. ५ सी °नः । कौलछन्दः. ६ ए °श्छन्दं । ज्सो स्यौ. ७ ए °चपुरपशुंस्त्रीच. तुरो. ८ सी °तुरः प°. ९ सी °द्धाया पौ°.

बह्वय[1] ऋचो येषां तैर्बह्वृचैश्चरणैरुपलक्षणत्वादन्यलोकेनाप्यासेव्य उपवासव्रतविशेषपूजाविशेषादिनाराध्ये[2] । पौष्यां फाल्गुनशुक्लैकादश्यां विष्णोराराधनं महाफलम् । यद्ब्रह्माण्डपुराणम् ।

यदा तु शुक्लद्वादश्यां पुष्यं भवति कर्हिचित् ।
तदा सा तु महापुण्या कथिता पापनाशिनी ॥ १ ॥

पुराणभाषया द्वादशीशब्देन व्रतैकादश्युच्यते ।

तस्यां जगत्पतिर्देवः सर्वसर्वेश्वरो[3] हरिः ।
प्रत्यक्षतां प्रयात्येव तेनानन्तं फलं स्मृतम् ॥ २ ॥
इमामेकामुपोष्यैव[4] पुष्यनक्षत्रसंयुताम्[5] ।
एकादशीसहस्रस्य फलं प्राप्नोति नान्यथा ॥ ३ ॥
तस्मादेषा प्रयत्नेन कर्तव्या फलकाङ्क्षिभिः ।
फाल्गुने च विशेषेण विशेषः कथितो[6] नृप ॥

एतेन च पर्वोपन्यासेन तदा राजाप्युपोषितो व्रतविशेष[7]स्थो धर्मध्यानस्थश्चासीदिति विशेषेणोल्लसदयं[8] बलादाकृष्यमाणान्दीनान्पशून्ददर्शेत्यर्थो व्यञ्जितः । कीदृग्नरः । अन्तर्लोमान्यस्यान्तर्लोमं[9] तथा बहिर्लोमान्यस्य बहिर्लोमं च । उभयपार्श्वयोर्लोमशमित्यर्थः । और्णमूर्णामयं पटं[10] दधत्तथा मुग्धत्वात्त्रय[11] एव चत्वारो यस्य स त्रिचत्वास्तथा नि(निः)स्वत्वान्नास्ति[12] हलिर्महद्धलमस्याहलिरत एव दुष्टे कार्श्यकठोरत्वादिना विकृते सक्थी(क्थिनी) यस्य स दुःसक्थस्तथा

१ प °बह्वृ ऋ. २ प °राध्यपौ°. ३ प सर्वे°. ४ सी °पोष्यतं पु°. ५ सी °युतं । ए.° ६ प °थिते नृपः । ए.° ७ प °तशे°. ८ प °शेषणो°. ९ प °लोम त°. १० सी °पदं द°. ११ सी °त्वात्त्रय. १२ सी निसत्वा°.

दुष्टा निन्द्या सक्तिः पशुविक्रयादिकुव्यापारसंसर्गो यस्य स दुःसक्तः ॥ मन्दाक्रान्ता छन्दः ॥

दुःसक्तिमूचे तमसौ सुसक्ति-
रेनस्यसक्तिः सुकृते सुसक्तः ।
अवीनसक्थान्नु गतावसक्ता-
न्हेतोः कुतः कर्षसि भोः सुसक्थ ॥ ६ ॥

६. असौ भैमिर्दुःसक्तिं पशुविक्रयरूपदुष्कर्मासक्तं तं नरमूचे । कीदृक्सन् । शोभना सक्तिर्धार्मिकैः सह संसर्गो यस्य स सुसक्तिरत एवैनसि पापकर्मविषयेसक्तिस्तथा सुकृते धर्मे सुसक्तः । किमूच इत्याह । शोभने गमनदक्षे सक्थ्नी(क्थिनी) यस्य भोः सुसक्थावीं-श्छागान्कुतो हेतोः कर्षसि । किंभूतानपि । असक्थान्नु यथा सक्थि-रहिता गतावसक्ताः स्युरेवं गमनेसक्तानसंसर्गान्बलान्नीयमानत्वेन स्वयमगच्छत इत्यर्थः ॥ उपजातिः ॥

स प्रत्यवोचत्सुहलो न दुर्हलो
न चास्म्यहं किं त्वहलो नयामि तत् ।
असक्थिदुःसक्थिसुसक्थिकानमू-
न्दातुं वसुभ्यः प्रति सौनिकापणे ॥ ७ ॥

७. स नरः प्रत्यवोचत् । तथा हि । हे राजन्नस्मि न सुहलो न च दुर्हलो न शोभनया न वाशोभनया हल्या युक्तः किं त्वहमहलो हलिरहितोतिदरिद्र इत्यर्थः । तत्तस्मादमून्पशून्वसुभ्यः प्रति दातुं ध-

१ ए °सक्थ्यन्नु. २ ए °सक्थः ॥ अ°. ३ सी °क्थिका°.

१ ए °दिव्या°. २ सी °मद°. ३ सी °वशक्ताः. ४ सी °यमाग°. ५ ए प्रत्युवो°. ६ ए °न्वस्तुभ्यः.

नानि गृहीत्वामून्दातुमित्यर्थः । सौनिकापणे खाटिकशालायाममूत्र-यामि । कीदृशान् । एकोसक्थिरल्पोरुर्द्वितीयो दुःसक्थिस्तृतीयस्तु सुसक्थिकः । विशेषणद्वन्द्वे तान् ॥ इन्द्रवंशावंशस्थयोरुपजातिः ॥

दुर्हलिः सुहलितो यथा हलिं
सुप्रजस्त इव चाप्रजाः प्रजाम् ।
एतदीयपिशितानि सौनिका-
त्सन्ति दुष्प्रजस ईप्सवो धनैः ॥ ८ ॥

८. यथा दुर्हलिः सुहलितः सकाशाद्धलिं महद्धलं यथा वाप्रजा निरपत्यः सुप्रजस्तो बह्वपत्यात्सकाशात्प्रजामपत्यं धनैरीप्सुः स्यात् । उत्तरार्धं स्पष्टम् । किं तु । दुष्टा प्रजा येषां ते दुष्प्रजसो निन्द्य-लोकाः ॥

अचतुरः । सुचतुरः । विचतुरम् । उपचतुरेषु । त्रिचतुर । इत्यत्र "न-ञ्सुवि०" [ १३१ ] इत्यादिना-अप् ॥ समासान्तविधेरनित्यत्वादिह न स्यात् । त्रिचत्वाः ॥

अन्तर्लोमम् । बहिर्लोमम् । अत्र "अन्तर्०" [ १३२ ] इत्यादिना-अप् ॥

पुष्यनेत्रे । अत्र "भान्नेतुः" [ १३३ ] इत्यप् ॥

पद्मनाभे । अत्र "नाभेर्नाम्नि" [ १३४ ] इत्यप् ॥

अनृच । बह्वृचैः । अत्र "नञ्०" [ १३५ ] इत्यादिना-अप् ॥

---

१ सी °वजाम्.

---

१ ए °तु सौ°. २ सी °टिकेशा°. ३ सी °य सु°. ४ सी °द्धलं म°. ५ सी °ष्ट । दु°. ६ सी. °रः । सच°. ७ ए °नाप्स । स°. ८ सी °म् । म°. ९ ए नङ् इ°.

असक्तान् असक्तिः। सुसक्तः सुसक्तिः। दुःसक्त(क्तः) दुःसक्तिम्। असक्थान् असक्थि। सुसक्थ सुसक्थिकान्। दुःसक्थः दुःसक्थि। अहलः अहलिः। सुहलः सुहलितः। दुर्हलः दुर्हलिः। अत्र "नञ्सु०" [ १२६ ] इत्यादिना वा-अप्॥

अप्रजाः। सुप्रजस्तः। दुष्प्रजसः। अत्र "प्रजाया अस्" [ १२७ ] इत्यस्॥

रथोद्धता छन्दः॥

दुर्मेधसस्तस्य वचोल्पमेधसः
श्रुत्वेति राज्ञा जगदे सुमेधसा।
अमेधसो धिग्बत मन्दमेधसो
हिंसन्ति जन्तून्निजजीविकाकृते॥ ९॥

९. पूर्वार्धं स्पष्टम्। बतेति खेदे। धिग्निन्दायाम्। खिद्येहं निन्दामि च। यदमेधसो जीववधोद्यतमनस्कत्वेन निन्द्यबुद्धयः खाटिकादिपापिष्ठलोका मन्दमेधसः परलोकपराङ्मुखत्वेनाल्पबुद्धयः सन्तो निजजीविकाकृते जन्तून्हिंसन्ति॥

मन्दमेधसः। अल्पमेधसः। अमेधसः। सुमेधसा। दुर्मेधसः। अत्र "मन्द०" [ १२८ ] इत्यादिना वा-अप्॥ इन्द्रवंशावंशस्थयोरुपजातिः॥

स्वजीविकार्थं न भवन्ति दुर्जा-
तीया वरं सप्तकमासिकाः किम्।
घ्नन्ति श्वधर्माण इमे विधर्माः
किं सोमजम्भस्तृणजम्भ एतान्॥ १०॥

१ ए °कायें न. २ सी °न्ति सध°.

१ सी °क्तिः। दुसिक्त। दुः°. २ ए °सक्ति°. ३ सी °सक्तिः। अ°. ४ ए °सक्थि। सु°. ५ ए °सक्थिः। अ°. ६ सी॰वाप। अल्पमे°. ७ ए °यः खदिका°. ८ सी °सः। अ°. ९ ए °धैसाः। दु°.

१०. दुष्टा पशुवधादिपापकारित्वेन निन्दिता जातिः सामान्यं पुरुषत्वादि येषां ते दुर्जातीया इमे सौनिकादिलोका विधर्मा निर्धर्मा अत एव श्वधर्माणः कुक्कुराचाराः सन्तः किं किमित्येतान्पशून्घ्नन्ति । किंभूतान् । सोमो वल्लीरसो जम्भोऽभ्यवहार्यो येषां तान् सोमजम्भस्तथा तृणजम्भश्च । निरपराधानित्यर्थः । किं तु । सप्त द्रम्मा भृतिरस्य "सोऽस्य भृतिवस्नांशम्" [ ६. ४. १६८. ] इति के सप्तको मासो येषां ते सप्तकमासिका भृत्याः सन्तः स्वजीविकायै स्ववृत्त्यर्थं किं किमिति न भवन्ति । वरं श्लाघ्यमेतज्जीववधाहेतुत्वात् ॥ उपजातिः ॥

व्याधा वने हरितजम्भिन्न सुजम्भ्यमन्तौ

यद्दक्षिणेर्मणि मृगे प्रहरन्त्यघं तत् ।

भूशासितुः सुरभिगन्धि यशः क्षिणोति

प्रत्यक्षमेव किमुतैप वधः पशूनाम् ॥ ११ ॥

११. व्याधा वने मृगे यत्प्रहरन्ति । किंभूते । शोभना जम्भा दंष्ट्रा यस्य तस्मिन्सुजम्भिन्न । तथा हरितानि तृणानि जम्भो भक्ष्यमस्य तस्मिंस्तथामन्तौ निरपराधे । तथेर्म बहुव्रणं वा दक्षिणमङ्गमीर्म बह्वस्य दक्षिणाङ्ग ईर्म(र्मं) व्रणमस्येति वा दक्षिणेर्मा तस्मिन् । व्यद्धुकामानां व्याधानां दक्षिणं भागं बहूकृत्य व्यधनानुकूलं स्थिते व्याधेन वा दक्षिणभागे कृतव्रणे । तद्वनेभवत्वेन परोक्षमप्यघं पापं कर्तृ भू-

---

१ प °म्भिन्न सज°. २ प °मन्तो य°. ३ सी °मुनेष.

---

१ सी कुर्कुरा°. २ सी सोमव°. ३ सी °सका. ४ सी °मेधजीव°. ५ सी °त् । व्या°. ६ सी °राद्धे । त°. ७ सी ईर्म्मं व्र°. ८ प °तेन व्या°. ९ सी °घं क°.

शासितुः सुरभिगन्धि यशः कर्म क्षिणोति क्षयं नयति किमुत किं पुनः प्रत्यक्षमेवैष पशूनां वधः ॥ वसन्ततिलका ॥

उद्गन्धि दुग्धं कलमान्सुगन्धीं-
स्त्यक्त्वा पलं काङ्क्षति पूतिगन्धि ।
लोको यदुद्गन्धि सुगन्धमत्तुं
तच्छासितुस्तत्खलु दुर्विवेकः ॥ १२ ॥

१२. स्पष्टम् । किं तु । पूतेरिव गन्धो यस्य तत्पूतिगन्धि स्वभावेन दुर्गन्धं परं कर्पूरादिसुरभिद्रव्यक्षेपेणोद्गन्ध्युल्लसद्गन्धं सुगन्धं च सत्पलं मांसमत्तुम् । तच्छासितुर्लोकं शिक्षयितुर्नृपस्य ॥ इन्द्रवज्रा ॥

उद्गन्धमम्ब्विह सुगन्ध्यथ पूतिगन्धि
यद्वन्मरुत्सुरभिगन्धिरु पूतिगन्धः ।
संसर्गतः सुरभिगन्धमिदं वपुर्वा
राजानुरूपगुणभृज्जन एष तद्वत् ॥ १३ ॥

१३. उ हे पशुकर्षिन्नर यद्वद्यथेह जगत्यम्बु जलं संसर्गतः सुरभिद्रव्यसंसर्गादुद्गन्धमुत्कृष्टगन्धं सुगन्धि चाथाथ वा दुर्गन्धद्रव्यसंसर्गात्पूतिगन्धि दुर्गन्धं स्याद्यथा वा मरुद्वातः संसर्गतः सुरभिगन्धिः पूतिगन्धो वा स्याद्यथा वेदं प्रत्यक्षदौर्गन्ध्यं वपुः संसर्गतः सुरभिगन्धं स्यात्तद्वत्तथैष जनः संसर्गतो नृपसंसर्गेण राजानुरूपगुणभृत् । राजन्यूशब्देनात्र राजगता गुणा उपचारादुच्यन्ते । ततो राज्ञोनुरूपा राजगुणसदृशा ये गुणाः कृपादयोकृपादयो वा तद्बिभ्रत्स्याद् यथा

---

१ प °गन्धीस्त्य°. २ सी °न्धि सु°.

---

१ सी °मुति किं. २ सी °गन्धिद्र°. ३ इ °न्धो, यथा स्या.° ४ प °जारू°.

राजा तथा प्रजेति वचनात् । एतेन राज्ञात्मनोव हि(न्येव हिं?)साकरणदोषः स्थापितः ॥

दुर्जातीयाः । अत्र "जातेरीयः०" [ १३९ ] इत्यादिनेयः ॥

सप्तकमासिकाः । अत्र "भृति०" [ १४० ] इत्यादिनेकः ॥

श्वधर्माणः । अत्र "द्विपदाद्धर्मादन्" [ १४१ ] इत्यन् ॥ विकल्पमिच्छन्त्येके । श्वधर्माणः विधर्माः ॥

सुजम्भि । हरितजम्भि । तृणजम्भः । सोमजम्भ(म्भाः) । अत्र "सुहरित०" [ १४२ ] इत्यादिना-अन् ॥

दक्षिणेर्मणि । इत्ययं "दक्षिणेर्मा०" [ १४३ ] इत्यादिनान्तः साधुः ॥

सुगन्धीन् । पूतिगन्धि पलम् । उद्गन्धि । सुरभिगन्धि । अत्र "सुपूति०" [ १४४ ] इत्यादिना-इत् ॥

सुगन्धि अम्बु सुगन्धं पलम् । पूतिगन्ध्यम्बु पूतिगन्धो मरुत् । उद्गन्धि पलम् उद्गन्धमम्बु । सुरभिगन्धिर्मरुत् सुरभिगन्धं वपुः । अत्र "वागन्तौ" [ १४५ ] इतीद्वा ॥ वसन्ततिलका ॥

**न न्यायगन्धोसि न धर्मगन्धिः करीषगन्धस्य पुरीषगन्धिः ।**
**कृते शरीरस्य करं धिगेष गृह्णामि भूमेर्न तु रक्षणार्थं ॥ १४ ॥**

१४. न्यायस्य गन्धो यस्मिन्स न्यायगन्धोहं नास्मि । एवं निरपराधपशुवधस्य महापन्यायस्यानिवर्तकत्वान्मयि न्यायस्य गन्धोपि नास्तीत्यर्थः । अत एवाहं न धर्मगन्धिर्वर्तेत एव वाहं पापाशुचिलिप्तत्वात्पुरीषस्येव गन्धो यस्य स पुरीषगन्धिः सन्नेषोहं करीषगन्ध-

१ सी °य ॥ न्योय°.

१ प °म्भः । अ°. २ सी °गन्धो महत्. ३ प °गन्धमर°. ४ प °गन्धव°. ५ प °र्मंग°. ६ सी °लिप्त°.

स्थानेकमलाविलत्वाच्छागणचूर्णवद्दुर्गन्धस्य शरीरस्य कृते करं राजभागं धिग्निन्दितं यथा स्यादेवं गृह्णामि न तु भूमे रक्षणायानेकपशूनामेवं वधात् ॥

धर्मगन्धिः न्यायगन्धः । अत्र "वाल्पे" [ १४६ ] इतीद्वा ॥

पुरीषगन्धिः करीषगन्धस्य । इत्यत्र "वोपमानात्" [ १४७ ] इतीद्वा ॥ उपजाति(तिः) ॥

तौ विष्णुपद्यामजपादहस्ति-
पादौ सह व्याघ्रपदा सुपादौ ।
मुनी द्विद[त्कु]म्भपदीजडं मां
सुदच्चतुष्पाद्वधकं स्तुतो धिक् ॥ १५ ॥

१५. सुपादौ पृथ्वीपवित्रैकांह्री तौ सर्वत्र प्रसिद्धावजपादहस्तिपादौ नाम मुनी व्याघ्रपदा मुनिना सह सहितौ मां धिक्स्तुतः । क्व । विष्णोः पादौ कारणतया यस्यास्तस्यां विष्णुपद्यां गङ्गायाम् । कुमारपालनृपोत्यन्तं न्यायी धार्मिकः कृपालुश्चेत्यादि यन्मदीयं वर्णनं गङ्गातटस्था अपि मुनयः कुर्वन्ति तद्गर्हे इत्यर्थः । यतः किंभूतम् । सुजाताः शोभनाः समस्ता वा दन्ता येषां ते सुदन्तोतिक्रान्तबाल्यावस्था ये चतुष्पादश्चतुष्पदाश्छागादयस्तेषां वधकं तद्वधकानां वधादनिवर्तकत्वात् । एतदपि कुत इत्याह । यतो द्वौ दन्तौ यस्य स द्वि-

१ प °द्वदकं.

१ प °कमाला°. २ सी °णायांने°. ३ सी °मे व°. ४ प °वं विषा°. ५ प °रीग°. ६ प °द्वा ॥ तौ. ७ सी °त्रकाह्री. ८ सी °घ्रपादा सुपादौ मुनीति मु°. ९ सी °दिना य°. १० प °द्वतोति°. ११ सी °न्तोविक्रा°.

दन्बालस्तथा कुम्भस्येव पादौ यस्याः कुम्भपदी दासी । द्वन्द्वे तद्व-ज्जडं हेयोपादेयार्थेष्वज्ञम् ॥[1]

व्याघ्रपदा । इत्यत्र "पात्पादस्य०" [ १४८ ] इत्यादिना पादस्य पाद् ॥ अहस्त्यादेरिति किम् । हस्तिपादौ । अजपाद ॥

कुम्भपदी । विष्णुपद्याम् । इत्येतौ "कुम्भपद्यादिः" [ १४९ ] इति नि-पात्यौ ॥[2]

सुपादौ । चतुष्पाद् । इत्यत्र "सुसंख्यात्" [ १५० ] इति पाद् ॥

सुदत् । द्विदत् । इत्यत्र "वयसि०" [ १५१ ] इत्यादिना दन्तस्य दंतृ ॥[3]

अत्ययोदतिररोकदन्क्रुधा श्यावदन्तयुगरोकदन्तकः ।
श्यावदंश्च यमकिंकरो यथा प्राणिभिन्मयि नृपेपि ही जनः १६[1][4]

१६. मयि नृपेपि मयि राज्ञि सत्यपि । ही खेदे । जनः क्रुधा कृत्वा प्राणिभित् प्राणिनः पशून् भिनत्ति विनाशयति । कीदृक्सन् । अय इव दन्ता अस्या अयोदती नाम राक्षसी । तामतिक्रान्तः । रा-क्षसीतुल्य इत्यर्थः । यथा यमकिंकरः क्रुधा प्राणिभित् । किंकिंनामे-त्याह । अरोकदंस्तथा श्यावदन्तयुगरोकदन्तकस्तथा श्यावदंश्च । अरोका निर्दीप्तयो निश्छिद्रा वा श्यावाः कपिशा दन्ता अस्येति व्युत्पत्तिः ॥[5][6][8][9]

अत्ययोदतिः । अत्र "स्त्रियां नाम्नि" [ १५२ ] इति दंतृ ॥[7]

श्यावदन् श्यावदन्त । अरोकदन् अरोकदन्तकः । अत्र "श्यावारोकाद्वा" [ १५३ ] इति वा दंतृ ॥ रथोद्धता छन्दः ॥[10]

---

१ सी °श्च नृप°.

---

१ सी °र्थेवज्ञ°. २ ए °द्यादिति. ३ ए दतृः । अ°. ४ सी °पि ही म°. ५ सी °वदंश्च. ६ सी °दति । अ°. ७ ए दतृः । श्या°. ८ सी °दन्तक । अ°. ९ सी °श्शावा°. १० ए दतृः । र°.

लोकोत्र मूषिकदतोहिदतः पशून्ह-
न्त्याः शुद्धदन्खलु हसन्न तु शोचति स्वम्।
वज्राग्रदंच्छिखरदद्वृपदद्वराह-
दन्ताहिदन्तयमदूतहनिष्यमाणम्॥ १७॥

१७. आः खेदे। लोकोत्र भुवि मूष(षि)कस्येव दन्ता येषां तान्मूषिकदत एवमहिदतश्च पशून्खलु निश्चयेन हन्ति। कीदृक्सन्। पशुषु हतेष्वस्माकं प्रधानं भोज्यं भविष्यतीति हर्षेण हसन्नत एव शुद्धदन्हास्यश्वैत्येनोज्ज्वलदन्तः। न तु न पुनः स्वं शोचति। कीदृशं सन्तम्। वज्राग्रददादिविशेषणोपेता ये यमदूतास्तैर्हनिष्यमाणम्॥ वसन्ततिलका॥

किं शुभ्रदच्छिखरदन्तखराग्रदन्त-
दुःशुद्धदन्तवृपदन्तवराहदद्भिः।
दूतैर्हरेर्यदिह मूषिकदन्तकीटाः
क्लिश्नन्ति जन्तुवधकं स्फुटशुभ्रदन्तम्॥ १८॥

१८. यद्वा। हरेर्यमस्य दूतैः। किंकिंभूतैः। शुभ्रदच्छिखरदन्तखराग्रदन्तदुःशुद्धदन्तवृषदन्तवराहदद्भिः। खराग्राः प्रचण्डाग्रभागा दन्ता येषां ते तथा दुष्टु शुद्धा दन्ता येषां ते तथा। शेषविशेषणव्युत्पत्तिः स्पष्टैव। ततो विशेषणद्वन्द्वे तैः। यमदूतकृतव्यथानां परलोकभावित्वेन परोक्षत्वात्तद्गणनेन न किंचिदित्यर्थः। यद्यस्मादिहेह-

१ ए °दख°. २ सी °च्छिपर°. ३ ए °न्तनृष°. ४ ए °रेयदि°.

१ ए मूखिक°. २ ए °न्। कान्। प°. ३ सी °न्हास्याश्वेतेनो.°. ४ सी °दन्तिख°. ५ सी °था शे°. ६ सी °त्तद्रण°. ७ सी °न किं°.

लोकेपि[1] जन्तुवधकं[2] मांसभक्षणाय प्राणिनां घातुकं[3] नरं मूषिकदन्ता ये कीटा लूतास्त एव क्लिश्नन्ति पीडयन्ति । किंभूतम् । स्फुटशुभ्रदन्तमभीष्टभोज्यप्राप्तिहर्षोत्थहास्येन प्रकटोज्ज(ज्ज्व)लर्दन्तम्[4] । मांसभक्षका हि प्रायो लूतारोगमहाक्लेशेन विपद्यन्ते ॥

वज्राग्रदत् खराग्रदन्त । शुद्धदन्[5] शुद्धदन्त । शुभ्रदत् शुभ्रदन्तम् । वृषदत् वृषदन्त[6] । वराहदद्भिः[7] वराहदन्त[8] । अहिदतः[9] । अहिदन्त । मूषिकदतः[10] मूषिकदन्त । शिखरदत्[11] शिखरदन्त । इत्यत्र "वाग्रान्त०" [ १५४ ] इत्यादिना वा दत्(तृ) ॥

**संज्ञोसंज्ञुः प्रज्ञुरप्रज्ञ ऊर्ध्वज्ञोनूर्ध्वज्ञुर्जानुना स्वेन भुङ्क्ते ।**
**पापं पापोपार्जितार्थं नु जन्तुर्दुर्हृत्प्रायैः स्वैः सुहृद्भिश्च सार्धम्**
**॥ १९ ॥**

१९. संगते गुर्वादौ विनयेन रोगादिना वा मिलिते जानुनी यस्य[12] स संज्ञोसंज्ञुर्वासंगतजानुर्वा तथा प्रगते प्रवृद्धे प्रणते[13] प्रकृष्टे वा जानुनी यस्य स प्रज्ञुरप्रज्ञो वा तथोर्ध्वे जानुनी यस्य स ऊर्ध्वज्ञ ऊर्ध्वस्थोनूर्ध्वज्ञुर्वा सर्वोपीत्यर्थः । जन्तुः स्वेनात्मीयेन जानुना । उपलक्षणत्वात्स्वकायेनेत्यर्थः । पापमशुभं कर्म भुङ्क्तेनुभवति । पापोपार्जितार्थं नु पापेन जीववधादिनोपार्जितो[14] योर्थो द्रव्यं तं स्वैर्ज्ञातिभिः सुहृद्भिश्च मित्रैश्च सार्धं भुङ्क्ते । किंभूतैः । दुर्हृत्प्रायैः । पापोपार्जितद्रव्यविभागस्य ग्राहकत्वेन[15] दुःखहेतोः पापविभागस्य त्वग्राहकत्वेन च नरकादिमहा-

१ **प** °लोकिपि. २ **सी** °कं मास°. ३ **सी** घातकनरम्°. ४ **प** °दन्तामां°. ५ **सी** °दन्त । शुभ्रदन्तम् । वृ°. ६ **सी** °दन्तं । व°. ७ **प** °हद्भिः. ८ **सी** °दन्तं । अ°. ९ **सी** °दत मू°. १० **सी** °दत् । शि°. ११ **प** शिर°. १२ **सी** °स्य सं°. १३ **प** °ते वा'प्र°. १४ **प** °धादिनो°. १५ **सी** °न च नर°.

दुःखहेतुत्वादरितुल्यैः । तस्मादेतदर्थमज्ञानान्ध एव प्राणी प्राणिवधादिमहापापकर्म करोतीत्यर्थः ॥ शालिनी छन्दः ॥

उक्त्वोर्ध्वजानुमिति तं द्रुणसं स जैत्र-
धन्वाथ गाण्डिवधनुःशतधन्वतुल्यः ।
इत्यादिशत्खरणसं खुरणस्तनूज-
मायोगिनं खुरणसं खरणःसुतं च ॥ २० ॥

२०. स्पष्टम् । किं तु । ऊर्ध्वजानुमूर्ध्वस्थम् । तं पशुकर्षिणं नरम् । द्रुवन्नासिकास्य द्रुणसं नाम । जैत्रं जिष्णु धनुर्यस्य स जैत्रधन्वात एव गाण्डिवधनुपार्जुनेन शतधन्वना च नृपभेदेन तुल्यः । खरा खरस्येव वा नासिकास्यं खरणसं नाम । आयोगिनमधिकारिणम् । खुरवन्नासिकास्य खुरणसं नाम ॥ वसन्ततिलका ॥

किमादिशदित्याह ।

विख्रो विखुर्न खलु किं तु मृषाभिभाषी
स्यात्स्थूलनासिक इव प्रणसोपि विग्र(ग्रः) ।
शिष्यस्ततोपि परयौवतजानिरस्मा-
दप्यत्र जन्तुवधकः प्रसभं भवद्भिः ॥ २१ ॥

२१. विख्रो विगतनासिकः पुमान्खलु निश्चयेन न विखुर्न विगतनासिकः किं तु स्थूलनासिकः प्रणसः स्यादेवं प्रणसोपि प्रवृद्धनासि-

---

१ सी उक्तोर्ध्व°. २ प °णसमजै°. ३ प °धनुश°. ४ सी °रणःसु°. ५ प विघुर्न. ६ प विग्रहः शि°. ७ सी शिक्ष्यस्त°. ८ प °दथत्र.

---

१ प °र्थसंज्ञा°. २ सी स्पष्टः । किं. ३ सी °म् । पंशुः°. ४ सी द्रुवानासि°. ५ प नामाः । जै°. ६ सी °त्रं विष्णु. ७ प °स्य हर°. ८ सी °ह । निक्खेतिखु°. ९ सी °न नु विघ्नर्न. १० प किं स्थू°.

कोपि मृषाभिभाषी विप्रो विगतनासिकः साधुवादरूपस्य परमार्थनकस्याभावात्(?) । अत एवायं महापापिष्ठत्वाद्बवद्भिः शिष्यः[1] शिक्षणीयस्ततोपि मृषाभाषिणोपि सकाशात्[2]परयौवतं परस्त्रीसमूहो जाया यस्य स परयौवतजानिः[3] पारदारिकः परदारासेवनेनैतदपलापमहालीकेन च मृषाभिभाषकाद्विगुणं महापापिष्ठत्वाद्बवद्भिः प्रसभं हठाद्विशेषेणेत्यर्थः[4] । शिष्यः[5] । अस्मादपि परयौवतजानितोप्यत्र जगति जन्तुवधको मृषावादादिसर्वमहापापमूलेन[6] जन्तुवधेन मृषाभिभाष्या[7]दिपापिष्ठेभ्योतिमहापापिष्ठत्वाद्बवद्भिः[8] प्रसभं शिष्यः[9] ॥

संज्ञुः[10][11] । संज्ञः । प्रज्ञुः । प्रज्ञः । अत्र "संप्राद्०"[12] [ १५५ ] इत्यादिना[13] ज्ञुज्ञौ ॥

अनूर्ध्वजः(ज्ञुः) । [ऊर्ध्वज्ञः।] ऊर्ध्वजानुम् । अत्र "वोर्ध्वात्" [१५६] इति ज्ञुज्ञौ वा ॥

सुहृद्भिः । दुर्हृत् । इत्येतौ "सुहृद्०" [ १५७ ] इत्यादिना निपात्यौ ॥

जैत्रधन्वा । इत्यत्र "धनुषो धन्वन्" [ १५८ ] इति धन्वन् ॥

शतधन्व[14] गाण्डिवधनुः । अत्र "वा नाम्नि" [ १५९ ] इति वा धन्वन् ॥

खरणः । खुरणः । अत्र "खर०" [ १६० ] इत्यादिना नस् ॥

द्रुणसम् । खरणसम् । खुरणसम् । अत्र "अस्थूलाच्च नसः" [ १६१ ] इति नसः ॥ अस्थूलादिति किम् । स्थूलनासिकः ॥

प्रणसः । अत्र "उपसर्गात्" [ १६२ ] इति नसः ॥

---

१ सी शिक्ष्यः शि°. २ सी °शातं पर°. ३ प °निः पर°. ४ सी °द्विशिष्येत्य°. ५ सी शिष्यासा°. ६ सी °र्वपा°. ७ सी °षाभा°. ८ सी °भ्योप्यति°. ९ सी शिक्ष्यः । सं°. १० प संज्ञः प्रज्ञः. ११ सी ज्ञुः । प्रज्ञुः । अ°. १२ प °संप्रत्ता°. १३ सी °ना निपा°. १४ प °धन्वः गा°.

विखुः । विखः विग्रः । अत्र "वेः खुखग्रम्" [ १६३ ] इति खुखग्राः ॥

परयौवतजानिः । अत्र "जायाया जानिः" [ १६४ ] इति जानिः ॥

**विकाकुदुत्काकुदपूर्णकाकुदं संपूर्णकाकुत्सममेव तद्वचः ।**
**प्रपद्य ते पूर्णककुज्जनैरमार्याघोषणामा त्रिककुद्गिरेर्व्यधुः ॥२२॥**

२२. ते नियोगिनः पूर्णं ककुदं स्कन्धो येषां ते जनास्तैस्तरुणलोकैः कृत्वामार्याघोषणां व्यधुः । कथम् । त्रीणि ककुदानि ककुदाकाराणि शिखराण्यस्य त्रिककुद्यो गिरिर्लङ्काद्रिस्तस्मादा तमभिव्याप्य तमवधीकृत्य वा । किं कृत्वा । तद्वचो भैमेर्वचनं सममेव युगपदेव प्रपद्याङ्गीकृत्य । किंभूतम् । विगतं काकुदं ताल्वत्र विकाकुत्तथोत्काकुत्तथापूर्णकाकुदं तथा संपूर्णकाकुत्किंचित्तालुस्पर्शरहितं किंचिच्चोद्गततालुस्पर्शं किंचिच्चापूर्णतालुस्पर्शं किंचिच्च संपूर्णतालुस्पर्शमित्यर्थः ॥

विकाकुत् । उत्काकुत् । इत्यत्र "व्युदः०" [ १६५ ] इत्यादिना लुंक्समासान्तः ॥

संपूर्णकाकुत् । अपूर्णकाकुदम् । अत्र "पूर्णाद्वा" [ १६६ ] इति वा लुक् ॥

पूर्णककुज्जनैः । अत्र "ककुदस्य०" [ १६७ ] इत्यादिना लुक् ॥

त्रिककुत् । इति "त्रिककुद्गिरौ" [ १६८ ] इति निपात्यम् ॥ वंशस्थेन्द्रवंशयोरुपजातिः ॥

**जन्तुं घटोध्नीवदहन्न कोपि जनः सुशस्त्रीकसुभोक्तृकोपि ।**
**[illegible]लामिकायां शुभदण्डिकायां श्रेयस्तनूकेन भुवामनेन ॥२३॥**

१ [illegible] °कुदं. २ प °र्यामघो°. ३ सी °णामत्रक°. ४ सी °दन्नकोपि जिनमु°. ५ सी °स्तत: के°.

१ सी विखः. २ प विग्रैः । अ°. ३ प जानिरजा°. ४ प ते येना°. ५ प °लंकादि°. ६ सी ततम°. ७ सी °त्र का°. ८ सी °शंदि°. ९ सी °श्चिच. १० सी लुक् । त्रि°. ११ सी °म् ॥ ज°.

२३. कोपि[1] जनो भुवां[2] पृथ्व्यां जन्तुं घटोध्नीवद्गामिव[3] नाहन् । कीदृक् । महाभटत्वाच्छोभना शस्त्री क्षुरिका यस्य स सुशस्त्रीकस्तथा शोभनो भोक्ता रक्षको राजादिर्यस्य[4] स सुभोक्तृको विशेषणकर्मधारये[5] सोपि । यतः । कीदृश्यां भुवाम् । शुभाः पशुवधनिवारणाय नियुक्तत्वेन पशुवधस्थानेषु परिभ्रामुकत्वाच्छुभव्यापारा[6] दण्डिनो राजकाम्बिका यस्यां[7] तस्याम् । एतदपि कुत इत्याह । यतः[8] श्रेयस्तनूकेन न्यायदयादिसद्गुणपवित्राङ्गकेनानेन भैमिना कृत्वा सुस्वामिकायां शोभनक(भ?)र्तृकायाम् ॥

घटोध्नी । इत्यत्र "स्त्रियामूधसो न्" [ १६९ ] इति नः समासान्तः ॥

बहु(शुभ)दण्डिकायाम् । अत्र "इनः[10] कच्" [ १७० ] इति कच् ॥ अनिनस्मन्ग्रहणान्यर्थवतानर्थकेन[11] च तदन्तविधिं प्रयोजयन्ति[12] । सुस्वामिकायाम् ॥

ऋत् । सुभोक्तृकः ॥ नित्यदित् । सुशस्त्रीक[13] । श्रेयस्तनूकेन । इत्यत्र "ऋन्नित्यदितः" [ १७१ ] इति कच् ॥ उपजातिः ॥

सुशालिके सद्दधिके[1][2] सुसर्पिष्के भोजने निर्मधुकोत्पयस्के ।
प्रजोदुरस्का[3][4] रमते स न त्वामिषेनुपानत्क[5] इवापमार्गे ॥२४॥

२४. स्पष्टम् । किं तु । निर्मधुकोत्पयस्के मधुनो मद्यान्निर्गतं[14]

१ ए °के सुद°. २ सी °दकिके. ३ ए °दुरस्का. ४ सी °रधेस्का. ५ सी स्वानिषे°.

१ ए °पि भु°. २ सी भुवि पृ°. ३ सी °ध्नीमिव°. ४ ए °दियस्य. ५ सी °शेषेण°. ६ सी °भ्रामक°. ७ ए °पारद°. ८ सी °स्यां ए°. ९ ए यथाश्रे°. १० सी इन क°. ११ सी °र्थके°. १२ सी °जन्ति°. १३ ए °स्त्रीकः । श्रे°. १४ सी मध्यान्नि°.

निर्मधुकं तथोत्रा]बल्येन पयो दुग्धं यत्र तदुत्पयस्कं विशेषणकर्मधारये तस्मिन् । उदुरस्काभीष्टामारिघोषणोत्थहर्षेणोच्छ्वसितहृदया सती । यथानुपानत्कः पादुकारहितो नरोपमार्गे कण्टकाद्याकीर्णत्वान्न रमते ॥

भूभुजा सदनडुत्कसुलक्ष्मीकादिदेवसदृशेन तदानीम् ।
दुष्कृताब्धितरणे जितनौकेनैकपुंस्कममुना जगदासीत् ॥२५॥

२५. तदानीममुना भूभुजा भैमिना कृत्वा जगदासीत् । किंभूतम् । एकः कुमारपाल एव पुमान्पुंगुणोपेतः पुरुषो यत्र तदेकपुंस्कम् । विक्रमाभयदानन्यायपालनादिभिः पुंगुणैर्जगति कुमारपालतुल्यः पुमानन्यो नाभूदित्यर्थः । यतः । किंभूतेन । विक्रमादिगुणैः सदनडुत्कसुलक्ष्मीकादिदेवसदृशेन सदनडुत्कदेवेन शम्भुना सुलक्ष्मीकदेवेन च विष्णुना तुल्येन । प्रचण्डशासनेनेत्यर्थः । तथोर्व्याममारिप्रवर्तनया दुष्कृताब्धितरणे जिता नौर्वेडा येन तेन । स्वागता ॥

योलीकदर्पात्पलमाद ऋद्धिमान्
स तं सलक्ष्मीकमपि व्यवासयत् ।
अश्रद्धमुच्छ्द्धकमाश्वनर्थके-
तरैर्वचोभिः करुणाविधौ व्यधात् ॥ २६ ॥

२६. पूर्वार्धं स्पष्टम् । किं तु । व्यवासयद्देशताडितं चक्रे । तथा करुणाविधौ दयाकरणविषये नास्ति श्रद्धान्तरः परिणामविशेषो यस्य

---

१ सी °भुजां स°. २ प °वशट्ट°. ३ प दुक्षता°. ४ प °कपुस्क°. ५ सी °त्पदमा°. ६ प व्यवताय°. ७ बी °द्धमच्छ्र°. ८ प °र्थकैत°.

---

१ प तथात्प्रा°. २ सी उदर°. ३ बी °मधुना. ४ बी °दामन्या°. ५ बी °दनुड्ड°. ६ बी °दनुड्ड°. ७ प सी नौ. भेडा. ८ बी °भ् । व्य°. ९ बी °णादिवि°.

तमश्रद्धं नरमनर्थकेतरैः सार्थकैर्वचोभिर्धर्मदेशनाभिः कृत्वोच्छ्रद्धक-मुल्लसच्छ्रद्धं व्यधात् ॥

सदधिके । उदुरस्का । सुसर्पिष्के । निर्मधुक । अनुपानत्कः । सुशालिके । अत्र "दधि०" [ १७२ ] इत्यादिना कच् ॥

एकपुंस्कम् । सदनडुत्क । जितनौकेन । उत्पयस्के । सुलक्ष्मीक । इत्यत्र "पुम्०" [ १७३ ] इत्यादिना कच् ॥ केचिल्लक्ष्मीशब्दाद्वित्वबहुत्वयोरपि नित्यं कचमिच्छन्ति । सलक्ष्मीकम् ॥

अनर्थक । इत्यत्र "नञोर्थात्" [ १७४ ] इति कच् ॥

उच्छ्रद्धकम् अश्रद्धम् । अत्र "शेषाद्वा" [ १७५ ] इति वा कच् ॥ इन्द्रवंशावंशस्थयोरुपजातिः ॥

सुप्रेयसी करुणया बहुविष्णुमित्र-
ग्रामेप्यभूत्ससुत एव जनो नृपेस्मिन् ।
सुभ्रातृपुत्रसहिते क्षतनाडिकृत्त-
तन्त्रीगलाजबलिमाप न देवतापि ॥ २७ ॥

२७. अस्मिन्भैमौ नृपे नृशासति सति बहवो विष्णुमित्रा यत्र स बहुविष्णुमित्र एवंनामा यो ग्रामस्तस्मिन्नपि । आस्तां सुप्रसिद्धे पुरादिस्थाने । अत्यप्रसिद्धे ग्रामादिस्थानेपीत्यर्थः । ससुत एव । उपलक्षणत्वात्सबान्धवोपीत्यर्थः । जनोभूत् । कीदृक् । करुणया कृत्वा शो-

१ बी °भूत्सुत. २ ए °न् । त्सुभ्रा°. ३ ए °कृत°. ४ ए °लाजाब°.

१ सी उदर°. २ ए °धुके । अ°. सी °धुकः । अ°. ३ ए °पाबुत्कः. ४ ए °डुक । जि°. ५ ए सी °जाति । सु°. ६ बी °तिः । सप्रे°. ७ ए °स्मिन्भौमौ. ८ ए बी °ति ब°. ९ ए ग्रामी अस्मि°. १० ए °नेपी°. ११ सी °र्थः । अस्तुत.

भना प्रेयसी श्च प्रियतमा यस्य स सुप्रेयसी । ग्रामेपि लोको न जन्तु-
धं चकारे त्यर्थः । तथा देवतापि । आस्तां जनः । चण्डिकादिदे-
व्यपि ना न लेभे । का(क)म् । क्षताश्छिन्ना नाड्योङ्गस्नसा येषां
ते क्षत नाडयस्तथा कृत्ता छिन्ना तन्त्रीर्धमनिर्येषां ते तथा गला येषां
ते कृ ततन्त्रीगलाश्च येजाः । देवतानां पुरो ये हिंसिताश्छागा इ-
त्यर्थः । तद्रूपो यो बलिस्तम् । किंभूतेस्मिन् । शोभनो भ्राता कुमा-
रपालो यस्य स सुभ्राता महिपालदेवस्तस्य पुत्रोजयदेवस्तेन सहिते ॥
वसन्ततिलका ॥

व्याधोपि तत्रालमनेकतन्त्री-
कामेकतन्त्रीं ध्वनयन्विपञ्चीम् ।
स्तम्बं सुनाडीकमखण्डनाडिं
श्रित्वा मृगान्कर्षति न स्म हन्तुम् ॥ २८ ॥

२८. तत्र भैमौ सति व्याधोपि मृगान्हन्तुं न कर्षति स्म लक्ष्यं नानयति स्म । कीदृक्सन् । अनेकतन्त्रीकामनेकवल्लकीगुणामेकतन्त्रीं च विपञ्चीं वीणामलमत्यर्थं ध्वनयन्मृगचित्तहरणाय वादयन् । किं कृत्वा । स्तम्बं गुल्मं श्रित्वा । मृगाणां स्वमदर्शयितुं स्तम्बेनान्तर्हितो भूत्वेत्यर्थः । किंभूतम् । शोभना अखण्डाश्च नाड्यः स्नसा यस्य तं सुनाडीकमखण्डनाडिं च ॥

बहुविष्णुमित्र । इत्यत्र "न नाम्नि" [ १७६ ] इति न कच् ॥

---

१ ए °कलश्री°. २ ए °कलश्रीध्व°. ३ ए °म्बं ना°.

---

१ सी °था कृत्ता. २ बी °नः चिण्टि°. ३ ए ते न क्ष°. ४ बी कृत्तछि°. ५ बी °श्रीधम°. सी °श्रीधर्मनर्ये°. ६ बी °ते तस्मि°. ७ सी °स्ते । व°. ८ बी °तिमालक्षं ना.° ९ ए °नेव°. १० बी °लय°. ११ सी °ड्यः स्नसा.

सुप्रेयसी । इत्यत्र “ईयसोः°” [ १७७ ] इति न कच् ॥

ससुतः । अत्र “संहात्०”[1] [ १७८ ] इत्यादि[2]ना न कच् ॥

सुभ्रातृ । इत्यत्र[3] “भ्रातुः स्तुतौ” [ १७९ ] इति न कच् ॥

क्षतनाडिकृत्ततन्त्री । इत्यत्र “नाडी०” [ १८० ] इत्यादिना[4] न कच् ॥ स्वाङ्ग इति किम् । सुनाडीकं स्तम्बम्[5] । अनेकतन्त्रीकां विपञ्चीम् ॥ अन्ये[6] त्वाहुः । न पारिभाषिकं स्वाङ्गमिह गृह्यते किं तु स्वमात्मीयमङ्गं स्वाङ्गम् । आत्मा चेहान्यपदार्थस्तस्याङ्गमवयवस्तस्मिन्निति । तेषां[7] मते । अखण्डनाडिं[8] स्तम्बम् । एकतन्त्रीं विपञ्चीम् । इन्द्रवंशा[9] ॥

निष्प्रवाणिवसनाः करभोरु[1]सुभ्रूवनस्तमनसः क्रतुपूज्यैः ।

दाक्षिभार्गवमुखा अतिकैके[2]य्यात्मजे पशुवधं जहुरस्मिन् ॥२९॥

२९. केकयस्य राज्ञोपत्यं स्त्री कैकेयी तस्या आत्मजो भरतः । अमार्याघोषादिमहाधर्मेण[10] तमप्यतिक्रान्तेस्मिन्भैमौ सति दाक्षिभार्गवमुखा मुनयः क्रतुपूज्यैः पशुवधं जहुस्तत्यजुः[11] । पशुवधपरिहारेण[12] क्रतूंश्चक्रुरित्यर्थः[13] । किंभूताः सन्तः । प्रोयतेस्यामिति प्रवाणी तन्तुवायशलाका[14] । सा निर्गतास्मादिति निष्प्रवाणि[15] । तन्त्रादचिरोद्धृतमित्यर्थः । “क्लीबे” [ २. ४. ९७ ] इति ह्रस्वः । यद्वा । ऊयतेस्यां वानिर्दे(र्द)शाः[16] । प्रसृता वानिः[17] प्रवाणिः[18] । सा निर्गता तन्तुभ्योस्येति[19] नि-

---

१ ए °भोरुस्तुभ्रून°. सी °भोरुसुनन°. २ बी °कैकय्या°.

---

१ बी सी °हा इ°. २ ए °ना क°. ३ बी °त्र भानुः स्तु°. ४ ए °ना क°. ५ ए स्तम्बा । अ°. ६ ए त्वाहु नापा°. ७ ए °षां ख°. ८ ए °ना स्त°. ९ बी °ञः. °वंश । नि°. १० सी °दिना ध°. ११ ए जहुस्त°. १२ ए सी °शुप°७ ए. १३ ए क्रतुंश्च°. १४ बी °यसला°. १५ सी °वाणं । तत्र्याद°. १६ ए °निर्देशाःपी°. सी °निर्देशाः. १७ सी वानि प्र°. १८ ए °वाणि । सा. १९ ए °ति निःप्रवा

ष्प्रव् णे स्दशमित्येके । तद्वसनं येषां ते[1] निष्प्रवाणिवसनाः । यागाचार्यत्वाद्यागक्रियाकाले माङ्गलिक्याय परिहितसदे[2]शनूतनवस्त्रा इत्यर्थः । तथा करभो[3]रू[4]भिः सुभ्रूभिश्च स्त्रीविशेषैरनस्तमक्षिप्तमजितं मनो येषां ते । जितेन्द्रियाश्चेत्यर्थः ॥ स्वागता ॥

मैत्रे[1]यिकाप्युग्रधियोपि दाविका-
कूलैर्यवैर्दाविकपूर्वदाविकाः ।
ते[2] दार्घसत्राहुतिमत्र चक्रिरे
प्रालेयभश्रा[3]यस तद्वचोवशात् ॥ ३० ॥

३०. अत्र जगति दा[5]विकपूर्वदाविका दे[6]विकायां नद्यां भवा पूर्वदे[7]वि[8]कानाम्नि प्राच्यग्रामे भवाश्च[9] ते दाक्षिभार्गवमुखा मुन[10]यो दार्घसत्री दीर्घस[11]त्रे चिरकालीनयागे भवा याहुतिर्[12]होहवनं तां चक्रिरे । कैः कृत्वा । दाविकाकूलैर्देविकाया नद्याः कूले भवैर्यवैः । न तु पशुभिरित्यर्थः । कस्मात् । प्रलयाद्धिमाद्रेरागतं प्रालेयं हिमं विनयादिप्रधानत्वेनातिशीतलत्वात्तद्वद्भाति प्रालेयभं तथा श्रेयसो दयाप्रधानधर्मस्येदं श्राय[13]सं च धर्मसंबद्धं यद्वचो भैमिवचनं तस्य यो वश आयत्तता तस्मात् । किंभूताः । मित्रयुराद्यपुरुषो गोत्रस्य प्रवर्तयिता तस्य कर्म मैत्रेयिका मित्रयुप्र[14]वर्तितो यागे छागादिवधस्तस्या आप्तिः का-

---

१ सी °त्रेयका°. २ ए ते दीर्घ°. ३ बी °भश्राय°.

---

१ ए ते निःप्रवा°. २ बी °दसनू°. ३ ए सी °भोरुभिः. ४ सी °भिः [illegible]भिश्च. ५ सी °विकापू°. ६ ए देका°. ७ सी °देवेका°. ८ ए °विना°. [illegible] °श्च त दा°. १० ए सी °यो दी°. ११ ए °सत्रि चि°. १२ ए बी [illegible]°. १३ ए °सं व°. १४ सी °प्रवृत्तितो°.

र्यत्वेन लाभस्तयोग्रा हिंसा धीर्येषां तेपि । आम्नायायातैच्छागवैधकर्मणोपीत्यर्थः ॥ इन्द्रवंशा ॥

सर्शांशपस्तम्भभुजोतिनैया-
यिकोतिसौवागमिको मृगव्यात् ।
ररक्ष सत्त्वानि धनानि वैही-
नराणि वैहीनरिवन्महौजाः ॥ ३१ ॥

३१. स भैमिर्मृगव्यादाखेटात्सत्त्वान्यारण्यान्पशून्ररक्ष । यूतः । कीदृक् । सर्वधर्मप्रधानदयाधर्मस्याख्यातृत्वेन परस्परवाक्यविरोधादिदोषरहितत्वेन च सर्वागमेषु शोभन आगमः स्वागमः श्रीद्वादशाङ्गं तं सदार्हतमुनिपर्युपास्त्यातिशयेन वेत्त्यधीते वातिसौवागमिकः । एतेन सम्यग्ज्ञानमुक्तम् । तथातिनैयायिकोत्यन्तं न्यायेन प्राणिवधरक्षादिना धर्मं नयेन चरन् । एतेन सम्यक्क्रियापरत्वोक्तिः । तथा शिंशपाया वृक्षभेदस्य विकारः शांशपो यः स्तम्भस्तद्वदतिसारौ भुजौ यस्य सः । तथा महदोजः स्वमित्रबन्धुमित्रसैन्यादिजनितं बलं यस्य सः । एतेन सर्वशक्तिसंपन्न इत्युक्तम् । यथा वैहीनरिर्वहीनरस्यापत्यं विज्ञो न्यायी शक्तश्च सन्वैहीनराणि वहीनरस्य स्वपितुः सत्कानि धनानि रक्षति ॥ उपेन्द्रवज्रा ॥

१ ए शांसप°. २ ए वैरीन°. ३ ए °हौजः । स.

१ बी सी °यात°. २ बी °तयागच्छा°. ३ ए °वधः कर्मणो°. ४ बी °र्मणो°. ५ सी °खेलात्स°. ६ ए °त्वानार°. ७ ए °स्यात्°. ८ सी °च. ९ सी °दशाङ्गं. १० सी °स्त्यावे°. ११ सी °धीयेंते. १२ बी धर्म्मं न°. सी धर्मं न°. १३ ए °ये च°. १४ सी °शपायस्त°. १५ ए °पो यस्य°. १६ सी भुजो य°. १७ बी सी स्वब°. १८ ए °न्याजनितब°. १९ °विहो°. २० बी °ज्ञो ह्यायी. २१ बी °णि वाही°. २२ बी सी सत्त

सौवश्विदौवारिकमन्त्रिदौवा-
रपालि सौवस्तिकमुख्यलोकः।
मांसान्यतिस्फैयकृतोत्र नैय-
ग्रोधं कषायं नु न भोक्तुमैच्छत् ॥ ३२ ॥

३२. स्पष्टम्। किं तु। शोभनोश्वोस्य स्वश्वस्तस्यापत्यं सौवश्विः। दौवारिको द्वारे नियुक्तः। दौवारपालिर्द्वारपालस्यापत्यम्। अतिस्फैयकृतो दयादिगुणैः स्फा(स्फ्य)कृतस्यपेरपत्यमतिक्रान्तः सन्। अत्र भैमौ सति ॥

निष्प्रवाणि। इत्यत्र "निष्प्रवाणिः" [ १८१ ] इते कजभावो निपात्यः ॥

सुभ्रू। करभोरू। अत्र "सुभ्र्वादिभ्यः" [ १८२ ] इति न कच् ॥

सप्तविंशः पादः ॥

ञिति। दाक्षि॥ णिति। भार्गव। इत्यत्र "वृद्धिः०" [ १ ] इत्यादिना वृद्धिः ॥

कैकेयी। मैत्रेयिका। प्रालेय। इत्यत्र "केकय०" [ २ ] इत्यादिना वृद्धिर्यादेश्च शब्दरूपस्येयादेशः ॥

दाविक। दाविकाकूलैः। पूर्वदाविकाः। शांशप। दार्घसत्र। श्रायस इत्यत्र "देविका०" [ ३ ] इत्यादिना वृद्धिप्रसङ्ग आकारः ॥

१ सी मांसम्यतिस्पैय°. २ सी °ति स्पैय°. ३ सी °यग्रोधक°. ४ °ग्रोधे क°. ५ ए भोक्तमै°. ६ सी °त। सेष्टः। किं.

१ बी स्पष्टः। किं. २ बी °स्य सश्व°. ३ ए °वश्वि दौ°. ४ सी °तिन्यकृ°. ५ सी °णैः कृ°. ए °णैः स्याकृ°. ६ ए °स्यवर्षे°. सी °स्यपरत ७ बी °त्यमिति°. ८ बी भैमी स°. ९ सी सुभ्रूः। किर°. १० ए °भोअ°. ११ सी °द्धिः। किंके°. १२ ए °श्च रू°. १३ ए °वि दा°. सी °कादाविकाकलैः. १४ बी °विकाकू°. १५ बी °त्र। प्राय°.

ञिति । वैहीनरि[1] ॥ णिति । वैहीनराणि । अत्र "वहीनरस्यैत्" [ ४ ] इत्यैत् ॥

नैयायिकः । सौवागमिकः ॥ ञिति । सौवश्वि । इत्यत्र "य्वः" [ ५ ] इत्यादिनैदौतावागमौ ॥

दौवारिक[2] । सौवस्तिक[3] । स्फैयकृत[4]ः । अत्र "द्वारादेः" [ ६ ] इत्यादैतावागमौ ॥ श्वादेरिति" [ ७. ४. १०. ] इति प्रतिषेधाद्द्वारादिपूर्वाणामपि स्यात् । दौवारपालि ॥

नैयग्रोधम् । अत्र "न्यग्रोधस्य[5]०" [ ७ ] इत्यादिनैदागमः ॥ उपजातिः ॥

नैयङ्कव्यासीन्न्याङ्कवत्वक्पटानां
त्वग्दुःप्रा(ग्दुष्प्रा)पास्मिन्घोषयत्याश्वमारिम् ।
स्वाङ्गिव्याङ्गिश्वाभस्त्रिभिर्व्यावभाषी-
निष्ठैः[1] श्वाकर्ण्युच्चकैः पल्लिदेशे ॥ ३३ ॥

३३. न्याङ्कवी[6] न्यङ्कुमृगभेदस्तत्का[7] त्वक् चर्म पटो[8] येषां न्याङ्कवत्वक्पटानां मुनीनां शबराणां[10] वा[11] नैयङ्कवी त्वक् दुष्प्रापासीत् । मृगाणां मारणाभावात् । क सति । अस्मिन्[12]भैमौ । किंभूते[13] । व्यावभाषीनिष्ठैर्[14]विनिमयेनान्योन्यं भाषणे तत्परैः सद्भिः स्वाङ्गिव्याङ्गिश्वा-[15]भस्त्रिभिः [16]स्वङ्गव्यङ्गश्वभस्त्राणामपत्यैः प्रयोज्यकर्तृभिरुच्चैरुदात्तस्वरेणा-

---

१ ए °बीनष्टैः श्वा°.

---

१ सी °ति । विवै°. २ ए बी °रिकः । सौ°. ३ ए बी °स्तिकः । स्फै°. ४ सी °कृत । अ°. ५ ए °धस्यादि°. ६ बी °वीनाङ्कु°. ७ सी °ङ्कुमृग°. ८ ए °टो षां. ९ ए °ङ्कुत्व°. १० ए °णां नै°. ११ बी वा नय°. १२ ए °सिन्भौमौ. १३ सी °भूतैर्व्याव°. १४ ए °भाषानिष्ठैविनि°. बी °भाषानिष्ठैर्वि° नये°, १५ बी °ङ्गिस्वाभ°. १६ ए सी °भिः श्वङ्ग°.

श्वमारिं घोषयति । क । श्वाकर्णे[2] श्वाकर्णेः श्वकर्णापत्यस्य पल्लीपतेः सत्के पल्लिदेशेपि ॥

नैयङ्कवी न्याङ्कव । इत्यत्र "न्यङ्कोर्वा" [ ८ ] इति वा-ऐदागमः ॥

व्यावभाषी । स्वाङ्गि । व्याङ्गि । इत्यत्र "न ञस्वाङ्गादेः[4]" [ ९ ] इत्ये-[5]दौतौ न ॥

श्वाभस्त्रिभिः । अत्र "श्वादेरिति" [ १० ] इति नौत्[6] ॥

श्वाकर्णे । अत्र "इञः" [ ११ ] इत्यौच्च ॥ वैश्वदेवी[7] छन्दः ॥

न[1] श्वापदं श्वापदिकोपि शौवापदामिषेच्छुः पलमाददेस्मिन् ।
न प्रोष्ठपादोप्यभवन्नृशंसो[2] धर्मात्तदात्युत्तरभद्रपादः ॥ ३४ ॥

३४. अस्मिन्नृपे सति शुन इव पदमस्य[8] श्वापदमारण्यकः[10] पशुर्मृग[11]चित्रकादिस्तेन चरति श्वापदिकोपि[12] व्याधोपि श्वापदं श्वापदस्य मृगस्य विकारं पलं मांसं नाददे श्वापदवधेन नाग्रहीत् । कीदृक्[13] । शौवापदामिषेच्छुः श्वापदसत्कमांसमिच्छन् । एतेन राज्ञोतिप्रचण्डाज्ञतोक्ता[14] । तथा तदा भैमे राज्यकाले[15] प्रोष्ठपादोपि[16] [17] प्रोष्ठपदाभिश्चन्द्रयुक्ताभिर्युक्ते काले[18] जातोपि नरो नृशंसो हिंस्रकर्मा नाभूत् । प्रोष्ठपदासु हि जातोतिनिस्त्रिंशः स्यात् । यदुक्तम् ।

१ बी न प्रौष्ठ°. २ बी °शंशोध°.

१ सी °कर्णेः श्रावर्णे श्व°. २ ए °र्णे श्वक°. ३ ए °पतेसत्केः प°. ४ ए बी अस्वङ्गा°. ५ बी इत्येदौ°. ६ बी नौनु । स्वाक°. सी नौनु । श्वा°. ७ बी °बीइछन्दः. ८ सी °न्दः । नाश्वा°. ९ ए °मश्वाश्वा°. १० सी °ण्यकप° ११ ए °शुमृग°. १२ सी °दिकापि श्वा°. १३ सी °क् । पादाशौवामि° १४ ए °ज्ञोपि प्र°. १५ बी राजका°. १६ ए सी °ष्ठपदो°. १७ बी °प्रौष्ठ°. १८ सी °ले नृ°.

परदारमद्यसेवी दारुणकर्मा निशाचरस्तीक्ष्णः ।
विषमः प्रसह्य हर्ता प्राक्प्रोष्ठपदे भवति जातः ॥

प्राक्प्रोष्ठपदा पूर्वभद्रपदा यत्र स प्राक्प्रोष्ठपदः कालस्तत्रे । यतः । कीदृक् । धर्मादत्युत्तरभद्रपाद उत्तरभद्रपदासु जातमतिक्रान्तः । उत्तरभद्रपदासु हि जातोतिधार्मिकः स्यात् । उक्तं च । वक्ता सुखी प्रजावान्धार्मिको द्वितीयास्वित्यादि । द्वितीयासूत्तरभद्रपदासु । श्रीकुमारपालोत्पादितयाहिंसादिविषयया धर्मवासनया तस्मादप्यतिधार्मिक इत्यर्थः ॥

श्वापदम् शौवापद । इत्यत्र "पदस्यानिति वा" [ १२ ] इति वा-औत् । अनितीति किम् । श्वापदिकः ॥

प्रोष्ठपादैः । उत्तरभद्रपादः । अत्र "प्रोष्ठ०" [ १३ ] इत्यादिनोत्तरपदस्य वृद्धिः ॥ उपजातिः ॥

तं पूर्वनैदाघरविप्रतापमनुव्रजन्सोपि न जन्तुहिंसाम् ।
चक्रे सुपाश्वालकसर्वपाश्वालकार्धपाश्वालकलोक उच्चैः ३५

३५. सोपि हिंसकत्वेन सर्वत्र प्रसिद्धोपि सुपाश्वालकसर्वपाश्वालकार्धपाश्वालकलोकः सुपश्वालेषु सर्वेषु पश्वालेष्वर्धेषु पश्वालेषु च भवो यो लोकः स जन्तुहिंसामुच्चैर्न चक्रे । यतः । पूर्वनैदाघो निदाघस्य पूर्वस्मिन्भागे भवो यो रविस्तद्वत्प्रतापो यस्य तं तथा तं भैमिमनुव्रजन्[illegible]कत्वात्तदाज्ञाप्रतिपालनेनानुगच्छन् ॥

१ ए [illegible]र्मा°. २ सी °कलो°.

१ बी °र्माभिनि°. २ ए °त्र । यः की°. ३ ए °रभाद्रपद. ४ ए °रभाद्र°. ५ सी °सु हि. ६ ए °रभाद्र°. ७ सी °खी च प्र°. ८ ए °यास्वसु°. ९ बी वात्. १० सी °दः । अ°. ११ सी °सत्वे°. १२ ए °कलो°. १३ सी °लकसु°. १४ ए-बी सुपाश्वा°. १५ सी °था भै°.

पूर्वनैदाघ । इत्यत्र "अंशाहतोः" [ १४ ] इत्युत्तरपदवृद्धिः ॥

सुपाञ्चालक । सर्वपाञ्चालक । अर्धपाञ्चालक । इत्यत्र "सुसर्व०" [ १५ ] इत्यादिनोत्तरपदवृद्धिः ॥

पदातिभिः सोपरकार्ष्णमृत्तिकपूर्वपाञ्चालकपौर्वमद्रैः ।
हालामथो दारितभाण्ड आस्यद्द्विवार्षिकीं वाधिकवार्षिकीं च ॥ ३६ ॥

३६. स्पष्टम् । किं तु । अपरकार्ष्णमृत्तिकपूर्वपाञ्चालकपौर्वमद्रैरपरकृष्णमृत्तिकानाम्नि प्राग्ग्रामे पूर्वेषु पञ्चालेषु पूर्वेषु मद्रेषु च भवैः । द्विवार्षिकीं द्वे वर्षे भूतामधिकवार्षिकीं चाधिकानि द्वाभ्यां वर्षाभ्यां सकाशादतिरिक्तानि वर्षाणि भूतां च ॥

सीदतामदित धान्यमसौ त्रै-
वा(व)र्षिकं यदिह तेन कदापि ।
न द्विकौडविक आढ्यगृहं को-
प्यभ्यगादधिककौडविको वा ॥ ३७ ॥

३७. असौ भैमिर्यद्यस्माद्धेतोः सीदतां मांसादिविक्रयनिषेधेनावर्तमानानां सौनिककल्लालादीनां त्रैवा(व)र्षिकमतिबहुत्वेन त्रीणि वर्षाणि भावि धान्यमदित ददौ । तेन कारणेनेह जगति कोप्याढ्यगृहं कदापि नाभ्यगात् । कीदृक्सन् । द्वौ कुडवौ सेतिके प्रयोजनमस्य

१ बी °कपूर्व°. २ सी °मद्रैरपकृष्ण°. ३ बी °द्विवर्षि°. ४ बी °कवर्षि°. ५ बी °र्षिकीं य°. ६ ए °ढ्यकींगृ°. ७ सी °भ्यद°.

१ ए °लकः । अ°. २ ए °क पौर्वमद्रैरपरकृ°. ३ ए प्राग्भागे पूर्वेषु पाञ्चा°, ४ बी °कल्लोला°. सी °कल्पपाला°. ५ बी °तिबाहु°. ६ सी °हं तदाप्य ना°. १ बी °दाप्यना°.

द्विकौडविको धान्यसेतिकाद्वयार्थी । एवमधिककौडविकः ॥ स्वागता ॥

नृपः स्वपत्पाञ्चकलायिकार्ह-
र्वृत्ति[1]द्विसांवत्सरिकाङ्गरक्षे[2] ।
द्वैशाणशा[3]णानिशितासिपार्श्वो-
ऽशृणोन्निशीथे स्वरमन्यदा[4]र्तम् ॥ ३८ ॥

३८. अन्यदा नृपो निशीथ आर्तं[1] सदुःखं स्वरमशृणोत्[2] । कीदृक्[3] । द्वाभ्यां शाणाभ्यां मानभेदाभ्यां क्रीता द्वैशाणी । श्रेष्ठत्वेन महार्घेत्यर्थः[4] । या शाणा तेजनोपलस्तस्यां निशितस्तीक्ष्णीकृतो योसिः स पार्श्वे यस्य सः । किंभूते निशीथे । पञ्च कलाया मानमस्य "मानम्" [ ६ ४. १६९ ] इतीकणि[5] पाञ्चकलायिकम् । तद्धितान्तमिदम् । स्वर्णादिपरिमाणविशेषस्य नाम । पाञ्चकलायिकमर्ह[6]द्वृत्तिर्दिनजीविका येषां ते पाञ्चकलायिकार्हद्वृत्तयः[7] । शूरत्वा[8]चुकतादिगुणै[9]र्महावृत्तय इत्यर्थः । द्विसांवत्सरिकाश्च द्वौ संवत्सरौ भूताः । चिरकालीना इत्यर्थः । येङ्गरक्षा निशीथस्य निद्राभरहेतुत्वात्स्वपन्तस्ते यत्र तस्मिन् ॥ उपजातिः ॥

नृपोथ दध्याविति कापि शोका-
पूरान्मुमूर्षन्त्यभिरो[5]दितीह ।

१ बी सी °त्तिर्द्विसां°. २ प °क्षे । द्वैशा°. ३ सी °शाणनि°. ४ प °दात्त । अ°. ५ बी °रोदती°.

१ सी °दुःखस्व°. २ बी °मसृणो°. ३ बी °दृक्सन् । द्वा°. ४ सी °र्थः अथ वा शा°. ५ बी °कण् पा°. ६ बी °हवृत्तिर्दिनजी°. ७ बी °यः । सूरत्वा°नक्ता°. ८ सी °त्वानद्धतादिभिर्गणोर्म°. ९ प °दिर्गणै°.

विदीर्यते[1] द्वैकुलिजिक्युखा ह्या-

र्धकौडविक्यभ्यधिकान्नपूरात् ॥ ३९ ॥

३९. पूर्वार्धं स्पष्टम् । युक्तं चैतत् । यदसौ[1] शोकापूरादभिरोदिति[2] । हि यस्मादार्धकौडविकी[3] कुडवस्यार्धेन क्रीतोखा स्थाली द्वैकुलिजिकी द्वे कुलिजे धान्यमानभेदौ पचन्ती[4] संभवन्त्यवहरन्ती[5] वा सत्यभ्यधिकान्नपूराद्विदीर्यते ॥

राजार्धकंसिकमथो परिधाय वस्त्र-

मात्तार्धकौडविकगुण्ठननीलवासाः[3] ।

प्रावाहणेयपदिकान्स्वपतः प्रवाह-

णेयेतरानपि विहाय ततश्चचाल ॥ ४० ॥

४०. अथो राजा ततः स्थानाच्चचाल । किं कृत्वा । कंसो व्रीह्यादिमानम् । अर्धं कंसस्यार्धकंसः[6] प्रयोजनमस्यार्धकंसिकम्[7] । अल्पमूल्यमित्यर्थः । वस्त्रं परिधाय तथा स्वपतः[8] प्रावाहणेयपदिकान्प्रवाहणः[9] [10] शस्त्राजीवी विप्रस्तस्यापत्यानि शुभ्रादिभ्यो[11] ढक् [12] [ ६. १. ७३. ] प्रावाहणेया[13] ये पदिकाः पत्तयस्तान्प्रवाहणेयेतरानपि[14] [15] विहाय[16] । कीदृक्सन् । केनाप्यनुपलक्षणार्थमात्तं[17] गृहीतमार्धकौडविकं कुडवार्धेन क्रीतं गुण्ठनं सकलशरीराच्छादकं[18] नीलं वासो वस्त्रं येन सः ॥

---

१ ए °र्यंत द्वैकलि°. बी °र्यंत द्वेकु°. २ सी °जित्सुखा. ३ सी °र्धकोड°.

---

१ ए यसौ. २ ए °भि । हि. ३ सी °विक्य कु°. ४ सी °चती सं°. ५ ए °वन्तीत्यवह°. ६ ए कंसः प्र°. ७ सी °कंसप्र°. ८ सी °यतः प्रा°. ९ बी °तः प्रावा°. १० ए °हणा श°. ११ बी °भ्रादत्वा°. १२ बी °णि °भ्यो°. १३ सी °णेयप°. १४ सी °त्तयो यस्मात्प्रवा°. १५ बी °रामपि°. १६ ए °हायः । की°. १७ बी °नाप्युप°. १८ बी °दनं नी°.

पूर्वपाञ्चालक । इत्यत्र "अमद्रस्य दिशः" [ १६ ] इत्युत्तरपदवृद्धिः ॥ अमद्रस्येति किम् । पौर्वमद्रैः ॥

अपरकार्ष्णमृत्तिक । इत्यत्र "प्राग्ग्रामाणाम्" [ १७ ] इत्युत्तरपदवृद्धिः ॥

द्विवार्षिकीम् । अधिकवार्षिकीम् । अत्र "संख्या०" [ १८ ] इत्यादिनोत्तरपदवृद्धिः ॥ अभाविनीति किम् । त्रैवा(व)र्षिकं धान्यम् ॥

मान । द्विकौडविकः । अधिककौडविकः ॥ संवत्सर । द्विसांवत्सरिक । इत्यत्र "मान०" [ १९ ] इत्यादिनोत्तरपदवृद्धिः ॥ अशाणकुलिजस्येति किम् । द्वैशाणं । द्वैकुलिजिकी ॥ अनाम्नीति किम् । पाञ्चकलायिक ॥

अर्धकौडविक । आर्धकौडविकी । इत्यत्र "अर्धात्०" [ २० ] इत्यादिनोत्तरपदवृद्धिः । वा त्वादेः । परिमाणात्पूर्वस्य त्वर्धशब्दस्य वा स्यात् ॥ अनत इति किम् । आर्धकंसिकम् ॥

प्रवाहणेयं । प्रावाहणेय । इत्यत्र "प्राद्०" [ २१ ] इत्यादिनोत्तरपदवृद्धिरादेः पूर्वस्य तु प्रस्य वा ॥ वसन्ततिलका ॥

समलक्षि स यान्प्रवाहणेयकतोप्यप्रावाहणेयकः ।
तादृग्वेषः प्रवाहणेयिभिरेकप्रावाहणेयिवत् ॥ ४१ ॥

४१. स राजा प्रवाहणेयकतोपि प्रवाहणेयानां प्रवाहणस्यापत्यानां समूहादपि यान्सन् । बहूनां रक्षापालानां मध्यान्निर्गच्छन्नपीत्यर्थः ।

१ सी °णेयेय°. २ बी °यकातोप्यप्रवा°. ३ बी °यकं प्रावाहणेयानां समूहः. ४ ए °त् । रा°.

१ बी °मद्रेः । अ°. २ सी °र्षिका । अत्र. ३ ए °म् । द्वेशा°. ४ [illegible] मानार्द्धकौ°. ५ ए °ण । द्वेकु°. ६ बी °कुलजि°. ७ ए °र्धकाड°. [illegible] °णेत्य°. ९ सी °य प्रवाहणेत्य°. १० सी °हतो°. ११ सी रक्षपा°.

प्रवाहणेयिभिः प्रवाहणेयस्यापत्यैर्युवभी रक्षापालैः समलक्षि। क इव। एकप्रवाहणेयिवत्। कोप्येकोयं प्रवाहणेयस्यापत्यं युवा यातीति ज्ञातो न तु राजेत्यर्थः। यतो नास्ति प्रावाहणेयकं प्रावाहणेयानां समूहः सहचरं यस्य सः। एकाकीत्यर्थः। तथा तादृग्वेषः परिहितालपमूल्यनीलवस्त्रत्वेन प्रावाहणेयिवेषसदृशवेषः॥

प्रवाहणेयिभिः। प्रावाहणेयि। प्रवाहणेयकर्तः। प्रावाहणेयकः। अत्र "एयस्य" [ २२ ] इत्युत्तरपदवृद्धिः। आदेस्तु प्रस्य वा॥ वैतालीयं छन्दः॥

आचापलेनैष जयन्नचापलं
क्षितेरनैश्वर्यमनैपुणं विना।
पथानशौचेन ययौ स तस्य य-
न्नाकौशलं पथ्यपथ्ये(थे) ह्यकौशलम्॥ ४२॥

४२. स एष राजानशौचेनाशुचित्वरहितेन पथा कृत्वा ययौ। कीदृक्सन्। आचापलेन स्थिरचित्ततया क्षितेः पृथ्व्या अचापलं स्थिरतां जयन्। निर्भय इत्यर्थः। तथानैश्वर्यमनैपुणं विनासामर्थ्येनादक्षतया च रहितः। शक्तो दक्षश्चेत्यर्थः। युक्तं यदसौ शुचिना पथा ययौ। यद्यस्मात्तस्य भैमेः पथि मार्गविषये आकौशलमनिपु-

१ ए °नशोचे°. २ ए °यौ न त°. सी °यौ च त°. ३ सी °लं पाथ्ये.

१ ए °त्यैयुव°. २ ए °स। ए°. ३ सी °था सदृ°. ४ बी °णेयवे°. ५ ए °षः। प्रावा°. ६ बी °भिः प्रवा°. ७ ए °यि प्रावा°. ८ बी °तः प्रवा°. ९ सी °यकन्तः। अ°. १० बी °न्दः। अचापलेनैष. ११ ए °ना-सुचि°. १२ ए पथ्या कृ°. १३ बी °न्। अचा°. १४ बी °त्तनाया. १५ बी °र्थ्येन द°. १६ ए शक्तौ द°. १७ ए परिमा°. १८ बी °पये अकौ°. १९ ए आकोश°.

णत्वं नास्ति । मार्गे ह्यसौ कुशल एवेत्यर्थः । तथा हि यस्मात्तस्यापथे-मार्गेकौशलम् । अथ च पथि सदाचारेपथेनाचार इत्यर्थः । शब्द-च्छलेनायमर्थान्तरन्यासः । इन्द्रवंशावंशस्थयोरुपजातिः ॥

आनैश्वर्यानैपुणाशौचरुग्णो यल्लोकस्तत्किं मयेत्यन्यदुःखैः ।
दुःखीत्याटीद्यन्नृपस्तेन नाक्षैत्रज्ञेप्यांक्षैत्रज्ञ्य(ज्ञ?)मेपान्वमंस्त ४३

४३. यद्यस्माल्लोक आनैश्वर्यं दारिद्र्यमसामर्थ्यं वा । आनैपुणम-ज्ञा(ज्ञ)ता । आशौचं रोगादिनाशुचित्वम् । द्वन्द्वे तै रुग्णः पीडितो वर्तते । कस्या अपि स्त्रिया एवं शोकेन रोदनात् । तत्तस्माद्धेतोर्मया किम् । आनैश्वर्यादिदुःखादरक्षकत्वेन व्यर्थनृपशब्दार्थत्वान्मया नृपेण न किमपीत्यर्थः । इत्येवंप्रकारेणान्यदुःखैरानैश्वर्यादिविपयैर्लोकस्य कष्टै-र्दुःखी सन्नृपो भैमिर्यद्यस्मादाटीदभ्राम्यत्तेन हेतुनैष नृपोक्षैत्रज्ञेपि क्षेत्रज्ञ आत्मा न तथाक्षेत्रज्ञः परस्तस्य भावेपि लोकस्य परत्वेप्या-क्षे(क्षै)त्रज्ञं स्वस्माल्लोकस्य परत्वं नान्वमंस्त । प्रजादुःखदुःखितत्वा-दात्मनो भिन्नां प्रजां नाज्ञासीदित्यर्थः ॥

अक्षैत्रज्ञ्ये(ज्ञे?) आंक्षैत्रज्ञम् । अनैश्वर्यम् आनैश्वर्यं । अकौशलम् आकौश-लम् । अचापलम् आचापलेन । अनैपुणम् आनैपुणं । अनैशौचेन अ(आ)-

१ ए सी °प्याक्षेत्र°.

१ सी कुल. २ ए °तिः । अनै°. ३ ए सी °मन्यता. ४ ए °रक°. ५ ए °न्यदुखै°. ६ सी सनृपो. ७ ए सी °पोक्षेत्र°. ८ ए बी °त्रज्ञेपि. ९ सी आत्म न. १० ए °त्रज्ञां स्व°. बी °त्रज्ञंस्तसा°. ११ सी °ज्ञं अनै°. १२ ए आक्षेत्र°. १३ ए °म् । आ°. १४ सी °श्वर्यं । अ°. १५ बी °प-लान् । अ°. १६ बी सी °म् अनै°. १७ सी °पुणः । अ°. १८ बी °न-शोचे°.

शौच । इत्यत्र "नञः०" [ २३ ] इत्यादिनोत्तरपदवृद्धिरादेस्तु नञो वा ॥ शालिनी छन्दः ॥

किं कौरुजङ्गल्युत वैश्वधेनवी
न कौरुजाङ्गल्युत वैश्वधैनवी ।
इयं हि सौवर्णवलज्यदो मृशं-
स्तरोरधः स्त्रीं रुदतीं ददर्श सः ॥ ४४ ॥

४४. स भैमिस्तरोरधो रुदतीं स्त्रीं ददर्श । कीदृक्सन् । अद एतन्मृशंस्तस्यास्तथाविधरूपेनेपथ्यादिदर्शनात्परिभावयन् । तदेवाह । इयं स्त्री किं कौरुजङ्गली कुरुसंबद्धा जङ्गला निर्जला देशाः कुरुजङ्गलास्तेषु भवा । उत किं वा वैश्वधेनवी विश्वधेनौ देशभेदे भवा । उताथ वेयं न कौरुजाङ्गली नापि वैश्वधे(धै)नवी । किं त्वियं स्त्री हि स्फुटं सौवर्णवलजी सुवर्णवलजे पुरे भवा ॥ इन्द्रवंशावंशस्थयोरुपजातिः ॥

अथेत्यवोचत्स पितेव वत्से
सौवर्णवालज्यसि किं सदुःखा ।
सौभाग्यदर्पादपसौहृदेन
सौहार्दिनी किं विधुतासि पत्या ॥ ४५ ॥

---

१ ए °श्वधेन°. २ बी °र्णबल°. ३ ए °दो भृशंततोर°. ४ बी °रोदधः ५ बी °धः स्त्री रु°. सी °धः स्त्री रुदन्ती द°.

---

१ सी °स्तथा°. २ बी °पमने°. ३ ए किं कुरु°. ४ बी °कुरसं° ५ ए °द्धाजाङ्ग°. ६ बी निजाला. ७ ए °रुजाङ्ग°. ८ ए भवो किं वा. ९ सी किं सदुः°. १० ए °धेनौ. ११ ए °जी सौव°. १२ बी °ल्पु°. १३ दी °वंश°.

४५. अथ स राजा पितेवावोचत् । तथा हि । हे वत्से सौवर्णवाकजि किं किमिति सदुःखासि किं त्वं सौहार्दिनी सुहृदः सुहृदयस्य वेदं भावः कर्म वा "तस्येदम्" [६. ३. १६०.] इत्यणि युवाद्यणि [७. १. ६७.] वा सौहार्दं पत्यौ प्रेम तद्वती सत्यपि पत्या विधुतासि पराभूतासि । यतः । सौभाग्यदर्पादपसौहृदेन त्वय्यपगतस्नेहेन ॥ उपजातिः ॥

**सौरसैन्धव उ सौह्मनागरो वानुशातिकिरपारलौकिकः ।**
**त्वां न दुर्व्रतिक आग्निवारुणीं गामिवेह विनिहन्तुमाहरत् ४६**

४६. उ हे वत्से सुरसिन्धोर्गङ्गायाः समीपो देशोपि सुरसिन्धुर्वाराणसी तत्र जातः । "कोपान्त्याच्चाण्" [६. ३. ५६.] इत्यणि सौरसैन्धवः सौह्मनागरो वा सुह्मनगरे प्राचां नगरे भवो वा । एतद्देशभवो ह्यतिदाम्भिकः स्यादित्यतिदाम्भिक इत्यर्थः । कोपि दुर्व्रतिको दुष्टव्रती कापालिकादिर्दुर्विद्यासाधनार्थं त्वां विनिहन्तुमिह स्थान आहरन्न किमानिनाय । नञत्र लोकभापया किमर्थे । यतः । कीदृक् । आनुशातिकिरनुशतिकस्य चोरस्यापत्यं कुलक्रमागतचौरिकाबलेन हरणे कुशल इत्यर्थः । तथा परलोकः प्रयोजनमस्य पारलौकिको न तथापारलौकिकः स्त्रीवधमहापापस्य चिकीर्षुत्वेन परलोकानपेक्षी । यथा सौरसैन्धवः सौह्मनागरो वा कोप्यृत्विगाग्निवारुणीमग्निवरुणदैवतां

---

१ बी °गरौ वा°.

---

१ सी °त्से स सौ°. २ ए °जि किमि°. ३ ए तद्विती. ४ ए वितासि य°. ५ सी यथा सौ°. ६ ए °रसेन्ध°. ७ बी सी °न्धव सौ°. ८ सी °गरैः प्राचीनगरे भ°. ९ ए भवौ त°. बी भवौ चैत°. १० बी °दिति°. ११ सी °व्रती. १२ बी °दिदुर्वि°. १३ सी °य त्वा वि°. १४ ए °मर्थं । य°. १५ बी °स्य चौर°. १६ बी °को न त°. १७ ए °नपक्षी. १८ सी वातोगत्वि°.

गामनड्वाहीं विनिहन्तुं यागे यूपसमीप आहरति । असाध्यराजयक्ष्ममहाव्याधिनिवर्तनायाग्निवारुणीमनड्वाहीमालभेतेति हि श्रुतिः ॥

कौरुजङ्गली कौरुजाङ्गली । वैश्वधेनवी वैश्वधैनवी । सौवर्णवलजी सौवर्णवालजि । अत्र "जङ्गल०" [ २४ ] इत्यादिना पूर्वपदस्य नित्यं वृद्धिरुत्तरपदस्य तु वा ॥

सौहार्दिनी । सौभाग्य । सौरसैन्धवः । अत्र "हृद्०" [ २५ ] इत्यादिनोभयपदवृद्धिः ॥ बहुलाधिकारान्मित्रामित्रार्थयोः सुहृद्दुर्हृच्छब्दयोरपसौहृदेनेत्यपि स्यात् । दौह(र्हृ)दमित्यपि ज्ञेयम् ॥

सौह्मनागरः । अत्र "प्राचां नगरस्य" [ २६ ] इत्युभयपदवृद्धिः ॥

आनुशातिकिः । पारलौकिकः । अत्र "अनु०"[२७] इत्यादिनोभयपदवृद्धिः ॥

आग्निवारुणीम् । अत्र "देवतानामात्वादौ" [ २८ ] इत्युभयपदवृद्धिः ॥

रथोद्धता ॥

सौमेन्द्रमैन्द्रावरुणं हविर्नु
किं त्वाच्छिनत्कोप्यसुरश्छलेन ।
ऐक्ष्वाकदारान्नु हिरण्मयैणे-
नाग्नैणहत्यक्षुभितो दशास्यः ॥ ४७ ॥

४७. किं कोप्यसुरो दैत्यश्छलेन त्वा त्वामाच्छिनद्रूपातिशयमूढत्वेन हठादग्रहीत् । यथा सौमेन्द्रदेवतमैन्द्रावरुणं च [ह]विर्हव्यं कोप्यसुरश्छलेन ऋत्विग्भ्य आच्छिनत्ति । यथा वा दशास्यो रावण

१ बी सी °रछले°. २ बी °रान्राम°. ३ सी °हत्या ते°.

१ सी °नश्वड्डा.° २ बी °साध्यं रा°. ३ ए °रुणंमिन°. ४ बी सी °ति श्रु°. ५ बी °रजा°. ६ सी °ली वै°. ७ ए °श्वधेन°. ८ सी सौर°. ९ बी °हृदुहृच्छ°. १० सी °द्धिः । अग्नि°.

ऐक्ष्वाकदारान्रामभार्यां सीतां हिरण्मयेन स्वर्णमृगेण कृत्वाच्छिनत् । यतः । कीदृक् । भ्रूणघ्नो भावो भ्रूणहत्यं भ्रूणहत्या तेन क्षुभितो भीतो भ्रौणहत्यक्षुभितो न तथा । महापापिष्ठ इत्यर्थः ॥ उपजातिः ॥

मैत्रेयवाक्सारववाःपवित्रा-
मनन्तमान्तिक्यनिजप्रियां त्वाम् ।
अनन्तियोप्यन्तितमोत्र विध्वं-
सितुं कुधैवत्य उतानिनाय ॥ ४८ ॥

४८. उताथ वा कुत्सितं धैवत्यं धीव्नः पण्डितस्य भावः पाण्डित्यं यस्य स कुधैवत्यः कुधीः पारदारिकस्त्वां विध्वंसितुं विध्वस्तशीलां कर्तुमत्र स्थान आनिनाय । कीदृक्सन् । अनन्तियोपि शीलभङ्गहेतुत्वादन्तिकेसाधुरप्यन्तितमः शीलभङ्गायातिशयेनान्तिकः । किंभूतां सतीं त्वाम् । मित्रयोरपत्यं गृष्ट्यादित्वादेयञि [ ६. १. ८४. ] मैत्रेयो मुनिस्तस्य या वाक् तथा सरस्वां भवं सारवं यद्वार्जलं तद्वत्पवित्रां सुशीलत्वेन निर्मलाम् । तथान्तिके निकटे साधुरन्तिक्योत्यनुरक्त इत्यर्थः । यो निजप्रियः स तथान्तमोतिनिकटो न तथानन्तमः प्रोषितत्वादिना दूरस्थ आन्तिक्यनिजप्रियो यस्यास्ताम् ॥

अप्यन्तितोन्तिकतं एत्य तदैवमुक्त्वा
भूपे स्थितेन्तिकतमे निजबान्धवे नु ।
साथान्तिपत्र्यगदद्न्तिकसन्नृपांह्रि-
द्वन्द्वं स्रजिष्ठमिव दन्तरुचादधाना ॥ ४९ ॥

१ ए °वचाः पवित्रा°. २ सी °नन्तिमा°. ३ ए °न्तिकानि°. ४ बी °त क ए°. ५ ए °धानः । अथान्तिकतः.

१ सी न ग°. २ सी °स्य वा भा°. ३ सी °ङ्गाति°. ४ सी °थान्तिमो°. ५ बी सी °न्तिकनि°.

४९. अथान्तिके सीदत्यन्तिषन्निकटस्था सा स्त्री न्यगदद्बभाषे । क सति । भूपे । किंभूते । अन्तिकात् । "अहीयरुहोपादाने" [ ७. २. ८८. ] इति तसावन्तितोपि निकटादप्यन्तिके आद्यादित्वात्तसौ [ ७. २. ८४. ] अन्तिकतः । अत्यन्तं निकट इत्यर्थः । एत्यागत्य तदैवमुक्तरीत्योक्त्वावस्थिते मौनमाश्रिते । कस्मिन्निव । अन्तिकतमेतिनिकटे निजबान्धवे नु । अतिनिकटेमात्रके पित्रादिस्वजन इवेत्यर्थः । कीदृक्सती । सलज्जत्वेनाधोमुखं भाषणादन्तरुचा कृत्वान्तिकसन्निकटस्थं नृपाद्द्विद्वन्द्वं स्रजिष्ठमिव बहूनां मध्येतिशयेन स्रग्वीव दन्तकान्तेरतिविशदत्वादतिप्राचुर्याच्च पूजाहेत्वतिशयितपुष्पमालान्वितमिवादधाना ॥ वसन्ततिलका ॥

बोधिसत्वमिव वेद्मि भवन्तं सुत्वचिष्ठतय ऋज्ववदातम् ।
अस्रजीयसि जने स्रजयेत्कः कोत्वचीयसि बत त्वचयेद्वा ५०

५०. हे महापुरुष भवन्तं त्वां सुत्वचिष्ठतया बहूनां मध्येत्यर्थं त्वग्वांस्त्वचिष्ठः सुष्ठु त्वचिष्ठः सुत्वचिष्ठस्तद्भावेन त्वचः सौम्यतादिश्रीविशेषेण हेतुन ऋजुः सरलस्वभावः स चासाववदातश्च पापमलरहितश्च ऋज्ववदातस्तम् । यद्वा । ऋजूनि सरलान्यवदातान्युत्कृष्टकृपाकरणादीन्यद्भुतकर्माणि यस्य तं वेद्मि । कमिव । बोधिसत्वमिव बुद्धदेवतामिव । आकृतिविशेषेणापि त्वां बुद्धदेवमिव लोकोत्तरकृपार्जवादिगुणाधारं जानामीत्यर्थः । अमुमेवार्थं व्यतिरेकार्थान्तर-

---

१ ए °त्वतिष्ठ°. सी °त्वचष्ठ°.

---

१ सी °त्योक्ताव°. २ ए बी °टनात्र°. ३ सी °त्रकं पि°. ४ सी °दति°. ५ बी °त्विष्ठं सु°. ६ ए °त्विष्ठस्त°. ७ बी °नि शर°. ८ बी °कृतवि°. ९ सी लोकेत्त°.

न्यासाभ्यां द्रढयति । बतेति कोमलामन्त्रणे । द्वयोर्मध्ये[1]त्यन्तं स्रग्वी स्रजीयान्न तथास्रजीयांस्तस्मिन्पुष्पमालारहितजनविषये कः स्रजयेत् स्रग्विणमाचक्षीत । वा यद्वा । अत्वचीय[2]सि[3] विशिष्टत्वग्रहिते जने कस्त्वचयेत्त्वग्वन्तमाचक्षीत । न कोपीत्यर्थः ॥

सौमेन्द्रम्[4] । ऐन्द्रावरुणम् । अत्र "आतो न०" [ २९ ] इत्यादिना नोत्तरपदवृद्धिः ॥

सारव[5] । ऐक्ष्वाक । मैत्रेय । भ्रौणहत्य । धैवत्यः[6] । हिरण्मय । इत्येते "सारव०" [ ३० ] इत्यादिना साधवः ॥

अन्तम[7] । अन्तितमः । अन्तितः । अनन्तियः[8] । अन्तिषद् । एते "वान्तम०"[9] [ ३१ ] इत्यादिना वा साधवः ॥ पक्षे । अन्तिकतमे । अन्तिकतः[10] । अन्तिक्य । अन्तिकसद् ॥

स्रजयेत्[11] । स्रजिष्ठम् । स्रजीयसि । त्वचयेत् । सुत्वचिष्ठतया । त्वचीयसि[12] । इत्यत्र "विन्मतोर्०" [ ३२ ] इत्यादिना विन्मतो[13]र्लुप्[14] ॥ स्वागता[15] ॥

कनयन्नघं[1] धर्ममथो कनीया-
नथ वा कनिष्ठोसि मनुः स्वयं[2] सः ।
यवयेद्यविष्ठस्य यवीयसोपि-
ष्ठजने तथाल्पीयसि नाल्पयेत्कः ॥ ५१ ॥

---

१ ए °न्नघर्मध°. २ सी °यं नु । य°.

---

१ सी ध्ये स्र°. २ ए °यस वि°. ३ सी °सि वशि°. ४ ए सौम्येन्द्र । ऐ°. ५ बी °रवः । ऐ°. ६ ए °वहत्यः. ७ ए °न्तमः । अ°. बी °न्तमा । अ°. ८ ए सी °न्तिय । अ°. ९ सी वान्त्यम°. १० सी °न्तिक्य°. ११ बी °ये । स्र°. १२ ए त्वच्चेय°. १३ ए विनत्वोर्लु°. १४ बी °न्मत्तोर्लु°. १५ ए °गताः । क°.

५१. अथ वाहो महापुरुष कनीयान्द्वयोर्मध्येत्यन्तं युवा कनिष्ठो बहूनां मध्येत्यन्तं युवा चातितरुणतम इत्यर्थः। असि त्वम्। सोतिधार्मिकत्वेन प्रसिद्धः स्वयं साक्षान्मनुर्मन्वृषिः। को मनुरित्याह। कनीयान् द्वयोरल्पयोर्मन्वोर्मध्येत्यल्पोथ वा कनिष्ठो बहूनां मनूनां मध्येत्यल्पो वा। स्वायंभुव १ स्वारोचिष २ औत्तम ३ तामस ४ चाक्षुष ५ रैवत ६ वैवस्वत ७ सूर्यसावर्ण ८ ब्रह्मसावर्ण ९ रुद्रसावर्ण १० धर्मसावर्ण ११ दक्षसावर्ण १२ रौच्य १३ भौत्याख्या[१४] हि चतुर्दश मन्वर्ष(न्वृष)यः आद्याः सप्त भूता अन्यास्तु भाविनः। तेषु त्वं लघुतरो लघुतमो वा मनुर्भवसीत्यर्थः। यतः। कीदृक् त्वम्। एवं कृपालुत्वादिगुणैरघं पापं कनयन्नल्पीकुर्वन्। अथो तथा धर्मं कनयन्युवानं कुर्वन्। अमुमेवार्थमर्थान्तरन्यासाभ्यां द्रढयति। यविष्ठस्य यवीयसश्च। संबन्धमात्रेत्र षष्ठी। माषाणामश्नीयादित्यादिवत्। बहूनां यूनां द्वयोर्वा मध्येतियुवानं नरं को न यवयेद्युवानं नाचक्षीतेत्यर्थः। तथाल्पिष्ठजनेल्पीयसि च विषये को नाल्पयेत्॥

कनयन्। कनिष्ठः। कनीयान्। अत्र "अल्प०" [३३] इत्यादिनाल्पयूनोः कन्वा॥ पक्षे। अल्पयेत्। अल्पिष्ठ। अल्पीयसि॥ यवयेत्। यविष्ठस्य। यवीयसः॥ केकिरवं छन्दः॥

श्रेष्ठे ज्येष्ठे श्रेयसि ज्यायसि त्व-
य्यात्मोत्कर्षान्द्राक्श्रयामि ज्ययामि।

१ सी °ष्ठेय°.

१ बी नुर्मान्वृ°. २ सी °यान्नल्प°. ३ ए °भुवः १ स्वा°. ४ बी °ष ५ ऐराव°. ५ ए °स्वतः ७ सू°. ६ बी °र्यस्व°. ७ सी रौद्रच्य. ८ ए °तमो°. ९ ए °रमन्या°. १० ए °यवष्ठ°. ११ बी सी योर्मध्ये°. १२ बी न युव°. १३ सी कण्वा। प°. १४ ए °ल्पीयिसि.

साधीयःसाधिष्ठनेदिष्ठनेदी-
यांसः श्रोतुः[1] सन्तु ते दुःखवेगाः ॥ ५२ ॥

५२. उद्गतः क्लेशो येभ्यस्त उत्क्लेशा दुःखहेतव आत्मन उत्क्लेशा आत्मोत्क्लेशास्तानहं[1] त्वयि विषये द्राक् श्रयामि वचनस्यातिस्फुटसत्यत्वेन प्रशस्यं यथा स्यादेवमाचक्षे[2][3]। तथा ज्ययामि वचनस्यातिमहत्त्वा[4]द्वृद्धं यथा स्यादेवमाचक्षे[5] च। प्रशस्यशब्दाद्वृद्धशब्दाच्च क्रियाविशेषणादत्र[6][7] णिज्। यतः। किंभूते त्वयि। श्रेष्ठे श्रेयसि च। महापुरुषत्वेनातिप्रशस्यतम इत्यर्थः। तथा ज्येष्ठे ज्यायसि च। अत्यन्तं गुणैर्वृद्धतम[8] इत्यर्थः। ततश्च श्रोतुर्मदीयोत्क्लेशानाकर्णयतः सतस्ते तव महापुरुषत्वेन परदुःखदुःखितत्वाद्दुःखवेगाः कष्टसंभाराः सन्तु। कीदृशाः। द्वयोर्मध्येतिबाढाः साधीयांसो बहूनां मध्येतिबाढाः साधिष्ठास्तथा[9] बहूनां मध्येत्यन्तिका नेदिष्ठा द्वयोरत्यन्तिका[10] नेदीयांसः। विशेषणकर्मधारये ते तथा। अतिगाढतमा अतिनिकटतमाश्चेत्यर्थः॥ शालिनी छन्दः।

प्रेम नेदयति साधयितोक्तेः[2]
प्रापयन्सवरिमेह गरीयान्।
त्वां त्रपिष्ठमहमत्रपिमाणं
ह्री करोम्यगरिमा त्रपयन्ती ॥ ५३ ॥

५३. गरीयान्द्वयोर्मध्येत्यन्तं गुरुत्वयुक्त उक्तेर्वचसः साधयिता बाढमाख्याता[11]। अत्रापि क्रियाविशेषणाद्बाढाण्णिज्। अत्यन्तं वक्ता पुमा-

१ बी श्रोतः स°. २ बी °तोक्ते प्रा°.

१ सी °नवहं. २ प °चक्ष । त°. ३ बी क्षेत । त°. ४ बी °त्त्वावृद्धं. ५ बी °मापक्षे. ६ सी °याया वि°. ७ सी °णादिति णि°. ८ सी °तमेत्य°. ९ प °धिष्टा ब°. १० सी °त्यन्तका°. ११ सी °ख्या । अ°.

निह जगति प्रेम प्रियभावं प्रीतिं नेदयत्यन्तिकं करोति। कीदृशम्। सह [1]वरिम्णोरुत्वेन यत्तत्सवरिम मह[2]त्। यतः। कीदृशः। प्रापयन्प्रियमाचक्षाणः। यो हि गरीयान्[3]वक्ता स्यात्स सुखदोक्तिभिर्जगतो महतीं प्रीतिं निकटीकरोतीत्यर्थः। अहं त्वगरिमा स्त्रीत्वेन गुरुत्वरहितात्रपिमाणं त्रपिम्णा दुःखेन रहितं त्वां ह[4]ी खेदे त्रपिष्ठं महापुरुषत्वेन दर्पण[5]वन्निर्मले त्वच्चित्ते स्वदुःखसंक्रमणेनातिदुःखिनं करोमि। यतस्त्र[6]पयन्ती नृपं(तृप्रं?) स्वदुःखमाचक्षाणा॥ स्वागता छन्दः॥

दुःखभणनेन सज्ज[7]नजनस्य दुःखकारिणं [8]स्वं प्रणिन्द्य दुःखहेतूनाह।

आसीत्प्रेयान्मेतिवृन्दिष्ठ वृन्दी-
यान्स्त्रीप्रेष्ठः स्फेष्ठबंहिष्ठकान्तिः[1]।
स्फेयोद्राघि[2]ष्ठेक्षणश्रीरतिस्थे-
योवर्षीया[3]न्स्थेष्ठवर्षिष्ठबुद्ध्या॥ ५४॥

५४ हे अतिवृन्दिष्ठ महापुरुषत्वेनातिप्रशस्य मे मम प्रेयान्भर्तासीत्। कीदृ[9]क्। स्फेष्ठातिस्थिरात्युपचिता बंहिष्ठातिबहुला कान्तिर्लक्ष्म्याद्युत्कर्षजनिता दीप्तिर्यस्य सः। तथा स्फेयस्त्यत्युपचिता द्राघिष्ठातिदीर्घेक्षणश्रीर्यस्य सः। अतिरूपपात्रमित्यर्थः। तथा[10] स्थेष्ठातिस्थिरा वर्षिष्ठा चातिवृद्धा या बुद्धिस्तया कृत्वातिस्थेयो वर्षीयान् स्थेया-

१ प °न्तिः। स्पेय°. सी °न्तिः। स्फाय°. २ सी °तिस्थायो°. ३ बी °यान्श्रेष्ठ°. सी °यान्स्वेष्ठ°.

१ बी °रिम्णोरु°. २ प °त्। की°. ३ बी °न्वत्तयास्यात्सुख°. ४ बी ही क्षेदे. ५ सी °णानिर्मे°. ६ प °न्ती पृप्रं दुः°. ७ सी °नस्य°. ८ सी स्वं प्राणि°. ९ प °क्। स्पेष्ठा°. सी °क्। स्पष्टाति°. १० प °था स्वेष्ठा°. बी °था श्रेष्ठा°.

नतिस्थिरप्रकृतिर्यो[1] वर्षीयानतिवृद्धस्तमप्यतिक्रान्तोत एव वृन्दीयानतिप्रशस्योत एव स्त्रीप्रेष्ठः स्त्रीणामतिप्रियः ॥ शालिनी छन्दः ॥

द्राघीयोबंहीयोवणिज्यैर्गरिष्ठो
लक्ष्मीं सोस्थेमां[1] स्थापयन्स्फापयंश्च[2] ।
दध्यौ रात्रौ निर्बंहिमद्राघिमायां
वर्षिम्णानाप्तोपि त्रपीयान्कदाचित् ॥ ५५ ॥

५५. स मत्प्रियो[2] वर्षिम्णा वार्धकेनानाप्तोपि[3] युवापि त्रपीयान् बहुलक्ष्मीरक्षाचिन्तयातिदुःखी सन्कदाचिन्निर्बंहिमद्राघिमायां[4] बंहिम्नो बाहुल्याद्द्राघिम्णो[5] दीर्घत्वाच्च निष्क्रान्तायां शेषायामित्यर्थः । रात्रौ दध्यौ[6] चिन्तितवान् । कीदृग् । द्राघीयांस्यतिदीर्घाणि बंहीयांसि चातिबहुलानि[7] यानि[8] वाणिज्यानि वणिक्कर्माणि व्यवहारास्तैः कृत्वा[9] गरिष्ठोतिगुरुरत[10] एवास्थेमां[11] स्थेम्ना स्थैर्येण रहितां स्वभावेन चपलामपीत्यर्थः । लक्ष्मीं स्थापयन् स्थिरां कुर्वन्स्फापयंश्चोपचितीकुर्वंश्च[12] ॥ वैश्वदेवी[13] छन्दः ॥

यद्दध्यौ तदाह[14] ।

बंहयेच्च गरयेत्प्रिययेद्वा योर्थमक्षमसलोभनृपोर्व्याम्[3] ।
द्राघयेत्स वरयेत्स्थिरयेच्चानर्थमेकमवरिष्ठमनीपः ॥ ५६ ॥

१ बी °स्थेम्नां स्था°. २ बी °यन्स्थाप°. ३ ए °येचा°. ४ सी °येद्वान°. ५ सी °मविरि°. ६ ए °नीयः । अ°. बी °नीपुः । अ°.

१ ए °ति ये व°. २ बी मम प्रियो. ३ बी °प्तोसि यु°. ४ सी सन निर्बं°. ५ बी °घिम्नो दी°. ६ बी दधौ चि°. ७ सी °नि वा°. ८ ए सी °नि माणि°. ९ बी सी °त्वाद्गि°. १० ए °रुतर ए°. सी °रुतरं त ए°. ११ बी °स्थेम्नां स्थे°. १२ ए °पयांश्चो°. १३ बी °वीश्छन्दः. १४ सी तदेवाह.

५६. अक्षमः पालयितुमशक्तः सलोभश्च लुब्धो यो नृपस्तस्य योर्वी तस्यां यो नरोर्थं द्रव्यं बहुव्यवहारादिभिर्बंहयेच्च बहुलं कुर्याद्रयेच्च विस्तारयेत्प्रियेद्वा प्रियं कुर्याच्च । स चौरादिभि[*नृपेण वार्थस्यापहरणादेकं केवलमनर्थं द्रव्याभावं कष्टं वा द्राघयेद्दीर्घीकुर्याद्रयेद्गुरूकुर्यात्स्थिरयेच्च । कीदृक्सन् । अवरिष्ठात्यन्तमगुरुरमहत्तमा मनीषा यस्य सः । निर्बुद्धिरित्यर्थः ॥ स्वागता ॥

स्वानि वर्षयितुमेषु वृन्दयन् राट्स्ववृन्दिमसु वीक्ष आत्मनः ।
आपदं क्रशिमदां वरीयसीमक्रशिष्ठविभवाक्रशीयसः ॥५७॥

५७. स्वानि द्रव्याणि वर्षयितुं वर्धयितुं वृन्दयन्वृन्दारकं प्रकृष्टं कुर्वन्नर्थादात्मानम् । अनेकव्यवहारैः प्रकर्षेण द्रव्याणि वर्धयन्सन्नित्यर्थः । अहमात्मनः स्वस्य क्रशिमदां कृशत्वदायिकां दारिद्र्यदामित्यर्थः । वरियसीमतिमहतीमापदं सर्वस्वापहाररूपां वीक्षे संभावयामि । क्व । एषु राट्सु सामीप्यके सामीयम् । यद्देशेधुनोष्यते तेषां मनःस्थत्वेन प्रत्यक्षाणां नृपाणां समीप इत्यर्थः । यतोवृन्दिमसु वृन्दिम्ना प्रशस्यत्वेन रहितेष्वसामर्थ्यलोभातिरेकादिना निकृष्टेष्वित्यर्थः । आत्मनश्च कीदृशस्य । अक्रशिष्ठोकृशतमो महत्तमो यो विभवो द्रव्यं तेनाक्रशीयसो महत्तमस्य ॥ रथोद्धता ॥

उष्ट्रान्भ्रंशिष्ठान्भ्रंशयन्भ्रंशीया-
न्नथान्प्राथिष्ठान्प्रथयन्प्रथीयान् ।

१ ए °षु छन्द°. २ बी °मनुवीक्ष्य आ°. ३ ए °सु दीक्ष. ४ ए क्रसिम°. ५ बी °क्रसीय°. ६ बी °न्भ्रसिष्ठा°. ७ बी °न्भ्रसीया°.

१ सी रोर्थाद्रव्यं. २ ए °दि निर्बं°. ३ बी क्रमिशदां. ४ ए °पदां स°. ५ बी वीक्ष्ये सं°. ६ बी °शेधनो°. ७ ए °मीपेत्य°. ८ ए °स्य । उ°.

* [illegible]श्चिह्नान्तर्गतो ग्रन्थः सी पुस्तके नास्ति ।

वृषान्व्रे[1]ढिष्ठान्व्रढयन्व्रढीया-
न्सु[2]राज्ञि देशे[3]त्र ततः स आगात् ॥ ५८ ॥

५८. त[1]तः स्वस्य महापत्संभावना[2]करणानन्तरं स मत्प्रियः सुराज्ञ्यत्र देशे गूर्जर]त्रायामागात् । कीदृक्सन् । भ्रशिष्ठानतिभृशानुद्यान्भ्रशयञ्शीघ्रान्कुर्वन्यतो भ्रशीयानत्युत्सुकस्तथातिपृथून्प्रथान्प्रथयन्नतिबहुत्वेन सर्वपथीनान्कुर्वन्यतः प्रथीयान्महर्द्ध्यातिपृथुस्तथातिवृढान्सो[5]द्यमान्वृपान्सोद्यमीकु[6]र्वन्यतोतिसोद्यमः[7] ॥ उपजाति(तिः) ॥

स[4] मां म्रदिष्ठां म्रदय[5]न्म्रदीया-
ल(लँ)क्ष्मीं द्रढिष्ठां द्रढयन्द्रढीयान् ।
परिव्रढीयान्सुपरिव्रढि[6]म्ना
सहानयत्सव्रढिमभ्रशिम्ना ॥ ५९ ॥

५९. स मत्पतिर्म्र[8]दीयान्मनसा वाचातिमृदु[9]रत एव म्रदिष्ठामतिमृद्वीं मां म्रदयन्मृद्वाचक्षाणः सन्नत्र देशे सहानयत् । केन हेतुना । सह व्रढिम्न उद्यमस्य भ्र[10]शिम्नातिशयेनास्ति यस्तेनोत्साहप्रकर्षान्वितेन सुपरिव्रढिम्ना सुप्र[11]भुत्वेन । कीदृशः । द्रढीयानत्यन्तं बल्युपचितो वा । तथा द्रढिष्ठामत्युपचितां लक्ष्मीं द्रढयन् वृद्धिरक्षादिना बलिष्ठामुपचितां वा[12] कुर्वन्नत ए[13]व परिव्रढीयानतिपरिवृढोनेकजनस्वामी ॥

१ बी °न्व्रढ°. २ बी °सुसुरा°. ३ ए °शे त°. ४ सी स म म्र°. ५ सी °यन्मदीयालक्ष्मीं. ६ ए °म्ना ॥ समत्प°.

१ बी °तः म°. २ ए °नाकार°. ३ बी °त्प्रिधा सु°. ४ सी °ति भ्रशा°. ५ बी °मान्कु°. ६ ए °तोपिसो°. ७ ए °मः ॥ स सां म्र°. ८ बी °तिर्मृदी°. सी °तिर्मदी°. ९ ए दुतर ए°. १० सी °शिऽति°. ११ बी सी °प्रभत्वे°. १२ सी वान्नकु°. १३ सी एवातिप°.

स परिव्रढयन्परिव्रढिष्ठं सद्रढिमम्रदिमानमत्र भूपम् ।
विभवप्रथिमापहारशङ्कां कृशयन्भूयिष्ठादभूय[य]त्स्वम् ॥६०॥

६०. स मत्पतिः स्वं धनं भूयिष्ठादतिबहोरपि स्वात्सकाशादभूययदनेकवणिग्भिर्बहूचक्रे । यतो विभवप्रथिमापहारशङ्कां कृशयन्कृशीकुर्वन् । मुञ्चन्नित्यर्थः । एतदपि कुत इत्याह । यतोत्र देशे नृपं परिव्रढयन्वास्तव्यीभवनेन प्रभूकुर्वन् । किंभूतम् । सद्रढिमम्रदिमानं द्रढिम्ना प्रजारक्षासामर्थ्येन म्रदिम्ना च निर्लोभत्वोत्थेन सदयहृदयत्वेन सहितमत एव परिव्रढिष्ठमुत्कृष्टप्रभुम् ॥ औपच्छन्दसकम् ॥

बहयन्स्वधर्मं वसु भावयंश्च
स्थवयन्विलासान्सुखभूम्नि मग्नः ।
कुधियां दविष्ठो विपदां दवीयान्
स निनाय भूयः समयं यवीयान् ॥ ६१ ॥

६१. यवीयानतियुवा स मत्पतिर्भूयःसमयमतिबहुकालं निनायातिचक्राम । कीदृक्सन् । कुधियां मूर्खाणां कुत्सितानां बुद्धीनां वा दविष्ठोतिदूरोत एव विपदां दवीयानतिदूरोत एव स्वधर्मं बहयन्बहूकुर्वंस्तथा वसु द्रव्यं भावयंश्च बहूकुर्वंश्च । तथा विलासाञ् शृङ्गारचेष्टाविशेषान्स्थवयन्नुपचितीकुर्वन् । यथावसरं धर्मार्थकामान्सेवमान इत्यर्थः । अत एव च सुखभूम्नि सुखबाहुल्ये मग्नः ॥ केकिरवं छन्दः ॥

---

१ बी °मत्रहिमा°. २ ए °प्रतिमा°. बी °प्रथमा°. ३ सी °यद्भूयि°.

---

१ सी °ढिमा प्र°. २ सी °रिवृढमु°. ३ बी °क ॥ ब°. ४ ए दां पद°. ५ ए सी °कुर्वंस्त°. ६ बी °न्स्थन्नु°. ७ ए °मान्नासेव°. ८ सी °खबा°. ९ बी °ल्येन म°.

अस्थवीय इह सोस्थविष्ठधीः क्षोदयद्यवयदन्ययौवतम् ।
क्षेपयच्च दवयन्नजीजनत्स्वोपमं मयि यविष्ठ आत्मजम् ॥६२॥

६२. स यविष्ठोतियुवा मत्पतिरिह देशे वसन् स्वोपममात्मतुल्यमात्मजं मय्यजीजनत् । कीदृग्वसन् । अस्थविष्ठधीरस्थूलबुद्धिः । दीर्घदर्शीत्यर्थः । अत एवान्ययौवतं दवयन्दूरीकुर्वन् । परदारसङ्गं वर्जयन्नित्यर्थः । कीदृशम् । अस्थवीयः कृशाङ्गम् । रूपपात्रमित्यर्थः । तथा क्षोदयद्यवयत्क्षेपयच्चासतीत्वेन क्षुद्रान्नटविटादीन्यूनत्करुणान्क्षिप्रांश्च सोद्यमानाचक्षाणम् ॥ रथोद्धता ॥

अक्षोदीयानह्रसिष्ठहर्षो विदधे क्षेपीयो महोत्सवं सः ।
ह्रसिमक्षोदिमशातनं ह्रसीयःक्षोदिष्ठानामप्यथार्थदानैः ६३

६३. अथ पुत्रजन्मानन्तरं स मत्पतिः क्षेपीयोतिक्षिप्रं महोत्सवं विदधे । कीदृशम् । ह्रसीयःक्षोदिष्ठानामपि ह्रसीयांसोतिह्रस्वा इ(अ)तिलघवोतिदरिद्रा इत्यर्थः । तथा क्षोदिष्ठा अतिक्षुद्रा अतिनृशंसा व्याधादयो द्वन्द्वे तेषामपि । आसतां ह्रस्वमात्राः क्षुद्रमात्राश्चेत्यपेर्थः । अर्थदानैर्ह्रसिमक्षोदिमशातनं द्रव्यस्यातिबहोर्दानादतिदरिद्राणामप्यतिनृशंसानामपि च दरिद्रत्वनृशंसत्वयोर्विनाशकमित्यर्थः । यतः । कीदृक्सः । क्षुद्रो दरिद्रः कृपणश्चात्यन्तं क्षुद्रः क्षोदीयान्न तथा । ईश्वर उदारश्चेत्यर्थः । तथाह्रसिष्ठहर्षो गुरुतमानन्दः ॥ औपच्छन्दसकापरान्तिका ॥

स्थूलयामि युवयामि शिशुं क्षेपिष्ठमित्यह्रसिताशयवृत्तिः ।
क्षेपिष्ठोपनतसत्पयसिष्ठत्वाभ्यदूरयमहं न हि पुत्रम् ॥ ६४ ॥

---

१ ए °म हि.

---

१ सी °त्मजमजी°. २ ए °बुद्धिदी°. सी °बुद्धिरदी°. ३ बी °वक्षेप°. ४ सी °न्नतट°. ५ बी.सी °स्याति°. ६ ए °ति द°. ७ बी °त्यर्थः.

६४. अहं पुत्रं न हि नैवाभ्यदूरयम्[1] । सदा स्वसमीपस्थमकार्षमित्यर्थः । कीदृक्सती । क्षेपिष्ठमतिक्षिप्रं[2] यथा स्यादेवं शिशुं[3] स्थूलयामि[4] स्थूलं करोमि । तथा युवयामि युवानं करोमि । इत्येवंप्रकारेणा[5]हसिता स्नेहातिरेकादहस्वीकृता विपुलीकृताशयवृत्तिर्मनोरथो यया सा । तथा प्रकृष्टा पयस्विनी पयसिष्ठा तस्या भावः पयसिष्ठत्वम् । क्षेपिम्णा[6] क्षिप्रतयोपनतं[7] स्वयं ढौकितं सन्नीरोगत्व[8]पुष्टिकृत्त्वा[9]दिना शोभनं पयसिष्ठत्वं यस्याः सा । अतिस्नेहात्स्वयं प्रस्नुत[10][11]प्रचुरचारु[12]स्तनेत्यर्थः ॥ स्वागता ॥

सुतं करिष्ठं करयन्त्यवर्धयं
करीयसी स्वं[1] पयसी[यसी] स्वयम् ।
पतिं वसिष्ठं वसयन्त्यहं कदा-
प्यानाययं न ह्यपराः पयीयसीः ॥ ६५ ॥

६५. अहं सुतं स्तन्यपानादिनावर्धयम् । कीदृशी । कर्ता जनको[13]ऽस्यास्याः कर्तृमती[14] प्रकृष्टा कर्तृमती करीयसी । प्रशस्यपितृवंशेत्यर्थः । यद्वा । प्रकृष्टा कर्त्री[15] जनयित्री करीयसी । तथा प्रकृष्टं कर्तृमन्तं करिष्ठं प्रशस्यजनकवन्तं स्वमात्मीयं सुतं करयन्ती कर्तृमन्तं विद्यमानप्रशस्यजनकमाचक्षाणा । यद्वा । प्रकृष्टं कर्तारमव्यक्तालापरिङ्खणा[16]दिबाल[17]-

१ ए °सी स्व°.

१ ए °रम्. २ बी °ष्ठमितिक्षिप्रं य स्या°. ३ सी °शुं क°. ४ ए स्थूलं. ५ सी °रेण ह°. ६ सी °पि प्र°. ७ बी सी °पनंतं. ८ सी सनीरो°. ९ सी °ष्टिकत्त्वा°. १० बी प्रस्थत°. सी प्र ७ं वस°. ११ ए °तथस्तुतप्र°. १२ ए °रुभूत्येत्य°. १३ ए °कोस्तस्या क°. सी °को तस्याः°. १४ सी °ती करी°. १५ सी कत्री क°. १६ ए °रिवणा°. १७ बी °लकौचि°.

ोचितक्रियाणां विधातारं करिष्ठं[1] स्वं सुतं करयन्ती कर्तारमाचक्षाणा त्तदनुकूलाचरणेन कर्तारं कुर्वाणा[2] वा । यद्वा । करिष्ठं प्रकृष्टं[3] जनक-न्तं कर्तारं वा पुत्रस्य जनयितारं स्वमात्मानं करयन्ती कर्तृ-मन्तं कर्तारं वाचक्षाणा । न हि न पुनरपरा अन्याः पयीयसीरति-पयस्विनीः पुत्रस्तन्यपानार्थं कदाप्यानाययम् । कीदृक्सती । वसिष्ठ-मत्यन्तं वसुमन्तमतिद्रव्याढ्यं पतिं भर्तारं वसयन्ती वसुमन्तमाच-क्षाणा । ईश्वरोयं बहुद्रव्यं वो दास्यतीति[4] पुत्रस्य स्तन्यपानाय स्वपति-मत्याढ्यं भणन्तीत्यर्थः । यतः स्वयमेव पयसीयस्यतिपयस्विनी[5] । वंश-स्थेन्द्रवंशयोरुपजातिः ॥

स्नेहेन मां पयसयन्[1] वसवीयसश्च[2]
पुत्रो भवन्स तु जनैर्भृशमित्यतर्कि ।
एष प्रपा वसवयत्पयय[3]ज्जनानां
चक्रे पयिष्ठवसविष्ठशुभा वसीयान् ॥ ६६ ॥

६६. स तु स पुनर्बालको जनैर्भृशमतर्कि । कथमित्याह । एष बालको वसीयानतिवसुमान्सन्प्रपाश्चक्रे[6] । पूर्वभवेकारयदित्यर्थः । कीदृशीः । पयिष्ठवसविष्ठशुभाः[7] पयिष्ठाः शीतलसुरभिसुस्वादुजल-पूर्णघटत्वादतिशयेन पयस्विन्यो वसविष्ठाश्च[8] विशिष्टोपभोग्यगवाक्षो-[9]पवनपुष्पफलशीतलच्छाया[10][11]दिमहर्द्धिकत्वेनातिवसुमत्यो याः शुभा म-

१ ए °सन्. २ ए °यशश्च. ३ ए °सय°.

१ ए °ष्ठं स्वसु°. २ सी °णा । न हि. ३ बी °कृष्टज°. ४ बी सी °स्यति. ५ सी पयीय°. ६ ए °मान्प्र°. सी ७ °स यिष्ठ°. ८ सी °सयि-ष्ठाश्च विशि°. ९ ए °गप°. १० बी सी °तच्छा°. ११ ए °याम°.

नोज्ञास्ताः । केषां कृते । वसवयत्पययज्जनानां व[1]सवयन्तः[2] पयय-न्तश्च वसुमतीः पयस्विनी[3]श्चाचक्षाणा ये जनास्तेषाम् । गवाक्षादि-भिर्महर्द्धिकाः सुपयःपूर्णाश्च प्रपाः क्व सन्तीत्युपभोगेच्छया वदतां लोकानां निमित्तमित्यर्थः । कुत एवं वितर्क इत्याह । यतः स्नेहेन[4] मां पयस्ययन्[5]पयस्विनीं कुर्वंस्तथा [6]वसवीयसो महेभ्यस्य[7] पुत्रश्च[8] भवन् ॥

श्रयामि । श्रेष्ठे । श्रेयसि । इत्यत्र "प्रशस्यस्य[9] श्रः" [ ३४ ] इति श्रः[10] ॥

ज्यायामि । ज्येष्ठे । अत्र "वृद्धस्य च ज्यः" [ ३५ ] इति ज्यः ॥ प्रश-स्यस्य तु ज्यादेशोदाहरणं स्वयं ज्ञेयम् ॥

ज्यायसि । इति "ज्यायान्" [ ३६ ] इति निपात्यम् ॥

साधयिता । साधिष्ठ[11] । साधीयः । नेदयति । नेदिष्टः(ष्ठ) । नेदीयांसः । अत्र "बाढ°" [ ३७ ] इत्यादिना साधनेदौ ॥

प्रिय । प्रेम । प्रापयन्[12] । प्रेष्ठः । प्रेयान् । स्थिरं[13] । अस्थेमाम् । स्थापयन् । [14]स्थेष्ठ । स्थेयः ॥ स्फिर ॥ स्फापयन्[15] । स्फेष्ठ । स्फेयः ॥ उरु । वरिम । वरयेत् । वरिष्ठ । वरीयसीम् ॥ गुरु । गरिमा[16] । गरयेत् । गरिष्ठः । गरीयान् ॥ बहुल । बंहिम । बंहयेत् । बंहिष्ठ[17] । बंहीयः ॥ तृप्र । त्रपिमाणम् । त्रपयन्ती । त्रपि-ष्ठम् । त्रपीयान् ॥ दीर्घ । द्राघिमायाम् । द्राघयेत् । द्राघिष्ठ[18] । द्राघीयः ॥ वृद्ध । वर्षिम्णा । वर्षयितुम् । वर्षिष्ठ । वर्षीयान् ॥ वृन्दारक[19] । वृन्दिमसु । वृन्दयन् ।

---

१ ए °सय°. २ सी °न्तश्च. ३ बी सी °यश्विनी°. ४ ए °न मा प°. ५ सी °ससन्प°. ६ ए सी वर्साय°. ७ बी °भ्यश्च पु°. ८ सी °त्रस्य भ°. ९ बी °स्य श्रः. १० ए बी [illegible] । जाया°. ११ ए बी °धिष्टः । सा°. १२ बी °म् । स्पष्टः । प्रे°. [illegible]स्थिरः । अ°. १४ ए सी स्थेष्टः । स्थे°. १५ सी °न् । स्पष्टः । स्फे°. १६ ए °रिम । ग°. १७ ए बंहीष्ट. १८ सी °घिष्ठः । द्रा°. १९ बी सी °रकः । वृ°.

वृन्दिष्ठ । वृन्दीयान् । अत्र "प्रियस्थिर०" [३८] इत्यादिना प्राद्य आदेशाः ॥ कश्चित्तु करोत्यर्थे णौ प्राद्यादेशान्नेच्छति[1] । तन्मते प्रिययेत्[2] । स्थिरयत् ॥

प्रथिम । प्रथयन् । प्रथिष्ठान्[3] । प्रथीयान् ॥ म्रदिमानम् । म्रदयन् । म्रदिष्ठाम् । म्रदीयान् ॥ भ्रशिम्ना । भ्रशयन् । भ्रशिष्ठान् । भ्रशीयान् ॥ क्रशिम[4][5] । क्रशयन् । क्रशिष्ठ । क्रशीयसः[6] ॥ द्रढिम । द्रढयन् । द्रढिष्ठाम् । द्रढीयान् ॥ परिव्रढिम्ना । परिव्रढयन् । परिव्रढिष्ठम्[7] । परिव्रढीयान् । अत्र "पृथुमृदु०" [३९] इत्यादिना ऋतो रः ॥ केचित्तु वृढशब्दस्यापीच्छन्ति । व्रढिम । व्रढयन् । व्रढिष्ठान् । व्रढीयान् ॥

अभूययत् । भूयिष्ठात्[8] । इत्यत्र "बहोर्णीष्ठे भूय्" [४०] इति भूय् ॥ णौ केचिद्विकल्पमाहुः । अभूययत् । बहयन्[10] ॥ बहोर्णौ[9] भाविति कश्चित् । भावयन् ॥

भूयः । भूम्नि । इत्यत्र "भूर्०" [४१] इत्यादिना भू[11] इत्यादेश ईयसिमनोश्चवर्णस्य लुक् ॥

स्थवयन्[12] । स्थविष्ठ[13][14] । स्थवीयः ॥ दवयन् । दविष्ठः । दवीयान् ॥ यवयत् । यविष्ठः । यवीयान् ॥ ह्रसिम[15] । ह्रसिता[16] । ह्रसिष्ठ । ह्रसीयः ॥ क्षेपिम[17] । क्षेपयत् । क्षेपिष्ठम् । क्षेपीयः[18] ॥ क्षोदिम[19] । क्षोदयत् । क्षोदिष्ठानाम्[20] । क्षोदीयान् । अत्र "स्थूलदूर०" [४२] इत्यादिनान्तस्थादेरवयवस्य[21] लुग्नामिनश्च गुणः ॥

---

१ बी सी °देशं नेच्छ°. २ सी °त् । प्र°. ३ ए प्रतिष्ठा°. ४ सी क्रशम. ५ ए °शिन । क्र°. ६ बी सी क्रसीय°. ७ ए °व्रढी°. ८ ए °ष्ठानित्य°. ९ सी वहो°. १० ए °न् । वाहौर्णौ. [illegible] भूत इ°. १२ सी स्थयय°. १३ सी स्थवी°. १४ ए °विष्टः । स्थ°. [illegible] °सिता. १६ बी °सित । ह°. सी °सि । ह° १७ सी °मपिष्टं । क्षे°. १८ ए °पीय । क्षो°. १९ ए बी °दिमः । क्षो°. २० सी °म् । अ°. २१ ए °दिनां स्था°.

केचित्स्थूलदूरयूनां करोत्यर्थे णौ नेच्छन्ति। स्थूलयामि। अभ्यदूरयम्। युवयामि॥

करयन्ती। करिष्ठम्। करीयसी॥ पययत्। पयिष्ठ। पयीयसीः॥ वसयन्ती। वसिष्ठम्। वसीयान्। अत्र "त्रन्त०" [४३] इत्यादिना तृप्रत्ययान्तस्यान्त्यस्वरादेश्चावयवस्य लुक्॥ विन्मतोर्लुप्यनेकस्वरस्यान्त्यस्वरादेर्लुकं (कं?) विकल्पेनेच्छन्त्येके। लुँगभावपक्षे णौ गुणं चेच्छन्ति। पययत्। पयसयन्। पयिष्ठ। पयसिष्ठत्वा। पयीयसीः। पयसीयसी॥ वसयन्ती। वसवयत्। वसिष्ठम्। वसविष्ठ। वसीयान्। वसवीयसः॥ वसन्ततिलका छन्दः॥

मां लपन्स्रजयितास्रजीयसीमस्रजिष्ठपितरं च सुसितैः।
दाण्डिनायन उ हास्तिनायनो वाशिनायनिरुतेत्यलक्षि सः॥६७

६७. उ हे महारुप स बालकः सौभाग्यादिगुणैः शुद्धब्राह्मणवंशजातत्वेन चालक्षि लोकैरशङ्कि। कथमित्याह। किमयं दण्डिनो हस्तिनो वाशिनो वर्षेरपत्यं बालक इति। कीदृशः। लपन्नव्यक्तमधुरं भाषमाणः सन् सुसितैः कृत्वास्रजीयसीमस्रग्विणीं मामस्रजिष्ठपितरं चास्रग्विणं जनकं च स्रजयिता स्रग्विणं कर्ता॥

स्रजयिता। स्रजिष्ठ। स्रजीयसीम्। अत्र "नैकस्वरस्य" [४४] इत्यन्त्यस्वरादेर्न लुक्॥

---

१ बी °पन्सज°. २ बी °स्रजयीय°. ३ बी °तैः। डांडना°. ४ ए दाण्टैना°. ५ बी °नायुतो वासिना°. ६ ए °यनैरु°.

---

१ ए °मि वार°. २ ए बी °त्. ३ ए °यिष्ठः। प°. ४ सी वशिष्ठ°. ५ ए °सि°. ६ ए °त्र त्या°. बी °त्र त्रं त्या°. ७ बी लुक् भा°. ८ सी °यसीः। व°. ९ सी वशिष्ठ°. १० सी °विष्टः। व°. ११ ए °न्दः। मा ल°. १२ सी वासिनो. १३ ए °णीं त्रीम°. १४ सी स्रजि°.

दाण्डिनायनः । हास्तिनायनः । अत्र "दण्डि०" [ ४५ ] इत्यादि[1]नान्त्यस्वरादेर्लु[2]ग् ॥

वाशि[3]नायनिः । अत्र "वा[4]शिन आयनौ" [ ४६ ] इत्यन्त्यस्वरादेर्न लुक् ॥

रथोद्धता ॥

जैह्मा[1]शिनेयान्निगमाध्वनीना-
त्सामन्यकाथर्वणिकात्स विद्याम् ।
प्रापात्मनीनादथ सौत्वनाच्चा-
दौरात्म्यसद्यौ[2]वनिकां तनूजाम् ॥ ६८ ॥

६८. स पुत्रो जैह्मा[6]शिने[7]याज्जिह्माशिनो ब्राह्मणस्यापत्यात्सकाशाद्विद्यां प्राप । किंभूतात् । अज्ञातः सामनि सामवे[8]दे सान्त्वने वा साधुः [9]सामन्यको य आथर्वणिकोथर्ववेदज्ञस्तस्मात्तथा निगमेषु वेदेष्वर्थादृग्यजुषोरध्वनीनोध्वानमलंगामी यस्तस्माच्चतुर्वेदीविद् इत्यर्थः । तथात्मनीनाद्धार्मिकत्वेनात्मने हितात् । अथ विद्याप्राप्त्यनन्तरमात्मनीनात्सौत्वनाच्च सुत्वनो याज्ञिकस्यापत्यात्सकाशात्तनूजां पुत्रिकां प्राप । किंभूताम् । अविद्यमानं दौरात्म्यं कुरूपत्वनिर्गुणत्वादिना [10]दुष्टं स्वरूपं यस्याः [11]साદौरात्म्या या सद्यौवनिका शोभनयौवना ताम् ॥

जैह्मा[12]शिनेयात् । इ[13]त्यत्र "एये०" [ ४७ ] इत्यादिनान्त्यस्वरादेर्लुग् ॥

---

१ बी °ह्मासिने°. सी °ह्माशने°. २ प °यौथनि°.

---

१ प °दिनां स्व°. २ सी वासिना°. ३ प °नायिन । अ°. ४ सी वासिन आयिनौ. ५ सी °ह्माशने°. ६ प °शिनया°. ७ बी °नेवाजिह्मा°. ८ बी °वेदसा°. ९ प बी सामान्य°. १० सी दुष्टस्व°. ११ बी सादौ°. १२ सी °ह्माशने°. १३ सी इत्यैये.

अध्वनीनात् । आत्मनीनात् । अत्र "ईनेध्वात्मनोः" [४८] इति न लुक् ॥

आथर्वणिकात् । अत्र "इकणि०" [४९] इत्यादिना न लुक् ॥

यौवनिकाम् । अत्र "यूनोके" [५०] इति न लुक् ॥

सामन्य । इत्यत्र "अनोत्र्ये ये" [५१] इति लुप् ॥ अत्र्य इति किम् । दौरात्म्य ॥

सौत्वनात् । इत्यत्र "अणि" [५२] इति लुप् ॥ इन्द्रवज्रा ॥

**शाङ्खिनगाथिनवैदथिनाद्यैः कैशिनपाणिनगाणिनमुख्यैः ।**

**गौणिनवादमदत्त स मैधावस्तनयो मम मङ्क्षु मुदं च ॥ ६९॥**

६९. मैधावो मेधाविनोपत्यं [स] मम तनयः शङ्खिनो गाथिनो विदथिनः केशिनः पा[प]णिनो गा[ग]णिनश्चापत्यैराचार्यैः सह गुणिनां पण्डितानामयं गौणिनो यो वादस्तमदत्तात्यन्तं सर्वशास्त्रवेत्तृत्वादनेकाचार्यैः सह पण्डितवादं चकारेत्यर्थः । तथा सर्वत्र जेतृत्वान्मम मङ्क्षु मुदं चादत्त ॥

शाङ्खिन । इत्यत्र "संयोगादिनः" [५३] इति लुप् । संयोगादिति किम् । मैधावः ॥

गाथिन । वैदथिन । कैशिन । पाणिन । गाणिन । इत्यत्र "गाथि०" [५४] इत्यादिना लुप् ॥

गौणिन । इत्यत्र "अनपत्ये" [५५] इति लुप् ॥ अनपत्य इति किम् । मैधावः ॥ दोधकवृत्तं छन्दः ॥

---

१ ए शान्तिन°. २ बी °द्यैः कौशि°.

---

१ बी °नीत्. २ ए °ध्वानोः. ३ सी °क् । अथ°. ४ ए °त्र क°. ५ बी °ना लु°. ६ सी यूनेके. ७ ए °त्र । इ°. ८ ए °यः शाङ्खि°. ९ ए °यं गोणि°. १० ए °ण्डितं च°. ११ बी °त्र जैतृ°. १२ सी °धाव । गा° १३ ए °दथिनः । कै°. १४ ए °न । गणि°. १५ ए णिन्म°. १६ ए °म् । मेधा°. १७ सी °धावं । दो°.

पालानिवौक्षान्प्रतिवादिनोजयद्दुर्ब्राह्मणान्ब्राह्मरहस्यवेद्यसौ ।
सौषामवद्ब्राह्म्ययुतोपि धीयुतोतिहैतनामो जितचाक्रवर्मणः ७०

७०. असौ मत्पुत्रः प्रतिवादिनो दुर्ब्राह्मणान्परिभवितुकामत्वेन दुष्टचित्तान्द्विजानौक्षानुक्ष्णां संबन्धिनः पालानिव पालकानिव गोपालानिवेत्यर्थः । अजयत् । कीदृक्सन्[1] । ब्रह्मण इयं ब्राह्मी प्रज्ञाहेतुरोषधिः[2] प्रज्ञार्थं तस्या अभक्षणेन तयायुतोपि धीयुतः स्वाभाविकप्रज्ञया युक्त इत्यर्थः । अत एव सौषामवत्सुषाम्नोपत्यं सौषाम ऋषिस्तद्वत् । ब्रह्मणः स्रष्टुरिदं ब्राह्मं[3] यद्रहस्यमुपनिषच्छास्त्रं वेदग्रन्थस्तद्वेदी । अत एव चातिहैतनामो[4] हितनाम्न[5] ऋषेरपत्यं वेदवेदिनमतिक्रान्तस्तथा जित[6]चाक्रवर्मणः ॥ इन्द्रवंशा[7]वंशस्थयोरुपजातिः ॥

स यशो जितहैतनामनस्तन्मैधावो मेधाविरूप्यमापत् ।
कौथुमकालापपैठसर्पास्तैतलजाजललाङ्गलाश्च नो यत् ॥७१॥

७१. मैधावो मेधाविनोपत्यं स[8] मत्पुत्रो[9] जितहैतनामनः सन्मेधाविरूप्यं[10] मेधाविनां भूतपूर्वं तद्यश आपत् । यद्यशो नापुः । के । कुथुमिना कलापिनां[11] च प्रोक्तं वेदं विदन्त्यधीयते वा कौथुमाः[12] कालापाश्च तथा पीठसर्पिण ऋषेरपत्यानि पैठसर्पा[13] द्वन्द्वे[14] ते तथा[15] तैतली[16] जाजली लाङ्गली चाचार्या[17]स्तदुक्ता ग्रन्था[18] अप्युपचारात्तत्तच्छब्दैरुच्यन्ते । तानधीयते तैतलजाजललाङ्गलाश्च महावैदिकाः ॥ औपच्छन्दसकम् ॥

---

१ बी °न् । ब्राह्म°. २ बी °तुरोष°. ३ बी ब्राह्मयं य°. सी ब्राह्म य°. ४ ए °तिहेतुनामो हैतनामं हि°. ५ बी °मो हैतनामं ऋतनाम्न. ६ सी °तच्चक्र°. ७ ए °शास्थ°. ८ सी सत्पु°. ९ बी °त्पुत्रौ जि°. १० ए °रूपं मे°. ११ सी °ना वा श्लो°. १२ बी °माः कला°. १३ बी °न्द्वे त°. १४ ए ते तैतक°. १५ सी तैतिली. १६ बी °ली जांज°. १७ सी चार्या°. १८ सी °न्था उप°.

सौपर्वयुक्सौकरसद्मशिष्यशैलालशैखण्डजितस्तुतोष[1] ।
साब्रह्मचारोस्य जनो गुणेनाश्मोपि द्रवेत्कीदृगनाश्मनो[2] यः ॥७२॥

७२. अस्य मत्पुत्रस्य[1] सब्रह्मचारिणामयं[2] साब्रह्मचारो जनः सहाध्यायिलोको गुणेन महाविद्वत्तादिना तुतोष । किंभूतस्य । सुपर्वणोपत्यं सौपर्वस्तेन युजो युक्ता ये सौकरसद्मशिष्यशैलालशैखण्डजितः । सूकरसद्मापत्यस्य च्छात्रश्च शिलालिशिखण्डिनोरपत्ये च तान्वैदिकद्विजाञ्जयति यस्तस्य । यद्वा[3] किमत्र चित्रं यदस्य गुणेन साब्रह्मचारो जनस्तुतोष । यतो गुणेन कृत्वाश्मोप्यश्मविकारवदतिकठिनहृदयः खलादिरपीत्यर्थः । द्रवेदार्द्रहृदयी[4] स्याद्यस्त्वनाश्मनो नाश्मविकारतुल्यः स्नेहार्द्रचित्तः सज्जनमित्रादिः[5] स कीदृक्सन्नितरां द्रुत एवेत्यर्थः ॥

औक्षान् । इत्यत्र "उक्ष्णो लुक्" [ ५६ ] इत्यन्त्यस्वरादेर्लुक् ॥

ब्राह्म । इत्यत्र "ब्रह्मणः" [ ५७ ] इति लुक्[7] ॥

ब्राह्मी । इत्यत्र "जातौ" [ ५८ ] इति लुक् ॥ पूर्वेण सिद्धे जातावनपत्य एवेति नियमार्थं वचनम् । तेनोत्तरसूत्रेणापत्ये लुग्न । ब्रह्मणोपत्यानि ब्राह्मणान् ॥

सो(सौ)षाम । इत्यत्र "अवर्मणो म्नो(मनो)पत्ये" [ ५९ ] इति लुक् । अवर्मण इति किम् । चाक्रवर्मणः ॥

हैतनामः हैतनामनः । अत्र "हितनाम्नो वा" [ ६० ] इति वा लुक्[8] ॥

मैधावः[9] । अत्र "नोपदस्य" [ ६१ ] इत्यादिना लुक् ॥ अपद इति किम् । मैधाविरूप्यम् ॥

---

१ ए °ष । सब्र°. २ ए °नाश्मनो. सी °नाश्मनेय ॥ अ°.

---

१ बी °स्य ब्र°. २ बी °रिण्याम°. ३ सी °द्वाद: कि°. ४ सी °यी साध्यस्त्वनाश्मना ना°. ५ बी °त्रादि स°. ६ ए °दिः की°. ७ सी °क् । अवर्मण इति कि°. ८ ए °त्य इति लुक्°. ९ बी सी °धाव । अ°.

कालाप। कौथुम। तैतलजाजललाङ्गलाः। शैखण्ड। शैलाल। साब्रह्मचारः। पैठसर्पाः। सौकरसद्म। सौपर्व। इत्यत्र "कलापि०" [६२] इत्यादिना लुक् ॥

आश्मः। अनाश्मनः। अत्र "वाश्मनो विकारे" [६३] इति लुक् ॥

इन्द्रवज्रा ॥

स चार्मकोशस्थगितास्यबाह्योतिशौवसंकोच इहानहंयुः।
गुरोरपार्थक्य इवांह्रिमूलादाह्नं निनाय ह्यहवद् द्व्यहीनः ७३

७३. यथा द्व्यहीनो द्वाभ्यामहोभ्यामधीष्टो भूतो वा द्व्यहं द्वयोरह्नोः समाहारं नयति तथा स मत्पुत्र आह्नं "खादिभ्योञ्" [६.२.२६] इत्यञि अह्नां समूहं निनायात्यवाहयत्। कीदृक्सन्। चार्मश्चर्मणो विकारो यः कोशः प्रत्याकारस्तेन स्थगितो योसिस्तद्वद्बाह्योबहिर्भूतो गुरुहृदयमभ्यस्थः। कुत ईदृगित्याह। यतो गुरोर्मातापित्रादेः पूज्यस्यांह्रिमूलादपार्थक्य इवापृथग्भूत इव। ईदृगपि कुत इत्याह। यत इह गुरोरंह्रिमूले शुनोयं शौवो यः संकोचः शीतादिना संकुचनं तमतिक्रान्तो विनीततमत्वेन नतसंलीनाङ्गत्वादतिसंकुचित इत्यर्थः। ईदृशोपि कुत इत्याह। यतोनहंयुर्विद्याद्यवलेपरहितः। विनयोत्कर्षेण गुरूनावर्जयन्प्रभूतानि दिनानि दिनद्वयवत्सुखेनातिचक्रामेत्यर्थः ॥

चार्मकोश। शौवसंकोचः। अत्र "चर्म०" [६४] इत्यादिनान्त्यस्वरादेर्लुक् ॥

---

१ ए °रोपा°.

---

१ ए °जलाला°. २ सी °ङ्गल शैला°. ३ ए °खण्डः। शै°. ४ ए °महाभ्या°. ५ बी सी °ह्नं स्वादि°. ६ सी °ञि आह्नां. ७ ए शुनेयं. ८ सी °यं शोवाय सं°. ९ ए °नि निदन°. १० सी °कोच। अ°.

बाह्यः । अत्र "प्रायोव्ययस्य" [ ६५ ] इति लुक् ॥ प्रायोग्रहणं प्रयोगानुसरणार्थम् । तेनेह न स्यात् । अपार्थक्यः ॥ पदस्येत्येव । अनर्हंयुः ॥

आह्नम् । अत्र "अनीन०" [ ६६ ] इत्यादिनाह्नोतो लुक् ॥ अनीना[द]टीति किम् । द्व्यहीनः । "रात्र्यहर्०" [ ६. ४. ११० ] इत्यादिनेनः ॥ द्व्यह । "द्विगोरन्नह्नोट्" [७. ३. ९९] इत्यट् ॥ अति(टि?) । अन्वहमित्यादिप्रत्युदाहरणं स्वयं ज्ञेयम् ॥ उपजातिः ॥

**विंशेथ वर्षेस्य पिता विपन्नः शुक्राद्रवेय्यैप सुतोपि दष्टः ।**
**सांकृत्यदौलेयसदाक्षिचौडिकामण्डलेयैः प्रतिबोधितोपि ॥ ७४ ॥**

७४. स्पष्टः । किं तु शुक्राद्रवेय्या शोकसर्पिण्या सुतोपि दष्टोतिशोकातुरोभूदित्यर्थः । सांकृत्यादयो मुनयः ॥ इन्द्रवंशा ॥

**ययावभाग्यैर्मम पाण्डवेयजाम्बेयबाभ्रव्यनिभोथ धाम ।**
**स्वायम्भुवं शाबरजम्बुकं नु स मातृकस्नेहनदीं विलङ्घ्य ॥ ७५ ॥**

७५. अथ शुक्राद्रवेयीदशनानन्तरं ममाभाग्यैरपुण्यैः स पुत्रः स्वायंभुवं स्वयंभुव इदं धाम ब्रह्मलोकं स्वर्गं ययौ । कीदृक् । पण्डोरपत्यानि शुभ्रादित्वादेयणि [ ६. १. ७३ ] पाण्डवेयाः पञ्च पाण्डवास्तथा जम्बूवर्णा

---

१ सी °शुष्काद्रतोष्येप°. २ सी °दाक्षचौ°. ३ ए °क्षिवोडि°. ४ सी °पि सः ॥ स्प°. ५ ए धामः । स्वा°. ६ सी °जम्बूकं. ७ ए °तृकः स्ने°.

---

१ सी बाह्य । अ°. २ सी °पार्थिक्य । प°. ३ सी °तो । अ°. ४ सी °हीन । रा°. ५ बी °नेन । द्व्य°. सी °नेम । द्व्य°. ६ सी °रनह्नो°. ७ बी °जाति ॥ विं°. सी °जाति । विशे°. ८ ए °तिः । वंशे°. ९ सी °द्रव्येय्या°. १० सी °पिण्य सु°. ११ ए °वज्राः । य°. १२ [illegible]ग्यैः स. १३ सी °पुण्यै पुत्र स्वा°. १४ सी °वर्णगौ°.

गौ[1]र्जम्बू[2]स्तस्या[3] अपत्यं चतुष्पाद्भ्य एयञि [६. १. ८३] जाम्बवेयो बाभ्रव्यश्च ऋषी बलविद्वत्त्वादिना तैर्निभस्तुल्यः। किं कृत्वा ययौ। मातुरागतो मातृको यः स्नेहः स एव संततं प्रवाहित्वान्नदी तां विलङ्घ्यावगणय्येत्यर्थः। यथा कश्चि[4]न्नदीं मार्गसिन्धुं विलङ्घ्य शवरजम्ब्वां देशे भवम् "उवर्णात्" [६. ३. २९] इ[5]तीकणि शाव[6]रजम्बुकं ग्रामं याति ॥ उपजाति(तिः) ॥

अन्धौ[1] दौ[2]ष्कोध(ध्व)न्यधानुष्कसार्पि-
ष्[3]को यद्वदाकस्मिकं याति नाशम्।
शाकृत्क्ये[4]पाशाश्वतिक्यङ्गयष्टि-
स्तद्व[5]त्किं[6] तां धारयिष्याम्यनाथा ॥ ७६ ॥

७६. यद्वद्यथा दौ[8]ष्को दोर्भ्यां[9] तरन्न[10]रोऽन्धदोर्भ्यां तरीतुमशक्यत्वादन्धावाकस्मिकमकस्माद्भवं नाशं याति विनश्यति। यथा वाधानुष्को न धनुःप्रहरणो यः[11] सा[12]र्पिष्कः सर्पिष्पण्यः स धनुःप्रहरणाभावात्स[13]र्पिःसद्भावाच्च स[14]र्पिर्लु[15]ण्टनाय निःशङ्कं चौरपातेनाध्वन्याकस्मिकं नाशं याति तद्वत्। तथा शा[16]कृत्की शकृता विष्ठया संसृ[17]ष्टैषा प्रत्यक्षाङ्गयष्टिरा[18]कस्मिकं नाशं याति। यतोऽशाश्वतिक्यशा[19]श्वती तस्मात्तां विनश्वरीमङ्गयष्टिमनाथा पतिपुत्ररहिता सत्यहं किं धारयिष्यामि नैवेत्यर्थः ॥

---

१ सी °न्धौ दौष्को°. २ प दौष्वोध°. ३ प °र्पिपो य°. ४ प °पाश्वाश्वतिकिङ्ग°. ५ प °द्वकिं ता धा°. ६ सी °त्कि ता धा°.

---

१ प गौजम्बू°. २ बी °म्बृ तस्या°. ३ सी °स्याप°. ४ प सी °न्नदी मा°. ५ सी °र्णादिकण् इ°. ६ प इक°. ७ प °रजाम्बु°. ८ प °था दोष्वो दो°. ९ बी दौष्को दोर्भ्या तरा°. सी दोर्भ्या त°. १० प °रोऽन्धदोर्भ्या तरी°. ११ सी °यः सर्पि°. १२ बी °पिष्क स°. १३ प °त्सर्पिलुण्ट°. सी °त्सर्पिस°. १४ बी °र्पिलुण्ट°. १५ सी °लुटना°. १६ सी °कृतकी श°. १७ प °सष्टा प्र°. १८ बी °कस्मिकं. १९ बी °शास्वती°.

विंशे । अत्र "विंशतेस्तेर्डिति" [ ६७ ] इति तेर्लुक् ॥

दक्ष । दाक्षि ॥ चूडा । चौडि । बाह्वादित्वादिञ् ॥ इवर्ण । सांकृत्य । गर्गादित्वाद्यञ् । दुली । दौलेय । "द्विस्वरादनद्याः" [ ६. १. ७१ ] इत्येयण् । अत्र "अवर्णेवर्णस्य" [ ६८ ] इत्यवर्णेवर्णयोर्लुक् ॥

कामण्डलेयैः । देवीविवक्षायां "ङ्याप्त्यूङः" [ ६. १. ७० ] इत्येयण् । गवि तु "चतुष्पाद्भ्यः" [ ६. १. ८३ ] इत्येयञ् । जाम्बेय । इत्यत्र "अकद्रू०" [ ६९ ] इत्यादिनोवर्णस्य लुक् ॥ अकद्रूपाण्डोरिति किम् । काद्रवेयैः । शुभ्रादित्वादेयण् [ ६. १. ७३ ] । पाण्डवेय ॥

बाभ्रव्यः । इत्यत्र "अस्वयंभुवोव्" [ ७० ] इत्यव् । अस्वयंभुव इति किम् । स्वायंभुवम् ॥

ऋवर्ण । मातृक ॥ उवर्ण । शावरजम्बुकम् ॥ दोस् । दौष्कः ॥ इस् सार्पिष्कः ॥ उस् । धानुष्क । त् । शाकृत्की । अत्र "ऋवर्ण०" [ ७१ ] इत्यादिनेकस्येतो लुक् ॥ शश्वदकस्मात्प्रतिषेधः किम् । शाश्वतिकी । "वर्षाकालेभ्यः" [ ६. ३. ८० ] इतीकण् । आकस्मिकम् । अध्यात्मादित्वादिकण् [ ६. ३. ७८ ] शालिनी ॥

**अथ नृपो पुत्रमृतस्य गृह्णात्यर्थेपि नास्थेत्ययि गच्छ गच्छ ।**
**मा जल्प मा जल्प तवेति जल्पन्त्यगे स्वमुल्लम्बयितुं प्रवृत्ता ॥७७॥**

१ ए °यितुं प्रवृत्ता । की°.

१ ए °विंश अ°. २ बी सी °रतेर्डिति°. ३ ए °ति स्तेलु°. सी °तिलु° ४ ए °चूड । चौ°. ५ ए °र्णयोलुक्. ६ सी इवर्ण°. ७ ए सी °वि च ८ बी सी °क्ष्यः एण्य°. ९ ए °म् । शु°. १० ए °येयी । शु°. ११ ए °वेयः । बा°. १२ सी °भ्रव । इ°. १३ ए °त्र स्व°. १४ बी अश्वयं १५ ए °मृ । दोष्वः । इ°. १६ ए °पिष्टः । उ°. सी °पिष्क । उ°. १७ °नुष्व । त. १८ सी °कृत्तिका । अ°. १९ ए शास्वति°.

* बी पुस्तके ९३ तमपद्यटीकास्थधनुश्चिह्नपर्यन्तं पत्राणि न सन्ति.

७७. तदा सा स्त्री अग्रे वृक्षे स्वमुल्लम्बयितुं प्रवृत्ता । कीदृक्सती । जल्पन्ती । किमित्याह । अपुत्रः सन्यो मृतस्तस्यार्थं नृपो गृह्णातीति हेतोरर्थेपि धनेपि विषये[1] नास्था न ममाशास्ति[2,3] । तस्मादयि हे महा-पुरुष मद्धेतुको तवापि काप्यापन्मा स्म भूदिति त्वं गच्छ गच्छ । तथा कोपि श्रोष्यतीति मा जल्प मा जल्पेति ॥

गच्छ गच्छ । मा जल्प मा जल्प । इत्यत्र "असकृत्संभ्रमे" [ ७२ ] इति पदस्य वाक्यस्य च द्विरुक्तिः ॥ उपजाति(तिः) ॥

आच्छिन्द्ध्याच्छिन्द्धीत्याच्छिदत्पाशमस्याः[1]
शोचं शोचं तामित्यवोचच्च भूपः ।
राजायं तेर्थं न ग्रहीता ग्रहीता
स्तोकं स्तोकं श्रद्धीयतां मद्वचोपि[2] ॥ ७८ ॥

७८. स्पष्टम् । किं तु पाशं गलबन्धनवस्त्रमाच्छिन्द्ध्याच्छिन्द्धी-त्याच्छिदत् । भृशं बलात्कारेणोद्दालितवान् । शोचं शोचमभीक्ष्णं स्वं निदि(न्दि)त्वेत्यर्थः । अयमत्रत्यो राजा । अथ चायं प्रत्यक्षो मल्लक्षणो राजेत्यपि राज्ञा व्यञ्जितम् । न ग्रहीता ग्रहीताविच्छेदेन सदा न ग्रही-ष्यति ॥ वैश्वदेवी[6] छन्दः ॥

कुरुते कुरुतेतमां दयां यन्नृपतिर्मोक्ष्यति तत्परासुवित्तम् ।
स्थेयाः पतिपुत्रयोः प्रदातुं पयसः पुत्रि घटं घटं हि नित्यम् ॥७९॥

७९. यद्यस्मान्नृपतिरत्रत्यो राजा सकलपृथ्व्याममार्याघोषणाकारि-त्वाद्दयां[7] [कुरुते] कुरुतेतमां भृशमभीक्ष्णमविच्छेदेन वात्यन्तं कुरुते ।

१ ए °त्पाशोम°. २ सी °पि । पेशं°. ३ ए पुत्र घ°.

१ ए °वि ना°. २ ए मनाशा°. ३ सी °मारथास्ति°. ४ ए °का का तवापि क्याप्या°. ५ ए कोष्य श्रो°. ६ सी °बी । कु°. ७ ए °त्वादयां.

तत्तस्मा[?]रासुवित्तं मृतस्य द्रव्यं मोक्ष्यति । तस्माद्धे पुत्रि पयसो जलस्य[1] प्रत्येकं घटं घटमेकैकं घटं हि स्फुटं नित्यं परलोकगतयोः पति-पुत्रयोस्तर्पणाय प्रदातुं स्थेयाः । द्रव्यापहारशङ्कां मुक्त्वैतयोः परेतकार्याणि कर्तुं तिष्ठेत्यर्थः ॥

भृशे । आच्छिन्दाच्छिन्दीत्याच्छिंदत्॥ आभीक्ष्ण्य(क्ष्ण्ये ?)[4] । शोचं शोचमवोचत् ॥ अविच्छेदे । न ग्रहीता ग्रहीता[5] । इत्यत्र "भृश०" [७३] इत्यादिना द्विरुक्तिः ॥ भृशादयश्च क्रियाधर्मा इति क्रियापदमेवात्र संबध्यते । क्रियाविशेषणस्यापि क्रियात्वेनाध्यवसायाद्भृशादियोगे द्विर्वचनं स्यात्[6] । यथा स्तोकं स्तोकं श्रद्धीयताम् । प्राक्तमबादेरिति किम् । कुरुते कुरुतेतमाम् । अत्र तमबादेराति-शयिकात्पूर्वमेव[7] द्विर्वचनं पश्चात्तमबादिरन्यथा ह्यनियमः स्यात् ॥

पतिपुत्रयोः पयसो घटं घटं प्रदातुम् । अत्र "नाना०" [७३] इत्यादिना द्विरुक्तिः[8] ॥ औपच्छन्दसकम् ॥

**कुर्वत्यनिशं नमो नमस्त्वं ज्येष्ठं ज्येष्ठमनु प्रसादयर्षीन् ।**
**कतरा कतरा त्वदीशसून्वोर्विपदेवं जनवाचि मा स्म रोदीः ॥८०॥**

८०. हे पुत्र्यनिशं सदा नमो[9] नमोधिकं नमस्कारं कुर्वती[10] सती त्वमृषीन् ज्येष्ठं ज्येष्ठमनु प्रसादय ज्येष्ठानुक्रमेण मुनीन्संतोषय द्रव्यापहारशङ्कां[11] मुक्त्वा सदा गुरुसेवादिधर्मकृत्यानि कुर्वित्यर्थः । तथा त्वदीशसून्वोस्त्वत्पतिपुत्रयोः[12] कतरा कतरा विपत् । आधिविपद्व्याधिव्या(वि)-

१ सी °स्य घटं प्रत्येकमेकं घ°. २ सी °टं स्फुटं हि नि°. ३ सी °च्छिन्दत् । अभी°. ४ ए °भीक्ष्ण । शो°. ५ सी °ता । इ°. ६ सी °त् । तथा. ७ ए °शयका°. ८ सी °क्तिः । कु°. ९ सी °मोधि°. १० सी °ती त्व°. ११ सी °शङ्का मु°. १२ सी °न्वोस्त्वदीशपु°.

पदोर्मध्ये[1] का मृत्युहेतुर्विपदभूदित्यर्थः । एवंप्रकारेण जनतावाचि[2] लोकस्य प्रश्नवाक्ये सति तयोर्विपस्म(स्म)रणेन[3] मा[4] स्म रोदीः ॥

**कतमा कतमानयोर्विभूतिः कतमन्निह्नुतमीश्वरत्वमस्ति ।**
**कतमत्कतमत्प्रकाशमेवं न खलु प्रक्ष्यति पुत्रि राजना त्वाम् ॥८१॥**

८१. स्पष्टम् । किं त्वनयोस्त्वत्पतिपुत्रयोः कतमा कतमा विभूतिरस्ति[5] किं रत्नसंबन्धकृतोत स्वर्णरूप्यादिसंबन्धकृताहोस्विदुभयसंबन्धकृतेत्यर्थः[6][7] । निह्नुतं गुप्तं निधानीकृतमित्यर्थः[8] । ईश्वरत्वमैश्वर्यं[9][10] विभूतिरित्यर्थः[11] । राजना राजपुरुषः ॥

नमो नमः । ज्येष्ठं ज्येष्ठमनु प्रसादयर्षीन् । इत्यत्र "आधिक्य०" [ ७५ ] इत्यादिना द्विरुक्तिः ॥

त्वदीशसून्वोः कतरा कतरा विपत् । कतमा कतमानयोर्विभूतिः । अत्र "डतर०" [ ७६ ] इत्यादिना द्विरुक्तिः ॥ स्त्रीग्रहणं किम् । अनयोः कतमदीश्वरत्वम् ॥ केचिड्डतरडतमाभ्यां स्त्रीलिङ्गाच्चान्यत्रापीच्छन्ति । अनयोः कतमत्कतमदीश्वरत्वम् ॥

**प्रथमं प्रथमं पुत्रि मा स्म भुक्थाः पूर्वं पूर्वं भोजयेर्गुरूंस्त्वम्[1][2][3] ।**
**अनुपोपप्लवमायुरभ्यतीयाः प्रप्रशमं संसंश्रयत्य(न्त्य)खण्डम् ॥८२॥**

८२. हे पुत्रि प्रथमं प्रथमं गुरुभ्यः[12] पूर्वतरं त्वं मा स्म भुक्थाः किं तु पूर्वं पूर्वं स्वस्मात्पूर्वतरं गुरून्भोजये राजोपद्रवाभावेन प्रभूतं[13]

१ ए °न त्वा°. २ ए °जयोर्गु°. ३ सी °र्गुरूस्त्व°.

१ सी °दोमध्ये. २ ए °जनिता°. ३ सी °पस्मर°. ४ सी °मा रो°. ५ ए °स्ति कं र°. ६ ए °होश्विदु°. ७ सी °कृत्येत्य°. ८ ए °निधनी°. ९ सी °धामीकृ°. १० ए °श्वर्य वि°. ११ सी °भिक इ°. १२ सी °गुरुः पूर्वं मा. १३ सी °तं स्वं ध°.

स्वधनं गुरुभोजनादिना धर्मकार्येण सफलयेरित्यर्थः । तथा नास्त्युपोपप्लवो राजादिकृतो धनापहारादिरुपद्रवो यत्र तद्यथा स्यादेवमखण्डं वृक्षादावुद्बन्धनादिनापमृत्योरकरणेन परिपूर्णं निष्कलङ्कं वायुरभ्यतीया गच्छेः । कीदृक्सती । प्र[प्र]शममुपशान्तिं शोकोपशमेनेन्द्रियविजयेन च मनःसमाधिमित्यर्थः । संसंश्रयन्ती ॥ औपच्छन्दसकापरान्तिका ॥

**उपर्युपर्यार्तिमिमामथोच्चैः स इत्युदुद्बोध्य तरूनधोधः ।**
**चिकीर्षुरध्यध्युपकारमार्तमार्तं च पाता स्वगृहाञ्जगाम ॥ ८३ ॥**

८३. अथ राजा तरूनधोधो वृक्षाणामासन्नः सन्स्वगृहान्स्वसौधं जगाम । गृहा(हाः) पुंसि च भूम्न्येवेति गृहस्य पुंस्त्वम् । किं कृत्वा । आर्तिमुपर्युपरि धनापहारशङ्कोत्थस्य दुःखस्यासन्नामिमां स्त्रियमित्युक्तरीत्योच्चैरत्यन्तमुदुद्बोध्य संबोध्य सुखीकृत्येत्यर्थः । यतः । कीदृक् । आर्तमार्तं दुःखितं दुःखितं पाता दुःखेभ्यो रक्षिता । तथार्तं(थार्त?)मध्यध्युपकारमुपकारस्यासन्नं चिकीर्षुश्चौ(श्चो)पचिकीर्षुरित्यर्थः ॥ उपजातिः ॥

**पुरे पुरे स्वस्य हठापहृत्यासुतोसुतो दुःस्थ इति स्मरन्सः ।**
**अथ प्रजा(जां) नन्दयितैकैक एकाममात्यमेकैकमिति न्यदिक्षत् ८४**

१ ए °र्यार्तिऽपमृत्योमिमेमेथो°. २ ए °पकृत्या°. ३ सी °कमेकमामात्यमैकै°.

१ ए °रत्युप°. २ ए °शमिने°. ३ सी संश्र°. ४ सी °काजाति । उ°. ५ ए °त्वातमु°. ६ सी °यगिमि°. ७ ए °रत्यंमु°. ८ सी °ध्य सु°. ९ सी °कृत्वेत्य°. १० ए °र्थः । की°. ११ ए °खित°. १२ ए °मार्त्तम°. १३ सी °रस्या°. १४ ए °पुरि°. १५ सी °जाति । पु°.

८४. स्पष्टम्[1] । किं तु स्वस्य द्रव्यस्य । असुतोसुतो[2] निष्पुत्रो[3] निष्पुत्रः । स राजा । एक एकां सर्वामित्यर्थः । प्रजां[4] नन्दयितासुतद्रव्यस्य हठापहृतेर्निवारणेच्छयाह्लादयिता सन्नेकैकममात्यमिति[5] वक्ष्यमाणरीत्या न्यदिक्षत् ॥

पूर्वं पूर्वं भोजयेर्गुरून्[6] । प्रथमं प्रथमं मा स्म भुङ्क्थाः । अत्र "पूर्व०" [ ७७ ] इत्यादिना द्विरुक्तिः ॥

प्रप्रशमम्[7] । अनुपोपप्लवम् । संसंश्रयन्ती । उदुद्बोध्य । इत्यत्र "प्रोप०" [७८] इत्यादिना द्विरुक्तिः ॥

तरूनधोध(धः)[8] । अध्यध्युपकारम् । उपर्युपर्यार्तिम् । अत्र "सामीप्येधोध्युपरि" [ ७९ ] इति द्विरुक्तिः ॥

क्रियया वीप्सायाम् । आर्तमार्तं पाता ॥ गुणेन । असुतोसुतो दुःस्थः ॥ द्रव्येण । पुरे पुरेसुतः[10] । अत्र "वीप्सायाम्" [ ८० ] इति द्विरुक्तिः ॥

एकैकम् । अत्र "लुप् च०" [ ८१ ] इत्यादिना द्विरुक्तस्यैकस्यादौ य एकस्तत्सक(स्क?)स्यादेः लुप् ॥ एक एकाम्[11] । अत्र विरामस्य विवक्षितत्वात्[12] पुंवद्भावे सति संधिकार्यं न स्यात् ॥ उपेन्द्रवज्रा[13] ॥

**द्वन्द्वं हीनाः सन्तु लक्षा मदाये द्वाभ्यां द्वाभ्यां कोटयो वाथ निम्नाः।**
**ग्राह्यं वित्तं न त्वसूनोः परासोरेतद्द्वन्द्वं[1] निर्दिशामो भवद्भ्यः ॥८५॥**

१ ए °रेतं द्वन्द्वं.

१ सी °स्पष्टः । किं. २ सी °तो नि°. ३ ए °ष्पुत्रः°. ४ ए प्रजा न°. ५ सी °कमामा°. ६ ए °येद्गुरू°. ७ ए प्रशप्र° सी प्रश°. ८ ए °नवधोवः । अ°. ९ ए °धोध्यर्प°. १० ए °रेसु°. ११ सी °एकम्°. १२ ए विविक्षि°. १३ ए °न्द्रका । द्व°.

८५. अहो अमात्या मदाये मदीय आयपदे ये द्रम्मादीनां लक्षाः स्युस्ते द्व द्वं द्वाभ्यां द्वाभ्यां लक्षाभ्यां हीना न्यूनाः सन्तु । अथ वा मदाये याः कोट्यो भवन्ति ता द्वाभ्यां द्वाभ्यां कोटिभ्यां निम्ना हीना(नाः) सन्तु । तु परमसूनोः परासोर्वित्तं भवद्भिर्न ग्राह्यम् । एतद्द्वन्द्वं रहस्यं भवद्भ्यो निर्दिशामो वदामः ॥ शालिनी ॥

ये द्वन्द्वमत्राचतुरं त एव द्वन्द्वं विभिन्ना मृतवित्तलुब्धाः ।
द्वन्द्वं प्रयुङ्क्ते य उ यज्ञपात्राण्यन्यः समस्तेन तदस्मि शास्मि ॥८६॥

८६. उ हे अमात्या अत्र भुव्याचतुर्भ्यः "शरदादेः" [ ७. ३. ९२ ] इत्यति आचतुरं ये द्वन्द्वं मैथुनाय द्वौ द्वौ भवन्ति माता पुत्रेण पौत्रेण प्रपौत्रेण तत्पुत्रेण च मैथुनं यातीत्यर्थः । मृतवित्तलुब्धा मृतद्रव्याभिलाषुका नरास्त एव पशव एव द्वन्द्वं विभिन्ना द्वैराज्येन पृथग्भूताः । एके मृतवित्तलुब्धा मृतद्रव्यग्रहणस्य निन्द्यतमकार्यस्य करणेन निर्विवेकत्वाच्छृङ्गपुच्छपरिभ्रष्टा नृरूपाः पशवोपरे तु शृङ्गपुच्छादिमन्त इत्यर्थः । अन्यो मृतवित्तलुब्धेभ्योपरः पुनस्तेन तुल्यो यो याज्ञिको द्वन्द्वं यज्ञपात्राणि प्रयुङ्क्ते यज्ञक्रियासु द्वे द्वे यज्ञपात्रे व्यापारयतीत्यर्थः । मृतवित्तानभिलाषी तु पुण्यपात्रत्वाच्छ्लाघ्यतमत्वाच्च याज्ञिकतुल्यः स्यादित्यर्थः । तत्तस्माद्धेतोरस्म्यहं शास्मि मृतवित्तं भवद्भिर्न ग्राह्यमित्यादिशामि ॥

द्वन्द्वं हीनाः । इति "द्वन्द्वं वा" [ ८२ ] इति वा निपात्यम् । पक्षे । द्वाभ्यां द्वाभ्यां निम्नाः ॥

१ सी °ज्ञपत्रा°. २ ए °ण्यन्य स°.

१ सी °भ्यां ल°. २ ए °भ्यां को°. ३ ए °मः ॥ ये°. ४ सी °रहं. ५ सी °भ्यां रभिन्ना । र°.

रहस्ये । द्वन्द्वं निर्दिशामः ॥ मर्यादोक्तौ । आचतुरं ये द्वन्द्वम् ॥ व्युत्क्रान्तौ । द्वन्द्वं विभिन्नाः ॥ यज्ञपात्रप्रयोगे । द्वन्द्वं यज्ञपात्राणि प्रयुङ्क्ते । अत्र "रहस्य०" [ ८३ ] इत्यादिना द्वन्द्वमिति निपात्यते ॥ इन्द्रवज्रा:(ज्रा) ॥

द्वन्द्वं विजित्य शिववैश्रवणौ स्थितस्य
वाच्यस्य तेथ न न कुर्म इति स्म नाहुः ।
छायां दधुर्न खलु कालिककालिकां स-
ज्जातीयबुद्धय उपाददिरे तदाज्ञाम् ॥ ८७ ॥

८७. अथ तेमात्या वाच्यस्य सुराजत्वेन युक्तायुक्तं वक्तुं शक्यस्यापि राज्ञः पुरो न न कुर्म इति नाहुः स्म मनसा पीड्यमानत्वेन मृतवित्ताग्रहणाज्ञां नैव कुर्म इति नोचुरित्यर्थः । कीदृशस्य । द्वन्द्वं शिववैश्रवणावत्यन्तं सहचरौ शंभुधनदौ विजित्यैवं परोपकारितोदाराशयत्वादिगुणोत्कर्षेण पराभूय स्थितस्य वर्तमानस्य । ननु राज्ञो मुखदाक्षिण्येनेदं नोक्तं भविष्यति । मनस्यरुच्या तु मुखं कृष्णं कृतं भविष्यति । नेत्याह । काल्येव कालिका कालिकायाः सदृशी कालिककालिका तां मनस्यरुच्या कृष्णां छायां मुखकान्तिं च न खलु दधुः । किं तु तदाज्ञामुपाददिरेङ्गीचक्रुः । यतः । सती प्रकारोस्याः सज्जातीयातुच्छत्वेन स्वामिशुभाभिप्रायबहुमानिनीत्वेन च शोभना बुद्धिर्येषां ते ॥

द्वन्द्वं शिववैश्रवणौ । अत्र "लोक०" [ ८४ ] इत्यादिना द्वन्द्वमिति निपात्यम् ॥

न न कुर्मः । अत्र "आबाधे" [ ८५ ] इति द्विरुक्तिः ॥

---

१ सी द्वंद्वं वि°. २ सी °पात्यंते । द्वं°. ३ सी °ति चु°. नौ ४ प °वश्रैव°. ५ प °ष्णं भ°. ६ प °लिकाः कृा°.

काल(लि)ककालिकाम् । अत्र "न वा गुणः" [ ८६ ] इत्यादिना द्विरुक्तिः । तत्र चाद्यो स्यादेः लुप् । सा च रित् । रित्करणं प्रतिषिद्धस्य पुंवद्भावस्य रितीति विधानार्थम् । तेनात्र कोपान्त्यत्वात्पुंवद्भावप्रतिषेधेपि "रिति" [ ३. २. ५८ ] इति पुंवद्भावः ॥ वाग्रहणात्पक्षे जातीयरपि । सज्जातीय ॥ वसन्ततिलका ॥

इत्यादिशक्षि(त्क्षि)तिपतिः स यथा प्रियप्रि-[1]
येण व्यधुः सुखसुखेन तथा ह्यमात्याः ।
त्यागी प्रियेण परिपर्यसुतः सुखेन
दाताथ वा परि[2] बलेः क इति ब्रुवाणाः ॥ ८८ ॥

८८. स क्षितिपतिर्भैमिर्यथा[3] प्रियप्रियेणाक्लेशेनेति पूर्वोक्तरीत्या मृतवित्ताग्रहणविषयेमात्यानादिशत् । तथा हि तथैवामात्याः सुखसुखे-[4]नाक्लेशेन नृपादेशं व्यधुः । कीदृशाः सन्तः । भैमेरौदार्यातिशयरञ्जितत्वेन ब्रुवाणाः । किमित्याह । असुतः परिपर्यसंख्यस्याप्यपुत्रमृतद्रव्यस्यैवं लीलयैव मोक्षणादमुं भैमिं विना प्रियेण सुखेन त्यागी दाता कोथ वा बलेः परि बलिं विना सुखेन[5] को दाता भैमिबली मुक्त्वात्र[6] न कोपि त्यागीत्यर्थ इति ॥

प्रियप्रियेण प्रियेण । सुखसुखेन सुखेन । इत्यत्र "प्रिय०" [ ८७ ] इत्यादिना वा द्विरुक्तिस्तत्र चाद्ये स्यादेः लुप् ॥

परिपर्यसुतः । परि बलेर्दाता । इत्यत्र "वाक्यस्य०" [ ८८ ] इत्यादिना वा द्विरुक्तिः ॥

---

१ सी प्रिये°. २ सी °रिकलेक.

---

१ सी °प् सो च. २ सी °षेप रि°. ३ ए °ति भैमि°. ४ ए °सुखाक्ले°. ५ सी °न दाता को भै°. ६ ए °त्र प्रिय १°.

राजन्राजन्नृधव नृधवास्येकवीरः पृथिव्यां
न्यायिन्न्यायिन्बुध बुध जहि प्राग्नयं दुर्नियुक्त ।
सौजः [सौजः] खल खल कले वेत्स्यदो दुष्ट दुष्ट
क्षुद्र क्षुद्रेत्यजनि जनतावाद उच्चैस्तदानीम् ॥ ८९ ॥

८९. तदानीमपुत्रमृतवित्तत्यागकाल उच्चैरुत्कृष्टो जनतावादो लोकोक्तिरजनि । कथमित्याह । हे राजन् राजन् हे नृधव नृधव नराणां भर्तः कुमारपालासि त्वं पृथिव्यामेकवीरः । केनाप्यकृतपूर्वस्यापुत्रमृतवित्तत्यागस्य करणान्निरुपमो दयावीरो दानवीरश्चेत्यर्थ इति । तथा हे न्यायिन्न्यायिन्न्यायवन्मन्य हे बुध बुध पण्डितंमन्य दुर्नियुक्त दुष्टस्यापुत्रमृतवित्तस्य ग्रहणेन दुष्टाधिकारिन्दुष्टामात्य प्राग्नयमपुत्रवित्तग्रहणरूपां प्राक्तनीं नीतिं जहि त्यजेति । तथा रे [सौजः] सौजो बलिष्ठ तथा सर्वंकपत्वाद्रे खल खल तथा रे दुष्ट दुष्टापुत्रमृतस्वापहारादिदोपयुक्त तथा लोकानां महाकष्टे पातुकत्वेन रे क्षुद्र क्षुद्र कले कलिकालाद एतदपुत्रमृतवित्तत्यागलक्षणं त्वदीयसौजस्त्वादीनां निषूदनं राज्ञः सन्न्यायाचरितं वेत्सीति च ॥

संमतिः कार्येष्वाभिमत्यं पूजनं वा तत्र । राजन्राजन्नृधव नृधवास्येकवीरः पृथिव्याम् । असूयायाम् । न्यायिन्न्यायिन्बुध बुध जहि प्राग्नयं दुर्नियुक्त ॥ कोपे । सौजः सौजः खल खल कले वेत्स्यदः ॥ कुत्सने । क्षुद्र क्षुद्र दुष्ट दुष्ट कले

१ सी °युक्त । सौ°. २ सी °क्षुद्रे°.

१ ए °व न°. २ ए °त्यागेस्य. ३ ए °णानिरु°. ४ सी °त्यर्थः । त°. ५ ए °कारन्दु°. ६ सी °ल त°. ७ ए °हादि°. ८ सी °काव्द. ९ ए °निसद°. १० ए °मति क°. ११ सी °जन्नृ°. १२ सी °ध ज°. १३ ए °नि । को°. १४ ए °ष्ट कोले.

वेत्स्यदः । अत्र "संमति०" [ ८९ ] इत्यादिना द्विरुक्तिस्तत्र पूर्वोक्तौ स्वरेष्व-न्त्यः स्वर(रः) प्लुतो वा ॥ मन्दाक्रान्ता ॥

दस्यो३ दस्यो हतक हतक३ पाप पापाङ्ग कूज३
अङ्गोत्कूजानुभवसि फलं त्वं स्वयं वेश्म यासि३ ।
देवं खण्डालयमकलयः सोपरेद्युः खसं प्र-
त्येवं प्रोचे प्रणिधिकथिते शीर्णकेदारहर्म्ये ॥ ९० ॥

९०. अपरेद्युः शीर्णे भग्ने यत्केदारस्य शंभोर्हर्म्ये तस्मिन्प्रणिधि-कथिते केदारहर्म्यं भग्नमस्तीति चरैः कथिते सतीत्यर्थः । स भैमिः खसं खसाः केदारसमीपदेशस्थाः क्षत्रियभेदाः खसानां राजाप्यभे-दात्खसस्तं खसराजं प्रत्येवं तर्जनाप्रकारेण प्रोचे । तथा हि । हे दस्यो३ दस्यो यात्रिकादिष्वकस्माद्धाटैः पातकत्वेन चौरात एव रे पाप पापात एव च रे हतक हतक३ निन्द्यतम । अङ्गशब्दः संबो-धने । हे खस कूजाव्यक्तं शब्दं कुरु तथाङ्ग हे खसोत्कूज प्राबल्ये-नाव्यक्तं शब्दं कुरु । केनाप्यनिगृहीतत्वेनानिशं चौर्यादिपापकर्मणोपा-र्जितप्रभूतविभूतिदर्पेणाव्यक्तान्कलकलारावान्कुर्वित्यर्थः । परमेतत्कुक-र्मणः फलमनुभवसि त्वं "सत्सामीप्ये सद्वद्वा" [ ५. ४. १ ] इति भवि-ष्यति वर्तमाना । अधुनैव त्वां निग्रहीष्यामीत्यर्थः । तथा हे खस विन-यादिधर्माचारभ्रष्टत्वात्स्वयं वेश्म गृहं यासि३ आश्रयसि । देवं केदारं खण्डो विशीर्ण आलयः प्रासादो यस्य तं तथाकलयोधारयः

१ सी °लयः कलयेऽसो°.

१ सी °प्वलस्व°. २ सी °रेद्युर्शीर्ण भ°. ३ सी °यभेद्राः. ४ सी या-त्रुका°. ५ सी °त्वे चौ°. ६ सी °शब्द सं°. ७ सी °त्कुकार्मेण फ°. ८ सी °भ्रष्टास्वयं.

केदारप्रासादं विशीर्णं न समाचरय इत्यर्थः । अस्यां फलमनुभवसीति ॥

तदेवं चौर्याद्यन्यायकारित्वाद्विशीर्णस्य केदारप्र(प्रा)सादस्यै साराया अकर्तृत्वाच्च केदारसमीपदेशस्थं खसराजं संतर्ज्यात्मानं निन्दन्विशीर्णकेदारप्रासादोद्धारायामात्यमाह ॥

सन्नन्यासे खण्डालये देव आस्ते
प्रायश्चित्तं देवोपदिश्यांक्रियां च ।
तच्चाचर्यासं तद्विशेषं च राजे-
त्यन्तर्ध्यात्वोचे वाग्भटामात्यमेवम् ॥ ९१ ॥

९१. राजा वाग्भटामात्यं भग्नकेदारप्रासादोद्धारायैवं वक्ष्यमाणरीत्योचे । किं कृत्वा । भक्त्यतिशयादन्तश्चित्ते ध्यात्वा । किमित्याह । अहं सन्नन्यासे तिष्ठामि । देवः केदारः खण्डालये विशीर्णप्रासाद आस्ते । तस्माद्धे देव केदार तद्विषयकृतैवंविधाविनयोत्थमहापापविशुद्ध्यर्थं मम प्रायश्चित्तं विशोधि तपश्चरणं क्रियां च स्वर्णदानादिकं कार्यं चोपदिश्यात् । आदिशेस्त(त्त)तश्च तच्च प्रायश्चित्तं च तद्विशेषं च प्रायश्चित्तविशेषं स्वर्णदानादिकं चाहमाचर्यासमनुष्ठेयासमिति ॥ वैश्वदेवी छन्दः ॥

यदूचे तदाह ॥

कारूंश्च महिणु३ धनं च भृतकानायुङ्क्ष्व नेतॄंस्तथा
चान्द्रं वेश्म चिदस्तु गान्धिकपुटीचिज्ञायतां धाम तत् ।

१ सी °क्रियायां. २ ए राज्येत्य°. ३ ए °स्तु गन्धि°. ४ सी तत्°.

१ ए °रस्य. २ सी °स्य मरा°. ३ सी °अक्षतत्वा°. ४ सी संत्यज्यात्मा°. ५ सी °मतिममेवं भ°. ६ सी °सादमाचर्यास°. ७ ए °श्याम् । आ. ८ सी °ह । कोरू°.

भक्तिस्ते मयि यद्वदर्हति विभौ शंभौ तथा मेर्हति२
तद्वेश्माक्षतमात्थ तत्प्रवरमित्यात्थ२ तदामात्य भोः ॥९२॥

९२. भो अमात्य यद्वत्ते मयि विभौ प्रभौ विषये भक्तिरर्हत्युचिता स्यात्तथा मे शंभौ विषये भक्तिरर्हति२ । तस्माद्विशीर्णकेदारभवनोद्धाराय कारूंश्च वर्धक्यादीञ् शिल्पिनो धनं च प्रहिणु२ । तथा भृतकान्कर्मकरान्नेनृंस्तथा भृतकादिचिन्ताकारिणो नायकांश्चायुङ्क्ष्व प्रयुङ्क्ष्व । ततश्च तद्धाम केदारभवनं चान्द्रं वेश्मचिदस्तु चन्द्रप्रासाद इव भवतु चन्द्रभवनं ह्येकरात्रावेव निष्पद्यतेन्यथा पतेत्तद्वच्छीघ्रं निष्पद्यतामित्यर्थः । तथा गान्धिकपुटीचिज्जायता२म् । यथा गन्धपण्यस्य वणिज औषधपुटिका क्षणान्निष्पद्यत एवं निष्पद्यताम् । तथा भो अमात्य तदा तस्मिन्विवक्षित आवयोः प्रसिद्धे काले तद्वेश्म केदारभवनं त्वमक्षतमभग्नमस्तीत्यात्थावोचः । तदायोगे "स्मे च वर्तमाना" [५.२.१६] इत्यतीतेत्र वर्तमाना । तथा तद्वेश्म तदा प्रवरमनेकरूपकचित्रादिभिः प्रधानमस्तीति त्वमात्थाख्यः । तद्वेश्माक्षतं तत्प्रवरमित्युक्तवन्तममात्यं प्रणिधिभणितियुक्त्या स्वमतात्प्रच्याव्यैवमुपालम्भं चामात्यं प्रति राजोच इति संबन्धः ॥

दस्यो३ दस्यो । हतक हतक३ । अत्र "भर्त्सने पर्यायेण" [९०] इति द्विरुक्तिः । तत्र पर्यायेण पूर्वस्यामुत्तरस्यां वोक्तावन्त्यस्वरः प्लुतो वा ॥ पक्षे । पाप पाप ॥

१ सी °र्णकदा°. २ ए °रानेनृं°. ३ सी ङ्क्ष्व । त°. ४ सी तद्धासं के°. ५ सी °थतां । तथा भो आमा°. ६ ए °निष्प°. ७ ए आचार्याः प्र°. ८ सी °सिद्ध°. ९ ए °ण ति. १० ए °स्याप्रवर°.

अङ्ग कूज३ । अङ्गोत्कूजानुभवसि फलम् । पाप पाप । इत्यत्र "त्यादेः०" [ ९१ ] इत्यादिना वा प्लुतः ॥

क्षिया आचारभ्रेषः । तत्र स्वयं वेश्म यासि३ । देवं खण्डालयमकलयुः । सब्रह्मचारी खण्डालये देव आस्ते ॥ आशिषि । प्रायश्चित्तं देवोपदिश्यां(३)- क्रियां च । तच्चाचर्यासं तद्विशेषं च ॥ प्रैषे । कारूंश्च प्रहिणु३ धनं च । भृतकानायुङ्क्ष्व नेतृंस्तथा । इत्यत्र "क्षिया०" [ ९२ ] इत्यादिना वा प्लुतः ॥

गान्धिकपुटीचिज्जायतां धाम त३त् । चान्द्रं वेश्मचिदस्तु । इत्यत्र "चि- तीवार्थे" [ ९३ ] इति वा प्लुतः ॥

प्रतिश्रवणे । शंभौ तथा मे भक्तिरर्हति३ । भक्तिस्ते मयि भद्रदर्हति ॥ नि- गृह्यानुयोगे । तत्प्रवरमित्यात्थ(३) । तद्वेश्माक्षतमात्थ । इत्यत्र "प्रतिश्रवण०" [ ९४ ] इत्यादिना प्लुतो वा ॥ शार्दूलविक्रीडितं छन्दः ॥

स्रष्टा नु३ शंभुर्न्वित्युशन्तो मुनीन्द्रा
ओ३म्स्रष्टारमो३म्(मोम्?) शंभुमित्यस्तुवन्यम् ।
शीर्णागारं तं नाश्रृणोर्नाबुधो वा-
श्रौषं हि३ प्रावेदं ह्युदित्वा स ऊचे ॥ ९३ ॥

९३. अथ वाहो अमात्य यं केदारमों स्रष्टारं विधातारं [ओं शंभुं संहर्तारं? ] प्रतिपद्यामह इत्येवंप्रकारेण मुनीन्द्रा अस्तुवन् । यतः स्रष्टा नु३ शंभुर्न्वित्युशन्तः सृष्टिसंहारकारित्वात्केदारोयं ब्रह्मा व

१ सी °वति फ°. २ सी त्यादेत्या°. ३ सी °चाराभ्रे°. ४ ए °रभ्रेषः तत्रास्व°. ५ सी °लयः । स°. ६ ए °श्यात्रः क्रियां. ७ ए प्रैष । का° ८ ए °पुत्रांचि°. ९ सी प्लुत । श्र°. १० सी °रही ति°. ११ सी °मों श्रष्टरं°.

